

* ॐ *

# पाण्डित्यपरिचयः

## ( स्वयं स्वभाण्डस्फोटनम् )

अयि ! माननीयाः ! विपश्चिदपश्चिमाः ! ( महाविद्यालयानां महोपाध्यायाः ! विद्यालयानां पाठशालानाञ्चाध्यापकाः ! विबुभूषवो विद्यार्थिनश्च ! ) विदितमेतदस्त्वत्र-भवतां यद् यदा महामहोपाध्यायश्रीमाननीयदाधिमथशिवदत्तमहोदयानां स्थाने श्रीमान-नीयभाण्डार्युपाह्वमाधवशास्त्रिणां नियुक्तिर्जाता तदास्माकं चेतसि महान्हर्ष आसीत्—यदेते भारतीयगण्यमान्यविद्वत्स्वन्यतमा एव भविष्यन्तीति, पूर्वं तादृशख्यापनाया एव कर्णगोचरत्वात् । अथ चैते यदा समायातास्तदाऽहमेतान् सर्वथा सदकार्षम्, ...रन पूर्वकं स्वगृहमानैषम्, स्वयं स्वासनादुत्थायैभ्यो न्यवेदयम्, फलादिनिवेदनाय च ...र्थनानकार्षम्—एवमहमेतेषु महाशयेषु पूज्यबुद्धिमेव समपीपलम् । परं पश्यतैतेषां कुतूहलम्, एते मम ग्रन्थान् स्थाने स्थाने निन्दितवन्तः, यतस्ततो ममाऽसतोऽपि दोषान् ...कटितवन्तः, मत्तन्दृब्ध काव्यादर्शरत्नकुसुमप्रतिमाटीकाविषये कतिपयानाक्षेपान् लिखित्वा ...ण्डारस्वरूपसूरिमहोदयेभ्यो दत्त्वा समाहितवन्तो यदस्य ग्रन्थेषु विषयविपर्यास ...व वर्त्तते, अर्थादत्रभिज्ञोऽयं शास्त्राणामिति । माननीयस्वरूपसूरयस्तदाक्षेपग्रन्थं मह्य-...दुः । अहं पुष्कलं शास्त्रीयोपपत्तिमत्तदुत्तरं लिखित्वा शीघ्रमेव तान्प्रति समार्पयम् ...दर्शयञ्च माधवमहोदयानां पाण्डित्यमभ्यार्थयञ्च मुद्रयित्वा विद्वद्भ्यो वितीर्य ...त्साराऽसारविवेकाय, न्यवेदयञ्च यल्लिखन्तु नाम भाण्डार्युपाह्वा अस्योत्तरम्, विदुषां वा ...भायांमिदमुपन्यस्य निर्णाययन्तु यत्कस्य पक्षः शास्त्रसम्मत इति । परं तैर्ममाभ्यर्थना ... स्वीकृता, प्रत्युत श्रीमाधवानां पाण्डित्यप्रतिष्ठारक्षणार्थं तत्प्रकाशनायाऽहमेव ...वारितः । अहञ्च तेषामाज्ञां तथैव पर्यपालयम् । परं माधवा मम निन्दापक्षं नैवात्याक्षुः, ...तत्सम्बन्धेनैव व्याकरणतीर्थश्रीजगदीशशास्त्रिप्रकाशितं "सर्वप्रसिद्धिपत्रिका" शीर्षक-...ज्ञापनजनितां स्वप्रतिष्ठाहानिमप्यसहन्त, तदुत्तरदानेऽपि श्रीस्वरूपसूरिणां महामाज्ञा ...नीत् । अहञ्च दैवगतिं निरीक्षमाणस्तूष्णीमेवासम् । त्वं धूलिप्रक्षेपं करोषीति ...तिवारमहं माधवैरधिक्षिप्तोऽपि न किञ्चिदब्रुवम् । एवं सर्वथा शान्तेऽपि मयि एते-...थापि स्वप्रकृतिर्न त्यक्ता, प्रत्युत भिन्नार्नानिवासिसीतारामशास्त्रिणम्प्रति लिखितवन्तो ...दस्य मुक्तावलीटीका बहु स्खलितेति ममापि सम्मतमिति । एवमादिभिर्हेतुभिरत्यन्त-...बाध्यमानोऽहमेतेषां शास्त्रे पाण्डित्यपरिचयं प्रकाशयामि, अथ चाऽस्मदीयैरस्खलिती-...यमीषां प्रदर्शयामि, निर्मयञ्च कथयामि यदेतेषामभिमानः "अहमद्वितीयोऽस्मि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पण्डितः, पञ्जापप्रान्ते नास्ति कोपि विशिष्टः पण्डित" इत्येवमादिरूपो मुधैवास्ति सम्प्रत्येते स्वबलं प्रदर्शयन्तु लेखेन वा यथा तथा वा स्वयंप्रचालिते विषये शास्त्रार्थाज्ञास्तत्रभवन्तः, मा नाम झाटायां स्थित्वाऽऽखेटं कुर्वन्तु । विद्वांसश्च निम्नलिखि निबन्धं पठित्वा निष्पक्षदृशा साराऽसारं विवेचयन्तु। ( माधवशास्त्रिणां पूर्वपक्षग्रन्थस्तु मया मक्षिकोपरि मक्षिकान्यायमनुसृत्यैव यथावसरं मध्ये २ मुद्रापितः )।

अथ पाण्डित्यपरिचयः—

* ॐ *

## नमः श्रीसत्सम्प्रदायप्रवर्त्तकेभ्य आचार्येभ्यः ।

(१)—यत्तु—"ग्रन्थसमर्पणश्लोके—रघुवर माथुर नागर श्रीलश्रीशारदावन्द्यो अत्र प्रथमश्रीशब्दे परे पूर्वस्य गुरुत्वाच्छन्दोभङ्गः। त्रयोदशमात्रावत्त्वात्पादस्य।" इत्युक्तं माधवैः, तदयुक्तम् श्रीशब्दस्य पादादिवर्णत्वात् तत्पूर्वर्त्तिनः संयोगस्य क्रमसञ्ज्ञकतया पूर्ववर्त्तिनो गुरोरपि आचार्यैर्लघुताया इष्टत्वात् । तदेतत् वृत्तरत्नाकरस्य परिभाषाध्याये "पादादाविह वर्णस्य"—इत्युक्त्वा "तरुणं सर्षपशाकं नवौदनं पिच्छलानि च दधीनि अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति" इत्युदाहृतम् । तथाचोक्तक्रमसञ्ज्ञकसंयोग नियमानुसारं यथाऽत्र "सुन्दरि" इति सम्बुद्धिपदं "ग्रा" इति संयोगपरत्वात् अन्ते गुरु सदपि लघुभावङ्गतम् अर्थात् रेफोत्तरस्य इकारस्य लघुता जाता, येन छन्दोभङ्गभीति स्वप्नेऽपि न भवितुमर्हति, तद्वदत्रापि न दोषो भविष्यति। यद्येतावता अपराधस्तद पूर्वाचार्याणामेवेति स्वयं विवेच्यम् ।

अपि चैतादृशं छन्दोभङ्गाभिधानमत्यन्तमेव विदुषां बुद्धावसामञ्जस्यमावहति यतः "प्रह्रेवा" इति पिङ्गलमुन्युक्तनियमेन "गृहीतप्रत्युद्गमनीयवस्त्रा"—( कुमा० "प्रासनाभिहृदमज्जनमाशु"—(माघ ७ स०) इत्याद्यनेकमहाकविकालिदासप्रभृतिरचित महानिबन्धेषु गुरुलघुभावस्य वैकल्पिकत्वेनेष्टत्वात्, "प्रह्र" शब्दयोरुपलक्षणत्वा सर्वहलां रेफसंयोगस्येति बहु स्फुटीकृतं नारायणभट्टेन वृत्तरत्नाकरव्याख्यायाम् दर्शितश्च तथैवच्छन्दोमञ्जर्यामपि, तथाच शङ्काकर्त्तुरुक्त आक्षेपो निर्मूल एवेति सन्त विचारयन्तु। एवं नह्यत्र कोऽपि विषयविपर्यासः।

(२)—यत्—"नरहरिणा विबुधेन प्रथमं विबुधं भवन्तमाज्ञाय"—अत्र आङ्पूर्व ज्ञाधातुर्ज्ञानार्थेऽप्रयुक्तः" इत्युक्तम्, तत्रोच्यते यद्येतावता विषयविपर्यस्तता मन्येत, हन्त

---

१—"तान् मृतानपि क्रव्यादाः" "एतच श्रुत्वा गदितो मया त्वम्" "बहुलभ्रमरमेचकतासमम्, म प्रिये"—इत्यादि तत्र एव कणेदत्य निरीक्ष्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तर्हि भारविप्रभृतयः सर्वेऽपि महाकवयो विपर्यस्तविषयाः कुतो न मन्येरन्, तेषामपि "अमर्षशून्येन जनस्य जन्तुना"—इत्यादिकाव्येषु अवाचकतादिसाहित्यशास्त्रोक्तदोषोपलब्धेः। अभ्युपगम्य चैवमुच्यतेऽस्माभिः, वस्तुतस्तु सकलकविमूर्धन्यव्यासादिमहाकविप्रणीतमहाभारतादिमहानिबन्धेष्वेवंविधानां प्रयोगाणां बहुलं व्यवहारदर्शनादुपेक्षणीयोऽयं विषयः।

अपि च—यस्मिन् ग्रन्थे टीकाकर्त्रा समर्पणश्लोकोऽयं धृतः, तद्रचयितुर्महाकवेर्नायं दोषः सुसम्मतः, अपार्थादिदशदोषाणामेवावश्यवर्जनीयत्वात्तन्मते। अत एव "दशैवैते वर्ज्याः"—इत्येवकारोऽपि सङ्गच्छते, व्याख्यातञ्च तथैव साम्प्रदायिकैरिति सन्तोष्टव्यम्।

शिशुपालवधस्य सप्तमे सर्गे निविडार्थे "निविरीस" पदप्रयोगो माघस्य, नैषधे तृतीयसर्गे ५४ श्लोके कीर्त्यर्थे "समज्ञा" पदप्रयोगो महाकवेः श्रीहर्षस्य चापि, अप्रयुक्ततादोषमावहति, नैतावता तादृशाः कवयो विपर्यस्तविषया भवितुमर्हन्तीत्यपि न विस्मरणीयम्।

(३)—यत्तु—"कान्ताकटाक्षविशिखा नहि वेधयन्ति" अत्र टीकाकृद्विमितश्लोके 'वेधयन्ती'त्युक्तम् तत्र वेध इति धातुर्नास्ति, व्यध ताडने इत्यस्य तु ण्यन्ते व्याधयन्तीति स्यात्" इत्युक्तिः सा शङ्काकर्त्तुरेव व्याकरणे स्खलितिः, यतो नहि टीकाकर्त्रा व्यधधातोः प्रयोगं मत्वा तथा प्रयुक्तम्, अपितु—"तत्करोति तदाचष्टे" इति गणसूत्रेण करोत्यर्थे वेधप्रातिपदिकात् णिचो विधानात् वेधं करोत्याचष्टे वेति "वेधयति" इति सिद्धं भवति' इति मत्वा तथा प्रयुक्तम्।

किञ्च—विध विधाने इति तौदादिको धातुः, तस्य "वेधयति" इति रूपं धातुवृत्तौ स्पष्टमेवोक्तम्। प्रकृते च स्वार्थे णिच् "बहुलमेतन्निदर्शनम्" इत्यनेन अपठितेभ्योऽपि क्वचित् स्वार्थे णिचः शासनात्। यथा—रामो राज्यमचीकरदित्यादौ। तदेतत् सिद्धान्तकौमुद्यां मूल एव चुरादिगणसमाप्त्यनन्तरे दीक्षितैर्व्याख्यातम्।

नचात्र विधधातोः प्रयोगाङ्गीकारे विधानार्थाऽसङ्गतिरेवेति शङ्कनीयम्, धातूनामनेकार्थत्वात्। उक्तञ्चापि कविकल्पद्रुमे—विधश्विधौ। विधिर्विधानम्। ००० । अनेकार्थत्वात् छिद्रकरणेऽपि अयम्। "वेधितच्छिद्रितौ विद्धे" इत्यमरः। कर्णवेधः। इत्येवमादि ज्ञेयम्। चित्रं महावैयाकरणस्याप्यत्र शङ्काकर्तुरत्यन्तमनवधानम्।[1]

(४)—पृ० ४४। पं० २१। 'यस्पादशौचपरिमार्जनशौचभावं' इति टीकाकृच्छ्लोके 'शौचभाव' मिति पदे, शुचेर्भावः शौचमिति भावप्रत्ययेन भावे उक्ते पुनर्भावशब्दोऽनन्वयी। यदि शौचमेव भाव इति कर्मधारयस्तर्हि, व्यर्थपदत्वं दोषः" इत्याक्षेपोऽपि शङ्काकर्त्तुर्भावशब्दार्थाऽज्ञानमूलकः। तथाहि—"भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु।

१—मान्याः! पण्डिताः! पश्यन्तु श्रीभाण्डारकरपादानां व्याकरणपाण्डित्यमपि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु॥ रत्यादौ च"—इत्यादिमेदिन्यादिकोषप्रमाणबलात् प्रीत्यपरपर्यायरत्यर्थं ब्रूते भावशब्दः। शौचे भावं रतिं रागं प्रीतिं श्रद्धामिति यावद् इत्येवं सामञ्जस्ये भावशब्दानन्वयाभिधानं व्यर्थपदत्वदोषाख्यानं वा शङ्काकर्त्तुः कथं सङ्गच्छेतेति स्वयं कुशलाः सन्तु विवेचकाः साक्षिणः।

(५) पृ० ८७। पं० २२ "सा सादृश्यप्रतीतिरुपमालङ्कार' इत्युक्तम्, नहि क्वापि प्रतीतिरलङ्कारो भवति, मूले च यत्तत्पदार्थोऽन्य एव।"

अयमाक्षेपोऽपि शङ्काकर्त्तुर्बलादाकृष्टः। यतः को वै ब्रूते तथाप्रतीतिरुपमेति, एकार्धपङ्क्त्यन्तराल एव—'काव्यमलौकिकं चमत्कारकारि सादृश्यम्—उपमा इति फलितम्" इत्युक्तत्वात्। दृश्यते च अतथार्थेऽपि विशेषविवक्षावशात् तथाप्रयोगः यथा—"अभिधेयाऽविनाभूतप्रतीतिर्लक्षणोच्यते" इत्यादौ। अत्र प्रतीतिपदेन प्रतीतिकरणभूतो व्यापारो विवक्षितः। प्रकृते "साम्यप्रतीति"रित्यत्र तु विच्छित्तिविशेषवत्ताबोधनायैव साम्योत्तरप्रतीतिपदनिवेशो मूलार्थाऽनुरोध्येव कृतः। अन्यथा—"गौरिव गवय" इत्यादावपि उपमालङ्कारतापत्तेः। यत्तु—"मूले च यत्तत्पदार्थोऽन्य एव" इत्युक्तम्, तच्छङ्काकृता नोपपादितं, प्रतिज्ञामात्रमेवैतत्, सत्युपपादने यथोचितं वक्ष्यामः।

(६) पृ० ८७ पं० २७। "सादृश्यं, साधर्म्यं, साम्यं, इत्येक एव पदार्थ इत्युक्तम् तन्न रोचयामहे—तथा सति श्रौती उपमा, आर्थी उपमा इति भेदोच्छेदप्रसङ्गात्। यद्यपि नैयायिकमते सादृश्यं—नातिरिक्तः पदार्थः, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपस्य तदभिमतस्य सखण्डपदार्थत्वेन सप्तसु पदार्थेष्वेवान्तर्भावात्। तथापि नहि कोपि नैयायिकः साधर्म्यं सादृश्यञ्चैकमङ्गीकरोति" इतीमां शङ्काकर्त्तुः शङ्कामेव न रोचयामहे। तथाहि—

जयपुरराजकीयसंस्कृतपाठशालाप्रधानाध्यापकश्रीदुर्गादत्तप्रसादद्विवेदसङ्कलितां निर्णयसागरमुद्रित-साहित्यदर्पणोपमालक्षणटिप्पणीमालोकयतु श्रीमान्—"साम्यं, सादृश्यं, साधर्म्यमित्यनर्थान्तरम्" इति। साहित्यदर्पणस्य रुचिराख्यव्याख्यायामपि—"उपमानोपमेययोरनुगतोधर्मः साधर्म्यं, साम्यं, सादृश्यं, साधारणो धर्म इत्यनर्थान्तरम्" इत्युक्तम्। तथा—शब्दस्तोममहानिधौ—सादृश्यम्=सदृशस्य भावः-ष्यञ्। समानधर्मे सामान्यम्=सादृश्यप्रयोजकधर्मे। साधर्म्यम्=सधर्मस्य समानधर्मस्य भावः ष्यञ् स्वकीयाऽसाधारणधर्मरूपे लक्षणे ००००समानधर्मे। औपम्यम्=उपमैव स्वार्थे ष्यञ् सादृश्ये इत्युक्तम्।

किञ्च—"साधर्म्यमुपमा भेदे" इति मम्मटः। "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" इति विश्वनाथः। "सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिः" इति पण्डितराजः।

"यद्वाक्याज्जायते चारु सादृश्यं वर्ण्यमञ्जुनोः। तत्त्वमत्रोपमात्वं स्यात्"—इत्यच्युतरायः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"उपमानोपमेययोर्गुणलेशतः साम्यमुपमा" इति वामनः—

"यच्चेतोहारि साधर्म्यमुपमानोपमेययोः। मिथो विभिन्नकालादिशब्दयोरुपमा मता॥"

इत्युद्भटभट्टः। "उपमानोपमेययोः साधर्म्ये भेदाऽभेदतुल्यत्वे उपमा" इति राजानकरुय्यकः। "सादृश्यात्=सुन्दरसाधर्म्यात्" इति यावत् (पृ० ४०८) "सादृश्यं प्रागुक्तमुपमानोपमेयसाधर्म्यम्" (पृ० ४६६) इति साहित्यसारस्य सरसामोदव्याख्या, इत्याद्यनेकालङ्कारशास्त्ररचयितृप्रणीतोपमालक्षणेषु—क्वचित् साधर्म्यमुपमा, क्वचित् सादृश्यमुपमा, क्वचित् साम्यमुपमा, क्वचित् सादृश्यपदमुक्त्वा साधर्म्यपदेन तद्विवरणं कथं सङ्गच्छेत, कथञ्च घटेत लक्ष्येषु लक्षणाभिहिता-उपमानोपमेयभाववाक्यैकवाक्यता, यदि न स्यात् तेषां शब्दानां तन्मते समानार्थकत्वम्।

विवरणकारोऽपि—"साधर्म्यमेव परैः सादृश्यपदेनोच्यते" इति, उपमास्थले च उपमानम्, उपमेयम्, साधारणो धर्मः, साधर्म्यञ्चेति चतुष्टयमपेक्षते इति च कथयन् साधर्म्यसादृश्यपदयोः पर्यायताव्यवहारमप्यनुमन्यत एव।

एवञ्च यथा यथा अलङ्कारग्रन्था आलोड्यन्ते तथा तथा सादृश्यसाधर्म्यादि-पदानां समानार्थकता प्रतीयते, यत्र भूयसामालङ्कारिकाणां सम्मतिर्नापन्होतुं शक्या। सादृश्यसाधर्म्ययोर्वैलक्षण्यमाश्रित्य श्रौत्यार्थीविभागपरिकल्पनञ्च प्रायो नव्यानामेव। अन्यथा प्राचीनैः कृतस्योपमालक्षणग्रन्थस्याऽसङ्गतिरेव स्यात्।

अपिच चित्रमीमांसायाम्—"हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः" इति पराभिमतमुपमालक्षणमुक्त्वा तद्विवरणं कुर्वन् "तयोः सादृश्यवर्णनसत्त्वादुपमात्वेन सङ्ग्राह्यत्वे तथैवानन्वयोऽपि सङ्ग्राह्यःस्यादिति व्यर्थं द्वयोरिति पदम्" इति।

व्यापार उपमानाख्यो भवेद्यदि विवक्षितः। क्रियानिष्पत्तिपर्यन्तमुपमालङ्कृतिस्तु सा॥

उपमानव्यापार उपमितिक्रियानिष्पादको व्यापारः सादृश्यवर्णना। सेयमुपमिति-क्रियानिष्पत्तिपर्यन्तं विवक्षिता चेदुपमालङ्कार इत्यर्थ इति स्वमतेन लक्षण प्रदर्शयंश्च स्पष्टमेव साधर्म्यसादृश्ययोः पर्यायतां स्फुटीकरोति, अन्यथा तादृशविवरणासङ्गतिरेव सम्पद्येत।

न्यायकोशेऽपि—साधर्म्यम्=समानधर्मः। यथा "कमलमिव मुखं मनोज्ञम्" इत्यादौ सौन्दर्यं मुखकमलयोः साधर्म्यमित्युक्तम्।

अपि च—'उपमानवृत्तिसादृश्यप्रतियोगित्वमेवोपमा" इति केचित्। सादृश्यमे-वोपमा इत्येके। यत्रान्यसादृश्यप्रयुक्तोपमेयोत्कर्षविवक्षा तत्रोपमा इति न्यायपञ्चाननादयः।

अतएव श्रौतीत्वं सादृश्यप्रतियोगिताख्यस्योपमानत्वस्य इवपदेन बोधनात्" इति। ( अलं० कौ० पृ० ४९ )

अत्रत्यः—टीकाग्रन्थः—बोधनादिति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इवार्थसादृश्यस्य प्रतियोगित्वेन चन्द्रान्वये 'सादृश्यप्रतियोगिचन्द्रीयसादृश्यमिति बोधोदयादित्यर्थः । ००००—सादृश्यप्रतियोगितायाः शब्दबोध्यत्वात् श्रौतत्वम् । "चन्द्रेण तुल्यम्" इत्यादौ तु सादृश्यप्रतियोगितायाश्चन्द्रादावनवगमादार्थत्वम् । चन्द्रप्रतियोगिकसादृश्यवन्मुखम्" इत्येव तत्र बोधात् ।

तुल्यत्वस्य नामार्थतया तत्र प्रतियोगित्वेन तस्य चन्द्रादावन्वयाऽनुपपत्तेः । अतस्तत्र सादृश्यप्रतियोगितोपमानस्य न भासते, किन्त्वर्थतस्तदुत्तरमानसज्ञान एवेति तन्मतरहस्यम्"। (पृ० ४९)—इत्याद्यनेकग्रन्थावलोकनात् स्पष्टमिदमाभाति यद्येषां मते साधर्म्यपदस्य साधारणधर्मसम्बन्धरूपोऽर्थो नेष्टः तैरपि दर्शितरीत्या उपमायाः श्रौतार्थविभागः स्वपक्षे योजित एव, कथमन्यथा "सादृश्यप्रतियोगिता—उपमानस्य" इत्यादिग्रन्थः सङ्गच्छेत । कथं वा—"वाचकधर्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा" इति सूत्रयित्वा—"यथा चन्द्र इव मुखं रमणीयम्" इत्यत्र । इह हि इवपदमुपमावाचकम्, रमणीयत्वं साधारणधर्मः, चन्द्रः साम्यप्रतियोगी, मुखं तदनुयोगि, इति चतुर्णामप्युपादानम्" इति व्याकरिष्यद् यदि नामंस्यत साम्यसादृश्य-साधर्म्यपदानामेकार्थवाचकताम् । नहि सादृश्यसाधर्म्ययोर्भेदवादिनां नये साम्यप्रतियोगितायाश्चन्द्रनिष्ठता तदनुयोगितायाश्च मुखनिष्ठता कथमपि सङ्गता भवितुमर्हति, तन्मते साधारणधर्मस्यैव तत्प्रतियोगित्वाद् उपमानोपमेययोश्च तदनुयोगित्वस्वीकारात् ।

किञ्च—प्रतापरुद्रीये "साक्षात्सादृश्यप्रतिपादकयथेववादिशब्दानां प्रयोगे श्रौती, धर्मिव्यवधानेन सादृश्यप्रतिपादकानां सदृशसङ्काशनीकाशप्रतीकाशादिशब्दानां प्रयोगे आर्थी" इत्यादिरूपा विभागोक्तिरपि तदभेदपक्ष एव घटते । विवृतश्चायं ग्रन्थस्तट्टीकायाम्—"श्रुत्या सादृश्यप्रतिपादनात् श्रौती । अर्थतस्त्वार्थी" इत्यादिग्रन्थेन ।

एतेन सप्तम्यां शङ्कायां विकल्पकरणमपि परास्तम्, प्राक्तनग्रन्थानवधानात् ।

यदि च "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन" इत्यत्रैव सर्वथा दुराग्रहः तर्हि "समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यम् सामानो धर्म इति फलितोऽर्थ" इत्यादिविवरणं नैयायिकानां सर्वथा अपह्नुत्य श्रेयमिति दिक् ।

नच तयोरभेदे सति तथा विभागो न स्यादिति वाच्यम् तदेकार्थवादिभिरपि विभागस्वीकारात् तथोपपादितत्वाच्च । पश्यत्वत्रभवान्—

"श्रौतत्वार्थत्वभेदेन द्वैविध्यम्"—इत्यारभ्य "अन्यत्र च तद्वत् सादृश्यपर्यालोचनया तत्सम्बन्धित्वावगतेः तेनासौ आर्थी" इत्यन्तमुद्भटग्रन्थम् । विषयोऽयं महत्या आरभट्या अलङ्कारकौस्तुभादिग्रन्थेषु सूपपादितः । तट्टीकादिषु च "चन्द्र इव मुख" मित्यादौ चन्द्रे सादृश्यप्रतियोगित्वरूपोपमानत्वस्य मुखे च तदनुयोगित्वरूपोपमेयत्वस्य नियमतः प्रतीतेः । तथाच—यत्र यच्छब्दबोध्यसादृश्यविशेषणतापन्नपदार्थस्य नियमत उपमानत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र श्रौती, तदन्यत्रार्थीति भाव" इत्याद्युक्तम्। मूलेऽपि च–दीक्षितमतेन "दीक्षितास्तु—सादृश्यमुख्यविशेष्यकज्ञानजनकपदप्रयोगे श्रौत्यन्यत्रार्थीत्याहुः" इत्युक्तम्। कुवलयानन्द-टीकायाञ्च–"इत्थञ्च सादृश्यस्य पदार्थान्तरत्वमते शाब्दबोधरीतिरुपदर्शिता। तस्य समान-धर्मत्वरूपे तु चन्द्र इव मुखमित्यादौ चन्द्रवृत्तिधर्मवन्मुखमिति बोध इत्यादि बहूक्तम्। मयाऽपि च यथोचितं सम्प्रदायानुरोध्येव तत्र टीकायामुक्तम् तत्किमपराद्धम्। एवंविधानां ग्रन्थानां तत्त्वमनधिगत्य तथाक्षेपकरणमार्यस्य अत्यन्तमेवाश्चर्यं जनयति विदुषाञ्चेत-सीति दिक्।

(७) पृ० ११६ यदपि—'अयमाशयः' इत्यादिना श्रौत्यार्थोपमाविभागे श्रुति-शब्दार्थः 'श्रवणमात्रं' इत्यर्थकरणं, तथा आर्थीशब्दस्य प्रवृत्तिनिमित्तप्रदर्शनञ्च अति-व्याप्तिग्रस्तमेव, सदृशादिशब्दे उच्चारितेऽपि सादृश्यविशिष्टस्यैवोपस्थित्या तत्रापि श्रौतत्वप्रसङ्गः, एवं—सदृशादिपदप्रयोगस्थले इव अर्थानुसन्धानं (पदोपस्थाप्यार्था-लोचनं) इवादिस्थलेऽप्यस्तीति परस्परसाम्यात्" इत्यन्तमुक्तं तद्धठाकृष्टं सत्स-म्प्रदायमूलकतत्तद्ग्रन्थतात्पर्यानवधाननिबन्धनमेवाऽऽभाति।

आश्चर्यमाश्चर्यम्—भवता इदं नालोचितं यदयं पाठः टीकाकर्त्रा रचितः अथवा ग्रन्थान्तरात् तद्रूप एव उद्धृत्य पूर्वाचार्यरीत्यैव बालबुद्धिसौकर्याय [ ] एवमा-त्मककोष्ठकदानपूर्वकं व्याख्यात इति। केवलं दोषदृष्ट्या तत्र स्वमतिपरिकलितार्थमुद्भाव्य अतिव्याप्तिग्रस्तत्वमुक्तम्। तथाहि—"यथेववादि"—इत्यारभ्य "वतेरुपादाने" इत्यन्तो ग्रन्थः टीकाकृता (मया) मम्मटकृतकाव्यप्रकाशादुद्धृतः। "तुल्यादयस्तु"—इत्यारभ्य "तुल्यार्थे विहितस्य वतेरुपादाने" इत्यन्तश्च साहित्यदर्पणादुद्धृतः, तद् योऽयमाक्षेपोऽत्र भवता मयि दत्तः, नूनं स तत्तद्ग्रन्थकारेषु अस्माकमुपजीव्येष्वेव प्रक्षिप्त इति नैतावता-ऽहं विपर्यस्तविषयः संवृत्तः। आस्तां तावदेतादृशभ्रमोत्पादनं शङ्काकर्तुः, परमत्र प्राचीनैः कृतमेव व्याख्यानं दिङ्मात्रं दर्शयामः—

"श्रुत्यैव=श्रवणमात्रेण, सम्बन्धं प्रकृते उपमानोपमेययोः साधारणधर्मसम्बन्धरूपं साधर्म्यम् इति काव्यप्रकाशविवरणम्। तथैव काव्यप्रकाशीयटीकान्तरेष्वपि द्रष्टव्यम्, ग्रन्थगौरवभयान्नात्रोद्ध्रियते।

एवम्—"अर्थानुसन्धानादेव" इत्यस्य साहित्यदर्पणमूलस्य "अर्थानुसन्धानादेवेति पष्ठ्यर्थाऽनुसन्धानादुभयसम्बन्धसाम्यं बोधयन्त्येवेत्यर्थः" इति, अर्थाऽनुसन्धानात् पष्ठ्यर्थाऽनुसन्धानमाश्रित्य" इत्येवमादि तत्र २ साहित्यदर्पणटीकासु व्याख्यातम्।

अस्यैव रुचिराख्यायां व्याख्यायां—"श्रुतिमात्रेण=स्वोपलब्धिमात्रेण, उपमानो-पमेयगतसादृश्यलक्षणसम्बन्धम्=उपमानोपमेययोर्गतं यत्सादृश्यं तदेव लक्षणं यस्य तादृशो यः सम्बन्धः तं तथोक्तम्, बोधयन्ति ज्ञापयन्ति इति व्याख्याय—"तदेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवृतिकारा अप्याहुः" इत्यादि बहु स्पष्टमुक्तम् । तदत्र राजमार्ग एव श्रीमतो विकल्पजल्पना जातेति महच्चित्रम् । तस्मादुक्ताक्षेपः कीदृशोऽसार इत्यालोचयन्तु शास्त्रचणा विचक्षणाः ।

(८) पृ० ११६, पं० ५ । "चन्द्र इव मनोज्ञं मुखम्" इत्यादौ चन्द्रप्रतियोगिकभेदसमानाधिकरणं यच्चन्द्रवृत्तिमनोज्ञत्वं तदाश्रयो मुखमिति—शाब्दबोधोऽपि विचार्य एव तादृशशाब्दबोधौपयिकाकाङ्क्षाभावात्"—

इत्युक्तिरपि शङ्काकर्त्तुर्निर्मूलैव, तादृशशाब्दबोधौपयिकाकाङ्क्षासत्त्वात् । कथमन्यथा—अलङ्कारकौस्तुभे—"तथाच चन्द्र इव मुखं रमणीयम्" इत्यत्र "चन्द्रप्रतियोगिकाऽन्योन्याभावसमानाधिकरणं यच्चन्द्रवृत्ति रमणीयत्वं तदाश्रयो मुखम् इति बोधः" इति लिखितम् । अत्र बहु वक्तव्यम्, उचितावसरे दर्शयिष्यामः ।

(९) पृ० ११६ पं० १—"सदृशादिप्रयोगे सादृश्यप्रतीतिः शाब्दी उपमा त्वार्थी" इति मञ्जूषावचनेन सह टीकोक्तश्रौत्यार्थोपमाविभागस्य विरोध" इति वाङ्मात्रम्, तादृशविरोधस्याऽप्रदर्शितत्वात् । यदि दर्श्येत, सत्यश्चेत् स्वीक्रियेत, अन्यथा खण्ड्येत ।

(१०) पृ० १७ । पं० १० "तद्धितगता, समासगता" इत्यादि" आक्षेपकर्त्रा यल्लिखितम्, तत् तत्र न प्राप्तम् । यत्र च ( ११९ पृ० ) एतादृशः पाठ उपलभ्यते तत्रापि शङ्काकर्त्रभ्यूहितं तद्धितगतोपमाया वाक्यगतत्वविषयकं शङ्कासमाधानादि नोपलभ्यते इत्यस्माकमप्याश्चर्यावहमेव ।

(११) पृ० १३६ प०—यत्तु—

अयमालोहितच्छायो मदेन मुखचन्द्रमाः । सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥१॥

अत्र प्रतिगर्जनं साधारणो धर्म इति टीकनं विचार्यमेव आलोहितच्छायत्वस्य साधारणधर्मत्वात् प्रतिगर्जत्यादिशब्दानामुपमावाचकत्वस्य मूलग्रन्थ एव ११४ पृष्ठे उक्तत्वात्" इति-उक्तम्, तदेव विचार्यम्, टीकाकर्त्राशयानभिज्ञानात् । प्रकृते प्रतिगर्जतिशब्दे शब्दविशेषात्मकमुख्यार्थस्य बाधात् औद्धत्यं लक्ष्यम्, प्रतियोग्यपेक्षया स्वोत्कर्षप्रकटनञ्च व्यङ्ग्यम् । एवञ्च चन्द्राऽभिन्नतया आरोपविषयस्य मुखस्य औपम्यसूचकप्रतिगर्जनात्मकसाधारणधर्माऽभिसम्बन्धादेवोपमानुबन्धितयोपमारूपकत्वोपपत्तेः भिन्नभिन्नकारणसमुद्भूतालोहितच्छायत्वञ्च तदुपयोगितया तदुपपादकं सन्न दण्डवारितम्, नापि च तत्र टीकाकर्तुरस्वारस्यमाभाति, प्रत्युत तेन साधारणधर्मस्य परिपूर्णतैव मन्यते टीकाकर्त्रा । प्राक्तनानां व्याख्यातृणामपि टीकाकर्त्तुरयं स्वारस्यमस्ति । तच्च ततस्ततो द्रष्टव्यम् । वस्तुतस्तु—मुखचन्द्रमसो मदेनालोहितच्छायत्वम्, प्रसिद्धचन्द्रमसस्तु उदयकालिकलौहित्यमित्यनयोर्बिम्बप्रतिबिम्बभावेनैवौपम्यं घटते, नतु साक्षादुभयसाधारण्येनेति शङ्काकर्त्तुरप्यनवधानता भाति । अनया दिशा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आलोहितच्छायत्वस्य साधारणधर्मताङ्गीकारे टीकाकर्त्तुरपि ( ममापि ) न महान् दुराग्रहः। एकस्मिन्नपि काव्ये व्याख्यातॄणां लापनभङ्गी, अलङ्कारादिवैचित्री, समर्थनभङ्गी च बहुधा विभिन्नमार्गाऽपि दृश्यत एव। यथा च—"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः" इत्यत्र ध्वनिकारमते गम्यस्याऽद्भुतरसस्याङ्गित्वम्, परेषाञ्च मुनिविषयकरतिरूपं भावम्प्रति अद्भुतरसस्याङ्गत्वमिति महतीयं वैचित्री लापनभेदप्रकारश्च न तेषां पारस्परिकविषयविपर्यस्ततां प्रकटीकरोति। इत्थं शङ्काकर्तुष्टीकाकृतश्च च तथाविधसाधारणधर्मप्रकारस्यांशिकभेदेऽपि वस्तुनो न किञ्चित् दुष्यति, प्रत्युत औपम्यस्य वाच्यतास्वीकारे शङ्काकर्तृपक्ष एव शास्त्रदृष्टिविरोधोऽपरिहार्य इति सूक्ष्ममीक्षणीयम्।

अपि च प्रतिगर्जत्यादिशब्दानामुपमावाचकत्वकथनं शङ्काकृत एतद्ग्रन्थालोचनोपेक्षामेव द्रढयति, नहि प्रतिगर्जत्यादिधातूनां सादृश्येऽर्थे व्याकरणसङ्केतो विद्यते, कस्याऽप्ययमभिमतो वा, ग्रन्थकर्त्तुर्वेद इति शङ्काकर्त्तुस्तद्विपरीताभिधानं महच्चित्रम्। असम्भावनया तु तथा स्वीक्रियमाणे उपमारूपकयोः साङ्कर्यमेवापद्येत। ननु ग्रन्थकर्त्रभिमतश्चतत्त्वालङ्कारविशेषस्वरूपाऽवस्थितिरित्यपि सूक्ष्ममीक्षणीयम्। दण्डिग्रन्थश्च भूयोऽपि पठनीयस्तत्तत्स्थले, प्रतिगर्जत्यादीनामुपमासूचकत्वमेवाऽस्ति, अतस्तदर्थस्य तथात्वमित्यपि विभावनीयम्।

फलितार्थस्तु—अत्रत्यसाधारणधर्मविषयकशङ्काकपक्षेणाऽपि नात्यन्तमस्माकं विरोधः, किन्तु मतभेदः, परमस्मद्दर्शितशङ्काकृत्स्खलितिस्तु असमाधेयैवाभाति। अधिकं स्वावसरे निरूपयिष्यामः।

(१२) पृ० १३६ पं० १६—

"गदोद्दण्डितदोर्दण्डो मदाघूर्णच्चणः चणम्। अवार्यवैरिविक्रान्तिर्भीमोऽयं स्पर्धते बलम्॥

अत्र च स्पर्धनं साधारणोधर्म इति टीका न युक्ता, गदोद्दण्डितदोर्दण्डत्वादेः साधारणधर्मत्वात्" इत्ययमाक्षेपः पूर्वसमाधिनैव परिहृतो वेदितव्यः समानन्यायात्—

अर्थात् अत्रापि बलाऽभिन्नतया आरोपविषयस्य भीमस्य औपम्यसूचकमुख्यस्पर्धनात्मकसाधारणधर्मोपपादकत्वादेव गदोद्दण्डितदोर्दण्डत्वादीनां तत्पृष्ठपोषकतया तथाऽवगम्यमानत्वात्॥

इयांस्तु विशेषः—यन्मूलकृदुदाहरणे "मुखचन्द्रमाः" इति समस्तरूपकम्, टीकाकृदुदाहरणे तु व्यस्तम्। तत्राऽपि "अयम्=बलः" इत्यर्थः प्रकरणवेद्यः। प्रकारान्तरानुसरणे तु—"अवार्यविक्रमो भीम-बलोऽयं स्पर्धते बलम्" इति पठनीयं भवति। प्रायः—मूलकृट्टीकाकृतोः अलङ्कारशास्त्रोदाहरणानि परस्परं किञ्चित् किञ्चित् अंशविशेषे चमत्कृतिविशेषत्वेन भेदमावहन्ति उपलभ्यन्ते, तदस्य शास्त्रस्य भूषणमेव न दूषणम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थम्:—

अत्यन्तं स्फुटेऽपि विषयस्वरूपे माधवशास्त्रिणां तत्र व्यामोहो मम मनोऽत्यन्तमेव दुनोति। कीदृशी किलात्र टीकाकर्त्तुर्विषयविपर्यस्तता, कीदृशश्च माधवशास्त्रिणां शास्त्रदृष्टिप्रमाणकत्वमिति विद्वांसो निष्पक्षदृशा स्वयमेवालोचयन्तु।

(१३)—पृ० १३७ पं० १२—"अनाघ्रातपुष्प, इति श्लोकव्याख्यायां पुष्पकिसलय, रत्न, मधु, पुष्पफलानां शकुन्तलारूपेण रूपणमुक्तं तत्र पुष्पफलांशे साक्षादिवशब्दस्य श्लोके सत्त्वात् उपमावर्णनमुत्प्रेक्षावर्णनं वा युज्यते न रूपकवर्णनम्।

इयमुक्तिरपि शङ्काकर्त्तुर्वाचामगोचरं चमत्कारं प्रकटीकरोति, यतः टीकाकर्त्राऽयं ग्रन्थः स्वयं रचितः किंवा कस्माच्चिद्ग्रन्थादानुपूर्व्या उद्धृत इति शङ्काकर्त्ता नैव जानाति, केवलमाक्षिपत्येव। सोऽयमाक्षेपो वास्तवश्चेत् न टीकाकर्त्तुः किञ्चित् दुष्यति, अवास्तवश्चेन्मुधा प्रयासः। वस्तुतस्तु सर्वमिदमाक्षेप्तुरनवधाननिबन्धनं विस्तरेण तद्ग्रन्थयोजनावसरे व्याख्यास्यामः, किन्तु भोजराजीयोऽयं ग्रन्थ इति विभाव्यताम्। परमिदमवश्यमार्यः पश्यतु—

वाणीविलासमुद्रितशकुन्तलानाटकीयाऽभिरामकृतव्याख्यायाम्—( पृ० ९३ )

"अत्राऽनघत्वविशिष्टे तद्रूपे एकस्मिन्ननाघ्रातत्वादिविशिष्टानि पुष्पादीनि बहून्यारोप्यन्ते इति मालारूपकमेतत्" इत्यादिना स्पष्टमेव रूपकमुक्तम्। तत्र च विस्तृतेन प्रघट्टकेनातिशयोक्तिरपि प्रदर्शिता। श्रीनिवासाचार्यकृतायां व्याख्यायान्तु-शकुन्तलारूपस्य पूर्वार्धपादद्वये रूपकम्, तृतीयपादे उपमा, एवं तद्रूपातिशयं प्रतिपाद्य चतुर्थेन पादेन तत्प्राप्तिविचारः कृत इति तुल्यतर्कनामाप्यलङ्कारः प्रदर्शितः, अन्यदपि च तत्र बहूक्तम्।

राघवभट्टकृतार्थद्योतनिकायान्तु-'यद्वायऽमितिमालोपमायामभिन्नो वाच्यः सामान्यधर्मः' इत्याद्युक्त्वा "फलमपि च" इति पाठे व्यस्तं मालारूपकं ज्ञेयम्, इत्यभिधाय भोजस्तु—"पुष्पकिसलयरत्न"—इत्याद्यस्मदुद्धृतपाठजातमेवोद्धृतवानिति कथं रूपकनिरासो शङ्काकृतः शोभेत। महतीयमलङ्कारादिमार्गवैचित्री आलङ्कारिकाणां सहसा न पराक्रमणीया इत्यतिसङ्क्षेपः।

इति प्रथमः पाण्डित्यपरिचयः।

विदुषामनुचरः—

नृसिंहदेवः

बाम्बे मशीन प्रेस मोहनलाल रोड लाहौर।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।



ग्रन्थाङ्कः २२

# श्रीविद्यारण्यविरचितः श्रीमच्छंकर-दिग्विजयः ।



अद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पणीभिस्तथा धनपतिसूरिकृतडिण्डिमाख्यटीकया च समेतः ।



एतत्पुस्तकमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।



द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८३७

खिस्ताब्दाः १९१५

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )

मूल्यं रूपकपट्कम् । रु० ६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# आदर्शपुस्तकोल्लेखपत्रिका ।

अस्य शंकरदिग्विजयस्य पुस्तकानि यैः परहितैकतानतया संस्करणार्थं दत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते ।

( क. ) इति संज्ञितम्—मूलं डिण्डिमाख्यटीकासमेतं 'गणपतकृष्णाजी इत्येतस्य मुद्रणालये मुद्रितम्, आनन्दाश्रमस्थम् । मुद्रणकालः शके १७८६ ।

( ख. ) इति संज्ञितम्—मूलं डिण्डिमाख्यटीकासमेतं चतुर्दशसर्गपर्यन्तमपूर्णं, दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहगृहस्थं 'डॉक्टर' इत्युपपदधारिभिर्भांडारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् । पत्राणि २०८ । एकपत्रस्थपङ्क्तिसंख्या २८ । एकपङ्क्तिस्थानामक्षराणां संख्या ४९ । लेखनकालस्तु चत्वारिंशत्संवत्सरमित इत्यनुमीयते ।

( ग. ) इति संज्ञितम्—मूलं डिण्डिमाख्यटीकासमेतं 'रानडे' इत्युपाख्यानां पुण्यपत्तननिवासिनां रा० रा० 'बंडुनाना' इत्येतेषाम् । पत्राणि २७२ । पङ्क्तयः ३२ । अक्षराणि ३९ । लेखनकालः शके १७५७ ।

( घ. ) इति संज्ञितम्—मूलं डिण्डिमाख्यटीकासमेतं रत्नागिरिनिवासिनाम् 'आठल्ये' इत्युपाह्वानां रा० रा० 'वासुदेव हरि' इत्येतेषाम् । पत्राणि १९३ । पङ्क्तयः ३४ । अक्षराणि ४१ । लेखनकालस्त्रिंशत्संवत्सरमित इत्यनुमीयते ।

अद्वैतराज्यलक्ष्मीटीकायाः पुस्तकं वे० शा० रा० रा० 'साठे' इत्युपाह्वैः पुण्यपत्तननिवासिभिर्नारायणशास्त्रिभिः केवलं परहितैकपरायणमनीषयैव प्रदत्तम् । तदन्तर्गतविशेषविभागानां टिप्पण्यप्यत्र संकलिताऽस्ति ।

समाप्तमिदं सूचीपत्रकम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ विषयानुक्रमः।

| [ सर्गानुक्रमः ] | [ विषयानुक्रमः ] | [ पृष्ठाङ्काः ] |
|---|---|---|
| १ | उपोद्घातः। ... ... ... ... ... | १ |
| २ | आचार्यजन्मादिकथनम्। ... ... ... ... | २९ |
| ३ | देवावतारः। ... ... ... ... ... | ६२ |
| ४ | कौमारचरितवर्णनम्। ... ... ... ... | ९१ |
| ५ | संन्यासग्रहणम्। ... ... ... ... ... | १४० |
| ६ | आत्मविद्याप्रतिष्ठा। ... ... ... ... | २१४ |
| ७ | व्यासदर्शनादिचरितवर्णनम्। ... ... ... | २५८ |
| ८ | श्रीमदाचार्यमण्डनमिश्रसंवादः। ... ... ... | २९५ |
| ९ | श्रीमदाचार्यसरस्वतीसंवादः। ... ... ... | ३४३ |
| १० | राजदेहप्रवेशादिकथनम्। ... ... ... | ३७४ |
| ११ | उग्रभैरवपराजयः। ... ... ... ... ... | ४१९ |
| १२ | हस्तामलकादीनां शिष्यत्वेन ग्रहणम्। ... ... | ४३४ |
| १३ | ब्रह्मविद्याप्रचारः। ... ... ... ... ... | ४६४ |
| १४ | पद्मपादतीर्थयात्रावर्णनम्। ... ... ... | ४८४ |
| १५ | आचार्यकृतदिग्जयवर्णनम्। ... ... ... | ५२९ |
| १६ | श्रीमदाचार्याणां शारदापीठवासवर्णनम्।... ... | ६०० |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri




॥ श्रीः ॥

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीविद्यारण्यविरचितः

# श्रीमच्छंकरदिग्विजयः ।

अद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पणीभिस्तथा
धनपतिसूरिकृतडिण्डिमाख्यटीकया च समेतः ।

## प्रथमः सर्गः ।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशंकरजये सारः संगृह्यते स्फुटम् ॥ १ ॥

---

श्रीमद्विष्णुमजोभिवन्द्यचरणं गोपादिकाराधितं
वन्दे पूर्णसितास्त्रसौम्यवदनं संसारतापापहम् ॥
सत्यं ज्ञानमनन्तमाद्यविधुरं गोभारसंहारकं
सर्वात्मानमपास्तसर्वममलं विश्वेश्वरं शंकरम् ॥ १ ॥
नुमः श्रीबालगोपालतीर्थान्व्यासमुखान्मुनीन् ॥
विघ्नहर्तॄन्गणेशादीन्पण्डितांश्च विमत्सरान् ॥ २ ॥
व्याख्यानरहितस्यास्य व्याख्यानं डिण्डिमाभिधम् ॥
क्रियते स्वीयबोधाय प्रमादः क्षम्यतां बुधैः ॥ ३ ॥

निखिलानर्थनिवृत्तिपूर्वकपरमानन्दाविर्भावलक्षणपरमपुरुषार्थानन्यसाधनाद्वैतज्ञानविजयपर्यवसन्नं श्रीमच्छंकराचार्यविजयमाविष्कर्तुं ग्रन्थमारभमाणः श्रीमन्माधवाचार्यस्तस्य निर्विघ्नपरिसमाप्त्यादिसिद्धयेऽविगीतशिष्टाचारानुमितश्रुतिप्रमितकर्तव्यताकं विषयप्रयोजनसूचकं मङ्गलमाचरंश्चिकीर्षितं प्रतिजानीते—

प्रणम्येति । परमात्मानं परमेश्वरं प्रणम्य प्राचीनशंकरजये सारो मया माधवेन संगृह्यते । संग्रहत्वेनाऽस्फुटत्वमाशङ्क्याऽऽह—स्फुटं यथा स्यात्तथेति । परमात्मानं विशिनष्टि—श्रीविद्यातीर्थरूपिणम् । अनेन स्वगुरोः श्रीविद्यातीर्थस्येश्वरावतारत्वं तत एव सर्वज्ञत्वं च सूचितम् । अन्येषामपि परमात्मनि स्वगुरौ च तुल्यभक्त्यैव निःश्रेयसप्राप्तिरित्यपि ध्वनितम् । तथाच श्रुतिः—

---

१ घ. °ज्ञादिव°। २ ख. °र्णविधुचन्द्रसौ°। ३ ख. घ. विश्वेश्व°। ४ ग. °र्ज्ञानिर°। ५ क. श्रीमान्ना°। ६ ख. °र्थरूपस्ये° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

' यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ' इति ।

यद्वा परं परमेश्वरं सर्वात्मानं शिवं प्रणम्येत्यर्थः । तं विशिनष्टि—श्रीविद्यातीर्थरूपिणम् । तार्किकादिकल्पितैः कुतर्कैर्मलिनीकृताया विद्यायाः सरस्वत्यास्तन्मलापकरणेन शोधकत्वाद्विद्यातीर्थः । श्रिया ब्रह्मविद्यात्मिकया युक्तः श्रीविद्यातीर्थो भगवान्भाष्यकारस्तद्रूपिणम् । तथाचोक्तं संक्षेपशारीरकाचार्यैः—

' वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शंकरमर्चिताङ्घ्रिम् ' इति ॥

शिवावतारत्वं च भगवतो भाष्यकारस्य शिवपुराणादेरवगन्तव्यम् । तथाचोक्तं शिवपुराणे—

' व्याकुर्वन्व्याससूत्रार्थं श्रुतेरर्थं यथोचिवान् ।
श्रुतेर्न्याय्यः स एवार्थः शंकरः सविता न ना ' इति ॥

यद्वाऽऽत्मानं प्रत्यगभिन्नं परं परमेश्वरं श्रीमांया विद्याशब्देन पेरापरविद्ये तत्प्राप्यौ मोक्षदेवलोकौ च गृह्यते । तीर्थशब्देन—

' तीर्थं शास्त्राध्वरक्षेत्रपात्रोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम् ' ॥

इति विश्वोक्तानि शास्त्रादीनि गृह्यन्ते । तद्रूपिणं सर्वात्मकमित्यर्थः । ' सर्वं खल्विदं ब्रह्म । एकमेवाद्वितीयम् ' इत्यादिश्रुतेः । तथाच श्रीमच्छंकरजयनिरूपणेन तदुक्तस्य ब्रह्मात्मभावस्यैव जय इति स एवाज्ञातः सन्विषयो ज्ञातः सन्प्रयोजनम् । आचार्यविजयज्ञानं त्ववान्तरप्रयोजनमिति परमेत्यादिना सूचितम् । अत्रानेकार्थशब्दन्यासाच्छ्लेषालंकारः तदुक्तं—' नानार्थसंश्रयः श्लेषः ' इति ।

' देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे च न निन्द्याः स्युर्लिपितो गणतोऽपि च ' ।

इत्युक्तत्वाज्जगणादिप्रयोगो न दोषावह इति मन्तव्यम् ॥ १ ॥ *[ श्रीति । अत्र रूढ्या स्वगुर्वभिन्नमित्यर्थः । विद्याशब्दिताद्वैतब्रह्मात्मैक्यविषयकसाक्षात्कारलक्षणचरमान्तःकरणवृत्तिविशेषरूपाखण्डप्रमाप्रतियोगिकतीर्थशब्दितोपायत्वस्यापि तत्र योगवृत्त्या लाभाद्गुरुत्वसामग्रीसिद्धिः । तथाहि—विद्याया ब्रह्मविद्यायास्तीर्थं तीर्थं शास्त्रा-

* अतः परं [ ] इति चिन्हे यदागमिष्यति साऽद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पणीति ज्ञेयम् ।

१ ख. परब्रह्मविद्यापरब्रह्मविद्ये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्वद्घटानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि ।
तद्वन्मदीये लघुसंग्रहेऽस्मिन्नुद्वीक्ष्यतां शांकरवाक्यसारः ॥ २ ॥
यथाऽतिरुच्ये मधुरेऽपि रुच्युत्पादाय रुच्यान्तरयोजनाऽर्हा ।
तथेष्यतां प्राक्कविहृद्यपद्येष्वेषाऽपि मत्पद्यनिवेशभङ्गी ॥ ३ ॥

---

घ्वरक्षेत्रोपायेत्यादिभेदैर्निर्वचनादुपायः । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः शब्दपरब्रह्मनिष्णातत्वलक्षणः सामग्रीविशेषो यस्मिन्स विद्यातीर्थः । श्रीमान्परिपक्वकषायस्वशरणागतशिष्याणां दर्शनादिकरणकशक्तिपातेन तत्त्वज्ञानोत्पत्त्यादिप्रतिबन्धकदुरितनिराकरणसामर्थ्यवानित्यर्थः । स चासौ विद्यातीर्थश्चेति । तथा पुनरपि स रूपं यस्येति बहुव्रीहिविग्रहस्तमिति यावत् । अत्र भारतीपदस्थाने विद्यापदप्रयोगस्तु साक्षाद्गुरुनामोच्चारणस्य—

" आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः" इति निषेधादेव] ॥ १ ॥

ननु प्राचीनशंकरजय उदाहृतानां शांकरवाक्यानां सारस्त्वदीये संग्रहे कथमवलोकनीयस्तव संग्रहस्याल्पत्वादिति चेत्तत्राऽऽह—यद्वदिति । यद्वद्घटानां कुम्भानामिभशिरसां वाऽद्रिशृङ्गाणां वा पटलः समुदायो विशालोविस्तृतोऽल्पेऽपि दर्पणे विलोक्यते । किलेति प्रसिद्धम् । तद्वदस्मिन्बुद्धिस्थे मदीये लघुसंग्रहे शांकरवाक्यानां सार उद्वीक्ष्यतां सम्यगवलोक्यताम् । उपमालंकारः ' साधर्म्यमुपमाभेदः ' इत्युक्तेः । इन्द्रोपेन्द्रवज्रामिश्रणादुपजातिवृत्तम् ' अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः '—

इति लक्षणात् ॥ २ ॥ [ घटानां—

' घटा घटनगोष्ठीभघटनासु च योषिति ' इति मेदिन्याः करिघटनानां हस्तिपरम्पराणामित्यर्थः । ] [ शांकरेति । शंकरस्य भगवतो भाष्यकारस्यायं शांकर आनन्दगिर्यभिधस्तस्य तत्प्रशिष्यस्य वाक्यसारः ] ॥ २ ॥

प्राचीनशंकरजयस्य वैयर्थ्यमाशङ्क्याऽऽह—यथेति । यथाऽतिरुच्येऽत्यन्तमभिलाषविषये मधुरे रुच्युत्पादाय रुच्यान्तरस्य सलवणस्य योजनाऽर्हा योग्या । तथैषा मत्पद्यनिवेशभङ्गी मदीयानां पद्यानां निवेशस्य विन्यासस्य भङ्गी रीतिरपि प्राचः कवेर्हृद्येषु मनोज्ञेषु पद्येषु रुच्युत्पादायेष्यतामित्यर्थः ॥ ३ ॥ [ रुच्यान्तरेति । निम्बुरसादिलक्षणतदविरुद्धतदनुगुणाम्लादिरुच्यान्तरस्य योजना ] ॥ ३ ॥

---

१ ख. °क्षीतिः ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तुतोऽपि सम्यक्कविभिः पुराणैः कृत्याऽपि नस्तुष्यतु भाष्यकारः ।
क्षीराब्धिवासी सरसीरुहाक्षः क्षीरं पुनः किं चकमे न गोष्ठे ॥ ४ ॥

पयोब्धिविवरीसुतिःसृतसुधाझरीमाधुरी-
धुरीणभणिताधरीकृतफणाधराधीशितुः ।
शिवंकरसुशंकराभिधजगद्गुरोः प्रायशो
यशो हृदयशोधकं कलयितुं समीहामहे ॥ ५ ॥

---

यद्यपि पुराणैः प्राचीनैः कविभिः सम्यक्स्तुतस्तथाऽपि नोऽस्माकं कृत्या भाष्यकारस्तुष्यतु । अभ्यर्थनायां लोट् । बहुवचनं वाङ्मनःकायाभिप्रायेण । ननु स्वल्पया तव कृत्या कथं तस्य तुष्टिरित्याशङ्कयाऽऽप्तकामस्य परमेश्वरस्य भक्त्या कृतेन स्वल्पेनाप्यधिकादधिकतरा तुष्टिरित्याह—क्षीराब्धिवासीति । क्षीराब्धौ क्षीरसमुद्रे वस्तुं शीलमस्यास्तीति । तथा कमलसदृशे अक्षिणी नेत्रे यस्य स सरसीरुहाक्षो भगवान्विष्णुर्गोष्ठे व्रजे प्रेमभराक्रान्ताभिर्गोपीभिर्दीयमानमल्पं दुग्धं किं पुनर्न चकमेऽपि तु कामितवानेवेत्यर्थः ।

'व्रजः स्याद्गोकुलं गोष्ठम्' इति वैजयन्ती ।

अत्र स्तुतिक्षीरयोर्बिम्बप्रतिबिम्बभावाद्दृष्टान्तालंकारः ।

'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इत्युक्तेः ॥ ४ ॥

तस्माच्छिवं सुखं करोतीति शिवंकरोऽत एव सुशंकर इत्यभिधा संज्ञा यस्य शिवंकरश्चासौ सुशंकराभिधश्च स चासौ जगतां गुरुश्च तस्य शिवंकरसुशंकरस्य जगद्गुरोर्भगवतो भाष्यकारस्य प्रायशो यशो हृदयशोधकं कलयितुमनुसंधातुं कथयितुं वा समीहामहे । संपूर्वकस्य चेष्टार्थकस्येहधातोर्लटि रूपम् । सम्यक्चेष्टां प्रयत्नं कुर्मः । क्वचिदन्ययशसोऽपि कथनात्प्रायश इत्युक्तम् । तं विशिनष्टि—पयोब्धेः क्षीरसमुद्रस्य विवरीभ्यः सूक्ष्मच्छिद्रेभ्यः सुतिःसृताया: सुधाया अमृतस्य झरीणां सूक्ष्मप्रवाहाणां माधुरी मधुरता तस्याः सकाशाद्धुरीणं श्रेष्ठमतिमधुरं यद्भणितं भाषितं तेनाधरीकृतः फणाधराणां सर्पाणामधीशिता नियन्ता शेषो येन तस्य । अत्र रेफस्यासकृदावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः 'एकस्याप्यसकृत्परः' इत्युक्तेः । पृथ्वीवृत्तम् ।

'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः'

इति लक्षणात् ॥ ५ ॥ [ शिवंकरेति । यतः शिवंकरः 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति श्रुतेरद्वैतात्मरूपमोक्षप्रदोऽतः सुतरामन्वर्था शंकरेत्यभिधा-संज्ञा यस्य स एतादृशोऽत एव जगद्गुरुः सर्वेषामपि जीवानां सामान्यतो निरति-

---

१ ख. °रसंशस्य ज°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्वेमे शंकरसद्गुरोर्गुणगणा दिग्जालकूलंकषाः
कालोन्मीलितमालतीपरिमलावष्टम्भमुष्टिंधयाः ॥
क्वाहं हन्त तथाऽपि सद्गुरुकृपापीयूषपारम्परी-
मग्नोन्मग्नकटाक्षवीक्षणबलादस्ति प्रशस्ताऽर्हता ॥ ६ ॥

शयसुखाभिलाषित्वात्तस्य च द्वितीयाद्वै भयं भवतीति श्रुतेरुक्तरूपमुक्तिमन्तरा संभवाभावा-त्साक्षात्परम्परया च सकलजीवहितोपदेशकस्तस्येत्यर्थः ] [ गौरादेराकृतिगणत्वाद्द्विवरीति प्रयोगः ' पिद्गौरादिभ्यश्च ' इति सूत्रेण साधुः ] ॥ ५ ॥

शंकरगुणानुवर्णने स्वस्यानर्हतामाशङ्क्य परिहरति—क्वेति । ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' इत्यादिश्रुत्युक्तसदद्वितीयस्य बोधकत्वात्सद्गुरुः सतां वा गुरुः शंकराश्चासौ सद्गुरुश्च तस्य गुणानां गणाः समूहाः । दिग्जालस्य कूलं रोधं कषन्ति घ्नन्तीति दिग्जालकूलंकषाः । सर्वकूलेत्यादिना खच् । ' अरुर्द्विषदजन्तस्य०' इति मुम् । दिग्जालमुल्लङ्घ्य गता इत्यर्थः । कालेन वसन्तादिकालेनोन्मीलितानां प्रफुल्लितानाम् । मालतीत्युपलक्षणम् । मालत्यादिपुष्पाणां परिमलो विमर्दोत्थो जनमनोहरो गन्धस्तस्यावष्टम्भस्य स्तम्भस्य मुष्टिंधया मुष्टिं निष्पीड्य धयन्ति पिबन्तीति ते । कालोन्मीलितमालतीपरिमलघनादप्यधिकतरसुखकरा इत्यर्थः । नाडीमुष्ट्योश्चेति खश् । इमे प्रसिद्धाः । क्वाहं जन्तुरत्यन्तायोग्यः क्व । यद्यपीत्यध्याहार्यम् । हन्तेति हर्षे । तथाऽपि सद्गुरोर्विद्यातीर्थस्य शंकरस्य वा कृपारूपस्य पीयूषस्यामृतस्य पारम्पर्यां[१] परम्परायां मग्नेनोन्मग्नेन च[२] कटाक्षेण निमीलने मग्नत्वस्योन्मीलन उन्मग्नत्वस्य चाऽऽरोपो[३] वीक्षणमेव बलं तस्मात्प्रशस्ता योग्यता ममास्तीत्यर्थः । अननुरूपयोर्घटनावर्णनेन ' विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः ' इत्युक्तेन विषमेण प्राप्ताया अनर्हताया विचार्य रूपकेण प्रतिषेधादाक्षेपालंकारस्याऽऽक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणादित्युक्तस्य ताभ्यां[४] संकरः ' आवेश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः ' इत्युक्तेः ।

' सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ' ॥ ६ ॥

[ दिगिति । दिशां प्राच्यादीनां जालवज्जालं वृन्दं तल्लक्षणं कूलं नदीतटं कषन्ति नदीवद्धर्षयन्ति ते तथा दिक्कुलव्यापका इत्यर्थः । एतेनोक्तदिग्वृन्देऽपि तेषां स्थलापर्याप्त्याऽऽनन्त्यं द्योत्यते ] कालेति । काले तत्तद्विकासप्रयोजके वसन्तादिसमय उन्मीलिता

१ ख. घ. 'र्यंरूपस्यं । २ ख. घ. यन्न उन्मग्नश्च कटाक्षो नि° । ३ ख. घ. 'रोपस्तेन वी° । ४ खं. ग. घ. द्वाभ्यां ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धन्यंमन्यविवेकशून्यसुजनंमन्याब्धिकन्यानटी-
नृत्योन्मत्तनराधमाधमकथासंमर्ददुष्कर्दमैः ॥
दिग्धां मे गिरमद्य शंकरगुरुक्रीडासमुच्चयशः-
पारावारसमुच्चलज्जलझरैः संक्षालयामि स्फुटम् ॥ ७ ॥

---

स्वप्राबल्यभरलक्षणेन समयमाहात्म्येन विकसितैतादृशी या मालती 'सुमना मालती जातिः सप्तला नवमल्लिका' इत्यमराद्वसन्ते चेन्मधुमालती शरदि चेच्छरन्मल्लिकेत्यर्थः । तस्या ये परिमलाः 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरात्परममनोहरसुगन्धास्तेषामपि येऽवष्टम्भा निरोधाः । निरुद्धो हि कस्तूर्यादिसुगन्धः परमोत्कटो भवतीति लोके प्रसिद्ध-मेव । तेऽपि मुष्टिं धया मुष्टिंधयन्ति घ्रापयन्ति ते तथा । स्तनंधया हि बालाः स्वमुष्टिमेव चोषयन्तीति प्रसिद्धमेव । तथाच मुष्टिंधयपदवाच्यास्तनंधयबाला इव येषां ते तथा ] ते [ सदिति सन्ब्रह्मनिष्ठः । तस्यैव 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेर्वास्तविकसत्त्वात् ] ॥ ६ ॥

अधन्यमकृतार्थमात्मानं धन्यं मन्यन्त इति धन्यंमन्या असज्जनं दुर्जनमात्मानं सुजनं मन्यन्त इति सुजनंमन्याः । उक्तसूत्रेण मुम् । अब्धेः समुद्रस्य कन्या लक्ष्मीः सैव नटी चञ्चलत्वान्नर्तकी तस्या नृत्येन नर्तनेनोन्मत्ता धन्यंमन्याश्च ते विवेकशून्याश्च सुजनंमन्याश्चा-ब्धिकन्यानटीनृत्येनोन्मत्ताश्चेति द्वंद्वो वा द्वयोर्द्वयोः कर्मधारये द्वंद्वो वा ते च ते नराधमे-भ्योऽप्यधमाश्च तेषां कथा यद्वा तेषां नराधमानामधमाश्च ताः कथाश्च तासां संमर्दाः संघर्षा एव दुष्कर्दमा दुष्टपङ्कास्तैर्दिग्धां लिप्तां मे गिरं वाचमद्य शंकरगुरोः क्रीडया समुच्चयश एव पारावारः समुद्रः 'पारावारः सरित्पतिः' इत्यमरः । तस्य समुच्चलद्भिर्ज-लझरैर्वारिप्रवाहैः संक्षालयामि स्फुटं यथा स्यात्तथा सम्यक्प्रक्षालयामीत्यर्थः । तथाचोक्तं भगवता वेदव्यासेन—

'असत्कीर्तनकान्तारपरिवर्तनपांसुलाम् ।
वाचं शौरिकथालापैर्गङ्गयेव पुनीमहे' ।

इति । अत्र रूपकवृत्त्यनुप्रासयोरन्योन्यनिरपेक्षयोरेकत्र समावेशात्तिलतण्डुलवत्संसृष्टिः । 'सैषा संसृष्टिरेतेषां भेदेनैक्यादिह स्थितिः' इत्युक्तेः ॥ ७ ॥

---

१ ख. ग. घ. 'नृत्तोन्म' । २ ख. ग. घ. नृत्तेन । ३ ख. घ. नृत्तेनो ४ ग. दुर्दाङ्क' । ५ घ. चोक्तम् । अ' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वन्ध्यासूनुखरीविषाणसदृशक्षुद्रक्षितीन्द्रक्षमा-
शौर्यौदार्यदयादिवर्णनकलादुर्वासनावासिताम् ॥
मद्वाणीमधिवासयामि यमिनस्त्रैलोक्यरङ्गस्थली-
नृत्यत्कीर्तिनटीपटीरपटलीचूर्णैर्विकीर्णैः क्षितौ ॥ ८ ॥
पीयूषद्युतिखण्डमण्डनकृपारूपान्तरश्रीगुरु-
प्रेमस्थेमसमर्हणार्हमधुरव्याहारसूनोत्करः ॥
प्रौढोऽयं नवकालिदासकवितासंतानसंतानको
दद्यादद्य समुद्यतः सुमनसामामोदपारम्परीम् ॥ ९ ॥

वन्ध्यासुतेन गर्दभीशृङ्गेण च तुच्छेन तुल्या ये क्षुद्राणां क्षितीन्द्राणां राज्ञां क्षमाशौर्यौदार्यदयादयस्तेषां वर्णनस्य या कला तल्लक्षणया दुर्वासनया दुर्गन्धिना वासितां दुर्गन्धिव्याप्तां स्ववाचं यमिनो यतेः श्रीशंकरस्य त्रैलोक्यलक्षणायां रङ्गस्थल्यां नृत्यभूमिप्रदेशे नृत्यन्ती चासौ कीर्तिलक्षणा नटी तस्याः पटीरस्य चन्दनस्य पटली समूहस्तस्याश्चूर्णैः क्षितौ पृथिव्यां विकीर्णैः प्रसृतैरधिवासयामि सुगन्धयामि ॥ ८ ॥ [ वर्णनकला—

'सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ।
अष्टव्यक्तिकलाधरो नवनिधिः शुष्यद्दशप्रत्ययः
स्मार्तोच्छ्रायधुरंधरो विजयते श्रीबुक्कणः क्ष्मापतिः'

इत्यादिस्तवनचातुरी ] [ क्षितौ भरतवर्षभूमाविति यावत् ] ॥ ८ ॥

अयं प्रौढो नवकालिदासस्य माधवस्य कवितासंतानरूपः संतानकः कल्पवृक्षोऽद्य समुद्यतः सुमनसां पण्डितानां हर्षलक्षणामोदपरम्परां दद्यात् । यथा कल्पवृक्षः सुमनसां देवानामामोदस्यातिसमाकर्षिणो गन्धस्य संततिं ददाति तद्वदित्यर्थः । तं विशिनष्टि—पीयूषद्युतेरमृतांशोश्चन्द्रस्य खण्डः शकलो मण्डनमलंकारो यस्य तस्य शिवस्य कृपारूपान्तस्य श्रिया युक्तस्य गुरोर्यत्प्रेम्णः स्थेम्ना स्थैर्येण समर्हणं सम्यक्पूजनं तस्मिन्नर्हा योग्या मधुरा व्यवहारा उक्तय एव सूनानि पुष्पाणि तेषामुत्करो निचयो यस्मिन्सः । अत्र कवितासंतानस्य कल्पवृक्षेणाभेदेन रूपेण रञ्जनाद्रूपकालंकारः । तदुक्तम्—

'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्' इति ॥ ९ ॥

१ ख. 'लम' । २ ख. ग. घ. °क्षंततिरू° । ३ ख. ग. °पाया रू° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सामोदैरनुमोदिता मृगमदैरानन्दिना चन्दनै-
र्मन्दारैरभिनन्दिता प्रियगिरा काश्मीरजैः स्मेरिता ।
वागेषा नवकालिदासविदुषो दोषोज्झिता दुष्कवि-
व्रातैर्निष्करुणैः क्रियेत विकृता धेनुस्तुरुष्कैरिव ॥ १० ॥

---

सुमनसां सुखकरमपि वस्तु कुमनोभिर्विकृतं क्रियत इत्यालोच्य स्ववाचि विकारप्राप्तिं संभाव्याऽऽह—**सामोदैरिति**। आमोदेन हर्षेण वा सहितैर्मृगाणां मदैः कस्तूरिकासंज्ञकैरनुमोदिता श्लाघिता सामोदैरित्यस्योत्तरत्रापि संबन्धः । सामोदैश्चन्दनैरानन्दिताऽभिनन्दिता तथा सामोदैर्मन्दारैः प्रियगिराऽभिनन्दिता तथा सामोदैः काश्मीरजैः प्रियगिरा स्मेरिता विकासिता श्लाघिता दोषैर्विवर्जिताऽपि धेनुर्यद्वा दोषा रात्रिस्तस्यामुज्झिता स्वस्थानाद्विमुक्ता निष्करुणैस्तुरुष्कैर्म्लेच्छैर्यथा विकृता क्रियते ।

'तुरुष्कः सिल्हके म्लेच्छजातौ ' इति मेदिनी ।

तथैवंभूता सर्वदोषविनिर्मुक्ता नवीनकालिदासस्य विदुषो माधवस्यैषा वाग्दुष्टानां कवीनां समुदायैरत एव निष्करुणैर्विकृता विकारमन्यथाभावं प्राप्ता क्रियेतेत्यर्थः ॥ १० ॥ [ सामोदैरिति । पुरुषपक्ष आ समन्तादानन्दसहितैः सद्भिरिति यावत् । एतेन स्ववाचि निरतिशयानन्दजनकत्वं व्यज्यते] [कवितापक्षेऽमृगेति च्छेदः । न विद्यते मृगैस्तदुपलक्षितमांसाशनेन मदो येषां ते तथा । कस्मिंश्चिद्देशे हि गौडविशेषेषु ब्राह्मणा अपि मांसभक्षणं कुर्वन्तीति प्रसिद्धमेवातस्तद्व्युदासः । मांसभक्षकब्राह्मणभिन्नैरिति यावत् । एतादृशैर्विद्वद्भिरिति सर्वत्राऽऽर्थिकम् । अनुमोदिता कृताभिनन्देत्यर्थः । एतेन प्रकृतकाव्यस्याहिंसैकप्रधानयतीन्द्रचक्रवर्तिचरणचरितवर्णनात्मकत्वेन हिंसकानादरेऽपि न क्षतिरिति द्योतितम् ][ पक्षेऽचन्दनैरित्यकारप्रश्लेषः । चन्दनं तदुपलक्षितं यावत्स्रग्वनितादिविषयजातं तन्न विद्यते येषां ते तथा । ऐहिकाद्यखिलेष्टविषयविमुखास्तैरिति यावत् । आनन्दिताऽभिपूजितेत्यर्थः ] [ एतेनास्य विषयासक्तानादृतत्वेऽप्यखिलविरक्तपण्डितादृतत्वान्न काऽप्यनिष्टापत्तिरिति ध्वन्यते ] [ पक्षे मन्देभ्योऽपि जडेभ्योऽपि ' अं ' ' अकारो वासुदेवः स्यात् ' इति कोशाद्विष्णुं रान्त्यात्मत्वेन ददतीति तथा । स्वयोगैश्वर्यशक्त्याऽकुशाग्रबुद्धिभ्योऽपि मुमुक्षुभ्यः शुद्धाद्वैतपरमात्मबोधप्रदैरिति यावत् । आनन्दिताऽभिनन्दिता ] [ प्रियगिरा प्रियंवदया सख्या । काश्मीरजैः ' काश्मीरजन्माग्निशिखम् ' इत्यमरात्कुङ्कुमैरित्यर्थः । ललाटस्तनतटपादद्वयावच्छेदेन तिलकतमालपत्राभिलेपनादिद्वारा स्मेरिता हर्षं नीतेत्यर्थः । प्रियगिरेतीदमपि कर्तृवाचकं पदं पूर्वत्र मृगमदचन्दनमन्दाराभिधेषु त्रिष्वपि करणपदेषु प्रागेव प्रयोज्यम् । पक्षे काश्मीरजैः काश्मीरदेशोद्भवैर्विद्वद्भिः । प्रियगिराऽतिरम्यतममिदं काव्यमिति प्रकृतकाव्यवक्तृसंतोषपोषकमापयेति यावत् । स्मेरिता जनितानन्देत्यर्थः । विकृता निन्दिता पक्षे हता क्रियेतेति संबन्धः । एतेन तेषामतिनिन्द्यत्वं ध्वन्यते । एवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्वा दीनदयालवः सहृदयाः सौजन्यकल्लोलिनी-
दोलान्दोलनखेलनैकरसिकस्वान्ताः समन्तादमी ॥
सन्तः सन्ति परोक्तिमौक्तिकजुषः किं चिन्तयाऽनन्तया
यद्वा तुष्यति शंकरः परगुरुः कारुण्यरत्नाकरः ॥ ११ ॥
उपक्रम्य स्तोतुं कतिचन गुणाञ्श्रीशंकरगुरोः
प्रभग्नाः श्लोकार्धे कतिचन तदर्धार्धरचने ॥
अहं तद्वत्पुस्तानहह कलये शीतकिरणं
कराभ्यामाहर्तुं व्यवसितमतेः साहसिकताम् ॥ १२ ॥

---

धेनूपमयां स्ववाच्यतिवन्यत्वं च । तथाचाऽऽम्नायते वाजसनेयिभिः 'वाचं धेनुमुपासीत' इति ] ॥ १० ॥

एवं प्राप्तामनन्तां चिन्तां काव्यकरणे प्रतिबन्धिकां वारयति—यद्वेति । यद्वा दीनेषु दयालवः सहृदयाः परकीयश्रमाद्यभिज्ञाः सौजन्यात्मिकायां कल्लोलिन्यां नद्यां दोलान्दोलनमितस्ततो भ्रमणं तदात्मकं यत्खेलनं तस्मिन्नेवैकं मुख्यं रसिकं स्वान्तं मनो येषां ते परोक्तिं मौक्तिकवज्जुषन्तीति तथाभूता अमी सन्तः समन्तात्सन्ति । अतोऽनन्तया चिन्तया किं, न किमपि, सा न कर्तव्येत्यर्थः । तेषां दौर्लभ्यमाशङ्क्याऽऽह—यद्वा कारुण्यस्य रत्नाकरः समुद्रः परगुरुः श्रीशंकरस्तुष्यति । तथाच तत्संतुष्ट्यर्थमवश्यं यतितव्यमिति भावः । अत्र पूर्वश्लोकात्प्राप्तचिन्ताया यद्वेत्यादिना प्रतिषेधादाक्षेपालंकारः ॥ ११ ॥ [ परेति । परेषामुक्तय एव मौक्तिकानि तानि जुषन्ते सेवन्ते ते । [ निरुक्तविशेषणचतुष्टयविशिष्टशिष्टानां तत्कालसौलभ्येऽपि कालान्तरदेशान्तरदौर्लभ्यास्वरसमूलकमेव यद्वेति विकल्पान्तरमित्याशयः ] ॥ ११ ॥

ननु यत्र श्रीशंकरगुणवर्णने बहवोऽपि प्रभग्नास्तत्र प्रवृत्तस्य तव साहसमात्रमेवेति चेत्सत्यं तथाऽपि गुरुकटाक्षा अघटितमपि मदभीष्टं घटयितुं शक्ता इत्याहोपक्रम्येतिद्वाभ्याम् । श्रीशंकरगुरोर्गुणान्स्तोतुमुपक्रम्य कतिचन केचिच्छ्लोकार्धे प्रभग्नाः केचित्तु श्लोकपादरचने प्रभग्नाः कतिच न प्रभग्ना अपि तु सर्वे एव प्रभग्ना इति वा । अहं तांस्तथाभूतान्गुणांस्तुष्टूषुः स्तोतुमिच्छुरहहास्यन्तमाश्चर्यम् । शीतकिरणं चन्द्रं कराभ्यां हस्ताभ्यामाहर्तुं व्यवसितमतेर्व्यवसिता निश्चिता मतिर्यस्य तस्य बालस्य साहसिकतां कलये संपादयामि । अत्र स्वस्मिंस्तद्गतसाहसिकतापदार्थारोपान्निदर्शनालंकारः ।

'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्' इत्युक्तेः ।

शिखरिणी—

'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् ॥ १२ ॥

---

१ क. °न्तमन्यायम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथाऽप्युज्जृम्भन्ते मयि विपुलदुग्धाब्धिलहरी-
लसत्कल्लोलालीलसितपरिहासैकरसिकाः ॥
अमी मूकान्वाचालयितुमपि शक्ता यतिपतेः
कटाक्षाः किं चित्रं भृशमघटिताभीष्टघटने ॥ १३ ॥
अस्मज्जिह्वाग्रसिंहासनमुपनयतु स्वोक्तिधारामुदारा-
मद्वैताचार्यपादस्तुतिकृतसुकृतोदारता शारदाम्बा ॥
नृत्यन्मृत्युंजयोच्चैर्मुकुटतटकुटीनिःस्रवत्स्वःस्रवन्ती-
कल्लोलोद्वेलकोलाहलमदलहरीखण्डिपाण्डित्यहृद्याम् ॥ १४ ॥

---

यद्यप्येवं तथाऽपि विपुलानां दुग्धाब्धेः क्षीरसमुद्रस्य लहरीणां प्रवाहाणां लसन्ताश्चकासन्तो ये कल्लोला बृहत्तरङ्गास्तेषामाली पङ्क्तिस्तस्या लसिते परिहास एकरसिका-मुख्यरसिकास्ततोऽप्यतिस्वच्छा यतिपतेर्विद्यातीर्थस्य शंकरस्य वाऽमी कटाक्षा मूकानपि वाचालयितुं शक्ताः समर्था मय्युल्लसन्त्यतोऽघटितं यदभीष्टं तस्य ममाघटिताभीष्टस्य घटने भृशमतिशयेन शक्ता इत्यत्र किं चित्रं किमप्याश्चर्यं न भवतीत्यर्थः । भृशमघटिताभीष्टस्य घटने किं चित्रमिति वा ॥ १३ ॥ [ मूकान्वागिन्द्रियानुग्रहविरहिणः पुरुषानिति यावत् । वाचालयितुमपि 'स्याज्जल्पाकस्तु वाचालः' इत्यमराद्बहुजल्पनशीलं कर्तुमपीत्यर्थः ] ॥ १३ ॥

एवमपि चित्तस्थैर्यमलभमानो जगज्जननीं सरस्वतीं प्रार्थयते—अस्मदिति । अद्वैताचार्यपादस्तुत्या श्रीशंकराचार्यपादस्तुत्या कृतं संपादितं यत्सुकृतं पुण्यं तेनोदारता यस्याः कृतं सुकृतं येन तस्मिन् । मय्युदारता यस्या इति वा । सा शारदाम्बा नृत्यतो मृत्युंजयस्य शिवस्योच्चैर्मुकुटतटकुट्या निःस्रवन्ती या स्वःसरिद्गङ्गा तस्याः कल्लोलानामुद्वेलोऽनतिवेलोऽत्यर्थो यः कोलाहलस्तस्य यो मदो गर्वोऽहंकारस्तस्य लहरीणां खण्डि खण्डनकर्तृ यत्पाण्डित्यं तेन हृद्यां मनोज्ञामुदारां विशालां स्वीयां व्याहारधारामस्मज्जिह्वाग्रमेव सिंहासनमुपनयतु जिह्वाग्रलक्षणसिंहासनसमीपं प्रापयतु । अभ्यर्थनायां लोट् । स्रग्धरा—

'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् ॥ १४ ॥
[ 'शारदेति । 'स भूरिति व्याहरत् । तेन भुवमसृजत' श्रुतेः सकलपृथ्व्यादिसृष्टेः प्रणवव्याहृत्यादिशब्दब्रह्मपूर्वकत्वात्तदधिष्ठातृरजःप्रधानमायोपहितेश्वरलीलाविग्रहकमलासनशक्त्याः सरस्वत्याः प्रणवादिसकलशब्दब्रह्माधिष्ठात्र्याः समुचितमेव जगज्जन्महेतुतत्वेनाम्बात्वमिति तत्त्वम् । [ स्वेति । स्वस्याऽऽत्मनो या उक्तयस्तासां या धारा

---

१ क. 'घटपस्य । २ क. ग. 'लोऽति° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केदं शंकरसद्गुरोः सुचरितं क्वाहं वराकी कथं
निर्बध्नासि चिरार्जितं मम यशः किं मज्जयस्यम्बुधौ ।
इत्युक्त्वा चपलां पलायितवतीं वाचं नियुङ्क्ते बला-
त्प्रत्याहृत्य गुणस्तुतौ कविगणश्चित्रं गुरोर्गौरवम् ॥ १५ ॥
रुक्षैकाक्षरवाङ्निघण्टुशरणैरौणादिकप्रत्यय-
प्रायैर्हन्त यङन्तदन्तुरतरैर्दुर्बोधदूरान्वयैः ।
क्रूराणां कवितावतां कतिपयैः कष्टेन कृष्टैः पदैर्हा
हा स्याद्वशगा किरातविततेरेणीव वाणी मम ॥ १६ ॥

---

संततिस्तया या मुदानन्दाभिव्यक्तिस्तस्या आरेवाऽऽरा 'आरा चर्मप्रभेदिन्यां पुंसि भौमे शनैश्चरे' इति मेदिन्युक्तेरतिसूक्ष्माग्रभूमिमित्यर्थः । स्ववाक्चातुर्यानन्दप्रथमावस्थामित्यर्थ एव फलितः ] ॥ १४ ॥

ननु दुर्घटेऽर्थे तव वाचः पलायनमेव युक्तं मध्येऽसामर्थ्यवशान्निवृत्तौ चिरार्जितयशोनाशसंभवादिति चेदिदमेव विचार्य पलायितवतीं मद्वाचं गुरोर्गौरवाद्बलात्प्रत्याहृत्य कविगणो नियुङ्क्ते इत्याह—क्वेति । इदं शंकरसद्गुरोः सुचरितं क्व । अहं वराकी क्षुद्रा क्व । अतश्चिरार्जितं मम यशः कथं कुतो निर्बध्नासि नाशयस्यम्बुधौ समुद्रे मां मम यशो वा किमर्थं मज्जयसीत्युक्त्वा पलायितवतीं चपलां वाचं बलात्प्रत्याहृत्य शंकरसद्गुरोर्गुणस्तुतौ कविसमूहो नियुङ्क्ते प्रेरयतीति चित्रं गुरोर्गौरवम् । शार्दूलविक्रीडितम् ॥ १९ ॥ [ अहं वराकी तद्वर्णनाशक्तत्वादतितुच्छा क्व । अतो रे कवे त्वं मां तद्वर्णने कथं निर्बध्नासि योजयसीत्यध्याहृत्यान्वयः । ततश्चिरार्जितं मम यशः किमित्यम्बुधौ मज्जयसीति संबन्धः । इत्युक्त्वा यतश्चपलामतः पलायितवतीमेतादृशीं वाचम् ] ॥ १९ ॥

काव्यरचनायां प्रवृत्ता मद्वाणी क्रूराणां कवितावतां शैलीमनुसरिष्यतीति साशङ्कमाह—रुक्षेति । रुक्षा चासावेकाक्षरा चासौ वाक्च सा च निघण्टवः कोशाश्च शरणं येषां तैः । औणादिकाः प्रत्ययाः प्रायेण येषु । यङन्तानि च तानि दन्तुरतराणि विषमतराणि च—

'दन्तुरं वाच्यवल्लिङ्गाद्विषमोन्नतदन्तयोः' इति विश्वप्रकाशः ।

यङन्तानि च दन्तुरतराणि च तैरिति वा । दुर्बोधानि च तानि दूरान्वयानि च दुर्बोधानि च दूरान्वयानि चेति वा तैः । कष्टेन कृष्टैः क्रूराणां कवितावतां कतिपयैः कैश्चित्पदैर्हा हा मम वाणी वशगा स्यात् । यथैणी मृगी किरातानां वितते: पङ्क्तेस्तद्वदित्यर्थः ॥ १६ ॥ [ यङन्ताश्चरीकर्तीत्यादयः प्रसिद्धा एव शब्दास्तैर्दन्तुरतराण्यतिनिम्नोन्नतानि तैरित्यर्थः ।

---

१ ग. 'म् ॥ १५ । रूक्षै' । २ ग. रूक्षेति । ग. रूक्षा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेता यत्रोल्लसति भगवत्पादसंज्ञो महेशः
शान्तिर्यत्र प्रकचति रसः शेषवानुज्ज्वलाद्यैः।
यत्राविद्याक्षतिरपि फलं तस्य काव्यस्य कर्ता
धन्यो व्यासाचलकविवरस्तत्कृतिज्ञाश्च धन्याः ॥ १७ ॥

---

[ क्रूराणां कठोरवाचाम् । पक्षे निर्दयानाम् । कुकवीनामित्यार्थिकम् । [ एणीव हरिणीव मम वाणी वशगा स्यात्तेषां भुवि बहुत्वादस्याश्चैकत्वात्तत्परवशा स्याद्भूयादित्यन्वयः ]॥ १६ ॥

एवं तर्हि किमर्थं काव्यरचनायां प्रवृत्तस्त्वमिति चेच्छ्रीशंकराचार्यस्य गुणानुवर्णनेन स्वस्य कृतकृत्यतासंपादनार्थमित्याशयेनाऽऽह—नेता यत्रेति । यत्र यस्मिन्काव्ये भगवत्पादेति संज्ञा यस्य स महेशो नेता मुख्यः स्वामी वर्ण्य इति यावत् । उल्लसति प्रकाशते। तस्य काव्यस्य ' तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ' इत्युक्तस्वरूपस्य प्रभुसंमितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्संमितार्थतात्पर्यवदितिहासपुराणादिभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणस्य कान्तेव सरसतापादनेनाभिमुखीकृत्योपदेशकर्तुर्लोकोत्तरवर्णनानिपुणस्य कवेः कर्मणः कर्ता व्यास इवाचलः स्थिरश्चासौ कविश्रेष्ठश्चेति व्यासाचलकविवरो माधवो धन्यः कृतकृत्यः । नन्वविद्याक्षतिपूर्वकब्रह्मानन्दप्राप्त्या कृतकृत्यताया वेदान्तसिद्धान्तत्वात्कथं तद्व्यतिरिक्तरसयुक्तकाव्यकरणेन कृतकृत्यतेत्यत आह—यत्र यस्मिन्काव्ये शान्तिः शान्तिसंज्ञो रसः प्रकचति प्रकाशते । रसं विशिनष्टि उज्ज्वलाद्यैः शेषैरुपसर्जनभूतैः शेषवाञ्शेषी प्रधानभूत इति यावत् । उज्ज्वलः शृङ्गारः—

' शृङ्गारः शुचिरुज्ज्वलः ' इत्यमरः ।

आद्यपदेन वीरकरुणाद्भुतहास्यभयानकबीभत्सरौद्राख्या रसा गृह्यन्ते । यत्र यस्मिन्काव्येऽविद्याक्षतिरपि फलम् । क्षतेरन्यत्र फलत्वाभावादपिशब्दः । तथाचैवंविधकाव्यकर्ता धन्य एवेति भावः । तस्य माधवस्य कृतिं यत्नं जानन्तीति तत्कृतिज्ञास्तेऽपि धन्याः । मन्दाक्रान्ता—

' मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ' इति लक्षणात् ॥ १७ ॥

[ शेषवानङ्गवानित्यर्थः ] । [ व्यासेति । व्यासो भगवान्बादरायणः प्रसिद्ध एव तद्वदचलः सर्वमान्यत्वेनालब्ध्यः स चासौ कविवरश्चेति तथा ] ॥ १७ ॥

---

१ ख. "पैनानि" ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्राऽऽदिम उपोद्‌घातो द्वितीये तु तदुद्भवः ।
तृतीये तत्तदमृतान्धोवतारनिरूपणम् ॥ १८ ॥
चतुर्थसर्गे तच्छुद्धाष्टमप्राक्चरितं स्थितम् ।
पञ्चमे तद्योग्यसुखाश्रमप्राप्तिनिरूपणम् ॥ १९ ॥
महताऽनेहसा येषा संप्रदायागता गता ।
तस्याः शुद्धात्मविद्यायाः षष्ठे सर्गे प्रतिष्ठितिः ॥ २० ॥
तद्व्यासाचार्यसंदर्शविचित्रं सप्तमे स्थितम् ।
स्थितोऽष्टमे मण्डनार्यसंवादो नवमे मुनेः ॥ २१ ॥

---

अथ शांकरीं कथां विस्तरेण निरूपयितुं प्रथमं तावच्छ्रोतुः सुखप्रतिपत्तये षोडशसर्गैर्निरूप्यां तां संक्षिप्य दर्शयति—तत्रेत्यादिना । तत्र षोडशसर्गात्मके काव्य आदिमे आद्ये सर्ग उपोद्धातः 'चिन्तां प्रकृतिसिद्ध्यर्थामुपोद्धातं प्रचक्षते' इत्युक्तः । शिवदेवतासंवादादिरूपो निरूपितः । द्वितीये सर्गे तु तस्य भगवतो महेशस्योद्भव आविर्भावः । तृतीये सर्गेऽमृतमन्धोऽन्नमदनीयं येषाम् । 'अदेर्नुम्धौ च' अदेर्भक्त वाच्येऽसुन्प्रत्ययो नुमागमो दस्य धादेशश्च । तेषां तेषाममृतान्धसां देवानामवतारस्य निरूपणम् । तस्य तस्यामृतान्धसोऽवतारस्येति वा ॥ १८ ॥

चतुर्थे सर्गेऽष्टमवर्षात्प्राक्चरितमष्टमप्राक्चरितं शुद्धं च तदष्टमप्राक्चरितं च तस्य महेशस्य शुद्धाष्टमप्राक्चरितं स्थितम् । शुद्धत्वं च प्राकृतचरितविलक्षणत्वम् । पञ्चमे सर्गे तस्य योग्यस्य जीवन्मुक्तिसुखसाधनस्य चतुर्थाश्रमस्य प्राप्तेर्निरूपणम् । योग्यस्य सुखाश्रमस्येति वा ॥१९॥ [ तद्योग्येति । तस्य भगवतो भाष्यकारस्य योग्यः शुद्धाद्वैतब्रह्मविद्यैकप्रतिष्ठापनप्रयोजकप्रकटितमायिकलीलाविग्रहसमुचित इति यावत् । एतादृशो यः सुखाश्रमः परमहंससंन्यासस्तस्यैव पारमार्थिकसुखसाधकत्वात्तथात्वम् । तस्य या प्राप्तिस्तस्या निरूपणमित्यर्थः ] ॥ १९ ॥

येषा शुद्धात्मविद्या संप्रदायादागता महता कालेन संप्रदायस्य विच्छिन्नत्वाद्गता तस्याः शुद्धात्मविद्यायाः प्रतिष्ठितिः सम्यक्स्थापनं षष्ठे सर्गे स्थितम् ॥ २० ॥

सप्तमे सर्गे तस्य शंकराचार्यस्य व्यासाचार्यस्य च परस्परसंदर्शनात्मकं विचित्रमाश्चर्यं स्थितम् । अष्टमे सर्गे मण्डनार्ययोर्मण्डनभाष्यकारयोः संवादः स्थितः ॥२१॥ [ तदिति । तस्य भगवतो भाष्यकारस्य यः सम्यग्जाग्रत्येवापरोक्षतया दर्शनं ज्ञानं संदर्शः । व्यासश्चासावाचार्यः ।

'आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमप्याचरेद्यस्तु स आचार्य इति स्मृतः' इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाणीसाक्षिकसार्वज्ञनिर्वाहोपायचिन्तनम् ॥
दशमे योगशक्त्या भूपतिकायप्रवेशनम् ॥ २२ ॥
बुद्ध्वा मीनध्वजकलास्तत्प्रसङ्गप्रपञ्चनम् ॥
सर्ग एकादशे तूग्रभैरवाभिधनिर्जयः ॥ २३ ॥
द्वादशे हस्तधात्र्यार्थतोटकोभयसंश्रयः ॥
वार्तिकान्तब्रह्मविद्याचालनं तु त्रयोदशे ॥ २४ ॥
चतुर्दशे पद्मपादतीर्थयात्रानिरूपणम् ॥
सर्गे पञ्चदशे तूक्तं तदाशाजयकौतुकम् ॥ २५ ॥
षोडशे शारदापीठवासस्तस्य महात्मनः ।
इति षोडशभिः सर्गैर्व्युत्पाद्या शांकरी कथा ॥ २६ ॥

---

'कृते तु भगवान्सत्यस्त्रेतायां दत्त एव च ।
द्वापरे भगवान्व्यासः कलौ श्रीशंकरः स्वयम् '

इति चाभियुक्तोक्तेरद्वैतविद्यायाः प्राचीनसंप्रदायप्रवर्तकश्चेति तथा । तस्य यः संदर्शः स तथा व्यासाचार्यसंदर्शस्तेन विचित्रमद्भुतमित्यर्थः । चरितमिति शेषः ] ॥ २१ ॥

नवमे सर्गे सरस्वतीसाक्षिकं मुनेर्यत्सार्वज्ञं तस्य यो निर्वाहस्तदुपायस्य चिन्तनं स्थितम् । दशमे सर्गे योगशक्त्या भूपतेरमरकाभिधस्य राज्ञः काये शरीरे प्रवेशनं स्थितम् ॥ २२ ॥

मीनध्वजस्य कामस्य कला बुद्ध्वा तासां कलानां प्रसङ्गस्य प्रपञ्चनं प्रकटीकरणमिति पूर्वेणान्वयः । एकादशे सर्गे तूग्रभैरवाभिधस्य कापालिकस्य निर्जयः स्थितः ॥ २३ ॥ [ तत्प्रसङ्गेति । तयोभयभारत्यभिधसरस्वत्या सह यः प्रसङ्गः पुनर्जल्पादिस्तस्य प्रपञ्चनमिति यावत् ] ॥ २३ ॥

द्वादशे सर्गे हस्तामलकार्थतोटकोभयसंश्रयो द्वयोः शिष्यत्वेनाऽऽश्रयणं स्थितम् । त्रयोदशे सर्गे तु वार्तिकान्ताया ब्रह्मविद्यायाश्चालनं प्रचारः स्थितः ॥ २४ ॥ [ चालनं ग्रन्थादिद्वाराऽखिलभरतवर्षे संचारणमित्यर्थः ] ॥ २४ ॥

चतुर्दशे सर्गे पद्मपादस्य तीर्थयात्राया निरूपणम् । पञ्चदशे सर्गे तु तस्य शंकरस्याऽऽशाजयात्मकं कौतुकमुक्तम् । दिग्विजयस्य कौतुकमिति वा ॥ २५ ॥ [ पद्मपादेति । पद्मपादाचार्यः श्रीविष्ण्ववतारीभूतस्तच्छिष्य इत्यर्थः ] ॥ २५ ॥

षोडशे सर्गे तस्य महात्मनः शारदापीठवासः स्थितः । इत्येवंप्रकारेण षोडशभिः सर्गैः शांकरी कथा प्रतिपादनीया ॥ २६ ॥ [ शारदेति । सर्वान्भेदवादिनो विजित्य यः सर्वज्ञत्वेन सर्वमान्यस्तेन देशविशेषप्रसिद्धसरस्वतीपीठनिवासः कर्तुमुचित इति शिष्टाः वदन्ती ] ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सैषा कलिमलच्छेत्री सकृच्छ्रुत्याऽपि कामदा ॥
नानाप्रश्नोत्तरै रम्या विदामारभ्यते मुदे ॥ २७ ॥
एकदा देवता रूप्याचलस्थमुपतस्थिरे ॥
देवदेवं तुषारांशुमिव पूर्वाचलस्थितम् ॥ २८ ॥
प्रसादानुमितस्वार्थसिद्धयः प्रणिपत्य तम् ॥
मुकुलीकृतहस्ताब्जा विनयेन व्यजिज्ञपन् ॥ २९ ॥
विज्ञातमेव भगवन्विद्यते यद्धिताय नः ॥
वञ्चयन्सुगतान्बुद्धवपुर्धारी जनार्दनः ॥ ३० ॥

---

सैषा शांकरी कथा कलिमलनाशकर्त्री सकृच्छ्रवणेनापि काम्यमानपुरुषार्थचतुष्टयप्रदा नानाप्रश्नोत्तरैर्मनोज्ञा विदुषां प्रमोदार्थमारभ्यते ॥ २७ ॥ [ कलीति । ऐश्वरपरमसात्त्विकतरावतारचरितत्वादित्यर्थः ] ॥ २७ ॥

इत्थं संग्रहेण शांकरीं कथां निरूप्य तस्या विस्तरेण निरूपणं प्रतिज्ञाय तदुपोद्धातत्वेन कथां प्रस्तौति—एकदेति । एकदैकस्मिन्काले रूप्याचले कैलासे स्थितं देवानामिन्द्रादीनां देवं महादेवं पूर्वाचलस्थं चन्द्रमिव देवता उपतस्थिर उपासांचक्रिरे । देवता ब्रह्माद्या अत्र ग्राह्याः । निगमाचारपरिभ्रष्टानागमाचाररतान्विप्रादिवर्णानवलोक्य सत्यलोकगतेन नारदेन प्रेरितो ब्रह्मा स्वभक्तादिसहितः शिवलोकमागत्य प्रणिपत्य पञ्चवक्त्रं शिवमूच इति प्राचीनविजयोक्तेः ॥ २८ ॥ [ इन्द्रादयः । पूर्वेति । उदयाद्रिगतम् । तुषारेति चन्द्रमिवेति संबन्धः । ते ह्यमृताख्यस्वजीवनार्थं तमुपतिष्ठन्तीति शास्त्रप्रसिद्धमेव तद्वृत्तस्याप्युपादानीभूताग्निहोत्रादिवैदिककर्मणस्तथात्वादद्वैतविद्यायाश्च पारमार्थिकामृतत्वहेतुत्वाच्च युक्त एवायं ब्रह्मादिदेवकर्तृकः शिवस्तवनोपक्रम इति भावः ] ॥ २८ ॥

उपास्य यत्कृतवत्यस्तदाह—उपासनया प्रसादितस्य शिवस्य प्रसन्नतारूपेण लिङ्गेनानुमिता स्वार्थस्य सिद्धिर्याभिस्ताः । अमुकुलानि मुकुलीकृतानि हस्तकमलानि याभिस्ता बद्धाञ्जलयो देवदेवं प्रणिपत्य प्रकर्षेण नम्रीभूय विनयेन व्यजिज्ञपन्विज्ञापनं कृतवत्यः ॥२९॥ [ प्रसादेति । शंकरस्येत्यार्थिकम् । ब्रह्मादयो देवा इति शेषः ] ॥ २९ ॥

तदेवोदाहरति—हे भगवन्नोऽस्माकं हिताय बुद्धवपुर्धारी जनार्दनः सुगतान्वञ्चयन्यद्विद्यते स्म तत्त्वया विज्ञातमेव ॥ ३० ॥ [ बुद्धेति । ]

---

१ क. च्छ्रुत्वाऽपि । २ ग. °लोकं ग° । ३ ख. ग. °वमुवाचेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्प्रणीतागमालम्बैर्बौद्धैर्दर्शनदूषकैः ॥
व्याप्तेदानीं प्रभो धात्री रात्रिः संतमसैरिव ॥ ३१ ॥
वर्णाश्रमसमाचारान्द्विषन्ति ब्रह्मविद्विषः ॥
ब्रुवन्त्याम्नायवचसां जीविकामात्रतां प्रभो ॥ ३२ ॥
न संध्यादीनि कर्माणि न्यासं वा न कदाचन ॥
करोति मनुजः कश्चित्सर्वे पाखण्डतां गताः ॥ ३३ ॥
श्रुते पिदधति श्रोत्रे क्रतुरित्यक्षरद्वये ।
क्रियाः कथं प्रवर्तेरन्कथं क्रतुभुजो वयम् ॥ ३४ ॥

---

'बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति' ।

इति भागवतोक्तेर्बुद्धावतार इत्यर्थः ] ॥ ३० ॥

यद्यपि जनार्दनोऽस्मद्धिताय दैत्यान्पूर्वं वञ्चितवांस्तथाऽपीदानीं तेन बुद्धेन प्रणीता रचिता य आगमास्तदालम्बैर्बौद्धैर्दृश्यते कर्मोपासना ज्ञानं च येन यस्मिन्निति वा तद्दर्शनं कर्मादिप्रतिपादकं वेदादिशास्त्रं तद्दूषकैर्बौद्धैर्धात्री पृथिवी व्याप्ता । यथा संतमसैर्गाढान्धकारै रात्रिस्तद्वत् । तेषां निराकरणे त्वमेव प्रभुरिति सूचयितुं प्रभो इति संबोधनम् । त्वयि प्रभौ सतीदमत्यन्तानुचितमिति वा संबोधनाशयः ॥ ३१ ॥ [ दर्शनेति । आस्तिकषड्दर्शनीनिन्दकैरित्यर्थः । धात्री—

"धात्री जनन्यामलकी वसुमत्युपमातृषु" इति मेदिन्याः पृथ्वीत्यर्थः ] ॥ ३१ ॥

अनर्थरूपं तेषां कृत्यमाहुः—वर्णाश्रमाणां ये सम्यगाचारास्तान्द्विषन्ति । यतो ब्रह्माणं ब्राह्मणं वेदं तपो ब्रह्म च विद्विषन्तीति ब्रह्मविद्विषोऽत एव वेदवचनानां जीविकामात्रतां ब्रुवन्ति । वेदा जीविकार्थं निर्मिता इति कथयन्ति हे प्रभो ॥ ३२ ॥ [ आम्नायेति । 'श्रुतिः स्त्री वेद आम्नायस्त्रयी' इत्यमरात्वेदवाक्यानामित्यर्थः ]॥३२॥

न्यासं संन्यासं गताः प्राप्ताः ॥ ३३ ॥ [ पाखण्डताम्—

'पाशब्देन त्रयीधर्मः पारक्षण इति स्मृतः ।
तं खण्डयन्ति ये तर्कैस्ते पाखण्डा इति स्मृताः' ।

इत्यभियुक्तोक्तेर्नास्तिकतामित्यर्थः ] ॥ ३३ ॥

---

१ ख. ग. पाषण्ड° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिवविष्ण्वागमपरैर्लिङ्गचक्रादिचिह्नितैः ।
पाखण्डैः कर्म संन्यस्तं कारुण्यमिव दुर्जनैः ॥ ३५ ॥
अनन्येनैव भावेन गच्छन्त्युत्तमपूरुषम् ।
श्रुतिः साध्वी मदक्षीबैः का वा शाक्यैर्न दूषिता ॥ ३६ ॥
सद्यः कृत्तद्विजशिरःपङ्कजार्चितभैरवैः ।
न ध्वस्ता लोकमर्यादा का वा कापालिकाधमैः ॥ ३७ ॥
अन्येऽपि बहवो मार्गाः सन्ति भूमौ सकण्टकाः ।
जनैर्येषु पदं दत्त्वा दुरन्तं दुःखमाप्यते ॥ ३८ ॥
तद्भवाँल्लोकरक्षार्थमुत्साद्य निखिलान्खलान् ।
वर्त्म स्थापयतु श्रौतं जगद्येन सुखं व्रजेत् ॥ ३९ ॥

---

क्रतुरित्यक्षरद्वये श्रुतेऽपि सति श्रोत्रे पिदधति कर्णपिधानं कुर्वन्ति ॥ ३४ ॥ [ क्रतुरिति । 'सप्ततन्तुर्मखः क्रतुः' इत्यमराद्युक्तः ] ॥ ३४ ॥

शिवेति । स्पष्टोऽर्थः ॥ ३५ ॥ [ संन्यस्तं त्यक्तम् । विधिं विनैव समुज्झितमित्यर्थः । तेन नाधिकारिकर्तृकवैधसंन्यासेऽतिव्याप्तिरिति तत्त्वम् ] ॥ ३५ ॥

यथा साध्वी पतिव्रताऽनन्येनैव भावेन स्वपतिमनुसरन्ती मदोन्मत्तैर्दुष्टैर्दूष्यते तथोत्तमपूरुषं क्षराक्षरातीतं परमात्मानमनन्येनैव भावेन गच्छन्ती श्रुतिः साध्वी मदक्षीबैः शाक्यैर्बौद्धैः का वा न दूषिताऽपि तु सर्वैव दूषिता । तथाचोत्तमपुरुषेण त्वया स्वप्रतिपादिका श्रुतिरवश्यं रक्षणीयेति भावः ॥ ३६ ॥ [ भावेन स्वाभिप्रायेणेत्यर्थः । पक्षेऽव्यभिचारिणैव प्रेम्णेति यावत् । ] [ उत्तमेति ।

' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ' इति भगवद्वचनात्परमात्मानमित्यर्थः । ] [ पक्षे ब्राह्मविवाहविधिना परिणीतत्त्वात्स्वपतिरूपेनैव सर्वोत्तमं कान्तमित्यर्थः । गच्छन्ती तात्पर्यतः पर्यवस्यन्ती । पक्षे । अभिसरन्ती ] [ श्रुतीति । श्रुतिरेव साध्वी पतिव्रता । पक्षे श्रुतिरिव सार्वांशिकशुद्धा साध्वी पतिव्रतेति यावत् । मदक्षीबैर्विद्यामदादिनोन्मत्तैः । पक्षे मद्यमदादिनोद्भ्रान्तैरित्यर्थः ] ॥ ३६ ॥

सद्यः कृत्तानि च्छिन्नानि द्विजानां शिरांस्येव पङ्कजानि तैरर्चितो भैरवो यैस्तैः कापालिकाधमैर्लोकमर्यादा का वा न ध्वस्ता किं तु सर्वैव नाशितेत्यर्थः ॥ ३७ ॥

पदं दत्त्वा गत्वा ॥ ३८ ॥ [ अन्येऽपीति । तार्किकादय इत्यर्थः ] ॥ ३८ ॥

तत्तस्मादुत्साद्य विनाश्य श्रौतं वर्त्म वैदिकं मार्गम् ॥ ३९ ॥ [ श्रौतं श्रुतिमात्रप्रतिपादितं पूर्वोत्तरमीमांसालक्षणम् । नतु तन्त्रमिश्रितमित्यर्थः ] ॥ ३९ ॥

---

१ ख. ग. पाठः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्त्वोपरतान्देवानुवाच गिरिजाप्रियः ।
मनोरथं पूरयिष्ये मानुष्यमवलम्ब्य वः ॥ ४० ॥
दुष्टाचारविनाशाय धर्मसंस्थापनाय च ।
भाष्यं कुर्वन्ब्रह्मसूत्रतात्पर्यार्थविनिर्णयम् ॥ ४१ ॥
मोहनप्रकृतिद्वैतध्वान्तमध्याह्नभानुभिः ।
चतुर्भिः सहितः शिष्यैश्चतुरैर्हरिवद्भुजैः ॥ ४२ ॥
यतीन्द्रः शंकरो नाम्ना भविष्यामि महीतले ।
मद्वत्तथा भवन्तोऽपि मानुषीं तनुमाश्रिताः ॥ ४३ ॥
तं मामनुसरिष्यन्ति सर्वे त्रिदिववासिनः ।
तदा मनोरथः पूर्णो भवतां स्यान्न संशयः ॥ ४४ ॥
ब्रुवन्नेवं दिविषदः कटाक्षानन्यदुर्लभान् ।
कुमारे निदधे भानुः किरणानिव पङ्कजे ॥ ४५ ॥

---

मानुष्यमवलम्ब्य मनुष्यभावमाश्रित्य वो युष्माकं मनोरथं वाञ्छां पूरयिष्ये ॥ ४० ॥ किं कुर्वन्नित्यपेक्षायामाह—दुष्टाचारविनाशायेति । ब्रह्मप्रतिपादकानां सूत्राणां तात्पर्यार्थस्य विशेषेण निर्णयो येन तत् ।

'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।
सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ' ।

इति सूत्रभाष्यलक्षणश्लोकौ द्रष्टव्यौ ॥ ४१ ॥

मोहनमज्ञानं प्रकृतिरुपादानं यस्य तच्च तद्द्वैतमेव ध्वान्तं गाढं तमस्तस्य निरसने मध्याह्नसूर्यैश्चतुर्भिश्चतुरैः कुशलैः शिष्यैः सहितश्चतुर्भिर्भुजैर्हरिवत् ॥ ४२ ॥ [ चतुरैः शास्त्राद्यखिलव्यवहारकुशलैः ] ॥ ४२ ॥

यतीन्द्रो नाम्ना शंकरो महीतले भविष्यामि तथा भवन्तोऽपि मानुषीं तनुमाश्रिताः सर्वे स्वर्गवासिनो देवास्तं यतीन्द्रं शंकरं मामनुसरिष्यन्ति तदा भवतां मनोरथः पूर्णः स्याद्भविष्यति न संशयोऽस्मिन्नर्थे संशयो न कर्तव्य इत्यर्थः ॥ ४३ [ यतीन्द्रः परमहंसपरिव्राजकाचार्यः ] ॥ ४३ ॥ ४४ ॥

ततो यद्वृत्तं तदाह—ब्रुवन्निति । एवमनेन प्रकारेण दिविषदो देवान्प्रति ब्रुवन्सोऽन्यदुर्लभान्कटाक्षान्कुमारे स्वामिकार्तिके निदधे यथा सूर्यः पङ्कजे किरणान्स्थापयति तद्वदित्यर्थः ॥ ४५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षीरनीरनिधेर्वीचिसचिवान्प्राप्य तान्गुहः ॥
कटाक्षान्मुमुदे रश्मीनुदन्वानैन्दवानिव ॥ ४६ ॥
अवदन्नन्दनं स्कन्दममन्दं चन्द्रशेखरः ॥
दन्तचन्द्रातपानन्दिवृन्दारकचकोरकः ॥ ४७ ॥
शृणु सौम्य वचः श्रेयो जगदुद्धारगोचरम् ॥
काण्डत्रयात्मके वेदे प्रोद्धृते स्याद्द्विजोद्धृतिः ॥ ४८ ॥
तद्रक्षणे रक्षितं स्यात्सकलं जगतीतलम् ॥
तदधीनत्वतो वर्णाश्रमधर्मततेस्ततः ॥ ४९ ॥
इदानीमिदमुद्धार्यमितिवृत्तिमतः पुरा ॥
मम गूढाशयविदौ विष्णुशेषौ समीपगौ ॥ ५० ॥
मध्यमं काण्डमुद्धर्तुमनुज्ञातौ मयैव तौ ॥
अवतीर्यांशतो भूमौ संकर्षणपतञ्जली ॥ ५१ ॥
मुनी भूत्वा मुदोपास्तियोगकाण्डकृतौ स्थितौ ॥
अग्रिमं ज्ञानकाण्डं तूद्धरिष्यामीति देवताः ॥ ५२ ॥

---

क्षीरनीरनिधेः क्षीरसमुद्रस्य वीचिभिस्तुल्यान्कटाक्षान्प्राप्य गुहः कुमारो मुमुदे । यथा क्षीराब्धिवीचिसहकृतांस्तत्तुल्यान्वा चन्द्रसंबन्धिनो रश्मीन्प्राप्य जलधिर्मोदमाप्नोति तद्वत् ॥ ४६ ॥

चन्द्रशेखरः शिवः स्वसुतममन्दं बुद्धिमन्तं स्कन्दमवददुक्तवान् । चन्द्रशेखरं विशिनष्टि—दन्तात्मकैश्चन्द्रातपैश्चन्द्रज्योत्स्नाभिरानन्दिनो वृन्दारका देवा एव चकोरका यस्य दन्तलक्षणानां चन्द्रानामातपैरिति वा । पाठान्तरे तु क्रियाविशेषणम् ॥ ४७ ॥ [ अमन्दं स्पष्टं यथा भवति तथा ] ॥ ४७ ॥

यदुवाच तदुदाहरति—जगदुद्धारविषयं श्रेयःसाधनं वचनं हे सौम्य शृणु श्रोतुं सावधानो भव । काण्डत्रयात्मके कर्मोपासनाज्ञानभेदेन वृन्दत्रयात्मके वेदे प्रकर्षेणोद्धृते सति द्विजानामुद्धृतिः स्यात् ॥ ४८ ॥ [ द्विजेति । ब्राह्मणक्षत्रियवैश्यानां भोगमोक्षसिद्ध्योद्धार इत्यर्थः ] ॥ ४८ ॥

तेषां द्विजानां रक्षणे सति समस्तं जगतीतलं रक्षितं स्यात् । वर्णाश्रमधर्माणां ततेः संततेस्तदधीनत्वतो द्विजाधीनत्वात् । तत इत्युत्तरान्वयि ॥ ४९ ॥

---

१ ख. ग. सौम्य । २ ख. ग. सोम्य । ३ क. ग. °नरवदः । त° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संप्रति प्रतिजाने स्म जानात्येव भवानपि ॥
जैमिनीयनयाम्भोधेः शरत्पर्वशशी भव ॥ ५३ ॥
विशिष्टं कर्मकाण्डं त्वमुद्धर ब्रह्मणः कृते ॥
सुब्रह्मण्य इति ख्यातिं गमिष्यसि ततोऽधुना ॥ ५४ ॥
नैगमीं कुरु मर्यादामवतीर्य महीतले ॥
निर्जित्य सौगतान्सर्वानाम्नायार्थविरोधिनः ॥ ५५ ॥
ब्रह्माऽपि ते सहायार्थं मण्डनो नाम भूसुरः ।
भविष्यति महेन्द्रोऽपि सुधन्वा नाम भूमिपः ॥ ५६ ॥
तथेति प्रतिजग्राह विधेरपि विधायिनीम् ।
बुधानीकपतिर्वाणीं सुधाधारामिव प्रभोः ॥ ५७ ॥

---

ततस्तस्मादिदानीमिदमुद्धार्यमित्यभिप्रायवतो ममैतदवृत्तान्तात्पूर्वं गूढाशयाभिज्ञौ विष्णुशेषौ मम समीपगौ मध्यमं काण्डं देवताकाण्डमुद्धर्तुं तौ मयैवानुज्ञातौ भूमावंशतोऽवतीर्य संकर्षणपतञ्जली मुनी भूत्वा मुदोपास्तियोगकाण्डस्य कृतौ कर्तारौ स्थितौ करणार्थमिति वाऽग्रिमं ज्ञानकाण्डं त्वहमुद्धरिष्यामीति देवताः प्रति संप्रतिजाने स्म प्रतिज्ञां कृतवानस्मि। भवानपि जानात्येव त्वं तु जैमिनीयन्यायसमुद्रस्य शरत्पौर्णमासीचन्द्रो भव भूत्वा च ब्रह्मणः कृते ब्राह्मणस्य वेदस्य हिरण्यगर्भस्य तपसः परब्रह्मणश्चार्थे विशिष्टकर्मकाण्डस्योद्धरणादधुना सुब्रह्मण्य इति ख्यातिं गमिष्यसीति पञ्चानां योजना ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ [ ब्रह्मणः कृते ।

' ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि ।
ऋत्विग्योगयमिदोर्विप्रः ' ।
इति मेदिन्युक्तेर्ब्राह्मणनात्यर्थमित्यर्थः ] ॥ ५४ ॥

नैगमीं वैदिकीमाम्नायार्थस्य वेदार्थस्य विरोधिनः ॥ ५५ ॥ नैगमीमिति ।

' निगमो वाणिजे पुर्यां वाटे वेदे वणिक्पथे '

इति मेदिन्युक्तेर्निगमशब्दितवेदसंबन्धिनीमिति यावत् । [ आम्नायेति ।

' श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः '

इत्यमराद्वेदार्थीभूतधर्मोपलक्षिताद्वैतब्रह्मप्रतिकूलानित्यर्थः ] ॥ ५५ ॥

भूसुरो ब्राह्मणः ॥ ५६ ॥

प्रभोः शिवस्य वाणीं वाचं विधेर्हिरण्यगर्भस्यापि विधायिनीं प्रवृत्तिकरीं बुधानीकपतिर्देवसेनापतिर्गुहस्तथाऽस्त्विति सुधाधारामिव प्रतिजग्राह ॥ ५७ ॥ [ बुधेति । भामेत्यादिवन्नामैकदेशग्रहणन्यायेन बुधा विबुधाः ' त्रिदशा विबुधाः सुराः ' इत्यमरात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथेन्द्रो नृपतिर्भूत्वा प्रजा धर्मेण पालयन् ॥
दिवं चकार पृथिवीं स्वपुरीममरावतीम् ॥ ५८ ॥
सर्वज्ञोऽप्यसतां शास्त्रे कृत्रिमश्रद्धयाऽन्वितः ॥
प्रतीक्षमाणः क्रौञ्चारिं मेलयामास सौगतान् ॥ ५९ ॥
ततः स तारकारातिरजनिष्ट महीतले ॥
भट्टपादाभिधा यस्य भूषा दिक्सुदृशामभूत् ॥ ६० ॥
स्फुटयन्वेदतात्पर्यमभाज्जैमिनिसूत्रितम् ॥
सहस्रांशुरिवानूरुव्यञ्जितं भासयञ्जगत् ॥ ६१ ॥

---

तेषामनीकम् । 'अनीकोऽस्त्री रणे सैन्येऽपि' इति मेदिन्याः । सैन्यं तस्य पतिः सेनानीरित्यर्थः ] ॥ ५७ ॥

दिवं स्वर्गम् ॥ ५७ ॥ [ अथेति । नृपतिः सुधन्वाभिधो भूपतिरित्यर्थः ] ॥ ५८ ॥

कृत्रिमया रचितया श्रद्धया युक्तः । क्रौञ्चारिं क्रौञ्चाख्यपर्वतस्य शत्रुं गुहम् ॥ ५९ ॥ [ असतां बौद्धानाम् । क्रौञ्चारिम् 'कुमारः क्रौञ्चदारणः' इत्यमरात्प्रागुक्तरीत्या प्रकटितावतारं स्कन्दमित्यर्थः ] ॥ ५९ ॥

तारकस्य दैत्यविशेषस्यारातिः शत्रुः स्कन्दो महीतलेऽजनिष्ट प्रादुरभूद्यस्य भट्टपाद इत्यभिधा संज्ञा दिक्सुदृशां दिगङ्गनानां भूषाऽलंक्रियाऽभूत् ॥ ६० ॥ [ तारकेति । 'बाहुलेयस्तारकजित्' इत्यमरात्स्कन्द इत्यर्थः ] ॥ ६० ॥

अवतारकृत्यं दर्शयति—स्फुटयन्निति । जैमिनिना सूत्रैः सूचितं वेदस्य तात्पर्यं स्फुटयन्नभाद्राजत् । यथाऽनूरुणाऽरुणेन व्यञ्जितं किंचित्प्रकाशितं जगत्सम्यग्भासयन्सहस्रांशुः सूर्यो राजते तद्वदित्यर्थः ॥ ६१ ॥ [ जैमिनीति । जैमिनिना सूत्रितम् । 'अथातो धर्मजिज्ञासा' इत्यादिद्वादशलक्षण्या पूर्वमीमांसया सूचितमित्यर्थः । [ वेदेति । पक्षीन्द्रः फणीन्द्रमत्तीत्यादौ फणीन्द्रपदस्य तच्छिरोवयवीभूतमणिविशेषेतरयावत्तच्छरीरावयवविशेषशक्तिवद्वेदपदस्यापि प्रकृते वेदान्ताख्योत्तरकाण्डेतरपूर्वकाण्ड एव शक्तिः । अन्यथोपनिषत्काण्डस्यापि तेनैव व्याख्यातत्वापत्तेः । स्फुटयंस्तदीयशाबरभाष्योपरि वार्तिकद्वयद्वारा प्रकाशयन्सन्निति यावत् ] ॥ ६१ ॥

---

१ क. ख. 'पादोऽभि' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राज्ञः सुधन्वनः प्राप नगरीं स जयन्दिशः ॥
प्रत्युद्गम्य क्षितीन्द्रोऽपि विधिवत्तमपूजयत् ॥ ६२ ॥
सोऽभिनन्द्याऽऽशिषा भूपमासीनः काञ्चनासने ॥
तां सभां शोभयामास सुरभिर्द्युवनीमिव ॥ ६३ ॥
सभासमीपविटपिश्रितकोकिलकूजितम् ।
श्रुत्वा जगाद तद्व्याजाद्राजानं पण्डिताग्रणीः । ६४ ॥
मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ॥
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ ६५ ॥

---

स भट्टपादः प्रत्युद्गम्य प्रत्युत्थानाभिगमने विधाय ।

' ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते ।
' प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते '

इति शास्त्रमनुसरन्निति भावः ॥ ६२ ॥ [ प्रत्युद्गम्येति । सार्वभौमसंपदुन्मादसंभवेऽपीन्द्रावतारत्वात्स लेशतोऽपि नैवाऽऽसेति सूचितम् ] ॥ ६२ ॥

सुरभिः सुगन्धो वसन्तो वा । द्युवनीं स्वर्गवनीम् ॥ ६३ ॥

सभायाः समीपे विटपिनं वृक्षं श्रितस्य कोकिलस्य कूजितं मधुरभाषितं श्रुत्वा तद्व्याजात्तन्मिषेण राजानं प्रति पण्डिताग्रणीर्भट्टपादो जगाद बभाषे ॥ ६४ ॥

यदुक्तवांस्तदुदाहरति—हे पिक हे कोकिल मलिनैर्नीचैः श्रुतेः कर्णस्य दूषकः पीडाकरो निर्ह्रादः शब्दो येषां तैः काककुलैस्ते तव सङ्गो न स्याच्चेत्तदा श्लाघनीयः स्तुत्यो भवेः । एतद्व्याजेन मलिनैर्नीचैः काकवृन्दसदृशैर्नास्तिकैर्वेददूषकनिर्ह्रादैस्ते सङ्गो न स्याच्चेत्तदा त्वं श्लाघनीयो भवेरिति राजानं प्रत्युक्तवानित्यर्थः । गूढोक्तिरलंकारः ।

' गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते '[1]

इत्युक्तेः ॥ ६५ ॥ [ मलिनैः ' मलिनं दूषिते कृष्णे ' इति मेदिन्याः कृष्णवर्णैः । पक्षे नास्तिकत्वाद्दूषितैरित्यर्थः । [ नीचैरिति । विड्भक्षकत्वादतिनिन्द्यैरित्यर्थः । पक्षे ' असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् ' इति श्रुतेः शून्यात्मादिवादित्वादतितुच्छैरिति यावत् [ श्रुतीति । श्रोत्रसमुद्वेजकशब्दैः । पक्षे वेदखण्डकवाक्यैरित्यर्थः । एतादृशैः । काकेति । पक्षे स्वजातिपोषकत्वात्काकानामिव कुलं वृन्दं येषां ते तथा बौद्धैः सहेति यावत् ] ॥ ६५ ॥

---

१ ग. कल्प्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षडभिज्ञा निशम्येमां वाचं तात्पर्यगर्भिताम् ॥
नितरां चरणस्पृष्टा भुजंगा इव चुक्रुधुः ॥ ६६ ॥
छित्त्वा युक्तिकुठारेण बुद्धसिद्धान्तशाखिनम् ॥
स तद्ग्रन्थेन्धनैश्चीर्णैः क्रोधज्वालामवर्धयत् ॥ ६७ ॥
सा सभा वदनैस्तेषां रोपपाटलकान्तिभिः ॥
बभौ बालातपाताम्रैः सरसीव सरोरुहैः ॥ ६८ ॥
उपन्यस्यत्सु साक्षेपं खण्डयत्सु परस्परम् ॥
तेषूदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम् ॥ ६९ ॥
अधः पेतुर्बुधेन्द्रेण क्षताः पक्षेषु तत्क्षणम् ॥
व्यूढकर्कशतर्केण तथागतधराधराः ॥ ७० ॥

---

षडभिज्ञा बौद्धा निशम्य श्रुत्वा ॥ ६६ ॥ [ अत्र भुजंगोपमा तेषां द्विजिह्वत्वादि ध्वन्यते ] ॥ ६६ ॥

बुद्धसिद्धान्त एव शाखी वृक्षस्तं स भट्टपादो युक्तिकुठारेण च्छित्त्वा तेषां बुद्धानां ग्रन्थैरेवेन्धनैश्चीर्णैरुपचितैः क्रोधज्वालामवर्धयत् ॥ ६७ ॥ [ छित्त्वेति । चीर्णैः संपादितैः सिद्धान्तो हि प्रतिपाद्यतया सर्वग्रन्थावच्छेदेन तिष्ठतीति तस्मिन्नेव खण्डिते वृक्षे छिन्ने तदवयवानामिव निष्प्रयोजनत्वेनेन्धनत्वमुचितमेवेति भावः ] ॥ ६७ ॥

सा सभा तेषां बुद्धानां वदनैर्मुखै रोषेण कोपेन पाटला श्वेतरक्ता कान्तिर्येषां तैर्बभौ चकाशे । बालातपेनाऽऽताम्रैरीषद्रक्तैः सरोरुहैः कमलैः सरसीव ॥ ६८ ॥

तेषु भट्टपादादिषु साक्षेपं यथा स्यात्तथा प्रतिपादनं कुर्वत्सु तथा परस्परं खण्डनं कुर्वत्सु सत्सु रसातलं विदारयन्निव निर्घोषो नाद उदतिष्ठत् ॥ ६९ ॥ [ उपन्यस्यत्स्विति । 'उपन्यासस्तु वाङ्मुखम्' इति ।

'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इति चामरः ] ॥ ६९ ॥

यथा देवानामिन्द्रेण पक्षेषु पृथुलेन कर्कशेन वज्रेण क्षता धराधराः पर्वता अधो निपेतुस्तथा देवेन्द्रस्थानीयेन बुधानां पण्डितानामिन्द्रेण भट्टपादेन तथागताः सुगताः 'धर्मराजस्तथागतः' इत्यमरः । त एव धराधरास्तत्क्षणं तस्मिन्नेव क्षणे व्यूढो विन्यस्तः पृथुलो वा स चासौ कर्कशो दृढश्च स चासौ तर्कश्च तेन पक्षेषु क्षताः खण्डिता अधः पेतुर्निकृष्टतां प्राप्ता इत्यर्थः ॥ ७० ॥ [ बुधेति । 'बुधो बुद्धज्ञपण्डिताः' इति मेदिन्याः पण्डितश्रेष्ठेन भट्टपादेनेत्यर्थः । पक्षे मेरुः सुमेरुरित्यादिवदुपसर्गनिर्गमेऽपि तदभिधायकत्वदर्शनाद्विबुधेन्द्रेण वज्रिणेति यावत् । पक्षेषु ।

'पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स सर्वज्ञपदं विज्ञोऽसहमान इव द्विषाम् ॥
चकार चित्रविन्यस्तानेतान्मौनविभूषितान् ॥ ७१ ॥
ततः प्रक्षीणदर्पेषु बौद्धेषु वसुधाधिपम् ॥
बोधयन्बहुधा वेदवचांसि प्रशशंस सः ॥ ७२ ॥
बभाषेऽथ धराधीशो विद्यायत्तौ जयाजयौ ॥
यः पतित्वा गिरेः शृङ्गादव्ययस्तन्मतं ध्रुवम् ॥ ७३ ॥
तदाकर्ण्य मुखान्यन्ये परस्परमलोकयन् ॥
द्विजाग्र्यस्तु स्मरन्वेदानारुरोह गिरेः शिरः ॥ ७४ ॥
यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः ॥
इति घोषयता तस्मान्न्यपाति सुमहात्मना ॥ ७५ ॥

---

इति मेदिन्याः शून्यादितत्तत्साध्यविशेषावच्छेदेनेत्यर्थः । पक्षे क्षताः खण्डिताः सन्तः । व्यूदेति । इदं तु विशेषणमेव बुधेन्द्रस्येति यथाश्रुतग्रहाः । वयं तु बुधेत्यादिविशेष्यपदेनैवालौकिकपाण्डित्यलक्षणस्य तदर्थस्य सिद्धौ तद्वैयर्थ्यात्तथागतानां धराधराभेदादिरूपके तत्करणमेवेति वदामः । विशेषेणोढाः प्रमाणान्तरानुग्रहानपेक्षत्वेनैव स्वीकृताः कर्कशा इव परमकठोरत्वात्पाषाणा इव तर्काः श्रुतिविरुद्धत्वाद्दुरूहा येन नास्तिक्येन तत्तथा तेन निमित्तेनेत्यर्थः ] ॥ ७० ॥

स विशेषेण सर्वं जानातीति विज्ञः सर्वज्ञो भट्टपादो द्विषां शत्रूणां सुगतानां सर्वज्ञपदमसहमान इवेत्यन्वयः ॥ ७१ ॥ [ इवेति । चित्रविन्यस्तानिवेत्युत्तरत्राप्यनुकृष्य योज्यम् ] ॥ ७१ ॥

स भट्टपादः ॥ ७२ ॥

अथ बौद्धानां पराजयानन्तरं बभाष उवाच विद्यायत्तौ विद्याधीनौ जयपराजयौ तर्हि कस्य मतं ध्रुवं कस्याध्रुवमिति निर्णयः कथं स्यादिति चेत्तत्राऽऽह—यः पर्वतस्य शृङ्गात्पतित्वा विनाशरहितः स्यात्तस्य मतं ध्रुवमन्यस्याध्रुवमित्यर्थः ॥ ७३ ॥

तदाकर्ण्य राज्ञोक्तं श्रुत्वाऽन्ये सौगताः परस्परं मुखान्यलोकयन्नित्यन्वयः । द्विजाग्र्यो द्विजोत्तमो भट्टपादस्तु स्वरक्षार्थं वेदान्स्मरन्पर्वतस्य शृङ्गमारुरोह ॥ ७४ ॥

इत्येवं घोषयता शब्दं कुर्वता न्यपाति गिरेः शृङ्गान्निपतितम् ॥ ७५ ॥ [ नन्वेवं भृगुपाते तस्य धैर्यं कथं समभूदित्याशङ्कायां तं विशिनष्टि—स्विति । वेदप्रामाण्यनिश्चयेऽतिविततमतिनेत्यर्थः ] ॥ ७५ ॥

---

१ क. °यः द्विजो° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमु दौहित्रदत्तेऽपि पुण्ये विलयमास्थिते ॥
ययातिश्च्यवते स्वर्गात्पुनरित्यूचिरे जनाः ॥ ७६ ॥
अपि लोकगुरुः शैलात्तूलपिण्ड इवापतत् ॥
श्रुतिरात्मशरण्यानां व्यसनं नोच्छिनत्ति किम् ॥ ७७ ॥
श्रुत्वा तदद्भुतं कर्म द्विजा दिग्भ्यः समाययुः ॥
घनघोषमिवाऽऽकर्ण्य निकुञ्जेभ्यः शिखावलाः ॥ ७८ ॥
दृष्ट्वा तमक्षतं राजा श्रद्धां श्रुतिषु संदधे ॥
निनिन्द बहुधाऽऽत्मानं खलसंसर्गदूषितम् ॥ ७९ ॥
सौगतास्त्ववदन्नेदं प्रमाणं मतनिर्णये ॥
मणिमन्त्रौषधैरेवं देहरक्षा भवेदिति ॥ ८० ॥
दुर्विधैरन्यथा नीते प्रत्यक्षेऽर्थेऽपि पार्थिवः ॥
भृकुटीभीकरमुखः संधामुग्रतरां व्यधात् ॥ ८१ ॥

---

किमु वितर्के । दौहित्रैरष्टकादिभिर्दत्ते ययातिधर्मस्य च्यवनस्य संबन्धनिमित्तेन तत्तादात्म्यसंभावनस्य सत्त्वादुत्प्रेक्षा ।

' संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ' इत्युक्तेः ॥ ७६ ॥

[ जनाः श्रीभट्टपादप्रतिज्ञादिव्यकरणदर्शनार्थं तत्कालं मिलिताः ] ॥ ७६ ॥

श्रुतिरात्मा स्वयमेव शरणं येषां तेषां व्यसनं दुःखं किं नोच्छिनत्त्यपि तूच्छिनत्त्येव ॥ ७७ ॥ [ तूलपिण्ड इव कार्पासगोलक इवाक्षत एवापतदित्यन्वयः ] [ व्यसनम्—

' व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु ।
दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे ' ।

इति मेदिन्या अशुभं विपत्तिजातं वेति यावत् ] ॥ ७७ ॥

घनघोषं मेघगर्जितं निकुञ्जेभ्यो लतादिपिहितोदरेभ्यः शिखावला मयूराः ॥ ७८ ॥

खलानां दुर्जनानां सौगतानां संसर्गेण संबन्धेन दूषितम् ॥ ७९ ॥ [ खलेति । बौद्धसंबन्धसंजातबाधमित्यर्थः ] ॥ ७९ ॥

॥ ८० ॥ [ सौगतास्त्विति । इदं पर्वतशृङ्गात्पतनं मतनिर्णये विषये नैव प्रमाणमित्यवदन्निति योजना । [ इतिशब्दो हेत्वर्थः ] ॥ ८० ॥

दुर्विधैः खलैर्बौद्धैः प्रत्यक्षेऽर्थेऽप्यन्यथा नीते सति राजा भृकुट्या भीकरं भयंकरं मुखं यस्य स प्रतिज्ञामुग्रतरां व्यधाद्विहितवान् ॥ ८१ ॥ [ दुर्विधैरिति ।

---

१ ग. जिनाः । २ क. ॰मक्षतं । ग. ॰मक्षरं रा॰ ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृच्छामि भवतः किंचिद्वक्तुं न प्रभवन्ति ये ॥
यन्त्रोपलेषु सर्वांस्तान्घातयिष्याम्यसंशयम् ॥ ८२ ॥
इति संश्रुत्य गोत्रेशो घटमाशीविषान्वितम् ॥
आनीयात्र किमस्तीति पप्रच्छ द्विजसौगतान् ॥ ८३ ॥
वक्ष्यामहे वयं भूप श्वः प्रभातेऽस्य निर्णयम् ॥
इति प्रसाद्य राजानं जग्मुर्भूसुरसौगताः ॥ ८४ ॥
पद्मा इव तपस्तेपुः कण्ठद्वयसपाथसि ॥
द्युमणिं प्रति भूदेवाः सोऽपि प्रादुरभूत्ततः ॥ ८५ ॥
संदिश्य वचनीयांशमादित्येऽन्तर्हिते द्विजाः ॥
आजग्मुरपि निश्चित्य सौगताः कलशास्थितम् ॥ ८६ ॥

---

' विधा गंजान्ने ऋद्धौ च प्रकारे रचने विधौ ' ।
इति ' संधा स्थितिप्रतिज्ञयोः ' इति च मेदिनी ] ॥ ८१ ॥

तामेवाऽऽह पृच्छामीति द्वाभ्याम् । यन्त्रोपलेषु यन्त्राकारेषु पाषाणेषु ॥ ८२ ॥
[ यन्त्रेति । गुलिकाधनुराख्ययन्त्रविशेषनिर्मुक्तपाषाणावच्छेदेनेत्यर्थः ] ॥ ८१ ॥

इत्येवं संश्रुत्य प्रतिज्ञां विधाय गोत्रा पृथ्वी ' गोत्रा कुः पृथिवी ' इत्यमरः । तस्या ईशो राजाऽऽशीविषः सर्पो द्विजाश्च सौगताश्च तान् ॥ ८३ ॥

॥ ८४ ॥ [भूसुरा ब्राह्मणाः ] ॥ ८४ ॥

' वा पुंसि पद्मं नलिनम् ' इत्यमरात्पद्मा इति पुंलिङ्गप्रयोगः । कण्ठप्रमाणे पाथसि जले ' प्रमाणे द्वयसच् ' इति द्वयसच्प्रत्ययः । द्युमणिं सूर्यं प्रति भूदेवा ब्राह्मणाः स भानुः ॥ ८५ ॥ [ द्युमणिं प्रति सूर्यमुद्दिश्येति यावत् । यद्यपि ' विप्राणां दैवतं शंभुः ' इति प्राचीनशंकरविजये मनूक्तेः शिव एव ब्राह्मणैः शरणीकरणीयस्तथाऽपि पृथ्व्याद्यष्टमूर्तेस्तस्य ब्राह्मणसर्वस्वीभूतगायत्रीमन्त्रे सवितृमूर्तित्वेनैवोपास्यत्वप्रसिद्धेर्युक्तमेव तदाराधनमित्यभिसंधिः ] ॥ ८५ ॥

घटे शेषशायी विष्णुरस्तीति कथनीयांशं संदिश्योपदिश्य । सौगता अपि घटस्थितं वस्तु निश्चित्याऽऽजग्मुः ॥ ८६ ॥ [ सौगता अपि तन्निश्चित्य

' अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनु ।
जिनसिद्धान्तस्थितिरिव विलोकिता कं न मोहयति ' ।

इति गोवर्धनाचार्यवचनात्स्वाराध्यमन्त्रशास्त्रप्रसिद्धदशमहाविद्यान्तर्गततारारव्यदेवताविशेषप्रसादेन निर्णीयेत्यर्थः ] ॥ ८६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततस्ते सौगताः सर्वे भुजंगोऽस्तीत्यवादिषुः ।
भोगीशभोगशयनो भगवानिति भूसुराः ॥ ८७ ॥
श्रुतभूसुरवाक्यस्य वदनं पृथिवीपतेः ॥
कासारशोषणम्लानसारसश्रियमाददे ॥ ८८ ॥
अथ प्रोवाच दिव्या वाक्सम्राजमशरीरिणी ॥
तुदन्ती संशयं तस्य सर्वेषामपि शृण्वताम् ॥ ८९ ॥
सत्यमेव महाराज ब्राह्मणा यद्बभाषिरे ॥
मा कुरुथः संशयं तत्र भव सत्यप्रतिश्रवः ॥ ९० ॥
श्रुत्वाऽशरीरिणीं वाणीं ददर्श वसुधाधिपः ।
मूर्ति मधुद्विषः कुम्भे सुधामिव सुराधिपः ॥ ९१ ॥
निरस्ताखिलसंदेहो विन्यस्तेतरदर्शनात् ॥
व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम् ॥ ९२ ॥

---

भुजङ्गः सर्पः । अवादिषुः कथितवन्तः । भोगीशस्य शेषस्य भोगे शरीरे शयनं यस्य स विष्णुरित्यर्थः ॥ ८७ ॥

श्रुतं भूसुराणां वाक्यं स्वेन घटे विहितादन्यस्यार्थस्य प्रतिपादकं येन तस्य भूपतेर्मुखं कासारस्तडागः ।

' पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ' इत्यमरः । तस्य शोषणेन म्लानस्य सारसस्य कमलस्य श्रियमाददे ॥ ८८ ॥

अथानन्तरमशरीरिणी दिव्या वाणी तस्य राज्ञः शृण्वतां च सर्वेषां संशयं नाशयन्ती राजानं प्रोवाच ॥ ८९ ॥ [ ततः श्रीशंकर एवाष्टमूर्तिरपि शब्दगुणकाकाशमूर्त्यवच्छेदेनैव राजानं सान्त्वयामासेत्याह—अथेति ] ॥ ८९ ॥

हे महाराज ब्राह्मणा यदुक्तवन्तस्तत्सत्यमेव तत्र तदुक्ते संशयं मा कुरु सत्यप्रतिश्रवः सत्यप्रतिज्ञो भव ॥ ९० ॥

मधुद्विपो विष्णोः सुराधिप इन्द्रः ॥ ९१ ॥

विन्यस्ताद्घटे स्थापितादाशीविषादितरस्य मधुद्विषो दर्शनं तस्माद्धेतोर्निरस्ता अपगता अखिलाः संदेहा यस्य सः ॥ ९२ ॥

---

१ ख. ग. तुदन्ती ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आ सेतोरा तुषाराद्रेर्बौद्धानावृद्धबालकम् ॥
न हन्ति यः स हन्तव्यो भृत्यानित्यन्वशान्नृपः ॥ ९३ ॥
इष्टोऽपि दृष्टदोषश्चेद्वध्य एव महात्मनाम् ॥
जननीमपि किं साक्षान्नावधीद्भृगुनन्दनः ॥ ९४ ॥
स्कन्दानुसारिराजेन जैना धर्मद्विपो हताः ॥
योगीन्द्रेणेव योगघ्ना विघ्नास्तत्त्वावलम्बिना ॥ ९५ ॥
हतेषु तेषु दुष्टेषु परितस्तार कोविदः ॥
श्रौतवर्त्म तमिस्रेषु नष्टेष्विव रविर्महः ॥ ९६ ॥
कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु ॥
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥ ९७ ॥

---

आ सेतो रामसेतुपर्यन्तं तथा हिमालयपर्यन्तं वृद्धं बालकं चाभिव्याप्य यो मद्भृत्यः सौगतान्न हन्ति स मया हन्तव्य इति भृत्यानन्वशादाज्ञप्तवान् ॥ ९३ ॥

ननु स्वगुरुत्वेन स्वीकृतत्वादिष्टानां वधाय किमित्येवमाज्ञां कृतवानित्यत आह—इष्टोऽपीति । पित्रा नियुक्तो भृगुनन्दनः परशुरामः साक्षाज्जननीमपि किं नावधीदपि तु हतवानेव । अत्र पूर्वोक्तबौद्धवधाज्ञारूपस्य विशेषस्य समर्थनाय सामान्यमुपन्यस्य विशेषान्तरोपन्यासाद्विकस्वरालंकारः ।

' यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ' इत्युक्तेः ॥ ९४ ॥

भट्टपादानुसारिराजेन सुधन्वना धर्मद्विषो बौद्धा विनाशिताः । तत्त्वावलम्बिना योगीन्द्रेण योगनाशका विघ्ना व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वादयोऽन्तराया योगशास्त्रोक्ता इवेत्यर्थः ॥ ९५ ॥

[ तत्त्वेति । अद्वैतात्मानुसंधानाश्रयिणेति यावत् ]॥ ९५ ॥

तेषु दुष्टेषु बौद्धेषु हतेषु कोविदः पण्डितो भट्टपादः श्रौतमार्गं परितस्तार सर्वतः प्रसारितवान् । यथा तमिस्रेष्वन्धकारेषु नष्टेषु सूर्यो महस्तेजो विस्तारयति तद्वत् ॥ ९६ ॥

[ परितस्तार । वेदाध्ययनाग्निहोत्राद्यनुष्ठानादिरूपेण विस्तारयामासेति संबन्धः ] ॥ ९६ ॥

कुमारिलो भट्टपाद एव मृगेन्द्रः सिंहस्तेन निष्प्रत्यूहं निर्विघ्नम् ॥ ९७ ॥ [ कुमारिलेति । कुमारः 'कुमारः क्रौञ्चदारणः' इत्यमरात्स्कन्दः सोऽस्यास्तीति कुमारी स्कन्दविद् श्रीशंकरस्तं लात्यात्मपितृत्वेनाऽऽदत्त इति तथा शिवाज्ञापरिपालकः साक्षात्स्कन्द एव भट्टपादात्मनाऽवतीर्णः स एव मृगेन्द्रः सिंहस्तेनेत्यर्थः ] ॥ ९७ ॥

---

१ क. °मिंक्षान°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागित्थं ज्वलनभुवा प्रवर्तितेऽस्मिन्कर्माध्वन्यखिलविदा कुमारिलेन ॥
उद्धर्तुं भुवनमिदं भवाब्धिमग्नं कारुण्याम्बुनिधिरियेष चन्द्रचूडः ॥९८॥

इति श्रीमाधवीये तदुपोद्घातकथापरः ॥
संक्षेपशंकरजये सर्गोऽयं प्रथमोऽभवत् ॥ १ ॥

---

## अथ द्वितीयः सर्गः ।

ततो महेशः किल केरलेषु श्रीमद्वृषाद्रौ करुणासमुद्रः ॥
पूर्णानदीपुण्यतटे स्वयंभूलिङ्गात्मनाऽनङ्गधगाविरासीत् ॥ १ ॥

---

उपोद्घातरूपां स्कन्दावतारकथामुपसंहरञ्शिवावतारकथां ग्रन्थप्रतिपाद्यामुपाक्षिपति— प्रागित्थमिति । ज्वलनादनलाद्भवतीति ज्वलनभूस्तेन सर्वज्ञेन भट्टपादेन पूर्वमनेन प्रकारेणास्मिन्कर्ममार्गे प्रवर्तिते सति ततः संसारसागरे निमग्नं भुवनमद्वैतशास्त्रप्लवेनोद्धर्तुं कारुण्यजलधिश्चन्द्रशेखरो महादेव इयेषेच्छति स्म । प्रहर्षणी वृत्तम् ।

' म्नौज्रौगस्त्रिदशयतिः प्रहर्षणीयम् ' इति लक्षणात् ॥ ९८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमार-सूनुधनपतिसूरिकृते श्रीमच्छंकराचार्यविजयडिण्डिमे प्रथमः सर्गः ॥ १ ॥

अथ द्वितीयसर्गटीकाप्रारम्भः ।

शंकरावतारं विस्तरेण वर्णयितुं पीठिकां रचयति—तत इति । कर्ममार्गप्रवृत्त्य-नन्तरं करुणासमुद्रोऽनङ्गं कामं दहतीत्यनङ्गधङ्महेशः केरलेषु देशविशेषेषु श्रीमद्वृषसं-ज्ञके गिरौ पूर्णानदीपुण्यतटे ज्योतिर्लिङ्गात्मनाऽऽविरासीत्प्रादुरभूत् । उपजाति-श्छन्दः ॥ १ ॥ [ श्रीमदिति । श्रीरत्र निरुक्तनद्याः संनिधानादिना विलक्षणशोभैव ] [ लिङ्गरूपेणाऽऽविर्भविष्यतो भगवतः पार्थिवरूपत्वेन तदर्हस्य तदीयवाहनीभूतवृष-स्यापि तथात्वमेवापेक्षितमिति वृषपदेन द्योत्यते । तथाच ' वृषो धर्मे बलीवर्दे ' इति मेदिन्याः श्लेषेण धर्मशिखर एव परशिवाविर्भावो भवतीति भावः ] [ अनङ्गेति । अनङ्गं कामम् । पक्षे न विद्यतेऽङ्गं प्रमाणगम्यं शरीरं यस्य मूलाज्ञानस्य तत्तथा । तदुक्तं वार्तिके—

' अविद्याया अविद्यात्व इदमेव तु लक्षणम् ।
यत्प्रमाणासहिष्णुत्वमसाधारणमिष्यते '
इति । तं तच्च दहतीति तथा ] ॥ १ ॥

---

१ क. °तपरः शुभः । सं° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्चोदितः कश्चन राजशेखरः स्वप्ने मुहुर्दृष्टतदीयवैभवः ॥
प्रासादमेकं परिकल्प्य सुप्रभं प्रावर्तयत्तस्य समर्हणं विभोः ॥ २ ॥

तस्येश्वरस्य प्रणतार्तिहर्तुः प्रसादतः प्राप्तनिरीतिभावः ॥
कश्चित्तदभ्याशगतोऽग्रहारः कालट्यभिख्योऽस्ति महान्मनोज्ञः ॥ ३ ॥

कश्चिद्द्विपश्चिदिह निश्चलधीर्विरेजे विद्याधिराज इति विश्रुतनामधेयः ॥
रुद्रो वृषाद्रिनिलयोऽवतरीतुकामो यत्पुत्रमात्मपितरं समरोचयत्सः ॥ ४ ॥

पुत्रोऽभवत्तस्य पुरात्तपुण्यैः सुब्रह्मतेजाः शिवगुर्वभिख्यः ॥
ज्ञाने शिवो यो वचने गुरुस्तस्यान्वर्थनामाकृत लब्धवर्णः ॥ ५ ॥

---

तेन लिङ्गात्मनाऽऽविर्भूतेन महेशेन प्रेरितः कश्चन राजशेखराख्यो महीपः पुनः पुनः स्वप्ने दृष्टस्तदीयो वैभवो* येन स एकं प्रासादं देवालयं परिकल्प्य तस्य विभोः संपूजनं प्रवर्तितवान् 'स्यादिन्द्रवंशा ततजैरसंयुतैः' ॥ २ ॥ [ तच्चोदित इति । अन्तर्यामितया तत्प्रेरित इत्यर्थः ] ॥ २ ॥

तस्य प्रणतार्तिहर्तुरीशस्य प्रसादात्प्राप्तो निरीतिभावोऽयेम् । ईतयस्तु—

'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः ।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः'

इत्युक्ताः षड्बाधा ज्ञेयाः । एवंविधस्तस्य प्रासादस्य समीपगतः कश्चित्कालटिसंज्ञोऽतिरम्योऽग्रहारो ब्राह्मणप्रधानो ग्रामोऽस्ति ॥ ३ ॥

इहास्मिन्नग्रहारे विद्याधिराज इति विश्रुतनामधेयो निश्चलमतिः कश्चित्पण्डितो विरेजे । स वृषाद्रिनिलयोऽवतरीतुकामोऽवतरणेच्छुर्यस्य पुत्रमात्मपितरं समरोचयत्स विरेज इति वाऽन्वयः । 'उक्तं वसन्ततिलकं तभजा जगौ गः' ॥ ४ ॥ [ निश्चलेति । एतेन तत्र योगाभ्यासपरिपाकोऽपि व्यज्यते ] ॥ ४ ॥

तस्य विद्याधिराजस्य पुरा पूर्वमनेकजन्मस्वात्तैरर्जितैः पुण्यैः सुष्ठु ब्रह्मतेजो यस्य स शिवगुरुसंज्ञः पुत्रोऽभवत् । यो ज्ञाने शिवो वचने गुरुर्बृहस्पतिस्तस्य पुत्रस्य लब्धवर्णो विचक्षणो विद्याधिराजोऽन्वर्थनामार्थानुरूपं नामाकृत संज्ञां कृतवान् ।

'धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः'

इत्यमरः । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः'[1] ॥ ५ ॥

---

* सर्वपुस्तकेष्वेवमेवोपलभ्यते पुंस्त्वं तु लिङ्गस्य लोकाश्रयत्वात्कथंचिद्बोध्यम् ।

---

१ क. तच्चोदि° २ ग. येन ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स ब्रह्मचारी गुरुगेहवासी तत्कार्यकारी विहितान्नभोजी ।
सायं प्रभातं च हुताशसेवी व्रतेन वेदं निजमध्यगीष्ट ॥ ६ ॥
क्रियाद्यनुष्ठानफलोऽर्थबोधः स नोपजायेत विना विचारम् ।
अधीत्य वेदानथ तद्विचारं चकार दुर्बोधतरो हि वेदः ॥ ७ ॥

---

एवं शिवगुरोर्जन्मोक्त्वा तच्चरितमाह—स शिवगुरुर्ब्रह्मचारी गुरुगेहवासशीलस्तस्य गुरोः कार्यकारी विहितं भिक्षया लब्धं गुरवे निवेदितमन्नं भोक्तुं शीलमस्यास्तीति । तथा हुताशं हुतभुजं वह्निं सेवितुं शीलमस्यास्तीति । तथा व्रतेन ब्रह्मचर्यनियमेन स्वीयं वेदमध्यगीष्टाधीतवान् ॥ ६ ॥ [ निजं वेदं तैत्तिरीयशाखाख्यं मुख्यं यजुर्वेदम् । तदाहुश्चरणव्यूहकाराः—

'मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।
यजुर्वेदः स विज्ञेयो ह्यन्ये शाखान्तराः स्मृताः'

इति । अद्यापि तद्देशे तज्जातीयद्रविडेषु तैत्तिरीयशाखाया एव प्राचुर्योपलब्धेः । ऋक्सामशाखिनां तु काचित्कत्वात् । श्रीमद्भाष्यकारचरणैः 'अथातो ब्रह्मजिज्ञासा' इति शारीरकाख्योत्तरमीमांसारम्भसूत्रे 'तद्विजिज्ञासस्व' इति तद्वाक्यस्यैव समुदाहृतत्वाच्च । नच जिज्ञासापदघटितसूत्रसाधर्म्यात्तदुदाहरणमिति वाच्यम् । 'भूमा त्वेव विजिज्ञासितव्यः' इति च्छान्दोग्यवाक्यस्य तथात्वेन तदेव कुतो नोदाहृतमिति प्रश्नावकाशात् । नापि तत्र लिङ्गसाम्याभाव इति सांप्रतम् । तत्रैवाष्टमाध्याये 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्येतस्यापि समानलिङ्गत्वात् । तस्माच्छिवगुरोस्तैत्तिरीयाख्यमुख्ययजुःशाखैवेति दिक् ] ॥ ६ ॥

यतः क्रियानुष्ठानं फलं यस्य सोऽर्थबोधो विचारं विना नैव जायते । अतो वेदानधीत्य तदनन्तरं तद्विचारं चकार । वेदार्थविचारात्मकं पूर्वमीमांसाशास्त्रमधीतवान् । नन्वधीतस्वाङ्गस्वाध्यायस्तदर्थं स्वयमेव कुतो नावबुद्धवानिति चेत्तत्राऽऽह—हि यस्माद्वेदो दुर्बोधतरो विचारं विनाऽतिशयेन दुर्घटो यथार्थबोधो यस्य सः । 'उपेन्द्रवज्रा जतजास्ततो गौ' ॥ ७ ॥ [ क्रियेति । आदिना 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुते' 'असावादित्यो ब्रह्म' इति 'ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति तैत्तिरीयारण्यकश्रुतिचोदितं ध्यानमेव ग्राह्यम् । तस्यैवानुष्ठेयत्वात् । ज्ञानस्य तु वस्तुतन्त्रत्वेनातथात्वाच्च । तदुक्तं वार्तिके—

'वस्तुतन्त्रो भवेद्बोधः कर्तृतन्त्रमुपासनम्' इति ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदेष्वधीतेषु विचारितेऽर्थे शिष्यानुरागी गुरुराह तं स्म ।
अपाठि मत्तः सषडङ्गवेदो व्यचारि कालो बहुरत्यगात्ते ॥ ८ ॥
भक्तोऽपि गेहं व्रज संप्रति त्वं जनोऽपि ते दर्शनलालसः स्यात् ।
गत्वा कदाचित्स्वजनप्रमोदं विधेहि मा तात विलम्बयस्व ॥ ९ ॥
विधातुमिष्टं यदिहापराह्णे विजानता तत्पुरुषेण पूर्वम् ।
विधेयमेवं यदिह श्व इष्टं कर्तुं तदद्येति विनिश्चितोऽर्थः ॥ १० ॥
कालोप्तबीजादिह यादृशं स्यात्सस्यं न तादृग्विपरीतकालात् ।
तथा विवाहादि कृतं स्वकाले फलाय कल्पेत न चेद्वृथा स्यात् ॥

वेदेष्वधीतेषु सत्सु तदर्थे च विचारिते सति शिष्यानुराग्याचार्यस्तं शिवगुरुमाह स्म प्रोक्तवान् । षड्भिः शिक्षाकल्पव्याकरणच्छन्दोज्योतिर्निरुक्तसंज्ञैरङ्गैः सहितः सर्वो वेदो मत्तस्त्वया पठितो विचारितश्च कालस्ते तव बहुरतिक्रान्तः । उपजातिश्छन्दः ॥ ८ ॥
[ व्यचारि पूर्वोत्तरमीमांसाभ्यां कापिलपातञ्जलसांख्यद्वयकाणादाक्षचरणन्यायद्वयानुगुणिताभ्यां विचारित इत्यर्थः ] ॥ ८ ॥

यद्यपि त्वं भक्तस्तथाऽपि संप्रतीदानीं गेहं व्रज संबन्धिजनोऽपि ते तव दर्शनलालसः स्यात्तस्मात्कदाचिद्गत्वा स्वजनप्रमोदं विधेहि शिष्यस्य पुत्रतुल्यत्वात्संबोधनं हे तात मा विलम्बयस्व विलम्बं मा कुरु ।
' आख्यानकी तौ जगुरू गमोजे जतावनोजे जगुरू गुरुश्चेत् ' ॥ ९ ॥

[ कदाचित्स्वेत्याद्येकं पदम् । तथाच कदाचित्कस्मिंश्चिद्व्यवहारप्रसङ्गे यः स्वजनः संबन्धिजनवत्प्रेमशीलोऽन्यत्र तूदासीनस्तस्य यः प्रमोदस्तमपि विधेहीति संबन्धः । एवं च मात्रादिवास्तविकस्वजनप्रमोदविधानं कैमुत्यसिद्धमेवेति भावः । अन्यथा कदाचिद्गमनं विवक्षितं चेन्मा तात विलम्बयस्वेति वाक्यशेषासांगत्यं स्यात् ] ॥ ९ ॥

विलम्बो न कर्तव्य इत्युक्तं तत्र हेतुमाह—यत इहास्मिँल्लोके यदपराह्णे विधातुमिष्टं तदायुरादेः क्षणभङ्गुरतां विजानता पुरुषेण पूर्वं पूर्वाह्ण एव विधेयमेवमिह यच्छ्वोऽनागतेऽह्नि कर्तुमिष्टं तदद्य विधेयमिति विनिश्चितोऽर्थस्तस्मान्मा विलम्बयस्वेत्यर्थः । उपेन्द्रवज्रा वृत्तम् ॥ १० ॥

[ ' श्वःकार्यमद्य कर्तव्यं पूर्वाह्णे चाऽऽपराह्णिकम् '
इत्यादिनीतिशास्त्रमर्यादां तद्गृहगमनलक्षणसमावर्तनत्वरार्थं प्रथयति—विधातुमिति ] ॥ १० ॥

किंच यथा काल उद्भवकाल उप्तात्क्षेत्रे रोपिताद्बीजादिह यादृशं सस्यं जायते

१ ख. ग. घ. तत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आ जन्मनो गणयतो ननु तान्गताब्दा-
न्माता पिता परिणयं तव कर्तुकामौ ॥
पित्रोरियं प्रकृतिरेव पुरोपनीतिं
यद्ध्यायतस्तनुभवस्य ततो विवाहम् ॥ १२ ॥
तत्तत्कुलीनपितरः स्पृहयन्ति कामं
तत्तत्कुलीनपुरुषस्य विवाहकर्म ॥
पिण्डप्रदातृपुरुषस्य ससंततिस्त्वे
पिण्डाविलोपमुपरि स्फुटमीक्षमाणाः ॥ १३ ॥
अर्थाववोधनफलो हि विचार एष
तच्चापि चित्रबहुकर्मविधानहेतोः ॥
अत्राधिकारमधिगच्छति सद्वितीयः
कृत्वा विवाहमिति वेदविदां प्रवादः ॥ १४ ॥

---

तादृशं विपरीतकालान्नैव जायते तथा विवाहादि स्वस्य विवाहादेः काले यौवनाद्यवस्थायां कृतं फलाय पुत्रोत्पत्त्यादिरूपाय कल्पेत शक्तं भवेदन्यथा तद्विवाहादि कृतं व्यर्थं स्यात् ॥ ११ ॥

किंचाऽऽ जन्मनो जन्मप्रभृति ननु निश्चयेन तव परिणयं विवाहं कर्तुकामौ माता पिता च तान्गतान्संवत्सरान्गणयतो गणनं कुरुतः। यस्मात्कारणात्पित्रोरियं प्रकृतिः स्वभाव एव पुरा पूर्वं तनुभवस्याऽऽत्मजस्योपनीतिमुपनयनं ततस्तदनन्तरं विवाहं यद्ध्यायतः कदा भविष्यतीति यच्चिन्तनं कुरुतः स इत्यर्थः । अत्र सामान्यविशेषयोरुक्तत्वादर्थान्तरन्यासालंकारः।

'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः'
इत्युक्तेः। वसन्ततिलकं वृत्तम् ॥ १२ ॥

अपिच तत्तत्कुलीनपितरस्तत्तत्कुलीनपुरुषस्य विवाहकर्म कामं स्पृहयन्ति परिणयकर्मगोचरां स्पृहामत्यन्तं कुर्वन्ति। यतस्तत्तत्कुलीनपितरः पिण्डप्रदातृपुरुषस्य ससंततिस्त्वे सत्युपर्यग्रे पिण्डाविलोपं स्फुटं समीक्षमाणाः। वसन्ततिलकं वृत्तम् ॥ १३ ॥

न केवलमेतावदेवापि तु 'सहोभौ चरतां धर्मम्' इत्यादिश्रुत्या सद्वितीयस्य कर्मविधानेऽधिकारश्रवणात्तदर्थमपि विवाह आवश्यक इत्याह—अर्थेति। एष विचारोऽर्थाववोधनफलोऽर्थस्यावबोधनं परिज्ञानं फलं यस्य स एतस्य विचारस्यार्थपरिज्ञानं फलं त-

---

१ क. ख. घ. °तोः। तत्रा°। २ क दिरूलह°। ३ ख. ग. °नयं त°।
५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यं गुरो न नियमोऽस्ति गुरोरधीत-
वेदो गृही भवति नान्यपदं प्रयाति ॥
वैराग्यवान्व्रजति भिक्षुपदं विवेकी
नो चेद्गृही भवति राजपदं तदेतत् ॥ १५ ॥

ध्यार्थावबोधनं विचित्राणां यज्ञानां विधानार्थम्। अत्र विचित्रयज्ञविधाने विवाहं कृत्वा सद्वितीयो द्वितीयया पत्न्या सह वर्तमानोऽधिकारं गच्छति प्राप्नोतीति वेदविदां प्रवादः ॥ १४ ॥

एवमुक्तः शिवगुरुरुवाच सत्यमित्यादिना । सत्यमित्यर्धाङ्गीकारे। हे गुरो गुरोः सकाशादधीतो वेदो येन स गृह्येव भवत्यन्यपदमन्याश्रमं न प्रयातीति नियमो नास्ति। ननु ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। यज्ञेन दानेन तपसाऽनाशकेन। स ह वा आत्मयाजी यो वेद। इदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते। विशुद्धसत्त्वस्तु तं पश्यति निष्कलं ध्यायमानः' 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान्' इत्याद्याः श्रुतयः।

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः'
यस्यैतेऽष्टाचत्वारिंशत्संस्काराः।
'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः'

इत्याद्याः स्मृतयश्चाऽऽश्रमादाश्रमान्तरप्रवेशस्य यज्ञाद्यनुष्ठानाच्चित्तशुद्धौ ज्ञानप्राप्तेश्च क्रमनियमं बोधयन्तीति चेत्तत्राऽऽह—वैराग्यवानिहामुत्रार्थभोगेषु विरक्तो विवेकी नित्यानित्यवस्तुविवेकवानुपलक्षणमेतत्साधनचतुष्टयसंपन्न इत्यर्थः। चतुर्थाश्रमं गच्छति। अयमर्थः—यदि चेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा प्लवा ह्येते ह्यदृढा यज्ञरूपा 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिश्रुत्यनुरोधेन मध्यमाधिकारिण एष क्रमनियमो नतु शुद्धसत्त्वस्योत्कटवैराग्यवतो मुख्याधिकारिणः। जायमान इत्यस्यार्थो गृहस्थः संपद्यमान इत्यर्थः। गृहस्थस्यापि सत्त्वशुद्ध्यर्थमेवर्णापाकरणं तदिदमुक्तम्—नो चेदिति। विवेकादिमान्न भवति चेत्तर्हि गृही भवति तदेतद्राजपदं राजमार्गः ॥ १५ ॥

१ ग. °णां रहूनां कर्मणां वि° । २ ख. °ह्मचारी भूत्वा गृ°। ३ ख. °गृही भत्वा वनी भवेद्ग°। ४ ख. °स्वाऽप्र प्र° । ५ ख. °स्वस्ततस्तु । ६ ख ग. °मं प्रयो° । ७ ख. °नभवतु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीनैष्ठिकाश्रममहं परिगृह्य याव-
ज्जीवं वसामि तव पार्श्वगतश्चिरायुः ॥
दण्डाजिनी सविनयो बुध जुह्वदग्नौ
वेदं पठन्पठितविस्मृतिहानिमिच्छन् ॥ १६ ॥
दारग्रहो भवति तावदयं सुखाय
यावत्कृतोऽनुभवगोचरतां गतः स्यात् ॥
पश्चाच्छनैर्विरसतामुपयाति सोऽयं
किं निह्नुषे त्वमनुभूतिपदं महात्मन् ॥ १७ ॥
यागोऽपि नाकफलदो विधिना कृतश्चे-
त्प्रायः समग्रकरणं भुवि दुर्लभं तत् ॥
वृष्ट्यादिवन्नहि फलं यदि कर्मणि
स्याद्द्विध्या यथोक्तविरहे फलदुर्विधत्वम् ॥ १८ ॥

---

त्वया तर्हि किं कर्तव्यमित्यपेक्षायामाह—श्रीनैष्ठिकाश्रमं मरणान्तब्रह्मचर्यं परिगृह्य चिरायुरहं तव पार्श्वगतः समीपे स्थितो दण्डाजिने अस्य स्त इति दण्डाजिनी विनयेन सह वर्तत इति सविनयो हे बुध सर्वज्ञाग्नौ जुह्वद्धोमं कुर्वन्वेदं पठन्पठितस्य विस्मृतेर्हानिमभावमिच्छन्वसामि वासं करिष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ॥ १६ ॥

नन्वतिसुखकरं दारग्रहं विहाय कथमतिदुःखदं नैष्ठिकाश्रममङ्गीकुरुष इति चेत्तत्राऽऽह—दारग्रह इति । अयं दारग्रहस्तावत्सुखाय भवति यावत्कृतः सन्ननुभवगोचरतां गतः प्राप्तः स्यात् । अनुभवविषयताप्राप्तिपर्यन्तमित्यर्थः । पश्चादनुभवगोचरताप्राप्त्यनन्तरं सोऽयं दारग्रहो विरसतां वैरस्यमुपयाति प्राप्नोति । हे महात्मन्नक्षुद्रस्वभावानुभूतिपदमनुभवगम्यं किं निह्नुषेऽपलपस्यपलपितुमशक्यमित्यर्थः ॥ १७ ॥

नन्वैहिकसुखाभावेऽपि विवाहे कृते यागाद्यनुष्ठानेन पारलौकिकं तस्येस्यतीति चेत्तत्राऽऽह—यागोऽपीति । यागो विधिना यथाविधि कृतश्चेत्स्वर्गफलदः । नच तथा कर्तुं शक्यत इत्याह—प्रायस्तत्समग्रकरणं भुवि दुर्लभम् । तद्विना तु फलं नैव लभ्यते । हि यस्मात्कारीर्यादियागफलभूतवृष्ट्यादिवत्कर्मणि फलं यदि न स्यात्तर्हि दैववशाद्यथोक्तविरहे फलदुर्गतत्वं भवति । तथाच न पारलौकिकसुखप्राप्त्याशाऽपीत्यर्थः । आदिपदेन चित्रादियागफलं पश्वादिकं गृह्यते ॥ १८ ॥ [ फलेति । दुष्टा विधा प्रकारो यस्य तत्तथा तस्य भावो दुर्विधत्वं फलस्य दुर्विधत्वमनर्थजनकत्वमप्यस्तीत्यार्थिकम् । तथाच तैत्तिरीयाः समामनन्ति 'यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवति' इति ] ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःस्वो भवेद्यदि गृही निरयी स नूनं
भोक्तुं न दातुमपि यः क्षमतेऽणुमात्रम् ॥
पूर्णोऽपि पूर्तिमभिमन्तुमशक्नुवन्यो
मोहेन शं न मनुते खलु तत्र तत्र ॥ १९ ॥
यावत्सु सत्सु परिपूर्तिरथो अमीषां
साधो गृहोपकरणेषु सदा विचारः ॥
एकत्र संहृतवतः स्थितपूर्वनाश-
स्तच्चापयाति पुनरप्यपरेण योगः ॥ २० ॥

---

न केवलं सुखाभाव एवापित्वतिदुःखमपीत्याशयवानाह–यदि गृही निःस्वो निर्धनो भवे त्तर्हि नूनं निश्चयेन स निरयी नरकवान् । निरयित्वमेव स्फुटयति—योऽणुमपि भोक्तुं दातुं च न क्षमते समर्थो न भवति स नूनं निरयीति संबन्धः । ननु श्रीमत्कुलोत्पन्नस्य तव नास्ति दुःखमिति चेत्तत्राऽऽह—पूर्णोऽपीति । पूर्णोऽपि पूर्तिं पूर्णतामभिमन्तुमशक्नुवन्यो मोहेनाविवेकेन तस्मिंस्तस्मिन्विषये शं सुखं न मनुते सोऽपि नूनं निरयीत्यर्थः । विषयसंपत्ते स्तृष्णानिवर्तकत्वाभावात्सर्वानर्थबीजभूततृष्णानुविद्धचेतसः सुखाप्राप्तिदुःखावाप्तिसत्त्वान्निरयित्वमेवेति भावः । तथाचोक्तम्—

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति ॥
'यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च ।
तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥
यावती यावती जन्तोरिच्छोदेति यथा यथा ।
तावती तावती दुःखबीजमुष्टिः प्ररोहति' इति च ॥ १९ ॥

अथो अतः कारणाद्धे साधो गृहोपकरणेषु सदा विचारो भवति यावत्सु सत्स्वमीषां संबन्धिजनानां परिपूर्तिः परिपूर्णता स्यादमीषां गृहस्थानामिति वा । तथाचैवं विचार्यमाणस्य प्रयत्नेनैकत्रैकस्मिन्स्थाने संहृतवतः संचयं कृतवतः स्थितपूर्वनाश एतत्संचयात्पूर्वं स्थितस्य संचितस्य नाशो भवति च पुनस्तदपि पश्चात्संचितमप्यपयाति नश्यति । पुनरप्यपरेण योगः संयोगो भवति । तथाच गृहस्थाश्रमे सर्वथा दुःखमेवेति भावः ॥ २० ॥ [ यावत्सु गृहोपकरणेषु सत्सु संपूर्णेषु गृह्यानुकूलवस्तुषु विद्यमानेष्विति यावत् । यद्यपि परिपूर्तिः सकलविषयतृप्तिस्तात्कालिकी भवति तथाऽप्यथो अनन्तरम् । सदा निरन्तरम् । अविचार इतिच्छेदः । अविवेकमूलकः प्रमाद एव भवतीति संबन्धः । तथाचाऽऽहुः—'हृष्टो हि प्रमाद्यति । प्रमत्तो हि धर्ममतिक्रामति'

---

१ ख. ग. स्फोरयति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं गुरौ वदति तज्जनको निनीषु-
रागच्छदत्र तनयं स्वगृहं गृहेशः॥
तेनानुनीय बहुलं गुरवे प्रदाप्य
यत्नान्निकेतनमनायि गृहीतविद्यः॥ २१ ॥
गत्वा निकेतनमसौ जननीं ववन्दे
साऽऽलिङ्ग्य तद्विरहजं परितापमौज्झत्॥
प्रायेण चन्दनरसादपि शीतलं तद्य-
त्पुत्रगात्रपरिरम्भणनामधेयम्॥ २२ ॥
श्रुत्वा गुरोः सदनतश्चिरमागतं तं
तद्बन्धुरागमदथ त्वरितेक्षणाय॥
प्रत्युद्गमादिभिरसावपि बन्धुतायाः
संभावनां व्यधित वित्तकुलानुरूपाम्॥ २३ ॥

---

इति। अथो अमीपामित्यत्रौदन्तनिपातत्वेन प्रगृह्यत्वात्प्रकृतिभावः। स्थितेति। पूर्वं सुस्थितं रक्षितत्वेन विद्यमानं स्थितपूर्वं पश्चादिधनं तस्य नाशः पीडाविशेषेण ध्वंसः स्यात्। यदि दैव त्तत्पशुपीडाद्यपि मणिमन्त्रौषधादिभिरपयाति निरस्तं भवति चेत्तर्हि पुनरप्यपरेणेतरेणानिष्टेन व्याध्यादिना योगः संभवत्येवेति योजना ]॥ २० ॥

एवमुक्तप्रकारेण शिवगुरौ वदति सति तस्य शिवगुरोर्जनकः पिता गृहेशः सुतं गृहं प्रति निनीषुर्नेतुमिच्छुरागच्छदागतवान्। आगत्य यदकरोत्तदाह—बहुलं बहुधाऽनुनयं विनयं कृत्वा तेन शिवगुरुणा गुरवे बहुलं दक्षिणाद्रव्यं प्रदाप्य गृहीता विद्या येन स शिवगुरुर्यत्नान्निकेतनमनाय्यानीत इत्यर्थः॥ २१ ॥ [ गुरौ। सत्यमामित्यादौ भामेत्यादिवच्छिवगुराविवत्यर्थः ]॥ २१ ॥

असौ शिवगुरुर्निकेतनं गत्वा मातरं ववन्दे सा जननी पुत्रमाश्लिष्य तस्य पुत्रस्य विरहाज्जातं परितापमौज्झत्त्यक्तवती। तत्र हेतुमाह—यत्पुत्रगात्रालिङ्गननामधेयं तच्चन्दनरसादपि प्रायेण शीतलमत इत्यर्थः। अत्रार्थान्तरन्यासः। यद्वा परितापत्यागस्य प्रायेणेत्यादिना समर्थनात्काव्यलिङ्गालंकारः।

'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इत्युक्तेः॥ २२ ॥

अथानन्तरं गुरोर्गृहाच्चिरादागतं शिवगुरुं श्रुत्वा तद्बन्धुस्तत्संबन्धिवर्गः शीघ्रमवलोकनायाऽऽगमत्। असौ शिवगुरुरपि बन्धुताया बन्धुसमूहस्य प्रत्युद्गमप्रणामादिना वित्तकुलानुरूपां संभावनां सपर्यां व्यधित विहितवान्। धाञो लुङि तङ् 'स्थाघ्वोरिच्च' इतीकारः सिचः कित्वाद्गुणाभावो 'ह्रस्वादङ्गात्' इति सकारलोपः॥ २३ ॥ [तद्बन्धुः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदे पदक्रमजटादिषु तस्य बुद्धिं
संवीक्ष्य तज्जनयिता बहुशोऽप्यपृच्छत् ॥
यस्यामवत्प्रथितनाम वसुंधरायां
विद्याधिराज इति संगतवाच्यमस्य ॥ २४ ॥
भाट्टे नये गुरुमते कणभुङ्मतादौ
प्रश्नं चकार तनयस्य मतिं बुभुत्सुः ॥
शिष्योऽप्युवाच नतपूर्वगुरुः समाधिं
पित्रोदितः स्मितमुखो हसिताम्बुजास्यः ॥ २५ ॥
वेदे च शास्त्रे च निरीक्ष्य बुद्धिं
प्रश्नोत्तराद्यावपि नैपुणीं ताम् ॥
दृष्ट्वा तुतोषातितरां पिताऽस्य
स्वतः सुखा या किमु शास्त्रतो वाक् ॥ २६ ॥

---

भस्यागसहनो बन्धुरित्यभियुक्तोक्तेः शिवगुरुसंबन्धिसुहृज्जन इत्यर्थः । एकवचनं जात्यैव । बन्धिवति । निमित्तपञ्चमीयम् ] ॥ २३ ॥

ततो यद्वृत्तं तदाह—वेदे पदादिष्वादिपदेन शिखाघनादिषु तस्य बुद्धिं वीक्ष्य तस्य जनको बहून्प्रश्नान्कृतवान्संगतं विद्याधिराजत्वरूपं वाच्यं यस्य तद्विद्याधिराज इति प्रथितं नाम यस्यास्य वसुंधरायाममवत्स बहुशोऽप्यपृच्छदित्यर्थः ॥ २४ ॥

बहुशोऽप्यपृच्छदिति विवृणोति—भाट्टे नये भट्टपादसिद्धान्ते गुरुः प्रभाकरः कणभुक्कणाद आदिना गौतमसांख्यमतादिसंग्रहस्तनयस्य मतिं बोद्धुमिच्छुः प्रश्नं कृतवान् । एवं पित्रोदितः पृष्टः शिष्यस्तस्य पुत्रः शिवगुरुरपि समाधानमुवाच । तं विशिनष्टि—पूर्वं नतो नमस्कृतो गुरुर्येनेति स्मितेन मन्दहसितेन युक्तं मुखं यस्यात एव हसितमीषद्विकसितं यदम्बुजं तथाभूतमास्यं वदनं यस्य सः ॥ २५ ॥ [ अत्र सोऽपीत्येव वक्तव्ये शिष्यपदं छान्दोग्यप्रसिद्धोद्दालकपुत्रश्वेतकेतुवदौद्धत्यविधूननार्थमेव । अत एव—नतेति । नताः प्रणामविषयीकृतास्तत्कर्मीकृता वा पूर्वगुरवो ब्रह्मादयाखिलपूर्वाचार्या येन स तथेत्यर्थः ] [ पित्रा विद्याधिराजाख्येन जनकेनोदितः प्रोत्साहितः सन्नत एव । स्मितेति । स्मितं मन्दहास्यं मुखे यस्य स तथेत्यर्थः । अत एव ] [ हसितेति । हसिते उपहासविषयीकृते अम्बुजयोः ' अब्जो जैवातृकः सोमः ' इत्यमरात्कमलकलानिध्योरास्ये मुखे येन स तथेति यावत् ] [ यथाश्रुते तु प्रश्नं चकारेत्यनेन सह पित्रोदित इत्यस्य स्मितेत्यनेन सह हसितेत्यस्य च पौनरुक्त्यं दुर्वारमेव ] ॥ २५ ॥

प्रश्नोत्तरे स्वमतस्थापने परमतखण्डने च तां तथाभूतां निपुणतां कुशलतां दृष्ट्वाऽ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कन्यां प्रदातुमनसो बहवोऽपि विप्रा-
स्तन्मन्दिरं प्रति ययुर्गुणपाशकृष्टाः ॥
पूर्वं विवाहसमयादपि तस्य गेहं
संबन्धवत्किल बभूव वरीतुकामैः ॥ २७ ॥
बह्वर्थदायिषु बहुष्वपि सत्सु देशे
कन्याप्रदातृषु परीक्ष्य विशिष्टजन्म ॥
कन्यामयाचत सुताय स विप्रवर्यो
विप्रं विशिष्टकुलजं प्रथितानुभावः ॥ २८ ॥
कन्यापितुर्वरपितुश्च विवाद आसी-
दित्थं तयोः कुलजुषोः प्रथितोरुभूत्योः ॥
कार्यस्त्वया परिणयो गृहमेत्य पुत्री-
मानीय सद्म तनयाय सुता प्रदेया ॥ २९ ॥

---

स्य पिताऽत्यन्तं तोषं प्राप । या पुत्रस्य वाग्वाणी स्वतः शास्त्रतो विहीनाऽपि सुखरूपा सा शास्त्रतः सुखरूपेति किमु वक्तव्यम् ।

' कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते '

उपेन्द्रवज्रावृत्तम् ॥ २६ ॥ [ सुखा सुखकरी भवति सा शास्त्रतः शास्त्रेण संस्कृता सती सुखकरीति किमु वक्तव्यमिति संबन्धः ] ॥ २६ ॥

ततः किं वृत्तमित्याकाङ्क्षायामाह—कन्यामिति । गुणलक्षणपाशेनाऽऽकृष्टाः कन्यां प्रदातुमनसो बहवोऽपि विप्रास्तस्य मन्दिरं प्रति ययुर्जग्मुरतो विवाहकालात्पूर्वमपि तस्य विद्याधिराजस्य शिवगुरोर्वा गृहं वरीतुकामैः कुमारवरणार्थिभिर्विप्रैः संबन्धवद्बभूव । वसन्ततिलका वृत्तम् ॥ २७ ॥ [ प्रदातुमनसः । प्रदातुं मनः कामो येषां ते तथा कन्यादानोत्सुका इत्यर्थः । ' कामः संकल्पः ' इत्याद्युपक्रम्य ' एतत्सर्वं मन एव ' इति श्रुतेर्मनःशब्देन कामो युक्त एवेति भावः ] ॥ २७ ॥

तस्मिन्देशे बह्वर्थदायिषु कन्याप्रदातृषु बहुष्वपि सत्सु विशिष्टं श्रेष्ठं जन्म परीक्ष्य प्रख्यातानुभावः स विप्रवर्यो विद्याधिराजो विप्रं विशिष्टकुलोत्पन्नं मघपण्डिताभिधं कन्यामयाचत । ' अकथितं च ' इति कर्मसंज्ञा । उक्तनामकाद्विप्रादित्यर्थः ॥ २८ ॥

प्रख्याता बह्वी विभूतिर्ययोस्तयोः कुलवतोः कन्यापितुर्वरपितुश्चेत्थं विवाद आसीत्तत्र कन्यापितुर्वचनमुदाहरति—अस्मद्गृहमागत्य पुत्रस्य विवाहस्त्वया कार्यः । वरपितुर्वचनमाह—अस्मदीयं सद्म पुत्रीमानीय मत्पुत्राय सुता प्रदेया ॥ २९ ॥

---

१ ग. °संबाधव° । २ ग. °संबाधव° । ३ क. गृहं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संकल्पिताद्द्विगुणमर्थमहं प्रदास्ये
मद्गेहमेत्य परिणीतिरियं कृता चेत् ॥
अर्थं विना परिणयं द्विज कारयिष्ये
पुत्रेण मे गृहगता यदि कन्यका स्यात् ॥ ३० ॥
कश्चित्तु तस्याः पितरं बभाण
मिथः समाहूय विशेषवादी ॥
अस्मासु गेहं गतवत्स्वमुष्मै
विगृह्य कन्यामपरः प्रदद्यात् ॥ ३१ ॥
तेनानुनीतो वरतातमापितं
द्विजोऽनुमेने वररूपमोहितः ॥
दृष्टो गुणः संवरणाय कल्पते
मन्त्रोऽभिजापाच्चिरकालभावितः ॥

---

एवमुक्तो मघपण्डित आहैतावद्धनं दास्यामीति संकल्पिताद्द्विगुणमर्थं धनं प्रदास्ये यदि मद्गेहमागत्यायं विवाहः कृतश्चेत्। विद्याधिराज आह—हे द्विज यदि कन्यका मे गृहं प्राप्ता तर्ह्यर्थं विनैव पुत्रेण परिणयं कारयिष्ये ॥ ३० ॥ [ पुत्रेण शिवगुर्वाख्येन सुतेन प्रयोज्यकर्त्रेति यावत्। परिणयं त्वत्पुत्रीपाणिग्रहणमर्थं विनैव कारयिष्य इति योजना ] ॥ ३० ॥

एवं विवदमानयोस्तयोर्मध्ये तस्याः कन्यायाः पितरं समाहूय कश्चित्तु विशेषवादी जगाद। अस्मासु गेहं गतवत्स्वपरो मिथः परस्परं विगृह्य विग्रहं भेदं विधायामुष्मै कन्यां प्रदद्यात्। संभावनायां लिङ्। मिथो रहसि समाहूयेति वा। आख्यानकीवृत्तम् ॥ ३१॥ [ कन्यां विगृह्य विवक्षितयावल्लोकशास्त्रसंमतवस्त्रालंकारादियुतत्वलक्षणेन विशेषेण गृहीत्वेत्यर्थः ] ॥ ३१ ॥

तेन विशेषवादिना केनचिदनुनीतोऽनुनयं प्रापितो मघपण्डितः पुत्रीमानीय सद्म तनयाय सुता प्रदेयेत्येवंरूपं वरपितुर्मापितमनुमेने स्वीकृतवान्यतो वरस्य रूपेण मोहितो यस्माद् दृष्टो गुणः संवरणाय कल्पते योग्यो भवति। यथाऽभिजापाच्चिरकालभावितो बहुकालाभ्यस्तो मन्त्रः संवरणाय कल्पते तद्वत्। वाचकलुप्तोपमालंकारः। वंशस्थेन्द्रवंशामिश्रितत्वादुपजातिस्तदुक्तम्—

'इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम' इति ॥ ३२ ॥
[ दृष्टः साक्षात्कृतः। गुणः कुलशीलतपोरूपविद्यावयःप्रभृतिसद्धर्म इति यावत्। संवरणाय स्वकन्याकर्तृकविधिवत्पाणिग्रहणाय कल्पते समर्थो भवतीत्यर्थः ] [ अभिजापात्। जप एव जापः। अभितो यथाविध्यङ्गकलापपूर्वकमभिजापस्तस्माद्धेतोरित्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्याधिराजमघपण्डितनामधेयौ
संप्रत्ययं व्यतनुतामभिपूज्य दैवम्[1] ॥
सम्यङ्मुहूर्तमवलम्ब्य विचारणीया
मौहूर्तिका इति परस्परमूचिवांसौ ॥ ३३ ॥
उद्वाह्य शास्त्रविधिना विहिते मुहूर्ते
तौ संमुदं[2] बहुमवापतुराप्तकामौ ॥
तत्राऽऽगतो भृशममोदत बन्धुवर्गः
किं भाषितेन बहुना मुदमाप वर्गः ॥ ३४ ॥
तौ दंपती सुवसनौ शुभदन्तपङ्क्ती
संभूषितौ विकसिताम्बुजरम्यवक्त्रौ ।
सव्रीडहाससुखवीक्षणसंप्रहृष्टौ
देवाविवाऽऽपतुरनुत्तमशर्म नित्यम् ॥ ३५ ॥

---

र्थः ] [ मन्त्रो गायत्र्यादिर्यथा संवरणाय मुक्तिरूपवधूकर्तृकस्वयंवरणाय कल्पते तथेति योजना ] [ अत्र मध्य एव वृत्तभेदस्तु कन्यापितुर्हठवृत्तं भेत्तुमेवेति भावः [ ॥ ३२ ॥

विद्याधिराजमघपण्डितसंज्ञौ सम्यङ्मुहूर्तमवलम्ब्य दैवं गणपत्यादि कुलदैवतं च सम्यगभिपूज्य वाग्दानरूपं[3] संप्रत्ययं व्यतनुतां विस्तारितवन्तौ । ततश्च विवाहार्थं मौहूर्तिका ज्योतिर्विदो विचारणीया इति परस्परमुक्तवन्तौ । वसन्ततिलका वृत्तम् ॥ ३३ ॥ [ दैवं गणपतिमभिपूज्य संप्रत्ययं सम्यक्प्रत्ययः साक्षात्कारो येन तं 'गणानां त्वा' इत्यादिमन्त्रेण तत्स्तवमित्यर्थः । व्यतनुतां विस्तारयामासतुरित्यन्वयः । अथ तौ सम्यङ्मुहूर्ते परमोत्तमसमयमवलम्ब्य विवाहार्थं दिव्यमुहूर्तमुद्दिश्येति यावत् ] ॥ ३३ ॥

ततश्च विहिते मुहूर्ते शास्त्रविधिना तौ विद्याधिराजमघपण्डितावुद्वाह्य विवाहं कृत्वा बहुं विपुलं[4] संमुदं प्रमोदमवापतुर्यतः प्राप्ताभिलाषौ । तत्राऽऽगतो बन्धुवर्गश्चात्यन्तं मोदं प्राप्तवान्किंबहुना कथितेन सर्वोऽपि बन्धुवन्धुसमुदायो मुदं प्रापेत्यर्थः ॥ ३४ ॥ [ मुहूर्ते शुभमुहूर्तावच्छिन्ने शिवगुरुविवाहोचिते शास्त्रविधिना ज्योतिःशास्त्रनियमेन विहिते चोदिते काले ] ॥ ३४ ॥

तौ दंपती सुवसनाविति । तौ सतीशिवगुरुसंज्ञौ दंपती सुवस्त्रौ शुभा दन्तपङ्क्तिर्ययोस्तौ सुष्ठ्वलंकृतौ विकसितकमलवद्रम्यं मुखं ययोस्तौ व्रीडया लज्जया सह वर्तमानेन हासेन मन्दहसितेन युक्तयोर्मुखयोर्वीक्षणेन सम्यक्प्रकर्षेण हृष्टौ देवौ पार्वती-

---

१ घ. देवम् । २ ख. ग. घ. संमतं । ३ ख. ग. वाग्यदान° । ४ ख. ग. घ. °पुलं संमदं ।

६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अग्नीनथाऽऽधित महोत्तरयागजातं
कर्तुं विशेषकुशलैः सहितो द्विजेशः ॥
तत्तत्फलं हि यदनाहितहव्यवाहः
स्यादुत्तरेषु विहितेष्वपि नाधिकारी ॥ ३६ ॥
यागैरनेकैर्बहुवित्तसाध्यै-
र्विजेतुकामो भुवनान्ययष्ट ॥
व्यस्मारि देवैरमृतं तदाशी-
र्दिने दिने सेवितयज्ञभागैः ॥ ३७ ॥

---

महादेवाविवानुत्तमं सुखमवापतुः ॥ ३५ ॥ [ सव्रीडेति । सव्रीडः सलज्जो यो हास-स्तत्पूर्वकं यन्मुखवीक्षणं परस्परास्यावलोकनं तेन संप्रहृष्टौ निरतिशयं प्रमुदितावित्यर्थः ] [ अनुत्तमशर्म निरतिशयरतिसुखमापतुरित्यन्वयः ] ॥ ३५ ॥

अथ विवाहानन्तरं तत्तद्यागकर्तव्यताविशेषेषु कुशलैर्ऋत्विग्भिः सहितो द्विजेशः शिव-गुरुस्तत्तत्फलं महतामुत्तरेषामावसथ्याधानादूर्ध्वानामत्युत्तमानां वा यागानां समूहं कर्तुमग्नी-न्गार्हपत्याहवनीयदक्षिणाख्यानाधिताग्न्याधानं कृतवान् । हि प्रसिद्धं यद्यस्मादनाहिताग्निः पुमान्विहितेष्वप्युत्तरेषु यागेष्वधिकारी न स्यात्तस्मादित्यर्थः ॥ ३६ ॥ [ महोत्तरेति । पशुबन्धादियावदुत्तरमहाक्रतुकुलमिति यावत् । अनाहितेति । अनाहिता नाऽऽधाना-ख्यसंस्कारेण संस्कृता हव्यवाहा होतुं योग्यं हव्यमाज्यादिहविर्द्रव्यं तद्वहन्ति तत्तद्देवान्प्रापयन्ति ते तथाऽऽहवनीयाद्यग्नयो येन स तथाऽनाहितश्रौताग्निरित्यर्थः ] ॥ ३६ ॥

भुवनानि स्वर्गादीनि जेतुकामो बहुवित्तसाध्यैरनेकैर्यागैरयष्ट यजनं कृतवान् । तेषां यागानामाशा येषां तैर्यतो दिने दिने सेविता यज्ञभागा यैस्तैर्देवैरमृतं व्यस्मारि विस्मृतम् । अत्रामृतसंबन्धिस्मरणसंबन्धेऽपि तदसंबन्धवर्णनात्संबन्धातिशयोक्तिरलंकारः ।

'योगेऽप्ययोगः संबन्धातिशयोक्तिरितीर्यते'

इत्युक्तेः । आख्यानकी वृत्तम् ॥ ३७ ॥

[ तदाशैस्तदमृतमश्नन्ति ते तथा तैरपीत्यर्थः । यद्यपि देवशब्देनैवामृताशत्वे सिद्धे पुन-स्तदाशैरिति व्यर्थमिव भाति तथाऽपि दुर्वासःशापेन देवसंपन्नाशे सति पुनः समुद्रमथनतद-मृताप्तिप्राक्क्षणपर्यन्तं मध्ये भूरितरकालातिक्रमेणामृताशनाभावेऽप्यमृतविस्मृतिसंभवात्तद्वर्ज-त्वेनोक्तविशेषणसार्थक्यमेवेति भावः ] ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संतर्पयन्तं पितृदेवमानुषां-
स्तत्तत्पदार्थैरभिवाञ्छितैः सह ॥
विशिष्टवित्तैः सुमनोभिरञ्चितं
तं मेनिरे जङ्गमकल्पपादपम् ॥ ३८ ॥
परोपकारव्रतिनो दिने दिने
व्रतेन वेदं पठतो महात्मनः ॥
श्रुतिस्मृतिप्रोदितकर्म कुर्वतः
समा व्यतीयुर्दिनमाससंमिताः ॥ ३९ ॥
रूपेषु मारः क्षमया वसुंधरा
विद्यासु वृद्धो धनिनां पुरःसरः ॥
गर्वानभिज्ञो विनयी सदा नतः
स नोपलेभे तनयाननं जरन् ॥ ४० ॥

---

पितृदेवमानुषानभिवाञ्छितैः सह तत्तत्पदार्थैः संतर्पयन्तं विशिष्टं विद्यादिलक्षणं वित्तं येषां तैर्देवतास्थानीयैः सुमनोभिर्विद्वद्भिरञ्चितं पूजितं यद्वा विशिष्टानि च तानि वित्तानि तैरेव सुमनोभिः पुष्पैरञ्चितं व्याप्तं शिवगुरुं जङ्गमकल्पवृक्षं जना मेनिरे । स्वर्गस्थः कल्पपादपः स्थावर इति । ततोऽस्य व्यतिरेकाभिधानाद्व्यतिरेकालंकृतिः ।

'व्यतिरेको विशेषश्चेदुपमानोपमेययोः'
इत्युक्तत्वात् । उपजातिवृत्तम् ॥ ३८ ॥
दिनमासपरिमिताः समाः संवत्सरा व्यतीयुर्व्यतिक्रान्ताः ।
'जतौ तु वंशस्थमुदीरितं जरौ' ॥ ३९ ॥

दिनेति । दिनानि पञ्चदश मासा द्वादश तैः संमिताः सप्तविंशतिसंख्याका इत्यर्थः] ॥ ३९ ॥

मारः कामो वसुंधरा भूमिर्विद्यासु वृद्धः सर्वोत्तमो धनिनां पुरःसरोऽग्रगण्य एवंभूतोऽपि गर्वानभिज्ञो गर्वरहितो यतो विनयी विनयवान्यतः सदा नतो नम्र एवंविधः शिवगुरुर्जरञ्जरां गच्छन्पुत्रस्य मुखं नोपलेभे न प्राप । अत्र विषयभेदेन बहुधोल्लेखनादुल्लेखालंकारः ।

'एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः' इत्युक्तेः । उपजातिवृत्तम् ॥
॥ ४० ॥ [ रूपेष्विति । पुंरूपवर्णनप्रस्तावेऽश्विनीकुमारादीनां सकलसुन्दरपुरुषाणां सर्वावयवसौष्ठवेषु समुत्पन्नेष्वपि मध्य इत्यर्थः । वसुंधरेति । अत्र विभिन्नलिङ्गकेऽप्युद्देश्यविधेयभावे—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गावो हिरण्यं बहुसस्यमालिनी
वसुंधरा चित्रपदं निकेतनम् ॥
संभावना बन्धुजनैश्च संगमो
न पुत्रहीनं बहवोऽप्यमूमुहन् ॥ ४१ ॥

अस्यामजाता मम संततिश्चे-
च्छरद्यवश्यं भवितोपरिष्टात् ॥
तत्राप्यजाता तत उत्तरस्या-
मेवं स कालं मनसा निनाय ॥ ४२ ॥

खिन्नन्मनाः शिवगुरुः कृतकार्यशेषो
जायामचष्ट सुभगे किमतः परं नौ ।
साङ्गं वयोऽर्धमगमत्कुलजे न दृष्टं
पुत्राननं यदिहलोक्यमुदाहरन्ति ॥ ४३ ॥

---

' लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता ।
विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ' ।

इति वचनाद्विभिन्नलिङ्गकविशेषणविशेष्यभावान्नैव दोषः ] [ विनयी विशिष्टः शास्त्रा-
द्यगर्हितो नयो नीतिरस्यास्तीति तथा । एवं च यथाश्रुते विनयशब्दितनम्रताशालित्वेन
सदा नत इत्यस्य पौनरुक्त्यम् ] ॥ १० ॥

चित्रपदमाश्चर्यास्पदं निकेतनं गृहं बहुगुणैरयं संपन्न इति संभावनैते बहवोऽपि मोह-
हेतवः । पुत्रहीनं शिवगुरुं नामूमुहन्स्वस्मिन्नासक्त्यापादनेन मोहितं न कृतवन्तः ॥ ४१ ॥

अस्यामृतौ मम संततिरजाता चेदुपरिष्टादग्रे शरद्यवश्यं भविष्यति तस्यामप्यजाता
चेत्तत उत्तरस्यां हेमन्ततौं भविष्यतीत्येवं मनोरथैर्व्यासान्तःकरणः कालं निनाय नीत-
वान् ॥ ४२ ॥ [ अस्यामिति । अस्यां शरद्यस्मिन्वर्षे इत्यर्थः । स शिवगुरुः । मनसा
मनोराज्येन ] ॥ ४२ ॥

खिन्नत्खेदयुक्तं मनो यस्य कृतः कार्यस्य शेषो येन स शिवगुरुर्भार्यामचष्टोक्तवान्
हे सुभगेऽतः परं किं कर्तव्यं नावावयोरङ्गेनेन्द्रियसामर्थ्येन सहितं वयोऽर्धमगमत् । हे कुल-
जे पुत्राननं न दृष्टं यत्पुत्रमुखमिहलोक्यमिहलोके हितमुदाहरन्ति । ' पुत्रेणायं लोकः'
इतिश्रुतेः । वसन्ततिलका वृत्तम् ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं प्रिये गतवतोः सुतदर्शनं चे-
त्पञ्चत्वमैष्यदथ नौ शुभमापतिष्यत् ॥
अस्याभ्युपायमनिशं भुवि वीक्षमाणो
नेक्षे ततः पितृजनिर्विफला ममाभूत् ॥ ४४ ॥
भद्रे सुतेन रहितौ भुवि के वदन्ति
नौ पुत्रपौत्रसरणिक्रमतः प्रसिद्धिः ॥
लोके न पुष्पफलशून्यमुदाहरन्ति
वृक्षं प्रवालसमये फलितं विहाय ॥ ४५ ॥
इतीरिते प्राह तदीयभार्या
शिवाख्यकल्पद्रुममाश्रयावः ॥
तत्सेवनान्नौ भविता सुनाथ
फलं स्थिरं जङ्गमरूपमैशम् ॥ ४६ ॥

---

हे प्रिय एवं सुतदर्शनं[2] गतवतोः प्राप्तवतोरावयोः पञ्चत्वं मरणमेष्यच्चेदथ नावावयोः शुभमापतिष्यदागमिष्यदस्य पुत्रदर्शनस्याभ्युपायमनिशं भुवि वीक्षमाणोऽन्विष्यमाणो* नेक्षे न पश्यामि ततस्तस्मान्मम पितृतो जनिर्जन्म निष्फलाऽभूत् ॥ ४४ ॥
[ अत्र जनिर्विफलत्येतावतैव विवक्षितार्थसाफल्ये पितृपदं विद्याधिराजाभिधविश्वविख्यातविशिष्टपितृसूचनार्थमेवेति ध्येयम् ] ॥ ४४ ॥

किंच हे भद्रे सुतेन रहितौ नावावां भुवि के वदन्ति केऽपि न वदिष्यन्तीत्यर्थः। वर्तमानसामीप्ये वर्तमानवद्वा ' इति लट्। यतः पुत्रपौत्रसरणिक्रमतो लोके प्रसिद्धिर्भवति यथा प्रवालानां पल्लवानां समये फलितं वृक्षं विहाय पुष्पफलशून्यं वृक्षं केऽपि नोदाहरन्ति तद्वदित्यर्थः ॥ ४५ ॥ [ फलितं संजातसुफलम् । पुष्पेति । वेतसादिकं द्रुममित्यर्थः। नोदाहरन्ति नैव शाखिशिखामणित्वेन स्तुवन्तीति योजना। तस्मादत्र त्वमेवोपायं कथयेत्याशयः ] ॥ ४५ ॥

इत्येवं भर्त्रेरिते कथिते सति तदीया भार्या सती प्राह—जङ्गमरूपं शिवाभिधकल्पवृक्षमाश्रयावस्तस्य सेवनाद्धे सुनाथैशमीश्वरसंबन्धि स्थिरं फलं नावावयोर्भविता भविष्यति। उपेन्द्रवज्रा वृत्तम् ॥ ४६ ॥

---

* वाच्छील्यादौ चानश्।

---

१ ख. ग. °तदश्वनोश्वेत्प° । २ ग. °र्शनकामयोर्गतवतोः क्षीणवयसोरपि सुतं दृष्टवतोः प° ३ ख. ग. °णो ने°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्तेप्सितार्थपरिकल्पनकल्पवृक्षं
देवं भजाव कमितः सकलार्थसिद्ध्यै ॥
तत्रोपमन्युमहिमा परमं प्रमाणं
नो देवतासु जडिमा जडिमा मनुष्ये ॥ ४७ ॥
इत्थं कलत्रोक्तिमनुत्तमां स
श्रुत्वा सुतार्थी प्रणतैकवश्यम् ॥
इयेष संतोषयितुं तपोभिः
सोमार्धमूर्धानमुमार्धमीशम् ॥ ४८ ॥

---

इतोऽस्मात्कारणाद्भक्तेप्सितार्थपरिकल्पने कल्पवृक्षं देवं कं सुखं शिवमिति यावत्सकलार्थसिद्ध्यै भजाव । यद्वेतोऽस्माद्देवादन्यं कमेवंभूतं देवं भजाव । एवंभूतादन्यस्याभावात् । शिवोपास्तितः सकलार्थसिद्धिर्भवतीत्यत्र प्रमाणाकाङ्क्षायामाह—तत्रोपमन्योर्महिमा माहात्म्यं परमं प्रमाणमेवं हि महाभारते श्रूयते—उपमन्युः किल पयः पिबतो मुनिबालकानवलोक्यात्याग्रहेण मातरं दुग्धं याचितवांस्तन्माता च दारिद्र्यवशेन दुग्धाभावात्पिष्टेन तद्विधायायच्छत्स च तदेव पीत्वा दुग्धं मया पीतमिति मन्यमानो ननर्त तदेतत्सर्वं ज्ञात्वा कुमारा जहसुस्ततो हास्यकारणं पृच्छतेऽस्मै माता दारिद्र्यमावेदयत्तज्ज्ञात्वा महेश्वरमाराध्य क्षीराब्ध्यधिपतित्वं प्रापेति । ननु पाषाणाद्यात्मतया जडाभ्यो देवताभ्यः कथं निखिलार्थसिद्धिरित्याशङ्क्याऽऽह—नहि देवतासु जडिमा जाड्यं किंतु श्रद्धाभक्तिहीने देवतास्वरूपानभिज्ञे मनुष्ये स इत्यर्थः । वसन्ततिलका वृत्तम् ॥ ४७ ॥

एवंप्रकारामनुत्तमां भार्योक्तिं श्रुत्वा स पुत्रार्थी सोमस्य चन्द्रस्यार्धेनोपलक्षितो मूर्धा यस्य तं प्रणतैकवश्यमुमार्धमुमासहायमीशं तपोभिः संतोषयितुमियेषेच्छति स्म । उपजातिवृत्तम् ॥ ४८ ॥ [ एवं पत्न्या विज्ञापितविचारः शिवगुरुः किं सारवित्त्वात्तामनुमेने यद्वा स्त्रीवाक्यत्वादुपेक्षितवानित्याशङ्क्य—

'युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि ।
अयौक्तिकं तु संत्याज्यमप्युक्तं पद्मयोनिना ' इति

वचनात्प्रस्तुत सद्यस्तथैवानुष्ठातुमप्युद्युक्तोऽभूदित्याह—इत्थमिति ] [ प्रणतेति । प्रणतानामनन्यतया शरणागतानामेकवश्यः केवलस्वाधीनस्तमेतादृशम् । अत एव— सोमेति ] [ उमेति । एतेन गृहस्थाश्रमसुखावच्छिन्नत्वेन तत्कामपूरकत्वावश्यकत्वं तत्र व्यज्यते ] ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्योपधाम किल संनिहिताऽऽपगैका
स्नात्वा सदाशिवमुपास्त जले स तस्याः ॥
कन्दाशनः कतिचिदेव दिनानि पूर्वं
पश्चात्तदा स शिवपादयुगाब्जभृङ्गः ॥ ४९ ॥
जायाऽपि तस्य विमला नियमोपतापै-
श्चिक्लेश कायमनिशं शिवमर्चयन्ती ॥
क्षेत्रे वृषस्य निवसन्तमजं स भर्तुः
कालोऽत्यगादिति तयोस्तपतोरनेकः ॥ ५० ॥
देवः कृपापरवशो द्विजवेषधारी
प्रत्यक्षतां शिवगुरुं गत आत्तनिद्रम् ॥
प्रोवाच भोः किमभिवाञ्छसि किं तपस्ते
पुत्रार्थितेति वचनं स जगाद विप्रः ॥ ५१ ॥

---

तस्योपधाम धाम्नः प्रासादस्य समीपे स्थिताऽऽपगा जलवहैका नदी तस्या जले स्नात्वा स शिवगुरुः पूर्वं कतिचिद्दिनान्येव कन्दाशनः सन्सदाशिवमुपास्त पश्चात्स शिवचरणद्वंद्वकमलभृङ्गः सन्[1]शिवैपदाब्जमकरन्दातिरिक्तकन्दाद्यास्वादनवर्जितः सन्नुपास्तेत्यर्थः । वसन्ततिलका वृत्तम् ॥ ४९ ॥ [ एका मुख्या । अत एव संनिहिता सम्यक्पुराणप्रसिद्धत्वेन नितरां शीतलनिश्चलनिर्मलसुमधुरसुखावगाह्यजलत्वेन चात्यन्तं हिता सुखकरीत्यर्थः । एतेनोपधामेत्यनेन सहैतस्य पौनरुक्त्यं प्रत्युक्तम् । तदा कन्दमूलाद्यशनेनेन्द्रियवशीकारकाल इत्यर्थः ] ॥ ४९ ॥

तस्य भर्तुर्जायाऽपि विमला वृषस्य क्षेत्रे वसन्तमजं स्वयमेवाऽऽविर्भूतं न तु केनचित्स्थापितं शिवमर्चयन्ती नियमकृतैरुपतापैर्नियमात्मकैरुपतापैरिति वा नियमैश्चोपतापैश्चेति वा कायं देहं चिक्लेशेत्येवंप्रकारेण तपतोस्तपः कुर्वतोस्तयोर्दंपत्योः स प्रसिद्धः कालोऽनेकोऽत्यगात् ॥ ५० ॥

कृपापरवशो देवो महादेवो द्विजवेषधारी प्रत्यक्षतां प्राप्तः प्राप्तनिद्रं शिवगुरुं प्रोवाच— भोः शिवगुरो किमभिवाञ्छसि किमपि नेत्याशङ्क्याऽऽह—किं तपस्ते निष्कामस्य तव तपः किं न किमपि तथाच तपसि प्रवृत्तस्य ते कामनाऽस्तीत्यनुमीयते । एवमुक्तः स विप्रः शिवगुरुः पुत्रार्थिता सुतस्य प्रार्थनेति जगाद ॥ ५१ ॥ [ यतः । कृपेति । अतः । द्विजेति ] [ एतादृशः सन् ] ॥ ५१ ॥

---

१ ख. ग. 'वपादा' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवोऽप्यपृच्छदथ तं द्विज विद्धि सत्यं
सर्वज्ञमेकमपि सर्वगुणोपपन्नम् ।।
पुत्रं ददान्यथ बहून्विपरीतकांस्ते
भूर्यायुपस्तनुगुणानवदद्द्विजेशः ।। ५२ ।।

पुत्रोऽस्तु मे बहुगुणः प्रथितानुभावः
सर्वज्ञतापदमितीरित आबभाषे ।।
दद्यामुदीरितपदं तनयं तपो मा
पूर्णो भविष्यसि गृहं द्विज गच्छ दारैः ।। ५३ ।।

आकर्णयन्निति बुबोध स विप्रवर्य-
स्तं चाब्रवीन्निजकलत्रमनिन्दितात्मा ।।
स्वप्नं शशंस वनितामणिरस्य भार्या
सत्यं भविष्यति तु नौ तनयो महात्मा ।। ५४ ।।

---

अथ देवोऽपि तं शिवगुरुमपृच्छद्धे द्विज मदुक्तं सत्यं विद्धि जानीहि । पाठान्तरे तन्मदुक्तम् । सर्वज्ञं सर्वगुणोपपन्नमल्पायुपमेकमेव सुतं ददानि किंवा विपरीतकान्विपरीता नसर्वज्ञानल्पगुणान्भूर्यायुपो बहून्पुत्रांस्ते तुभ्यं ददान्येवमुक्तो द्विजेशः शिवगुरुरवदत् ।। ९२ ।। [ सर्वेति । एतेन सर्वैश्वर्यसंपन्नत्वं व्यज्यते ] [ बहूंस्त्र्यधिकान् । बहुवचने नैव त्रयाणां प्राप्तत्वात् ] [ द्वितीयपक्षेऽत्र भूर्यायुप इति विशेपणात्प्रथमपक्षे तद्वैपरीत्यं ध्वन्यते ] ।। ९२ ।।

यदुवाच तदुदाहरति—बहुगुणः प्रथितानुभावः सर्वज्ञताया आश्रयः पुत्रो मेऽस्त्वि त्युक्तो देव उवाचोदीरितानामुक्तानां गुणानां पदमाश्रयं पुत्रं दद्यां दास्यामि तस्मात्तपो मा कुरु पुत्रोत्पत्त्या पूर्णो भविष्यसीत्यतो दारैर्भार्यया सह हे द्विज गृहं गच्छ ।। ९३ ।। [ सर्वज्ञतेति । एवं चाल्पायुष्ट्वदोपसत्त्वेऽपि गुणाधिक्यात्तेन मृकण्डुमुनिवत्स्वप्नेऽपि पृष्टपक्षद्वयमध्ये प्रथमपक्ष एवाङ्गीकृत इत्याशयः । स्वप्ने जीवस्य संस्काराद्येकपराधीनत्वेन स्वातन्त्र्याभावाद्विचारासंभवात्कथमेवं तेनोत्तरितमित्याशङ्कां शमयितुं तं विशिनष्टि— ईरित इति ] ।। ९३ ।।

इत्येवंप्रकारेण शृण्वन्स विप्रवर्यः शिवगुरुर्बुबोध प्रबुद्धश्चानिन्दितात्मा स स्वकलत्रं तं स्वप्नमब्रवीत् । प्रत्युक्तं श्रुत्वा चास्य विप्रवर्यस्य भार्या योषिन्मणिः शशंसोक्तवती सत्यमावयोर्महात्मा पुत्रो भविष्यत्येव संशयो नास्तीत्यर्थः ।। ९४ ।।

---

१ क. °दान्यथ । २ क. ददामि । ३ क. °दान्येव° । ४ ग. °कारं शृ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तौ दंपती शिवपरौ नियतौ स्मरन्तौ
स्वप्नेक्षितं गृहगतौ बहुदक्षिणान्नैः ॥
संतर्प्य विप्रनिकरं तदुदीरिताभि-
राशीर्भिरापतुरनल्पमुदं विशुद्धौ ॥ ५५ ॥
तस्मिन्दिने शिवगुरोरुपभोक्ष्यमाणे
भक्ते प्रविष्टमभवत्किल शैवतेजः ॥
भुक्तान्नविप्रवचनादुपभुक्तशेषं
सोऽभुङ्क्त साऽपि निजभर्तृपदाब्जभृङ्गी ॥ ५६ ॥
गर्भं दधार शिवगर्भमसौ मृगाक्षी
गर्भोऽप्यवर्धत शनैरभवच्छरीरम् ॥
तेजोतिरेकविनिवारितदृष्टिपात-
विश्वं रवेर्दिवसमध्य इवोग्रतेजः ॥ ५७ ॥
गर्भालसा भगवती गतिमान्द्यमीप-
दापेति नाद्भुतमिदं धरते शिवं या ॥
यो विष्टपानि बिभृते हि चतुर्दशापि
यस्यापि मूर्तय इमा वसुधाजलाद्याः ॥ ५८ ॥

---

विप्रनिकरं ब्राह्मणसमूहम् ॥ ५५ ॥ ताविति । यतो विशुद्धौ तपःक्षीणकलुषा-वतोऽनल्पेत्यादिसंबन्धः ] ॥ ५५ ॥

भक्तेऽन्ने भुक्तमन्नं यैस्तेषां विप्राणां वचनात्तदुपभुक्तशेषं शिवतेजोयुक्तमन्नं स शिव गुरुरभुङ्क्त भर्तृचरणारविन्दभ्रमरी सा सत्यप्यभुङ्क्त ॥ ५६ ॥

ततो यद्वृत्तं तदाह—गर्भमिति । असौ मृगाक्षी शिवो गर्भे मध्ये यस्य तथाभूतं गर्भं दधार । गर्भोऽपि शनैरवर्धत वर्धमाने च शनैः शरीरमभवत्तद्विशिनष्टि—तेजसोऽ-तिरेकेणातिशयेन विनिवारितो विश्वेषां दृष्टिपातो येन तत् । 'राजदन्तादिषु परम्' इति विश्वशब्दस्य परनिपातः । मध्याह्ने सूर्यस्योग्रतेज इव ॥ ५७ ॥ [ तेजसोऽतिरेक आधिक्यं तेन विनिवारितो दूरीकृतो दृष्टिपातो दृग्दोषविशेषः पक्षे दृक्संचारो यस्य तादृशं विश्वं येन तत्तथेति यावत् ] ॥ ५७ ॥

या शिवं धरते सा गर्भालसा भगवती किंचिद्गतिमान्द्यं प्रापेतीदमद्भुतं न भवति । कथंभूतं शिवं यः पातालमहातलतलातलरसातलसुतलवितलभूतलभूर्भुवःस्वर्महर्जनस्तपःसत्या-

---

१ ख. ग. घ. °मानश्च श° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संव्याप्तवानपि शरीरमशेषमेव
नोपास्तिमाविरसकावकृतात्र कांचित् ॥
यत्पूर्वमेव महसा दुरतिक्रमेण
व्याप्तं शरीरमदसीयममुष्य हेतोः ॥ ५९ ॥
रम्याणि गन्धकुसुमान्यपि गांधिमस्यै
नाऽऽधातुमैशत मराक्किमु भूषणानि ॥
यद्यद्गुरुत्वपदमस्ति पदार्थजातं
तत्तद्विधारणविधावलसा बभूव ॥ ६० ॥
तां दौहृदं भृशमबाधत दुःशरारिः
प्रायः परं किल न मुञ्चति मुञ्चतेऽपि ॥
आनीतदुर्लभमपोहति याचतेऽन्य-
त्तच्चाप्यपोह्य पुनरर्दति साऽन्यवस्तु ॥ ६१ ॥

---

रूपाणि चतुर्दशापि भुवनानि बिभृते पुनश्च यस्य शिवस्येमा वसुधाजलाद्या मूर्तयः। तदुक्तम्—

‘ क्षितिहुतवहक्षेत्रज्ञाम्भःप्रभञ्जनचन्द्रम-
स्तपनवियदित्यष्टौ मूर्तीर्नमो भव बिभ्रते ’

इति ॥ ५८ ॥ [ भगवतीति । साभिप्रायम् । ईश्वरस्य स्वोदरे धारणेन तदीय-निरतिशयषड्गुणैश्वर्यस्य तत्रापि सत्त्वात् ] [ धरत इत्यात्मनेपदेनोक्तेश्वरधारणस्य निजै-ककार्तार्थ्यप्रयोजकत्वं व्यज्यते । ‘ कुलं पवित्रं जननी कृतार्था ’ इत्यादिवचनात्स्व-र्णिकयद्ध्यानादेरपि यदा जननी कार्तार्थ्यकारकत्वं तदा सगुणस्य तस्य साक्षाद्गर्भे धारणस्य तत्कैमुत्यसिद्धमेवेति भावः ] ॥ ५८ ॥

असौ शिवः सर्वमेव शरीरं संव्याप्तवानप्यत्र शरीरे कांचिदुपास्तिं किंचिदुपक्षेपम-धिकप्रक्षेपं नाऽऽविरकृत नैव प्रकटितवान् । यद्यस्माद्दुरतिक्रमेण तेजसाऽमुष्याः सत्या इदं शरीरं पूर्वमेव व्याप्तममुष्य हेतोरस्मात्कारणादित्यर्थः । ‘ निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् ’ इति षष्ठी ॥ ५९ ॥

मनोज्ञानि गन्धपुष्पाण्यप्यस्यै सत्यै कामनामाघातुं समर्थानि नाभूवन्भूषणानि किमु किं बहुना यद्यत्पदार्थजातं गुरुत्वास्पदं तस्य तस्य विधारणविधौ साऽलसा कर्तव्येषु मन्दोद्यमा बभूव ॥ ६० ॥ [ दमनकमञ्जर्याः कुसुमेषु गन्धकुसुमत्वेऽपि रम्यत्वाभाव-द्दाडिमीकुसुमविशेषे रम्यत्वेऽपि गन्धाभावात्समुच्चयोपादानम् । अपिनैतेष्वनादरानर्हत्वं ध्वन्यते ] [ मराक्धारणे भारसंभवादिति यावत् ] ॥ ६० ॥

यद्यप्येवं तथाऽपि तां सतीं—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तां बन्धुताऽऽगमदुपश्रुतदोहदार्ति-
रादाय दुर्लभमनर्घ्यमपूर्ववस्तु ॥
आस्वाद्य बन्धुजनदत्तमसौ जहर्ष
हा हन्त गर्भधरणं खलु दुःखहेतुः ॥ ६२ ॥
मानुष्यधर्ममनुसृत्य मयेदमुक्तं
काऽपि व्यथा शिवमहोभरणे न वध्वाः ॥
सर्वव्यथाव्यतिकरं परिहर्तुकामा
देवं भजन्त इति तत्त्वविदां प्रवादः ॥ ६३ ॥

---

'दोहदं दौहृदं श्रद्धा लालसं च समं स्मृतम्'

इति हलायुधाद्दौहृदं गर्भिणीमनोरथो भृशमत्यन्तमबाधत । शरं हिंसामृच्छति गच्छतीति शरारिः पक्षिविशेषः । 'अच इः' इतीः प्रत्ययः । 'शरारिराटिराडिश्च' इत्यमरः । तथाच यथा दुष्टः शरारिः प्रायः परं न मुञ्चति मुञ्चतेऽपीति प्रसिद्धं तद्वदित्यर्थः । बाधप्रकारमाहाऽऽनीतं यद्दुर्लभं तदपोहति त्यजत्यन्यद्याचते तद्याप्यपोह्य परित्यज्य पुनरन्यद्वस्तु सा वाञ्छतीत्यर्थः ॥ ६१ ॥ [ दुष्टं गर्भधारणस्वभावदूषितं हृदन्तःकरणं यस्याः सा दुर्हृत्तस्या भावो दौर्हृदं गर्भिण्यभिलाषजातमित्यर्थः ] [ दुष्टश्चासौ शरारिश्चेति विग्रहः । स्वभावक्रूरः शरारिसंज्ञक आडीति ख्यातः कश्चित्पक्षिविशेष इति यावत् ] ॥ ६१ ॥

तां प्रति दुर्लभमनर्घ्यममूल्यमपूर्वं वस्तु समादाय बन्धुसमूह आगमत् । बन्धुतां विशिनष्टि—उपश्रुता दोहदस्य दौहृदस्याऽऽर्तिर्यया सा बन्धुजनदत्तमसौ सत्यास्वाद्य जहर्ष हा हन्त गर्भधरणं खलु दुःखहेतुरिति जगाद चेति शेषः ॥ ६२ ॥

हा हन्तेतीदं मया मानुष्यधर्ममनुसृत्योक्तम् । यतः शिवस्य महसस्तेजसो भरणे धारणे वध्वा मम काऽपि व्यथा पीडा नास्त्येतदपि कुत इति चेत्तत्राऽऽह—सर्वपीडासंपर्कं परिहर्तुकामा देवं भजन्त इति तत्त्वविदां प्रवाद इत्यत इत्यर्थः ॥ ६३ ॥ [ वध्वाः प्रकृतशिवगुरुपत्न्या इत्यर्थः ] [ शिवेति । 'डुभृञ्धारणपोषणयोः' इति स्मरणाच्छंकरांशरूपतेजोधारणे कृते सत्यपि काऽपि व्यथा नाऽऽसेति संबन्धः ] [ विवादो विशिष्टो निर्णयात्मको वादस्तत्त्वबुभुत्सोः कथाविशेषोऽस्तीत्यन्वय इह बोध्यः ] [ एवं चाहो यद्भजनेनापि भक्तानां सकलार्तिव्रातविध्वंसः शास्त्रे सिद्धः स एव साक्षाच्छंकर एतांशेनावतीर्णो यदुदरे वर्तते तस्याः कथं वा दोहदादिपीडासंभवोऽपि स्यात्तस्मादिदं मनुष्यजात्यनुसारेणैव मया वर्णितम् । वस्तुतस्तु न किंचिदपि तस्याः पीडाजातमासीदिति कव्युक्तिः ॥ ६३ ॥

---

१ ख. ग. °न्यवस्तु । २ क. धरणं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्ष्णा निसर्गधवलेन महीयसा सा
स्वात्मानमैक्षत समूढमुपात्तनिद्रा ॥
संगीयमानमपि गीतविशारदाढ्यै-
र्विद्याधरप्रभृतिभिर्विनयोपयातैः ॥ ६४ ॥
आकर्णयज्जय जयेति वरं दधाना
रक्षेति शब्दमवलोकय मा दृशेति ॥
आकर्ण्य नोत्थितवती पुनरुक्तशब्दं
सा विस्मिता किल शृणोति निरीक्षमाणा ॥ ६५ ॥
नर्मोक्तिकृत्यामपि खिद्यमाना
किञ्चापि चञ्चत्तरमञ्चरोहे ॥
जित्वा मुदाऽन्यानतिहृद्यविद्या-
सिंहासनेऽसौ स्थितिमीक्षते स्म ॥ ६६ ॥
समानता सात्त्विकवृत्तिभाजां
विरागता वैषयिकप्रवृत्तौ ॥
तस्याः श्रिया गर्भगपुत्रचित्र-
चरित्रशंसिन्यजनिष्ट चेष्टा ॥ ६७ ॥

---

निसर्गधवलेन स्वभावतः श्वेतेनातिशयेन महतोक्ष्णा वृषभेण सम्यगूढं पुनश्च गीत-विशारदैर्गन्धर्वादिभिराढ्यैर्युक्तैस्तत्स्वामिभिर्वा विद्याधरप्रभृतिभिर्विनयेनोप समीपे यातैः प्राप्तैः संगीयमानमात्मानं प्राप्तनिद्रा सा सत्यैक्षत ॥ ६४ ॥ [ निसर्गेति । स्वभावशुक्लेनेत्यर्थः। तेन कृत्रिमशुक्लत्वव्युदासः ] ॥ ६४ ॥

पुनश्च जय जयेति रक्षेति मा मां दृशा कृपादृष्ट्याऽवलोकयेति शब्दं वरं दधाना प्रय-च्छन्ती सत्याकर्णयत् । श्रुत्वा विस्मयं प्राप्तोत्थितवतीतस्ततो निरीक्षमाणा सा पुनरुक्त-शब्दं न शृणोति स्माऽऽकर्ण्य नोत्थितवतीति वा संबन्धः ॥ ६५ ॥

किंच चञ्चत्तरस्य स्फुरत्तरस्य मञ्चस्य शय्याया रोह आरोहणेऽपि नर्मोक्तिकृत्यां क्री-डासोक्तैर्यत्नेऽपि खिद्यमानाऽन्याञ्जित्वाऽतिहृद्यविद्यायाः सरस्वत्याः सिंहासने स्वस्य स्थिति-मीक्षते स्म । अतिहृद्ये विद्यासिंहासन इति वा । इन्द्रवज्रा वृत्तम् ॥ ६६ ॥ [ अन्यान्मी-मांसकाद्यखिलभेदवादिन इत्यर्थः । मुदा हर्षेण न त्वायासेन । एतेन भविष्यद्भगवत्पादानां धमाप्यकारकर्तृकमाविभेदवादित्वावच्छिन्नभञ्जने लीलामात्रत्वं व्यज्यते ] ॥ ६६ ॥

सात्त्विकवृत्तिभाजां सतां समानता तुल्यता वैषयिकप्रवृत्तौ विषयगोचरप्रवृत्तौ वि-

---

१ ग. 'के: करणेऽपि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्रोमवल्ली रुरुचे कुचाद्र्या-
वृण्वत्प्रभाधुन्युरुशैवलालिः ॥
यत्नाच्छिशोरस्य कृते प्रशस्तो
न्यस्तो विधात्रेव नवीनवेणुः ॥ ६८ ॥
पयोधरद्वंद्वमिषादमुष्याः
पयःपिबत्यर्थविधानयोग्यौ ॥
कुम्भौ नवीनामृतपूरितौ द्वा-
वम्भोजयोनिः कलयांबभूव ॥ ६९ ॥
द्वैतप्रवादं कुचकुम्भमध्ये
मध्ये पुनर्माध्यमिकं मतं च ॥
सुभ्रूमणेर्गर्भग एव सोऽर्भो
द्रागगर्हयामास महात्मगर्ह्यम् ॥ ७० ॥

---

गता वैराग्यं तस्याः स्त्रियाः सत्या एतादृशी चेष्टा गर्भगतस्य पुत्रस्य चित्रमाश्चर्यरूपं यच्च-रित्रं तच्छंसिनी तज्ज्ञापिकाऽजनिष्ट । उपेन्द्रवज्रा वृत्तम् ॥ ६७ ॥ [ सात्त्विकेति । सत्त्वगुणैकप्रधानस्थितिशालिनीनामनसूयादिरमणीनामिति यावत् ] ॥ ६७ ॥

तद्रोमवल्ली कुचलक्षणावद्री पर्वतावावृण्वती या प्रभा सैव धुनी नदी तस्या उरुशैव-लालिर्महती शैवालपङ्क्ती रुरुचे रेजे । अस्य शिशोः कृते यत्नाद्विधात्रा स्थापितः प्रशस्तो वेणुरिवेत्युत्प्रेक्षा । इन्द्रवज्रावृत्तम् ॥ ६८ ॥ [ शिशोर्बालस्य कृतेऽग्रे करिष्यमाणत्वेन वक्ष्यमाणपारमहंस्योपयोगित्वार्थमित्यर्थः । प्रशस्तः सूक्ष्मत्वादिधर्मैः शास्त्रसंमत इति यावत् । एतेनात्र गर्भसंन्यासित्वमेवेति ध्वन्यते ] ॥ ६८ ॥

अस्याः सत्याः पयोधरद्वंद्वमिषात्कुचयुग्मव्याजेन दुग्धपिबत्यर्थस्य पानस्य विधाने योग्यौ नवीनामृतपूरितौ द्वौ कुम्भौ पद्मयोनिर्ब्रह्मा कलयांबभूव रचयामास ।

' कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः ' । उपजातिः ॥ ६९ ॥

[ नवीनेति । नवीनं निखिलविबुधकृतसकलश्रुत्यन्तक्षीरार्णवमथनोद्भूतत्वादभिनवं यदमृतम् ।

' मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् '

इत्यमराज्जीवन्मुक्तिसद्योमुक्तिलक्षणावस्थाभेदेन द्विविधं निःश्रेयसपीयूषं तेन पूरितौ भरिताविति यावत् । एतेन तत्रालौकिकत्वं द्योत्यते ] ॥ ६९ ॥

कुचकुम्भमध्ये द्वैतप्रवादं तयोर्मध्ये पुनर्माध्यमिकं मतं शून्यमतं च सुभ्रूमणेर्गर्भग एव सोऽर्भो बालको द्राग्झटिति गर्हयामास । यतो महात्मभिर्गर्ह्यं निन्द्यं भेदवादशून्यम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लग्ने शुभे शुभयुते सुषुवे कुमारं
श्रीपार्वतीव सुखिनी शुभवीक्षिते च ॥
जाया सती शिवगुरोर्निजतुङ्गसंस्थे
सूर्ये कुजे रविसुते च गुरौ च केन्द्रे ॥ ७१ ॥

---

तयोः प्रतिषेधाय गर्भगेणार्भेग स्तनयोरभेदस्य तन्मध्यगतावकाशाभावस्य च संपादनमिति फलोत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥ ७० ॥ [ स्विति । शोभना भ्रुवो यासां तासु त्रैलोक्यसुन्दरीषु मध्ये या मणिरिव रत्नमिव परमरमणीया । एतेन तस्यामीश्वरमातृत्वयोग्यत्वं ध्वन्यते । गर्भग एवोदरवर्त्येवेति यावत् । एवं चावताराद्युत्तरं किं करिष्यतीति को वेदेति तत्राचिन्त्यैश्वर्यं सूच्यते । द्वैतेति । तार्किकादिसकलभेदवादमिति यावत् । एतेन तयोरेकीभावोक्तेरतिपीनत्वं द्योतितम् । चोऽवधारणे । तथाच मध्ये तस्या मध्यशब्दितं निरुपमकृश उदर एव । माध्यमिकं माध्यमिकसंज्ञकनास्तिकविशेषसिद्धान्तीभूतमित्यर्थः । महात्मेति । महात्मभिर्महति देशादिपरिच्छेदविधुरे ब्रह्मात्मैक्यरूपाद्वैते विषय आत्मा चरमवृत्तिलक्षणप्रमारूपा बुद्धिर्येषां तैः श्रीमद्बादरायणादिभिर्गर्हितुं निन्दितुं योग्यमित्यर्थः ] [ गर्हयामास कुचद्वन्द्वपीनतासंपादनेन कृशोदरगुरुतासंपादनेन च तिरश्चकारेत्यन्वयः ] ॥ ७० ॥

लग्ने शुभे शुभेन ग्रहेण युते युक्ते शुभेन तेन दृष्टे च पुनश्च सूर्यादौ स्वतुङ्गसंस्थे निजतुङ्गा उच्चस्थानानि सूर्यादीनां क्रमेणोक्तानि—

'अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादितुङ्गाः' । इति ।

अजो मेषो मृगो मकरोऽङ्गना कन्या कुलीरः कर्को झषो मीनो वणिक्तुला । तथा सूर्ये मेषस्थे कुजे भौमे मकरस्थे रविसुते मन्दे तुलास्थे गुरौ च केन्द्रे चतुर्थाद्यन्यतमराशिस्थे चकारावुक्तानुक्तसमुच्चयार्थौ शिवगुरोर्भार्या सती सुखिनी सुखवती नत्वन्यवत्पीडिता कुमारं शिशुं सुषुवे यथा श्रीपार्वती कुमारं स्कन्दं सुषुवे तद्वत् । अनेन गर्भप्रवेशादिकं मायया प्रदर्श्य सदाशिवः शंकराचार्यरूपेण प्रादुरभूदिति दर्शितम् । वसन्ततिलका छन्दः ॥ ७१ ॥ [ शुभे पुण्यग्रहस्वामिके ] ॥ ७१ ॥

---

१ ख. कर्कटो । २ क. ग. 'पार्वे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्ट्वा सुतं शिवगुरुः शिववारिराशौ
मग्नोऽपि शक्तिमनुसृत्य जले न्यमाङ्क्षीत् ॥
व्यश्राणयद्बहु धनं वसुधाश्च गाश्च
जन्मोक्तकर्मविधये द्विजपुङ्गवेभ्यः ॥ ७२ ॥

तस्मिन्दिने मृगकरीन्द्रतरक्षुसिंह-
सर्पाखुमुख्यबहुजन्तुगणा द्विपन्तः ॥
वैरं विहाय सह चेरुरतीव हृष्टाः
कण्डूमपाकृषत साधुतया निघृष्टाः ॥ ७३ ॥

वृक्षा लताः कुसुमराशिफलान्यमुञ्च-
न्नद्यः प्रसन्नसलिला निखिलास्तथैव ॥
जाता मुहुर्जलधरोऽपि निजं विकारं
भूभृद्गणादपि जलं सहसोत्पपात ॥ ७४ ॥

अद्वैतवादिविपरीतमतावलम्बि-
हस्ताग्रवर्तिवरपुस्तकमप्यकस्मात् ॥
उच्चैः पपात जहसुः श्रुतिमस्तकानि
श्रीव्यासचित्तकमलं विकची बभूव ॥ ७५ ॥

---

सुतं दृष्ट्वा शिवगुरुः शिववारिराशौ सुखसमुद्रे मग्नोऽपि शक्तिं सामर्थ्यमनुसृत्य जले न्यमाङ्क्षीन्निमज्जितवान् । तदनन्तरं बहु धनं वसुधाश्च गाश्च पुत्रजन्मन्युक्तस्य कर्मणो विषये विधानाय द्विजपुङ्गवेभ्यो ब्राह्मणवरेभ्यः शास्त्रज्ञेभ्यः पात्रेभ्यो व्यश्राणयद्दत्तवान् ॥ ७२ ॥

तरक्षुर्व्याघ्रो मृगादयो बहुजन्तुगणाः परस्परं द्विपन्तोऽपि तस्मिन्दिने वैरं विहायातीव हृष्टाः सह चेरुः पुनश्च साधुतया निघृष्टाः सम्यक्तयाऽन्योन्यं संघर्षणं खर्जनं कुर्वन्तः कण्डूमपाकृषत कण्डूपाकरणं कृतवन्तः ॥ ७३ ॥ [ 'तरक्षुस्तु मृगादनः' इत्यमरः । एवं च मृगेण सह तस्य वैरम् । करीन्द्रेण सह सिंहस्याऽऽखुना सह सर्पस्येति यथायोगं ज्ञेयम् ] ॥ ७३ ॥

तस्मिन्दिने वृक्षा लताश्च पुष्पराशीन्फलानि चामुञ्चंस्तथैव सकला नद्यः प्रसन्नजला जाता जलधरोऽपि निजं विकारं जलं मुहुरमुञ्चदिति वचनादिपरिणामेन संबन्धनीयं भूभृद्गणात्पर्वतसमूहादपि जलं सहसोत्पपात ॥ ७४ ॥ [ मुहुरिति सर्वत्र ज्ञेयम् ] ॥ ७४ ॥

किंचाद्वैतवादिभ्यो विपरीतं मतमवलम्बितुं शीलं येषां तेषां हस्ताग्रवर्तिवरपुस्तकमप्यकस्मादुच्चैः पपात श्रुतिमस्तकानि वेदान्ता जहसुः श्रीव्यासस्य चित्तकमलं विकची बभूव विकासं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वाभिराशाभिरलं प्रसेदे
वातैरभाव्यद्भुतदिव्यगन्धैः ।'
प्रजज्वलेऽपि ज्वलनैस्तदानीं
प्रदक्षिणीभूतविचित्रकीलैः ॥ ७६ ॥
सुमनोहरगन्धिनी सतां
सुमनोवद्विमला शिवंकरी ॥
सुमनोनिकरप्रचोदिता
सुमनोवृष्टिरभूत्तदाऽद्भुतम् ॥ ७७ ॥
लोकत्रयी लोकदृशेव भास्वता
महीधरेणेव मही सुमेरुणा ॥
विद्या विनीत्येव सती सुतेन सा
रराज तत्तादृशराजतेजसा ॥ ७८ ॥

---

प्राप ॥ ७५ ॥ [ वरेति पुस्तकविशेषणं तु तत्तत्सूत्राद्यार्षग्रन्थसंग्रहार्थमेव । श्रुतीति उपनिषद्भागमात्रपुस्तकानीत्यर्थः । जहसुः स्वत एव वेष्टनादिविघटनपूर्वकमुद्घाटितास्यसरणीनि बभूवुरित्यर्थः ] [ श्रीति । श्रीव्यासचित्तसरसः प्रादुर्भूतं यत्कमलमिव ब्रह्म तत्पुस्तकमपीति यावत् । भगवद्बादरायणान्तःकरणमपि सुप्रसन्नमासीदिति तु कैमुत्यसिद्धो भावः । एतेन श्रुतिमस्तकपदेन तदधिष्ठातृदेवताग्रहोऽपि व्याख्यातः ] ॥ ७५ ॥

किंच सर्वाभिराशाभिर्दिग्भिरलं प्रसेदे । भावे प्रत्ययः । सर्वा दिशोऽतिशयेन प्र बभूवुरित्यर्थः । अद्भुतो दिव्यो गन्धो येषां ते तैर्वातैरभावि वायवोऽद्भुतदिव्यगन्धा बभूवुः प्रदक्षिणीभूता विचित्राः कीला ज्वाला येषां तैर्ज्वलनैरग्निहोत्रादिभिरपि तदानीं प्र ज्वले तथाभूता अग्नयोऽपि प्रज्वलिता बभूवुः । अत्रापि भावे प्रत्ययः । उपमा त्तम् ॥ ७६ ॥

किंच तदा तस्मिन्काले सुमनोहरो गन्धोऽस्यास्तीति तथा सतां सुष्ठु शुद्धं यन्मन द्विमला शिवं सुखं करोतीति तथा सुमनसां देवानां निकरैः समूहैः प्रचोदिता प्रेरिता नसः पुष्पाणां वृष्टिरद्भुतं यथा स्यात्तथाऽभूत् । यमकालंकारः ।

' अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।

यमकम् ' इत्युक्तेः । ' विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी ॥
लोकत्रयी लोकदृशा लोकनेत्रेण भास्वता सूर्येणेव मही सुमेरुणा पर्वतेनेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्कारपूर्वमभियुक्तमुहूर्तवेदि-
विप्राः शशंसुरभिवीक्ष्य सुतस्य जन्म ॥
सर्वज्ञ एव भविता रचयिष्यते च
शास्त्रं स्वतन्त्रमथ वागधिपांश्च जेता ॥ ७९ ॥
कीर्तिं स्वकां भुवि विधास्यति यावदेषा
किं बोधितेन बहुना शिशुरेष पूर्णः ॥
नापृच्छि जीवितमनेन च तैर्न चोक्तं
प्रायो विदन्नपि न वक्त्यशुभं शुभज्ञः ॥ ८० ॥

---

विनयेनेव सा सती[1] तत्तेन सुतेन रराज । सुतं विशिनष्टि—तादृशानामतिप्रसिद्धानां रामचन्द्रप्रभृतिराज्ञां तेजो यस्मिंस्तेन । यद्वा तेजसां राजेति राजतेजस्तादृशं सूर्यादितुल्यं राजतेजो यस्मिंस्तेनेत्यर्थः । अत्राभिन्ने दीप्तिलक्षणे साधारणे धर्मे एकस्यैव बहूपमानोपादानान्मालोपमा । उपजातिवृत्तम् ॥ ७८ ॥ [ तदित्यादि । 'ज्योतिषां रविरंशुमान्' इति 'नक्षत्राणामहं शशी' इति च स्मृतेस्तज्जगत्प्रसिद्धं सूर्यतुल्यं तथा तादृशः सर्वानन्दकरो राजा चन्द्रो येन तत्तेजो यस्याष्टमूर्त्यवतारस्य भगवतः शंकरभगवत्पादस्यैव तेजसः सूर्याचन्द्रमसोरपि सत्त्वात्स तथा तेन सूर्याद्यधिकवर्चस्विनेत्यर्थः । [ यद्यप्यत्र विद्या विनीत्येवेति विनीतिशब्दस्य स्त्रीलिङ्गकस्यैव प्रयुक्तत्वाद्भिन्नलिङ्गोपमत्वं नित्यदोष एवायं वाक्यगस्तथाऽप्यत्र वक्तुः कवेरुक्ताचार्यचरणावतारमहोत्सववर्णनपरायणस्य भक्तिरसाविष्टचेतस्त्वात्तदवधानवैधुर्यं गुण एव । तथा चोक्तं रसगङ्गाधरे—

'मलयानिलकालकूटयोरमणीकुन्तलभोगिभोगयोः ।
श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः '

इति पद्ये यद्यपि प्रथमार्धे उत्तमाधमयोरुपक्रमाद्द्वितीयार्धेऽधमोत्तमवचनं क्रमभङ्गमावहति तथाऽपि वक्तुर्ब्रह्मात्मकतयोत्तमाधमभावज्ञानवैकल्यं संपन्नमिति द्योतनाय क्रमभङ्गो गुण एवेति ॥ ७८ ॥

सत्कारपूर्वमभियुक्ता विनियुक्ता मुहूर्तवेदिनो विप्राः सुतस्य जन्म वीक्ष्याऽऽलोच्य शशंसुरेष तव पुत्रः सर्वज्ञो भविष्यति पुनश्च स्वतन्त्रं शास्त्रं रचयिष्यतेऽथ वागधिपांश्च जेता भविष्यति । वसन्ततिलका वृत्तम् ॥ ७९ ॥ [ जन्म जन्मलग्नमिति यावत् ] [ अभिवीक्ष्य ल्याधादिज्योतिःशास्त्राचार्यतत्त्वानुसारेण भूरितरं विचिन्त्येति यावत् ] [ स्वतन्त्रमद्वैतात्ममात्रप्रधानमित्यर्थः ] [ वागिति । वक्ष्यमाणसरस्वत्यवतारीभूतोभयभारतीपतिमण्डनमिश्रप्रमुखसकलद्वैतवादिपण्डितानित्यर्थः ] ॥ ७९ ॥

किंच यावदेषा भूस्तावत्स्वकां कीर्तिं भुवि विधास्यति किं बहुना बोधितेनैव तव

---

[1] ग. °ती तेन ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तज्ज्ञातिबन्धुसुहृदिष्टजनाङ्गनास्ता-
स्तं सूतिकागृहनिविष्टमथो निदध्युः ॥
सोपायनास्तमभिवीक्ष्य यथा निदाघे
चन्द्रं मुदं ययुरतीव सरोजवक्त्रम् ॥ ८१ ॥
तत्सूतिकागृहमवैक्षत न प्रदीपं
तत्तेजसा यदवभातमभूत्क्षपायाम् ॥
आश्चर्यमेतदजनिष्ट समस्तजन्तो-
स्तन्मन्दिरं वितिमिरं यदभूददीपम् ॥ ८२ ॥

---

शिशुः पूर्णोऽस्ति । जीवितं च तेन शिवगुरुणा न च पृष्टं न च तैरुक्तं यतः प्रा[ज्ञो] जानन्नप्यशुभं शुभज्ञो नैव वक्ति ॥ ८० ॥ [ पूर्णः परमात्मैव भक्तानुग्रहार्थमभक्तनिग्रह[ार्थं] चावतीर्णोऽस्तीति यावत् । चोऽवधारणे द्वितीयः समुच्चये ] [ न वक्ति नैव भाषत इ[ति] योजना । ' नाश्लीलं कीर्तयेत् ' इति श्रौतनिषेधाद्धाविज्ञानमरितैरप्यमङ्गलं नैव वक्त[व्य]मिति संप्रदाय एवेति भावः ] ॥ ८० ॥

अथो अनन्तरं तज्ज्ञातिबन्धुसुहृदिष्टजनानामङ्गना उपायनेनोपहारेण सह वर्तमाना[स्तं] सूतिकागृहनिविष्टं ददृशुस्तं सरोजमुखमभि समन्ताद्वीक्ष्यात्यन्तं मुदं च ययुः प्रापुः । [य]था निदाघे ग्रीष्मर्तौ सूर्यातपेन तप्ताश्चन्द्रं वीक्ष्यात्यन्तं मुदं प्राप्नुवन्ति तद्वत् ॥ ८१ [ तज्ज्ञातीति । तस्य शिवगुरोर्ये ज्ञातयः संबन्धिनः बन्धुसुहृदौ तूक्तौ ' अत्या[गस]हनो बन्धुः सदैवानुगतः सुहृत् ' इति । इष्टपदेनावशिष्टौ ' एकक्रियं भवेन्मित्रं सम[प्राणः] सखा मतः' इति वचनान्मित्रसखायौ ज्ञेयौ ]॥ ८१ ॥

न विद्यते प्रदीपो यस्मिन् । नैकधेत्यादिवन्नशब्देन समासः । नप्रदीपं स[त्क्षपायां] रात्रौ चास्य शिशोस्तेजसा यदवभातमभूत्तत्सूतिकागृहं सर्वो जनोऽवैक्षतैतत्सर्वजन्तोरा[श्चर्य]मजनिष्ट यददीपं सत्तस्य मन्दिरमतिमिरमभूदित्यर्थः ॥ ८२ ॥ [ तदिति । सूतिका[गृहं] कर्तृ । प्रदीपं कर्म । नावैक्षत नैवापश्यदित्यन्वयः । तत्र हेतुः—तत्तेजसेति द्वितीयपादे[न] यद्यस्मात्क्षपायां रात्रावपि । तदिति ][ निश्यपि तदोजसाऽवभासमानं बभूवेति सं[क्षेपः] अत एव सकललोकानामप्येतदद्भुतमेवाभूदित्याह—आश्चर्यमित्याद्युत्तरार्धेन ]॥८[२॥]

---



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्पश्यतां शिशुरसौ कुरुते शमङ्ग
तेनाकृतास्य जनकः किल शंकराख्याम् ॥
यद्वा चिराय किल शंकरसंप्रसादा-
ज्जातस्ततो व्यधित शंकरनामधेयम् ॥ ८३ ॥
सर्वं विदन्सकलशक्तियुतोऽपि बालो
मानुष्यजातिमनुसृत्य चचार तद्वत् ॥
बालः शनैर्हसितुमारभत क्रमेण
स्रप्तुं शशाक गमनाय पदाम्बुजाभ्याम् ॥ ८४ ॥
बालेऽथ मञ्चे किल शायितेऽस्मि-
न्सतां प्रसन्नं हृदयं बभूव ॥
संवीक्षमाणे मणिगुच्छवर्यं
विद्वन्मुखं हन्त विनीलमासीत् ॥ ८५ ॥
संताडयन्हन्त शनैः पदाभ्यां
पर्यङ्कवर्यं कमनीयशय्यम् ॥
बिभेद सद्यः शतधा समूहा-
न्विभेदवादीन्द्रमनोरथानाम् ॥ ८६ ॥

---

अथ शंकरनामधेये प्रवृत्तिनिमित्तद्वयमाह—यद्येन कारणेनासौ बालकः पश्यतां जना-नामुत्कृष्टं शं सुखं कुरुते तेनास्य जनकः प्रसिद्धां शंकराख्यामकृत कृतवान् । यद्वा । चिरकालाच्छंकरप्रसादाज्जातस्ततस्तस्माच्छंकरनामधेयं व्यधिताकृत ॥ ८३ ॥

तद्वद्बालवत्पादकमलाभ्यां गमनायाऽऽदौ स्रप्तुमुदरेण सर्पणं कर्तुं समर्थो बभूव ॥ ८४॥ [ बालः शनैरिति । बवयोः सावर्ण्यात् 'वा गतिगन्धनयोः' इति स्मरणाद्वाति स्वाङ्ग-सौरभ्यं प्रसारयतीति वोऽत एवाऽभितः सकलसंनिकृष्टजनचेतांसि लात्याश्चर्यदर्शनवशादादत्त इत्यालो वश्चासावालश्चेति तथा सौरभ्यशालिशरीरस्वाञ्चिखिलजनमनोहर इत्यर्थः । एतेन बालपदपौनरुक्त्यं प्रत्युक्तं तदैश्वर्यातिशयश्च सूचितः ] ॥ ८४ ॥

अस्मिन्बाले मञ्चे शायिते सति सतां हृदयं प्रसन्नं बभूव मणिगुच्छवर्यं वीक्षमाणे सति विदुषां मुखं विगतनीलमभूत् । यद्वा वादिपण्डितानां मुखं विशेषेण नीलमभूत् । उपजा-तिवृत्तम् ॥ ८५ ॥ [ मणीति । कुमारकर्तृकनिरीक्षणानन्दसिद्ध्यर्थं तन्मञ्चाद्युपरि रत्नादिगुच्छको निबध्यत इति लोके प्रसिद्धमेवेति भावः ] ॥ ८५ ॥

कमनीया सुन्दरी शय्या शयनीयं यस्मिंस्तं पर्यङ्कश्रेष्ठं शनैः पदाभ्यां संताडयन्सन्विशे-षेण भेदवादिनां य इन्द्रास्तेषां ये मनोरथास्तेषां समूहान्सद्यः शतधा बिभेद विददार ।

---

१ ख. ग. घ. सुन्दरा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वित्राणि वर्णानि वदत्यमुष्मि-
न्द्वैतिप्रवीरा दधुरेव मौनम् ॥
मुदा चलत्यङ्घ्रिसरोरुहाभ्यां
दिशः पलायन्त दशापि सद्यः ॥ ८७ ॥
उदचारयदर्भको गिरः
पदचारानतनोदनन्तरम् ॥
विकलोऽभवदादिमात्तयोः
पिकलोकश्चरमान्मरालकः ॥ ८८ ॥
नवविद्रुमपल्लवास्तृता-
मिव काश्मीरपरागपाटलाम् ॥
रचयन्नचलां पदत्विषा
स चचारेन्दुनिमः शनैः शनैः ॥ ८९ ॥

---

अत्र ताडनविभेदनयोर्हेतुकार्ययोर्विरुद्धभिन्नदेशत्वादसंगतिरलंकारः ।
' विरुद्धभिन्नदेशत्वं कार्यहेत्वोरसंगतिः ' इत्युक्तेः ॥ ८६ ॥

द्वित्राणि वर्णान्यमुष्मिन्बाले वदति सति द्वैतिप्रवीरा मौनमेव दधुः । चरणकमलाभ्यां मुदा चलति सति ते सद्यो दशापि दिशः पलायन्त पलायनं कृतवन्तः ।
' चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ' ॥ ८७ ॥
[ वर्णानि ' वर्णं तु वाऽक्षरम् ' इत्यमरादक्षराणीत्यर्थः ] ॥ ८७ ॥

अर्भको गिर उदचारयत्प्रवर्तितवाननन्तरं पदचारानतनोद्विस्तारितवांस्तयोर्वाणीप्रवर्तनपादचारविस्तारयोर्मध्ये गिरः प्रवर्तनात्पिकलोकः सर्वोऽपि कोकिलो विकलोऽभवत् । चरमादन्त्यात्पादचारविस्तारान्मरालको हंसो विकलोऽभवत् । वियोगिनी वृत्तम् ॥ ८८ ॥

अचलां भूमिं पादत्विषा चरणकान्त्या नवीनैर्विद्रुमस्य रत्नवृक्षस्य पल्लवैरास्तृतामिव
' विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि प्रमानयम् '
इति मेदिनी । काश्मीरपरागैः पाटलां श्वेतरक्तामिव रचयंश्चन्द्रतुल्यः शिशुः शनैः शनैश्चचार ॥ ८९ ॥ [ इवकारोऽयं काकाक्षिगोलकन्यायेन काश्मीरेत्यत्राप्यन्वेति पदेति । चरणकान्त्या रचयन्सन्नत एव— इन्दुनिभः सद्यः समुदितशरद्राकानायकसदृश इत्यर्थः । सोऽपि तत्कालं किंचित्पाटलस्वपाददीप्त्या पृथ्वीं क्षणिकारक्तां करोत्येवं भावः ] ॥ ८९ ॥

---

१ ख. 'न्द्वैतप्र° । २ ग. °दयो । ३ ख. द्वैतप्र° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूर्धनि हिमकराचिह्नं निटले नयनाङ्कमंसयोः शूलम् ॥
वपुषि स्फटिकसवर्णं प्राज्ञास्तं मेनिरे शंभुम् ॥ ९० ॥

राज्यश्रीरिव नयकोविदस्य राज्ञो
विद्येव व्यसनदवीयसो बुधस्य ॥
शुभ्रांशोश्छविरिव शारदस्य पित्रोः
संतोषैः सह ववृधे तदीयमूर्तिः ॥ ९१ ॥
नागेनोरसि चामरेण चरणे बालेन्दुना फालके
पाण्योश्चक्रगदाधनुर्डमरुकैर्मूर्ध्नि त्रिशूलेन च ॥
तत्तस्याद्भुतमाकलय्य ललितं लेखाकृते लाञ्छितं
चित्रं गात्रममंस्त तत्र जनता नेत्रैर्निमेषोज्झितैः ॥ ९२ ॥

---

मूर्धनि हिमकरस्य शीतकिरणस्य चन्द्रस्य चिह्नं निटले ललाटे नयनस्य नेत्रस्याङ्कं चिह्नमंसयोः स्कन्धयोः शूलं वपुषि स्फटिकेन समानवर्णं प्राज्ञा वीक्ष्य शंभुं मेनिरे । अनुमानालंकारः । वृत्तं गीतिः ।

'आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः' इति लक्षणात् ।
लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः'

इत्यार्यापूर्वार्धलक्षणम् ॥ ९० ॥ [ शूलं त्रिशूलरेखाचिह्नमित्यर्थः ] ॥ ९० ॥
राजनीतिकुशलस्य राजश्रीरिव—

'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु ।
दैवानिष्टफले पापे विपत्तौ विफलोद्यमे'

इति मेदिनीकोशाद्व्यसनादशुभाद्दवीयसः 'दवीयश्च दविष्ठं च सुदूरे' इत्यमरादतिदूरस्य बुधस्य विद्येव शरत्कालीनस्य चन्द्रस्य च्छविरिव पित्रोः संतोषैः सह तदीया मूर्तिर्ववृधे । प्रहर्षणी वृत्तम् ॥ ९१ ॥ [अत्रोपमा सहोक्तिश्चालंकारः । तदुक्तम्—

'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः ।
दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह' इति ] ॥ ९१ ॥

उरसि नागेन चरणे चामरेण मस्तके बालचन्द्रेण हस्तयोश्चक्रादिभिर्मूर्धनि त्रिशूलेन चाद्भुतं तस्य ललितं गात्रं सुकुमाराङ्गविन्यासं शरीरं नेत्रैर्निमेषराहितैराकलय्य सम्यगवलोक्य रेखार्थं लाञ्छितं चित्रं तत्रत्यजनसमुदायोऽमंस्त शार्दूलविक्रीडितम् ॥ ९२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गे प्राथमिके प्रयाति विरतिं मार्गे स्थिते दौर्गते
स्वर्गे दुर्गमतामुपेयुषि भृशं दुर्गेऽपवर्गे सति ॥
वर्गे देहभृतां निसर्गमलिने जातोपसर्गेऽखिले
सर्गे विश्वसृजस्तदीयवपुषा भर्गोऽवतीर्णो भुवि ॥ ९३ ॥

इति श्रीमाधवीये तदवतारकथापरः ॥
संक्षेपशंकरजये सर्गः पूर्णो द्वितीयकः ॥ २ ॥

---

## अथ तृतीयः सर्गः ।

इति बालमृगाङ्कशेखरे सति बालत्वमुपागते ततः ॥
दिविषत्प्रवराः प्रजज्ञिरे भुवि षट्शास्त्रविदां सतां कुले ॥ १ ॥

---

[ नागेन भोगीन्द्रयज्ञोपवीतचिह्नेनेत्यर्थः । मूर्ध्नीति । मस्तकावच्छेदेन पार्श्वप्रहारसूचक त्रिशूलाकाररेखात्रयेणेत्यर्थः । अन्यथा तदनौचित्यात् ] ॥ ९२ ॥

प्राथमिके सनकादिसर्गे विरतिं प्रयाति सति मार्गे दौर्गते दुर्गतिसंपादके स्थिते स्वर्गे दुर्गमतां दुष्प्राप्यतामुपेयुषि प्राप्तवति सत्यपवर्गे मोक्षे भृशमत्यन्तं दुर्गे दुष्प्रापे देहभृतां जीवानां वर्गे समुदाये निसर्गात्स्वभावादेव मलिने सति तथाच विश्वकर्तुरखिले सर्गे जाता उपसर्गा नाशकराणि विघ्नानि यस्य तथाभूते सति तदीयवपुषा शङ्कराचार्य-ग्रहात्मना भर्गः सदाशिवो भूमाववतीर्णः ॥ ९३ ॥ [ सर्ग इति । प्राथमिके प्रकृतैतत्काव्यस्याऽऽदिमसर्ग इत्यर्थः ] [ पक्षे कृतादिद्वापरान्तसृष्टिसमाप्तौ सत्यामित्यर्थः अत एव दौर्गते दुर्गतेरयं दौर्गतस्तस्मिन्नरकादिदुर्गतिप्रापक इति यावत् ] ॥ ९३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसराम-कुमारसूनुधनपतिसूरिकृते शंकरविजयडिण्डिमे द्वितीयः सर्गः ॥ २ ॥

---

### अथ तृतीयसर्गस्य टीका ।

एवं शिवावतारमुपवर्ण्य तत्तद्देवावतारमुपवर्णयितुमुपक्रमते—इतीति । एवं बालमृगाङ्कशेखरे शिवे बालत्वं प्राप्ते सति तदनन्तरं सुरोत्तमा भुवि षट्शास्त्रविदां सतां कुले प्रादुर्बभूवुः । वियोगिनी वृत्तम् ॥ १ ॥ [कुत्रचित्षट्शास्त्रोपलक्षितसकलशब्दब्रह्मवित्त्वलक्षणवास्तवश्रोत्रियत्वे सत्यपि प्रतिबन्धविशेषवशादपरोक्षब्रह्मबोधाभावसंभवात्तद्व्युदासाय सतामिति विशेष्यपदम्। तावन्मात्रोक्तौ च लोकानुग्रहप्रयोजकशब्दब्रह्मवित्त्वरूपोत्कर्षाभावापत्तिरिति षट्शास्त्रेति विशेषणपदमप्युपात्तमिति तत्त्वम् ] ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कमलानिलयः कलानिधे-
र्विमलाख्यादजनिष्ट भूसुरात् ॥
भुवि पद्मपदं वदन्ति यं
सविपद्येन विवादिनां यशः ॥ २ ॥
पवमानोऽप्यजनि प्रभाकरा-
त्सवनोन्मीलितकीर्तिमण्डलात् ॥
गलहस्तितभेदवाद्यसौ
किल हस्तामलकाभिधामधात् ॥ ३ ॥
पवमानदशांशतोऽजनि
प्लवमानाऽञ्चति यद्यशोम्बुधौ ॥
धरणी मथिता विवादिवो-
त्करणी येन स तोटकाह्वयः ॥ ४ ॥

---

तत्राऽऽदौ विष्णोरवतारमाह—कमलाया लक्ष्म्या निलयः श्रीविष्णुः सर्वासां कलानां निधेर्विमलाभिधाद्भूसुराद्ब्राह्मणाद्भुव्यजनिष्ट प्रादुरभूत् । भुवीत्युत्तरान्वयि । यं भुवि पद्मपदं वदन्ति येन विवादिनां यशः सविपद्विपदा सह वर्तमानमित्यर्थः ॥ २ ॥ [ एवं सामान्यतः सकलसुरवरावतारे तत्र विशेषजिज्ञासायां परमाभ्यर्हितत्वान्निरतिशयं श्रीशंकर-चरणानुरक्तत्वाच्च प्रथमं भगवतो विष्णोरवतारं वर्णयति—कमलेति । 'कमला श्रीर्हरि-प्रिया' इत्यमरात्कमला लक्ष्मीस्तस्या निलय इवाऽऽश्रयः श्रीमन्नारायण इत्यर्थः ] [ विमलेति । विमल इत्यन्वर्थाऽऽख्या यस्य स तथा तस्मादित्यर्थः ] ॥ २ ॥

पवनोऽपि प्रातःसवनादिनोन्मीलितं प्रस्फोरितं कीर्तिलक्षणं मण्डलं यस्य तस्मात्प्रातः-कालोन्मीलितमण्डलः सूर्यस्तत्तुल्यात्प्रभाकराभिधाद्भूसुरादजनि प्रादुरभूत् । गले हस्तिताः कण्ठे हस्तेन गृहीता इव रुद्धकण्ठाः कृता भेदवादिनो येनासाववतीर्णो वायुः किल प्रसिद्धं हस्तामलकेति संज्ञामधात् ॥ ३ ॥

[ गलेति । गले हस्तो मल्लयुद्धे प्रतिमल्लस्य दीयत इति प्रसिद्धमेव स इव तिरस्कृतत्वेन संजातो येषां तादृशा भेदवादिनो येन स तथेति यावत् ।

अधाद्धार ] ॥ ३ ॥

वायोरेव दशांशावतारमाह—पवमानस्य पवनस्य दशांशतः स तोटकाख्योऽजनि । यस्य यशोलक्षणे जलधौ प्लवमानोत्तरन्ती धरण्यञ्चति येन विवादिवोत्करणी मथिते-

---

१ घ. °वाग्वर° । २ घ. °वाक्कर° ।

उद्भावि शिलादसूनुना
मदवद्वादिकदम्बनिग्रहैः ॥
समुदश्चितकीर्तिशालिनं
यमुदर्कं ब्रुवते महीतले ॥ ५ ॥
विधिरास सुरेश्वरो गिरां
निधिरानन्दगिरिर्व्यजायत ॥
अरुणः समभूत्सनन्दनो
वरुणोऽजायत चित्सुखाह्वयः ॥ ६ ॥

---

स्यर्थः ॥ ४ ॥ [ दशसंख्याकश्चासौ पवमानश्चेति मयूरव्यंसकादिवद्विगृह्य तस्य योंऽशस्ते 'वायुर्वै गौतम तत्सूत्रम्' इति श्रुतेः प्राणादिपञ्चमुख्यप्राणनागादिपञ्चमुख्यप्राणभेदभिन्न दशविधसमष्टिप्राणवायुप्रधानसूत्रात्मांशेनेत्यर्थः ] [ धरणी पृथ्व्यञ्चति पूजिता भ राजत इत्यर्थः ॥ ४ ॥

शिलादस्य सूनुना पुत्रेण नन्दिसंज्ञकेनोद्भावि शिलादसूनुः प्रादुरभून् । यं मदवद्वादि कदम्बानां मदयुक्तवादिसमुदायानां निग्रहैः समुल्लसन्त्या कीर्त्या शोभत इति तथा महीतल उदर्कं वदन्तीत्यर्थः ॥ ५ ॥ ( ननु तोटकाचार्यस्यैव कुतो न जन्मस्थानं पद्मपादा दिवदुक्तमित्यत आह—उद्भावीति ] [ शिलादेति ।

'कणशाद्यर्जनं तूञ्छं कणिशाद्यर्जनं शिलम्'

इति स्मरणाच्छिलाख्यवृत्तिविशेषेणात्यन्नं भुनक्तीति तथा । एतन्नाम्नैव कश्चित्प्रसिद्धो ब्राह्मणस्तस्य सूनुः पुत्रस्तेनेत्यर्थः । एतादृशेन तोटकाचार्येणोक्तसूत्रात्मांशावतारेण प्रकरणाद्यच्छब्दानुकूल्याच्चेत्यार्थिकं बोध्यम् ] [ समुदञ्चितेति । एतादृशगुरु 'उदर्कः फलमुत्तरम्' इत्यमरान्निरुक्तवादिपराजयानन्तरभाविफलकाल इत्यर्थः । मही ब्रुवत इति योजना । न चैवं तत्पितृनामकथनोपयोगेऽप्यवशिष्टत्रिपाद्यर्थपौनरुक्त्यापत्तिः प्लवमानेत्यादिना पूर्वपद्य एव तथा प्रतिपादितत्वादिति वाच्यम् । भव शंकर देशिक शरणमिति वक्ष्यमाणस्तोत्रपूर्वकं श्रीभाष्यकारचरणं प्रत्येतस्यैव शरणागतत्वावधृतभूमि रिमत्वसूचनोपयोगित्वादित्याशयः । डिण्डिमकारस्तु प्रकारान्तरेणैव व्याकरोति । तद्यथा शिलादस्य सूनुना पुत्रेण नन्दिसंज्ञकेनोद्भावि शिलादसूनुः प्रादुरभूत् । यं मदवद्वादि कदम्बानां मदयुक्तवादिसमुदायानां निग्रहैः समुल्लसन्त्या कीर्त्या शोभत इति तथा तं मही तल उदर्कं वदन्तीत्यर्थ इति । एवं च तन्मते यमुदर्कं ब्रुवत इत्यादिपाठः । तथा च नामा कश्चिन्नन्दीश्वरावतारो भगवत्पादशिष्य इति फलति ] ॥ ४ ॥

विधिर्ब्रह्मा सुरेश्वरो मण्डनापरसंज्ञ आस बभूव । गिरां निधिर्वाचस्पतिरानन्द

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपरेऽप्यभवन्दिवौकसः
स्वपरेर्ष्यापरविद्विषः प्रभोः ॥
चरणं परिसेवितुं जग-
च्छरणं भूसुरपुंगवात्मजाः ॥ ७ ॥
चार्वाकदर्शनविधानसरोषधातु-
शापेन गीष्पतिरभूद्भुवि मण्डनाख्यः ॥
नन्दीश्वरः करुणयेश्वरचोदितः स-
न्नानन्दगिर्यभिधया व्यजनीति केचित् ॥ ८ ॥

---

रिरजायत । अरुणो गरुडभ्राता सूर्यो वा । सनन्दनसंज्ञः समभवत् । यद्यपि विष्णुः पद्म-पादसंज्ञो बभूवेत्युक्तं स एव च वक्ष्यमाणरीत्या सनन्दनस्तथाऽपि पक्षान्तरमाश्रित्यैकत्र वोभयांशावतरणमाश्रित्याविरोधः संपादनीयः । वरुणो जलाधीशश्चित्सुखसंज्ञोऽजायत ॥६॥ [ नन्वयं सनन्दन एव षष्ठसर्गे पद्मपादत्वेन वर्णनीयः स चेह कमलानिलय इत्यादिना विष्ण्ववतारत्वेन वर्णितोऽधुना तु सूर्यावतारत्वेन गरुडभ्रात्ररुणावतारत्वेन वा वर्ण्यत इति स्फुट एव विरोध इति चेन्न । चार्वाकेत्यादिवक्ष्यमाणाष्टमपद्ये मण्डनमिश्रानन्दगिर्योः केचि-न्मतेन बृहस्पतिनन्दिकेश्वरावतारत्ववदविरोधोपपत्तेः । एवं च सुरेश्वरादेर्विध्याद्यवतारत्ववदस्य प्रथमोक्तं विष्ण्ववतारत्वमेव मुख्यमिति दिक् ] ॥ ६ ॥

अपरेऽपि स्वीयैः परैश्च सह येर्ष्या मत्सरस्तत्परान्दैत्यान्स्वपरेषु येर्ष्या तत्परान्वा विद्विषन्तीति ते दिविषदः । स्वपरेर्ष्यापरान्विद्वेष्टि वा तस्य प्रभोः श्रीशंकरस्य चरणं जगतां शरणं परिसेवितुं ब्राह्मणोत्तमानां पुत्रा अभवन् ॥ ७ ॥ [ स्वेति ।

' ईर्ष्याऽसूया तु परस्य विषये स्पृहा ' ।

इत्यमरात्स्वस्याऽऽत्मनः परोत्कर्षेणादृशीर्ष्या परस्य विषये प्रकाश्य इष्टशब्दादिलाभो-त्तरकालिकान्तःकरणवृत्तिविशेषात्मकसुखे विषये स्पृहाऽभिलाषस्तत्र परास्तदेकपरायणा ये निखिलभेदवादिनस्ते विद्विषः शत्रवो यस्य स तथा तस्येत्यर्थः । एतादृशस्य प्रभोः श्रीमच्छंकरभगवत्पादाचार्यस्येत्यर्थः ] ॥ ७ ॥

' विधिरास सुरेश्वरो गिरां निधिरानन्दगिरिर्व्यजायत ' इत्युक्तमिदानीं मतान्तरमाह—चार्वाकाणां देहात्मवादिनास्तिकानां दर्शनस्य शास्त्रस्य विधानेन सरोषस्य धातुर्ब्रह्मणः शापेन गीष्पतिर्देवगुरुर्भुवि मण्डनसंज्ञोऽभूत् । नन्दीश्वरः करुणयेश्वरेण महादेवेन प्रेरितः सन्नानन्दगिरिसंज्ञया व्यजनीति केचित् । वसन्ततिलकावृत्तम् ॥ ८ ॥ [ चार्वाक-शास्त्रं हि देहात्मवादप्रधानं बृहस्पतिनाऽसुरमोहार्थं प्रणीतमिति पद्मपुराणादौ प्रसिद्धमेव ] अत्र केचिदिति पदप्रयोगान्नेदं स्वप्रभृतिशिष्टसंमतमिति गम्यते ] ॥ ८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथावतीर्णस्य विधेः पुरंध्री
साऽभूद्यदाख्योभयभारतीति ॥
सरस्वती सा खलु वस्तुवृत्त्या
लोकोऽपि तां वक्ति सरस्वतीति ॥ ९ ॥
पुरा किलाध्यैपत धातुरन्तिके
सर्वज्ञकल्पा मुनयो निजं निजम् ॥
वेदं तदा दुर्वसनोऽतिकोपनो
वेदानधीयन्क्वचिदस्खलत्स्वरे ॥ १० ॥
तदा जहासेन्दुमुखी सरस्वती
यदङ्गमर्णोद्भवशब्दसंततिः ॥
चुकोप तस्यै दहनानुकारिणा
निरैक्षताक्ष्णा मुनिरुग्रशासनः ॥ ११ ॥

---

अथ तथाऽवतीर्णस्य विधेः पुरंध्री कुटुम्बिनी सा प्रसिद्धा सरस्वती प्रादुरभूत्। काकाक्षिगोलकन्यायेनाभूत्पदमुभयत्र संबध्यते। यस्याः संज्ञोभयभारतीत्यभूत्खलु प्रसिद्धा। वस्तुवृत्त्याऽपि सा सरस्वती लोकोऽपि तां सरस्वतीत्येव वदति ।

'जतौ जगौ गो विपथे समे स्यात्तौ ज्गौ ग एषा विपरीतपूर्वा' ॥ ९ ॥

[ 'दाराः स्यात्तु कुटुम्बिनी । पुरंध्री' इत्यमरात्सरस्वत्याख्या पत्नीत्यर्थः ] ॥ ९ ॥

सरस्वत्यवतरणे निमित्तमाह—पुरा पूर्वं किल धातुरन्तिके ब्रह्मणः समीपे सर्वज्ञकल्पा ईषदूनसर्वज्ञा मुनयः स्वीयं स्वीयं वेदमध्यैपत पठितवन्तस्तदाऽतिकोपनो दुर्वसनो दुर्वासा मुनिर्वेदान्पठन्क्वचित्स्वरेऽस्खलत्स्खलनं प्राप । उपजातिवृत्तम् ॥ १० ॥

तदा तस्मिन्काले चन्द्रवन्मुखं यस्याः सा सरस्वती जहास हसितवती यतो यदङ्गमर्णो-द्भवशब्दसंततिरर्णेभ्यो वर्णेभ्य उद्भव उत्पत्तिर्यस्याः सा चासौ शब्दसंततिर्यस्या अङ्गं तस्यै हास्यं कृतवत्यै सरस्वत्यै चुकोप कोपं कृतवान्। तन्मुद्रामेव दर्शयति—दहनं वह्निमनुकरोतीति दहनानुकारि तेनाक्ष्णा नेत्रेणोग्रशासनो मुनिर्निरैक्षत दृष्टवान् । वंशस्थं वृत्तम् ॥ ११ ॥

[ इन्द्विति । एतेन हासेऽति मन्दत्वं ध्वन्यते । यदङ्गेति । यस्या अङ्गं शरीरं तदा भा शोभा सैवार्णम्। 'ऋणशब्दो दुर्गभूमौ जले च' इति सिद्धान्तकौमुद्युक्तेर्जलं विमललावण्यतरङ्गगुणवत्त्वादुदकं तस्मादुद्भव उत्पत्तिर्यस्याः सा चासौ शब्दसंततिरकारादिचतुःषष्टिवर्णोपलक्षितानन्तविधशब्दब्रह्मपरम्परेत्यर्थः । अस्तीति शेषः । एवं च यत इयं निखिलशब्दब्रह्मनिदानमतोऽस्याः मन्दहासः समुचित एवेति भावः ] ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शशाप तां दुर्विनयेऽवनीतले
जायस्व मर्त्येष्वविभेत्सरस्वती ॥
प्रसादयामास निसर्गकोपनं
तत्पादमूले पतिता विषादिनी ॥ १२ ॥
दृष्ट्वा विषण्णां मुनयः सरस्वतीं
प्रसादयांचक्रुरिमं तमादरात् ॥
कृतापराधा भगवन्क्षमस्व तां
पितेव पुत्रं विहितागसं मुने ॥ १३ ॥
प्रसादितोऽभूदथ संप्रसन्नो
वाण्या मुनीन्द्रैरपि शापमोक्षम् ॥
ददौ यदा मानुषशंकरस्य
संदर्शनं स्याद्भवितास्यमर्त्या ॥ १४ ॥

---

ततः किं कृतवानित्याकाङ्क्षायामाह—तां शशापेति । शापमेव दर्शयति हे दुर्विनये भूतले मर्त्येषु मनुष्येषु जायस्व जन्म लभस्वैवं शप्ता सरस्वत्यविभेद्भयं प्राप भीता च सती विषादिनी तत्प्रसादोपायाभावचिन्तनेन चेतोभङ्गवती तस्य दुर्वाससः पादस्य मूले समीपे पतिता निसर्गात्स्वभावादेव कोपनं मुनिं प्रसादयामास तत्प्रसन्नतार्थं यत्नं कृतवतीत्यर्थः । उपजातिवृत्तम् ॥ १२ ॥ [ ततस्तया किमकारीत्यत्राऽऽह—अविभेदित्यादिना । यतः सरस्वती तच्छापेनाविभेदतो विषादिनी खेदखिन्ना । यद्वा सर्वज्ञत्वाद्भाविभर्त्रवतारज्ञानवत्त्वेनाविषादिन्यखिन्नैव सती तत्पादमूले पतिता च सती स्त्रीत्वेन पञ्चाङ्गनमस्कारमेव कुर्वाणा निसर्गकोपनं स्वभावक्रूरं तं दुर्वाससं प्रसादयामासेति संबन्धः ]॥१२॥

अथ मुनयः खिन्नां सरस्वतीं दृष्ट्वा तमिमं दुर्वाससमादरात्प्रसादयामासुर्हे मुने विहितापराधं पुत्रं पिता यथा क्षमते तथा हे भगवन्कृतापराधां तां सरस्वतीं क्षमस्व ॥ १३ ॥

अथ सरस्वत्या मुनीन्द्रैश्च प्रसादितः संप्रसन्नो दुर्वासाः शापस्य मोक्षं ददौ । तमाह—यदा मानुषशंकरस्य शंकराचार्यरूपेणावतीर्णस्य सम्यक्साक्ष्यपूर्वकं दर्शनं स्यात्तदाऽमर्त्या भविष्यसीत्यर्थः । विपरीतपूर्वा वृत्तम् ॥ १४ ॥

---

१ क. °भयव° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सा शोणतीरेऽजनि विप्रकन्या
सर्वार्थवित्सर्वगुणोपपन्ना ॥
यस्या बभूवुः सहजाश्च विद्याः
शिरोगतं के परिहर्तुमीशाः ॥ १५ ॥
सर्वाणि शास्त्राणि षडङ्गवेदा-
न्काव्यादिकान्वेत्ति परं च सर्वम् ॥
तन्नास्ति नो वेत्ति यदत्र बाला
तस्मादभूच्चित्रपदं जनानाम् ॥ १६ ॥

---

सा सरस्वती शोणाख्यनदस्य तीरे वि ।स्य विष्णुमित्रसंज्ञकस्य कन्याऽजनि तां विशि- नष्टि—सर्वानर्थान्वेत्तीति सर्वार्थवित्सा चासौ सर्वैर्गुणैरुपपन्ना युक्ता च भिन्नं वा पदं यस्याः पुनर्विद्या ऋग्यजुःसामाथर्वसंज्ञाश्चत्वारो वेदाः शिक्षा कल्पो व्याकरणं छन्दो ज्योतिषं निरुक्तिरिति षडङ्गानि मीमांसा धर्मशास्त्रं न्यायः पुराणमिति चतुर्दश सहजाः सहोत्पन्ना बभूवुर्यस्माच्छिरोगतं शिरसि स्थितं परिहर्तुं के समर्था न केऽपि दुर्वासआदय इत्यर्थः। उपजातिवृत्तम् ॥ १५ ॥ [ शिरोगतं शिरोरुहजातम् । परिहर्तुं त्यक्तुम् । क ईशाः शक्तिमन्तो भवन्तीति योजना । अयं भावः—यथा शिरोरुहादिकं शरीरस्यावयवजातं सहजमेव तथा तस्याः सर्वविद्याद्युपलक्षितयावच्छब्दब्रह्मरूपमङ्गजातं स्वभावसिद्धमेवेति। अर्थान्तरन्यासोऽलंकारस्तद्ध्वनिता पूर्णोपमा च । तदुक्तं कुवलयानन्दमूले—

' उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ।
हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ।
गुणवद्वस्तुसंयोगाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ' इति ] ॥ १५ ॥

सर्वाणि सांख्यपातञ्जलवैशेषिकन्यायमीमांसावेदान्ताख्यानि शास्त्राणि व्याकरणादीनि षडङ्गान्यृगादीन्वेदान्काव्यनाटकादीन्परमन्यच्च सर्वं वेत्ति किं बहुनाऽत्र जगति तन्नास्ति यद्बाला सरस्वती न जानाति यस्मादेवं तस्मात्सा बालाऽत्र लोके जनानामाश्चर्याश्रयभूताऽ भूत्। इन्द्रवज्रा वृत्तम् ॥ १६ ॥ [ परं च मन्वादिभिः प्रणीतं यावत्स्मृत्युपस्मृत्यादिरूपं धर्मशास्त्रं तथा श्रीबादरायणादिभिः प्रणीतमष्टादशमहापुराणोपपुराणजातमपि सर्वं सा बाला वेत्तीत्यन्वयः । एवं च—

' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश '

---

१ ख. ग. घ. 'ष जं'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सा विश्वरूपं गुणिनं गुणज्ञा
मनोभिरामं द्विजपुंगवेभ्यः ॥
शुश्राव तां चापि स विश्वरूप-
स्तस्मात्तयोर्दर्शनलालसाऽभूत् ॥ १७ ॥
अन्योन्यसंदर्शनलालसौ तौ
चिन्ताप्रकर्षादधिगम्य निद्राम् ॥
अवाप्य संदर्शनभाषणानि
पुनः प्रबुद्धौ विरहाग्नितप्तौ ॥ १८ ॥
दिदृक्षमाणावपि नेक्षमाणा-
वन्योन्यवार्ताहृतमानसौ तौ ॥
यथोचिताहारविहारहीनौ
तनौ तनुत्वं स्मरणादुपेतौ ॥ १९ ॥

---

इति स्मृत्युक्तचतुर्दशायुर्वेदाद्युपवेदमिलिताष्टादशविद्यानां सकलानामपि संग्रहः सूचितः ] ॥ १६ ॥

एवं सरस्वत्याः प्रादुर्भावमुपवर्ण्य तस्या विवाहं वक्तुमुपक्रमते—सा गुणज्ञा सरस्वती विश्वरूपं मण्डनापरनामधेयं गुणिनं मनोभिरामं द्विजश्रेष्ठेभ्यः श्रुतवती स गुणज्ञो विश्वरूपस्तां सरस्वतीमपि गुणवतीं मनोभिरामां द्विजपुंगवेभ्यः श्रुतवांस्तस्मात्तयोर्मण्डनसरस्वत्योर्दर्शनलालसा जाता । उपजातिवृत्तम् ॥ १७ ॥ [ गुणज्ञेति वक्ष्यमाणानुरागहेतुगर्भं विशेषणम् ] ॥ १७ ॥

एवंभूतयोस्तयोश्चिन्तनप्रकर्षाल्लब्धस्वाप्निकसंदर्शनादिकयोः प्रबोधकाले विरहाग्निसंतापो जात इत्याह—अन्योन्येति ॥ १८ ॥

द्रष्टुमिच्छमानावपि नेक्षमाणौ स्वाप्निकयाऽन्योन्यवार्तया हृतमानसौ यथोचिताहारविहाररहितौ परस्परस्मरणाच्छरीरे सूक्ष्मतामवापतुः ॥ १९ ॥ [अत्र सरस्वतीविश्वरूपान्योन्यालम्बितः परस्परगुणमणिगणश्रवणोद्दीपितः स्वस्वोचिताहारविहारविरहसूचितस्तम्भाख्यसात्त्विकविशिष्टशरीरकार्श्यानुभावितः स्मृतीच्छादिसंचारितो रत्याख्यः स्थायिभाव एव परिकरालंकारास्प्राधान्येन ध्वन्यते । एवं चेह समानुरागको वियोगकालावच्छिन्नत्वेन विप्रलम्भः शृङ्गार एव रसः । परिकरोऽलंकारः । विस्तरस्तु मदीये साहित्यसार एव द्रष्टव्य इत्यलं पल्लवितेन ]॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्ट्वा तदीयौ पितरौ कदाचि-
दपृच्छतां तौ परिकर्शिताङ्गौ ॥
वपुः कृशं ते मनसोऽप्यगर्वो
न व्याधिमीक्षे न च हेतुमन्यम् ॥ २० ॥
इष्टस्य हानेरनभीष्टयोगा-
द्भवन्ति दुःखानि शरीरभाजाम् ॥
वीक्षे न तौ द्वावपि वीक्षमाणो
विना निदानं नहि कार्यजन्म ॥ २१ ॥
न तेऽत्यगादुद्वहनस्य कालः
परावमानो न च निःस्वता वा ॥
कुटुम्बभारो मयि दुःसहोऽयं
कुमारवृत्तेस्तव काऽत्र पीडा ॥ २२ ॥
न मूढभावः परितापहेतुः
पराजितिर्वा तव तन्निदानम् ॥
विद्वत्सु विस्पष्टतयाऽग्रपाठा-
त्सुदुर्गमार्थादपि तर्कविद्भिः ॥ २३ ॥

---

कदाचित्तदीयौ पितरौ परिकर्शितशरीरौ तौ दृष्ट्वा पृष्टवन्तौ । किं तदिति तत्राऽ शरीरं ते कृशं मनसश्चागर्वस्तदेतत्किंनिमित्तमहं तु रोगं वाऽन्यद्वैतन्निमित्तं नेक्षे ॥ [ इतः परं भोः पुत्रि भोः पुत्रेति संबुद्धयध्याहारः प्रतिप्रश्नं पक्षद्वयेऽपि यथाक्रमं सर्वत्र ] ॥ २० ॥

नच हेतुमन्यमित्युक्तं विवृणोति—इष्टवियोगादनिष्टसंयोगाद्वा देहवतां दुःखानि तौ द्वावपि वीक्षमाणो विचार्यमाणोऽहं न वीक्षे । तर्हि निदानं विनैवैतत्स्यादिति त्राऽऽह—निदानं कारणं विना । हि प्रसिद्धम् । कार्यस्य जन्म न भवति तस्मान्मदुक्त न्निदानं वक्तव्यमित्यर्थः । आख्यानकी वृत्तम् ॥ २१ ॥

निदानान्तराण्यपि न सन्तीत्याह—तव विवाहस्य कालोऽपि नैवातिक्रान्तः पमानोऽपि तव नास्ति निर्धनताऽपि ते न भवति किंच दुःसहोऽयं कुटुम्बभारोऽपि वर्ततेऽतस्तवात्र लोके का पीडा न काऽपीत्यर्थः । उपेन्द्रवज्रा वृत्तम् ॥ २२ ॥

[ कुमारेति भावप्रधानोऽयं निर्देशः । कौमारावस्थावस्थितेरित्यर्थः ] ॥ २२ ॥

किंच संतापहेतुर्मूढभावोऽपि तव नास्ति तथा संतापस्य कारणं पराजयोऽपि तव तत्र हेतुर्विद्वत्सु तर्कविद्भिरपि सुदुर्गमोऽर्थो यस्य तस्मात् । सुदुर्गम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आ जन्मनो विहितकर्मनिषेवणं ते
स्वप्नेऽपि नास्ति विहितेतरकर्मसेवा ॥
तस्मान्न भेयमपि नारकयातनाभ्यः
किं ते मुखं प्रतिदिनं गतशोभमास्ते ॥ २४ ॥
निर्बन्धतो बहुदिनं प्रतिपाद्यमानौ
वक्तुं कृपाभरयुताविदमूचतुः स्म ॥
निर्बन्धतस्तव वदामि मनोगतं मे
वाच्यं न वाच्यमिति यद्वितनोति लज्जाम् ॥ २५ ॥
शोणाख्यपुंनदतटे वसतो द्विजस्य
कन्या श्रुतिं गतवती द्विजपुंगवेभ्यः ॥
सर्वज्ञतापदमनुत्तमरूपवेषां
तामुद्विवक्षति मनो भगवन्मदीयम् ॥ २६ ॥

---

क्वचित्पाठः । तथाभूताद्विस्पष्टतयाऽग्रे पाठाद्धेतोः श्रेष्ठपाठादिति वा । प्रपाठादेति क्वचित्पाठः ॥ २३ ॥

किंच जन्मप्रभृति तव वेदविहितस्य कर्मणः सम्यक्सेवनमस्ति विहितादन्यस्य कर्मणः सेवा तु स्वप्नेऽपि तव नास्ति तस्मान्नारकयातनाभ्योऽपि न त्वया भेतव्यं तथाच लोकद्वितयदुःखविनिर्मुक्तस्य ते मुखं शोभारहितं किमास्तेऽत्र किं निमित्तमित्यर्थः । वसन्ततिलका वृत्तम् ॥ २४ ॥ [ नन्वथापि—

' विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ' ।

इति स्मृतेरुक्तनिमित्तजपातित्यभीत्याऽयं परिताप इत्यत आह—आ जन्मन इत्यादिवसन्ततिलकया ] ॥ २४ ॥

एवमत्याग्रहाद्बहुदिनं निमित्तं वक्तुं कथ्यमानौ । स्नेहजन्यकृपातिशययुक्तौ पितरौ कर्म । मण्डनसरस्वत्याविदं वक्ष्यमाणमूचतुः स्म । किमित्यपेक्षायामादौ मण्डनवचनमुदाहरति । यद्वाच्यं न वाच्यमिति मे लज्जां विस्तारयति तत्स्वमनसि स्थितं तवात्याग्रहाद्वदामि ॥ २५ ॥

तद्दर्शयति—शोणाख्यपुंनदस्य तटे वासं कुर्वतो विष्णुमित्राख्यस्य विप्रस्य कन्या सर्वज्ञताश्रयभूताऽनुत्तमरूपवेषवती । विप्रवरेभ्यः श्रवणं प्राप्तवत्यतो हे भगवन्मदीयं मनस्तामुद्वोढुमिच्छति ॥ २६ ॥ [ अयि भगवन् । एतेन वक्ष्यमाणमनोरथपूरणे सामग्री सूचिता । शोणाख्येति । पुंपदेनात्र जडात्माऽपि स एव पुमाँल्लोकोत्तरो यदनेन वक्ष्यमाणकन्या-

---

१ ग. मनोमतं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुत्रेण सोऽतिविनयं गदितोऽन्वशाद्द्वौ
विप्रौ वधूवरणकर्मणि संप्रवीणौ ॥
तावापतुर्द्विजगृहं द्विजसंदिदृक्षू
देशानतीत्य बहुलान्निजकार्यसिद्ध्यै ॥ २७ ॥

भूभृन्निकेतनगतः श्रुतविश्वशास्त्रः
श्रीविश्वरूप इति यः प्रथितः पृथिव्याम् ॥
तत्पादपद्मरजसे स्पृहयामि नित्यं
साहाय्यमत्र यदि तात भवान्विदध्यात् ॥ २८ ॥

पुत्र्या वचः पिबति कर्णपुटेन ताते
श्रीविश्वरूपगुरुणा गुरुणा द्विजानाम् ॥
आजग्मतुः सुवसनौ विशदाभयष्टी
संप्रेपितौ सुतवरोद्वहनक्रियार्थे ॥ २९ ॥

---

रत्नकर्तृकस्वहृदयरसनिमज्जनादिसुखमनुभूयत इति द्योत्यते । तेनात्र नैवाधिकपदत्वादि... पावकाशः । द्विजेति । तीर्थयात्रादिपरायणत्वेन ब्राह्मणश्रेष्ठवाक्येभ्यो निमित्तं... श्रुतिं गतवती मत्कर्णपथं प्राप्ताऽभूत् । पक्षे वेदतदर्थज्ञत्वेन ब्राह्मणश्रेष्ठेभ्यो हे... सरस्वती देवतात्वेन श्रुतिप्रसिद्धेत्यर्थः ] ॥ २६ ॥

एवमतिविनयं यथा भवेत्तथा पुत्रेण कथितः स हिमामित्रो वधूवरणकर्मण्यतिकुशलौ... विप्रावन्वशात्प्रेपितवान् । वधूवरणकर्मण्याज्ञप्तवानिति वा । तौ निजकार्यसिद्ध्यर्थं द्वि... मित्रदर्शनेच्छू बहुलान्देशानुल्लङ्घ्य विष्णुमित्रगेहमवापतुः ॥ २७ ॥

अथोभयभारतीवाक्यमुदाहरति—राजस्थाननिवासी श्रुताखिलशास्त्रो यो विश्वरू... भूमौ प्रख्यातस्तस्य चरणरजसे नित्यं स्पृहां करोमि 'स्पृहेरीप्सितः' इति संप्रदा... हे तात यद्यत्र तत्पादपद्मरजःप्राप्तौ भवान्साहाय्यं विदध्यात्तर्हि स्पृहा सफला स्या... त्यर्थः ॥ २८ ॥ [ भूभृदिति । एतेन लौकिकसंपत्तिमत्त्वं तत्र ध्वन्यते ] ॥ २८ ॥

एवं पुत्र्या वचनं ताते कर्णपुटेन पिबति सति द्विजानां गुरुणा विश्वरूपपित्रा हि... त्रेण सुतस्योत्कृष्टविवाहक्रियार्थं संप्रेपितौ विशदाभायुक्तयष्टिद्वययुक्तौ द्वौ ब्रा... वाजग्मतुः ॥ २९ ॥ [ यद्यप्यत्र पुत्रीपदादेव तस्मिन्पितृत्वे लब्धे पुनस्ता... तातपदं पौनरुक्त्यापादकमिव प्रतीयते तथाऽपि सतीपितरि दक्षप्रजापतौ जामा... तृत्वेन पितृत्वगुणाभावस्यापि शास्त्रे दर्शनात्तदपाकरणार्थत्वेन तदुपयुक्तमेवेति ... [ कर्णेति । पिबति सादरं शृण्वति सतीत्यर्थः । एतेनोक्तवाक्ये पीयूष... सूचितम् ] [ सुवसनौ शोभनानि धौतसितत्वादिना रमणीयानि वसनानि... षादिवासांसि ययोस्तौ तथा ] [ विशदेति । विशदा निर्मलाऽऽभा ययोस...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावार्च्य स द्विजवरौ विहितोपचारै-
रायानकारणमथो शनकैरपृच्छत् ॥
श्रीविश्वरूपगुरुवाक्यत आगतौ स्व
इत्यूचतुर्वरणकर्मणि कन्यकायाः ॥ ३० ॥
संप्रेपितौ श्रुतवयःकुलवृत्तधर्मैः
साधारणीं श्रुतवता स्वसुतस्य तेन ॥
याचावहे तव सुतां द्विज तस्य हेतो-
रन्योन्यसंघटनमेतु मणिद्वयं तत् ॥ ३१ ॥

---

यष्टी पान्थगृहस्थपिधर्मोचितापादाख्यवैणवदण्डौ ययोस्तौ तथेत्यर्थः । एतेन तत्स्वामिन्यपि सदाचारशालित्वमभिव्यज्यते ] ॥ २९ ॥

स विष्णुमित्रस्तौ विप्रवरौ विहितोपचारैः संपूज्याथानन्तरं शनैरागमनकारणं पृष्टवान् । श्रीविश्वरूपस्य पितुर्वाक्यात्कन्याया वरणकर्मार्थमागमनं कृतवन्तावित्यूचतुः ॥ ३० ॥

[ अथो ' मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो अथ '

इत्यमराक्तिरुक्तविप्रयुग्मागमनानन्तरमित्यर्थः । तौ पूर्वपद्योक्तौ । विहितेति । धर्मशास्त्रविहितपाद्यादिभिः । आर्च्यामितः पूजयित्वेत्यर्थः । अर्च्येति त्वपपाठ एव । निरुपपदाद्धातोर्ल्यबविधानात् । अत एव कालिदासोऽपि रघुवंशे 'तमर्चयित्वा विधिवद्विधिज्ञः ' इत्यादौ क्त्वाप्रत्ययान्तमेव पपाठ ] [ श्रीति । श्रीमानैहिकपारात्रिकसकलसंपत्तिमान्यो विश्वरूपगुरुर्विश्वविख्यातविद्यादिकीर्तेर्विश्वरूपपण्डितस्य पिता । ' स्यान्निषेकादिकृद्गुरुः ' इत्यमरः । तस्य वाक्यत इति यावत् ] [ वरणेति । वरणं विश्वरूपकर्तृकं तत्पाणिग्रहणं तल्लक्षणं यत्कर्मोद्वाहशास्त्रविहिताक्रियाजातं तस्मिन्विषये तद्घटनार्थमित्यर्थः ] ॥ ३० ॥

श्रुतेन शास्त्रश्रवणेन कुलेन वृत्तैर्वृत्तिभिश्चरित्रैर्वा धर्मैश्च स्वसुतस्य साधारणीं समानां तव सुतां श्रुतवता तेन श्रीविश्वरूपगुरुणा तस्य श्रीविश्वरूपस्य हेतोस्तव सुतां याचावहे । हे द्विज हिममित्रसुतेनैव याच्ञां करवाव तस्मान्मणिद्वयमन्योन्यसंघटनं परस्परसंबन्धमेतु प्राप्नोतु । तस्य हेतोरित्यस्य तस्मात्कारणादिति वाऽर्थः । ' निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् ' इति वचनात्षष्ठी ॥ ३१ ॥ [ तद्विश्वरूपसरस्वतीरूपम् । मणीति । रत्नद्वन्द्वम् । अन्योन्येति । परस्परसंमेलनमेतु जगदीश्वरकृपया प्राप्नोत्वित्यन्वयः ] ॥ ३१ ॥

---

१ क. ख. ग. घ. तात्पर्यं ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मह्यं तदुक्तमभिरोचत एव विप्रौ
पृष्ट्वा वधूं मम पुनः करवाणि नित्यम् ॥
कन्याप्रदानमिदमायतते वधूषु
नो चेदमूर्व्यसनसक्तिषु पीडयेयुः ॥ ३२ ॥
भार्यामपृच्छदथ किं करवाव भद्रे
विप्रौ वरीतुमनसौ खलु राजगेहात् ॥
एतां सुतां सुतनिभा तव याऽस्ति कन्या
ब्रूहि त्वमेकमनुमाय पुनर्न वाच्यम् ॥ ३३ ॥
दूरे स्थितिः श्रुतवयःकुलवृत्तजातं
न ज्ञायते तदपि किं प्रवदामि तुभ्यम् ॥
वित्तान्विताय कुलवृत्तसमन्विताय
देया सुतेति विदितं श्रुतिलोकयोश्च ॥ ३४ ॥

---

एवमुक्तो विष्णुमित्र उवाच—हे विप्रौ यद्यपि तेन हिममित्रेणोक्तं मह्यं रोचत ए[व] तथाऽपि निजवधूं पृष्ट्वा तदुक्तं करवाणि। यस्मादिदं कन्याप्रदानं वध्वधीनमेव नित्यं भवति। नो चेत्तदनुमत्यभावे व्यसनप्राप्तिषु कन्याया दुःखप्राप्तिष्वमूर्वध्वः पीडयेयुरित्यर्थः ॥ ३[२] ॥ [ आयततेऽभितो यत्नं तनोतीत्यर्थः। कन्यादानविषयकः समीचीनस्थलनिरीक्षणादिल[क्षणः] प्रयत्नः पत्न्येकाधिकरणकः प्राधान्येन भवतीति भावः ] [ व्यसनेति। 'व्यसनं त्वशुभे' इति मेदिन्युक्तेर्व्यसनेष्वशुभेषु दैवाज्जातेषु सत्सु याः सक्तयः प्रेमातिशयाच्छोकातिरेका[स्ता]सु प्राप्तेषु सतीस्वत्यर्थः ] [ पीडयेयुः पतिमित्यार्थिकं संयोज्य योजना ] ॥ ३२ ॥

अथानन्तरं भार्यां पृष्टवान्हे भद्रे तव या पुत्रतुल्या कन्याऽस्ति तां वरीतुकामौ [खलु] राजगेहादेतावागतौ। एतयोरागमनं भद्रंकरमिति संबोधनाशयः। तत्र किं करवाव [कि]... देया न देया वा तस्मात्त्वं पक्षद्वय एकमनुमाय सम्यग्ज्ञात्वा ब्रूहि। यतो देयेत्युक्त्वा [न] देयेति पुनर्न वक्तव्यं 'सकृत्कन्या प्रदीयते' इत्यादिस्मृतेः ॥ ३३ ॥ [ हे भद्रे कल्या[णमूर्ते] णमूर्ते इत्यर्थः। एतेन त्रैवर्गिकस्य धर्मादिलक्षणस्य कल्याणस्य तदेकायत्तत्वात्तत्प्रोत्साह[नं] ध्वन्यते। राजेति। काश्मीरेश्वरगृहात्। खलु निश्चितम्। एतेनैहिकसंपत्तिशालि[त्वं] व्यज्यते किं करवावाऽऽवामित्यार्थिकम् ] ॥ ३३ ॥

एवं पृष्टा विष्णुमित्रभार्योवाच—प्रथमं स्थितिर्दूरे तथा यच्च ज्ञातव्यं श्रुतवयःकुलवृ[त्त]जातं तदपि न ज्ञायतेऽतस्तुभ्यमहं किं प्रवदामि। वित्तयुक्ताय कुलेन वृत्तेनाधीतेन श्रो[त्रिय]वृत्त्या च समन्विताय कन्या प्रदेयेति [१]तु

---

१ ग. 'ति। कु'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नैवं नियन्तुमनघे तव शक्यमेत-
त्तां रुक्मिणीं यदुकुलाय कुशस्थलीशे ॥
प्रादात्स भीष्मकनृपः खलु कुण्डिनेश-
स्तीर्थापदेशमटते त्वपरीक्षिताय ॥ ३५ ॥
किं केन संगतमिदं सति मा विचारी-
र्यो वैदिकीं सरणिमप्रहतां प्रयत्नात् ॥
प्रातिष्ठिपत्सुगतदुर्जयनिर्जयेन
शिष्यं यमेनमशिषत्स च भट्टपादः ॥ ३६ ॥

---

'कुलं च शीलं च वयश्च रूपं
विद्या च वित्तं च सनाथता च ।
एतान्गुणान्सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम्'

इत्यादिस्मृतिमूलभूतश्रुतौ लोके च विदितमेवेत्यर्थः ॥ ३४ ॥ [ तुभ्यं किं प्रब्रवीमि दानतद्वर्जनयोरेकतरमपि मया वक्तुं नैव शक्यत इत्यन्वयः । एवं च नैव देयेति वक्तव्ये पूर्वपक्षे राजपदध्वनितश्रीमदभिमतदानप्रत्याख्यानेन पातिव्रत्यभङ्गापत्तिः । तदङ्गीकृतौ च दूरत्वादिवक्ष्यमाणदोषापत्तिरिति मौनमेव शरणमिति द्योत्यते । तत्र हेतुः—दूर इत्यादि पूर्वार्धशेषेण । यतो दूरे स्थितिरतः श्रुतवयःकुलवृत्तजातं न ज्ञायत इति संबन्धः । कुलेति । कुलस्य वृत्तं तत्समन्वितायेत्यर्थः ] ॥ ३४ ॥

एवमुक्तो विष्णुमित्र आह—हेऽनघे तवैतन्नैवं नियन्तुं शक्यं यतो यदुगोत्राय कुशस्थलीं द्वारकामीष्ट इति कुशस्थलीट् तस्मै तीर्थव्याजं यथा स्यात्तथाऽटतेऽपरीक्षिताय च श्रीकृष्णाय तां प्रसिद्धां रुक्मिणीं कुण्डिनाख्यनगरेशो भीष्मकाभिधो नृपः प्रादात्खलु प्रसिद्धम् । तथाच लोकप्रसिद्ध्यापरीक्षिताय सुता न देयेत्येतन्नियन्तुं न शक्यमित्यर्थः ॥ ३५ ॥ [ हेऽनघे कायिकादिसकलदोषशून्ये प्रिय इत्यर्थः । भीष्मकेति । भीष्मकसंज्ञकस्य + राज्ञः सुतः पुत्र इत्यर्थः । एतादृशः स भीमकत्वेन प्रख्यातः । यद्विति । यदवः कुलं वंशो यस्य स तथा । एतेन तत्र ययातिशापाच्छत्रचामरादिवैधुर्यं ध्वन्यते । तीर्थेति । गूढं रुक्मिणीप्रेपितपत्रिकावशादन्तः परमौत्सुक्येऽपि बहिस्तीर्थानामपदेशो मिषं यथा स्यात्तथाऽटते रथमात्रसहायेन परिभ्रमत इत्यर्थः ] ॥ ३५ ॥

ननु श्रीकृष्णस्य परमेश्वरत्वेन प्रख्यातत्वादस्य तु मनुष्यत्वेन वराकत्वात्किं केन संगतमित्याशङ्क्याऽऽह—हे सति किं केन संगतमिति विचारं मा कुरु । यतोऽयम-

---

+ एतेन मूले क्वचिद्भीमकसुत इति पाठोऽस्तीति ज्ञायते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं वर्ण्यते सुदति यो भविता वरो नो
विद्या धनं द्विजवरस्य न बाह्यवित्तम् ॥
याऽन्वेति संततमनन्तदिगन्तभाजं
यां राजचोरवनिता नच हर्तुमीशाः ॥ ३७ ॥
वैध्वर्जनावनपरिव्ययगानि तानि
वित्तानि चित्तमनिशं परिखेदयन्ति ॥
चोरान्नृपात्स्वजनतश्च भयं धनानां
शर्मेति जातु न गुणः खलु बालिशस्य ॥ ३८ ॥

प्यतिप्रसिद्धभट्टपादमुख्यशिष्यत्वेन प्रसिद्ध इत्याह । यः सुगतानां मध्ये ये दुर्जयास्तेषां निर्जयेन वैदिकीं सरणिं समग्रां प्रयत्नात्प्रकर्षेण स्थापितवान्सोऽतिप्रख्यातो भट्टपादो यमेनं विश्वरूपं शिक्षितुं योग्यं शिक्षितवान् ॥ ३६ ॥ [ हे सति भोः साध्वि । एतेन तव मदेकनिष्ठत्वाल्लोकवार्तानभिज्ञत्वेन प्रकृते विश्वरूपपण्डिते श्रुतादिपरीक्षणसंदेहत्वेऽपि न क्षतिरिति द्योत्यते ] [ अप्रहतामखण्डिताम् ] ॥ ३६ ॥

यो विश्वरूपो नोऽस्माकं वरः कन्यार्थं वरणीयो भविता भविष्यति स हे सुदति किं वर्ण्यते वर्णयितुमशक्य इत्यर्थः । विद्यावतो विश्वरूपस्योत्कृष्टत्वबोधनार्थं विद्योत्कर्षं निरूपयति । यतो द्विजश्रेष्ठस्य विद्यैव धनं नतु बाह्यवित्तं या विद्याऽनन्तदिगन्तं भजतीत्यनन्तदिगन्तभाक्तं संततं निरन्तरमन्वेति । यां च राजचोरवनिता हर्तुं न समर्थाः ॥ ३७ ॥ [ हे सुदति । एतेन पूर्वपद्योक्तताद्विद्यामात्रप्रशंसनसूचनसंजातोक्ताशङ्काव्यञ्जकमन्दस्मितवत्त्वं द्योत्यते । अनन्तेति । असंख्यातहरित्प्रान्तसेविनमपि पुरुषमित्यर्थः । राजेति । वनिताऽत्र पण्याङ्गनैव । तस्या एव वित्तहारकत्वात् । हर्तुमीशाः समर्था नैव भवन्तीति योजना । एतेन पदमात्रमप्यननुगताद्राजाद्यपहार्याच्च वित्ताद्व्यतिरेको विद्यायां व्यज्यते । प्रतीपविशेषोऽत्रालंकारः । तदुक्तम्—

'वर्ण्योपमेयलाभेन तथाऽन्यस्याप्यनादरः ।
कः क्रौर्यदर्पस्ते मृत्यो त्वत्तुल्याः सन्ति हि स्त्रियः'
इति । यद्वा पर्यस्तापह्नुतिरेव ।
'अन्यत्र तस्याऽऽरोपार्थः पर्यस्तापह्नुतिश्च सः ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' ।
इत्युक्तत्वात् ] ॥ ३७ ॥

हे वैध्वर्जनपालनपरिव्ययगोचरीभूतानि लोकप्रसिद्धानि वित्तानि चित्तं परिखेद°

१ ग. 'जचौर'। २ ख. ग. घ. वध्यार्जे°। ३ क. 'न्ति। चौरा°। ४ ख. ग. घ. 'इद्धो°। ५ घ. जचौर°। ६ ख ग. घ. दध्वार्जं'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केचिद्धनं निदधते भुवि नोपभोगं
कुर्वन्ति लोभवशगा न विदन्ति केचित् ॥
अन्येन गोपितमथान्यजना हरन्ति
तच्चेन्नदीपरिसरे जलमेव हर्तुं ॥ ३९ ॥
सर्वात्मना दुहितरो न गृहे विधेया-
स्ताश्चेत्पुरा परिणयाद्रज उद्गतं स्यात् ॥
पश्येयुरात्मपितरौ बत पातयन्ति
दुःखेषु घोरनरकेष्विति धर्मशास्त्रम् ॥ ४० ॥
मा भूदयं मम सुता कलहः कुमारीं
पृच्छाव सा वदति यं भविता वरोऽस्याः ॥
एवं विधाय समयं पितरौ कुमार्या
अभ्याशमीयतुरितो गदितेष्टकार्यौ ॥ ४१ ॥

---

न्ति खलु प्रसिद्धं यतो लौकिकवित्तानां चोरादिभ्यो भयमतो बालिशस्य विद्याहीनस्य मूर्खस्य सुखसंज्ञको गुणः कदाऽपि नास्ति ॥ ३८ ॥

किंच केचिल्लोभवशवर्तिनो धनं भूमौ स्थापयन्ति न तूपभोगं कुर्वन्ति केचित्तु भूमौ स्थापितं धनं भोगेच्छाकाले नैव लभन्ते किंचान्येन गोपितमथान्यजना हरन्ति तद्धनं नद्याः परिसरे तीरे गोपितं चेत्तर्हि जलमेव हर्तृ । तथाचानेकदुःखसंमिश्रत्वाद्वित्तवत्तापेक्षया विद्याधनवत्त्वमेव श्रेष्ठमिति भावः ॥ ३९ ॥

किंच सर्वात्मना सर्वप्रकारेण दुहितरो गृहे नैव स्थापनीयाः । विपक्षे दोषमाह—ता दुहितरो विवाहात्पूर्वं स्वस्मादुद्गतं रजः पश्येयुश्चेत्तदा दुःखेषु घोरनरकेषु स्वपितरौ पातयन्तीति धर्मशास्त्रम् । तथाचोक्तम्—

'पितृगृहे[2] तु या कन्या रजः पश्येदसंस्कृता ।
भ्रूणहा तत्पिता ज्ञेयो वृषली सा च कन्यका ' इति ॥ ४० ॥

मा भूदयं मया सह तव कलहः कुमारीं पृच्छाव सा मम सुता यं वदति स तस्या वरो भविष्यत्येवं संकेतं विधाय पितरावस्मात्स्थानात्कुमार्याः समीपमीयतुर्जग्मतुर्गदितं कथितमिष्टकार्यं याभ्यां तौ ॥ ४१ ॥ [ समयं प्रतिज्ञाम् ।

' समयः शपथाचारसिद्धान्तेषु तथाऽधिपे ।
क्रियाकोरे च निर्देशे संकेते कालमापयोः ' इति मेदिनी ] ॥ ४१ ॥

---

१ क. °धंक° । ग. घ. °यं तव मया क° । २ ख. °पितृगृहे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीविश्वरूपगुरुणा प्रहितौ द्विजाती
कन्यार्थिनौ सुतनु किं करवाव वाच्यम् ॥
तस्याः प्रमोदनिचयो न ममौ शरीरे
रोमाञ्चपूरमिषतो बहिरुज्जगाम ॥ ४२ ॥
तेनैव सा प्रतिवचः प्रददौ पितृभ्यां
तेनैव तावपि तयोर्युगलाय सत्यम् ॥
आदाय विप्रमपरं पितृगेहतोऽस्या-
स्तौ जग्मतुर्द्विजवरौ स्वनिकेतनाय ॥ ४३ ॥

---

गत्वा यदुक्तवन्तौ तद्दर्शयति—श्रीविश्वरूपगुरुणा हिममित्रेण कन्यार्थिनौ द्वौ द्वि
प्रेषितौ हे सुतनु सुदेहे किं करवाव वाच्यं यदावाभ्यां कर्तव्यं तत्त्वयैव वक्तव्यमित्
एवं स्वेष्टं श्रुतवत्यास्तस्याः शरीरे प्रमोदसमुदायो न ममौ किंतु रोमाञ्चव्याजेन बहि
गाम ॥ ४२ ॥ [ अत्र श्रीशब्देनैहिकाद्यखिलसंपत्तिः सूच्यते । द्विजातौ द्विजावित्य
' जातिर्जातं च सामान्यम् ' इत्यमरः । अत्र रोमाञ्चेत्यादिकैतवापह्नुत्यलंकारापेक्षया वि
रूपपण्डितालम्बितः पितृकथितनिरुक्तविप्रागमनश्रवणोद्दीपितः प्रोक्तरोमाञ्चानुभावितः ह
दसंचारितः प्रकृतसरस्वत्याख्यकन्यकानायिकानिष्ठः परिपुष्टो रत्याख्यः स्थायिभाव
शृङ्गाररसः प्राधान्येन ध्वन्यते । अलंकारलक्षणं तूक्तं कुवलयानन्दमूले—

' कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः ।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ' इति ] ॥ ४२ ॥

तेनैव रोमाञ्चमिषेण बहिरुद्गतेन प्रमोदनिचयेन सोभयभारती पित्रे मात्रे च प्र
त्तरं प्रददौ पितरावपि तेनैव रोमाञ्चमिषेण बहिरुद्गतेन प्रमोदनिचयेन तयोर्विप्रयोर्यु
सत्यं प्रत्युत्तरं ददतुरिति विपरिणामेन संबन्धस्तदनन्तरमस्याः पितृगेहादन्यं विप्र
तौ द्विजवरौ स्वगृहाय जग्मतुः ॥ ४३ ॥ [ तयोः सरस्वतीविश्वरूपयोः । यु
युग्मोपलक्षितदांपत्यार्थमित्यर्थः । सत्यं निश्चयजातं चक्रतुरित्यध्याहृत्यान्वयः ।
किं वृत्तमित्यत्राऽऽह—आदायेत्याद्युत्तरार्धेन । अस्याः प्रकृतायाः सरस्वत्या इत्
तौ विश्वरूपपितृप्रेषिताविति यावत् ] ॥ ४३ ॥

---

१ क. ख. घ. °जातौ क°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्माच्चतुर्दशदिने भविता दशम्यां
यामित्रभादिशुभयोगयुतो मुहूर्तः ॥
एवं विलिख्य गणितादिषु कौशलास्या
व्याख्यापराय दिशति स्म सरस्वती सा ॥ ४४ ॥

तौ हृष्टपुष्टमनसौ विहितेष्टकार्यौ
श्रीविश्वरूपगुरुमुत्तममैक्षिषाताम् ॥
सिद्धं समीहितमिति प्रथितानुभावो
दृष्ट्वैव तन्मुखमसावथ निश्चिकाय ॥ ४५ ॥

अन्यः स्वहस्तगतपत्रमदात्स पत्रं
दृष्ट्वा जहास सुखवारिनिधौ ममज्ज ॥
विप्रान्यथोचितमपूपुजदागतांस्ता-
न्रत्वांऽशुकादिभिरयं बहुवित्तलभ्यैः ॥ ४६ ॥

---

गणितादिषु कुशलमेव कौशलमास्यं मुखं यस्याः सा सरस्वत्यस्माद्वर्तमानदिनाच्चतुर्दश-दिने दशम्यां तिथौ यामित्रनक्षत्रं लग्ननक्षत्राच्चतुर्दशमादिपदाच्चन्द्राल्लग्नतो वा सप्तमं स्थानं गृह्यते तस्मिञ्शुभानां चन्द्रादीनां योगस्तेन युक्तो मुहूर्तो भविष्यतीत्येवं विलिख्य व्याख्या-पराय लग्नपत्रव्याख्यानकर्त्रे स्वब्राह्मणाय दिशति स्मोपदिदेश ॥ ४४ ॥ [ कौशलेति । गणितफलितादिविषयकचातुरीजातमास्ये मुख एव यस्याः सा तथेत्यर्थः । एतेन लेखनाद्या-यासवैधुर्यं ध्वन्यते ॥ ४४ ॥

विहितेष्टकार्यौ हृष्टपुष्टमनसौ तौ विप्रावुत्तमं विश्वरूपगुरुं दृष्टवन्तौ । अथानन्तरं प्रथितः प्रख्यातोऽनुभावः प्रभावो यस्य स विश्वरूपगुरुस्तयोर्मुखं दृष्ट्वैव समीहितमभिलषितं सिद्ध-मिति निश्चयं कृतवान् ॥ ४५ ॥ [ उत्तमं सुप्रसन्नं यथा स्यात्तथेत्यर्थः ] ॥ ४५ ॥

अन्यो द्वाभ्यामितरो विष्णुमित्रप्रेषितो ब्राह्मणः स्वहस्ते स्थितं पत्रं दत्तवान् । हिममित्रः पत्रं दृष्ट्वा जहास सुखसमुद्रे ममज्जाऽऽगतांस्तान्विप्रान्त्वाऽयं हिममित्रो बहुवित्तलभ्यै रत्नवस्त्रादिभिर्यथायोग्यं पूजितवान् ॥ ४६ ॥ [ अन्य इति । अदाद्दत्तवानित्यर्थः । अदायि पत्रमिति त्वपपाठ एव तस्मा इत्यार्थिकमध्याहारो वा ] ॥ ४६ ॥

---

१ क. ख. घ. 'दायि प'। २ क. 'भ्यैर्वस्त्रा'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पित्राऽनुशिष्टवसुधासुरशंसितेन
विज्ञापितः सुखमवाप स विश्वरूपः ॥
कार्याण्यथाऽऽह पृथगात्मजनान्समेता-
न्बन्धुप्रियः परिणयोचितसाधनाय ॥ ४७ ॥

मौहूर्तिकैर्बहुभिरेत्य मुहूर्तकाले
संदर्शिते द्विजवरैर्बहुविद्भिरिष्टैः ॥
माङ्गल्यवस्तुसहितोऽखिलभूषणाढ्यः
स प्रापदक्षततनुः पृथुशोणतीरम् ॥ ४८ ॥

शोणस्य तीरमुपयातमुपाशृणोत्स
जामातरं बहुविधं किल विष्णुमित्रः ॥
प्रत्युज्जगाम मुमुदे प्रियदर्शनेन
प्रावीविशद्गृहममुं बहुवाद्यघोषैः ॥ ४९ ॥

दत्त्वाऽऽसनं मृदु वचः समुदीर्य तस्मै
पाद्यं ददौ समधुपर्कमनर्घपात्रे ॥
अर्घ्यं ददावहमियं तनया गृहास्ते
गावो हिरण्यमखिलं भवदीयमूचे ॥ ५० ॥

---

अनुशिक्षितब्राह्मणकथितेन पित्रा हिममित्रेण प्रबोधितो विश्वरूपः सुखमवापाथ विवाहे यदुचितं तस्य साधनाय समेतान्समागतान्बन्धुप्रियो विश्वरूपः कार्याण्यक... ब्यानि पृथक्पृथग्यथायोग्यं प्राह ॥ ४७ ॥

मुहूर्तशास्त्रविद्भिर्बहुभिरिष्टैर्द्विजवरैरागत्य संदर्शिते मुहूर्तकाले माङ्गल्यवस्तुयुतः... भूषणसंपन्नोऽविकलदेहो विश्वरूपो विशालं शोणतीरं प्राप्तवान् ॥४८॥ [ माङ्गल्ये... दधिदूर्वादिमङ्गलदर्शनसहितः सन्नित्यर्थः ] ॥ ४८ ॥

शोणतीरमुपागतं बहुप्रकारयुक्तं जामातरं स विष्णुमित्र उपाशृणोत् । श्रुत्वा च... जगाम प्रियदर्शनेन मोदं च प्राप । ततोऽमुं जामातरं बहुवाद्यघोषैर्गृहं प्रवेशितवान् । [ बह्विति क्रियाविशेषणम् ] [ प्रियेति । प्रियः स्वाभिलपितगुणको यो जामाता... दर्शनं साक्षात्कारस्तेनेत्यर्थः ) ॥ ४९ ॥

आसनं दत्त्वा कोमलं वचनमुदीर्य तस्मै विश्वरूपाय पाद्यं ददौ मधुपर्क... चामूल्यपात्रे ददौ । अहमियं तनया ते गृहा गावो हिरण्यमखिलं भवदीय... वान् ॥ ५० ॥

---

१ क. ग. °नर्थपा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्माकमद्य पवितं कुलमादृताः स्मः
संदर्शनं परिणयव्यपदेशतोऽभूत् ॥
नो चेद्भवान्बहुविदग्रसरः क्व चाहं
भद्रेण भद्रमुपयाति पुमान्विपाकात् ॥ ५१ ॥
यद्यद्गृहेऽत्र भगवन्निह रोचते ते
तत्तन्निवेद्यमखिलं भवदीयमेतत् ॥
वक्ष्यामि सर्वमभिलाषपदं त्वदीयं
युक्तं हि संततमुपासितवृद्धपूगे ॥ ५२ ॥
एवं मिथः परिनिगद्य विशेषमृद्व्या
वाचा युतौ मुदमवापतुरुत्तमां तौ ॥
अन्ये च संमुमुदिरे प्रियसत्कथाभिः
स्वेच्छाविहारहसनैरुभये विधेयाः ॥ ५३ ॥

---

अद्यास्माकं कुलं पविनितं वयं चाऽऽदृताः स्मो विवाहव्याजात्संदर्शनं जातं नो चेद्‌द्विजाग्रमणीर्भवान्क्वाहं च क्व तथाऽपि पुण्यकर्मणा कल्याणं विपाकात्पुमानुपयाति ॥ २१ ॥

किं बहुना यद्यदत्र गृहे हे भगवंस्तवाभिरोचते तत्तदेतदखिलं भवदीयं निवेद्यं निवेदनीयमेवमुक्तवन्तं विष्णुमित्रं हिममित्र उवाच सर्वं त्वदीयमेव ममापि यदभिलाषास्पदं भविष्यति तद्वक्ष्यामि भवता त्वहमित्यादिना यदुक्तं तन्निरन्तरमुपासिता वृद्धसमूहा येन तस्मिंस्त्वयि युक्तमेवेत्यर्थः ॥ ९२ ॥ [ ते तुभ्यमित्यर्थः । निवेद्यं कथनीयं भवतेति शेषः । सर्वमित्यादि । सर्वं त्वदीयमभिलापपदं वस्त्वेतद्भवदीयमेवाखिलमित्यहं वक्ष्यामीति योजना । तत्रार्थान्तरन्यासेन हेतुं द्योतयति—युक्तं हीति । इदमिति शेषः । 'पूगः क्रमुकवृन्दयोः' इत्यमरः ] ॥ ९२ ॥

विशेषेण कोमलया वाचा युक्तौ तौ विष्णुमित्रहिममित्रावेवं परस्परमुक्त्वोत्तमां मुदमवापतुः । अन्ये चोभये नियोज्याः प्रियसत्कथाभिः स्वेच्छाविहारहसनैः सम्यङ्मोदं प्रापुः ॥ ९३ ॥ [ स्वेच्छेति । स्वेच्छया कल्पिता ये विहारा जलयन्त्रादिलीलावलोकनादिव्यापारविशेषास्तैर्यानि हसनानि हर्षजातानि तैरित्यर्थः । उभये सरस्वतीविश्वरूपपक्षीयजनसंघ इत्यर्थः । अविधेया इति च्छेदः । न विद्यते विधेयं कर्तव्यं येषां ते तथा कृतकृत्या इत्यर्थः । सन्त इति योज्यम् ] ॥ ९३ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कन्यावरौ प्रकृतिसिद्धसुरूपवेषौ
दृष्ट्वोभयेऽपि परिकर्म विलम्बमानाः ॥
चक्रुर्विधेयमिति कर्तुमनीश्वरास्ते
शोभाविशेषमपि मङ्गलवासरेऽस्मिन् ॥ ५४ ॥

एतत्प्रभाप्रतिहतात्मविभूतिभावा-
दाकल्पजातमपि नातिशयं वितेने ॥
लोकप्रसिद्धिमनुसृत्य विधेयबुद्ध्या
भूषां व्यधुस्तदुभये न विशेषबुद्ध्या ॥ ५५ ॥

मौहूर्तिका बहुविदोऽपि मुहूर्तकाल-
मप्राक्षुरक्षतधियं खेलतीं सखीभिः ॥
पश्चात्तदुक्तशुभयोगयुते शुभांशे
मौहूर्तिकाः स्वमतितो जगृहुर्मुहूर्तम् ॥ ५६ ॥

जग्राह पाणिकमलं हिममित्रसूनुः
श्रीविष्णुमित्रदुहितुः करपल्लवेन ॥
भेरीमृदङ्गपटहाध्ययनाब्जघोषै-
र्दिङ्मण्डले सुपरिमूर्छति दिव्यकाले ॥ ५७ ॥

---

स्वभावसिद्धसुरूपवेषौ कन्यावरौ दृष्ट्वा तद्दर्शनासक्तचित्तत्वात्कर्तुमसमर्था अप
विधेयमिति कृत्वा परिकर्माङ्गसंस्कारं तथाऽस्मिन्मङ्गलवासरे शोभाविशेषं च विलम्ब
कृतवन्त इत्यर्थः ॥ ५४ ॥ [ परिकर्म 'प्रतिकर्म प्रसाधनम्' इत्यमराद्वधूवरयोर्म
भरणादिविरचनमिति यावत् ] [ शोभाविशेषोऽत्र तत्तद्वसनानुलेपनाभरणधूपनाधि
साधनादिलक्षण एव बोध्यः ] ॥ ५४ ॥

आकल्पजातमपि भूषणनिचयोऽप्यतिशयं न कृतवांस्तत्र हेतुरेतयोः कन्यावरयोः
कान्त्या प्रतिहताऽऽत्मविभूतिर्यस्य तत्त्वात् । नन्वेवं तर्हि किमर्थं तावलंकृतवन्त इ
त्याऽऽह—लोकप्रसिद्धिमनुसृत्येदमवश्यं विधेयमिति बुद्ध्योभये तयोर्भूषां व्यधुरलंकारै
तु भूषणैरेतयोः कश्चिद्विशेषो भविष्यतीति बुद्ध्या ॥ ५५ ॥ [ आकल्पेति ।
स्त्वेषो नेपथ्यम्' इत्यमराद्रत्नाद्याभरणजातमपीत्यर्थः ॥ ५५ ॥

बहुज्ञा अपि ज्योतिर्विदो मुहूर्तकालमक्षतधियं सखीभिः क्रीडन्तीमुभयभारतीं
पश्चात्तयोक्ते शुभयोगयुक्ते शुभग्रहस्य नवांशे मौहूर्तिकाः स्वबुद्धितो मुहूर्तं
॥ ५६ ॥ [ अक्षतेति । सार्वज्ञ्यात्सर्वत्राप्रतिहतमतिभित्यर्थः ] ॥ ५६ ॥
भेरीमृदङ्गपटहवेदाध्ययनशङ्खघोषैर्दिङ्मण्डले सुपरिमूर्छति सुष्ठु व्याप्ते सति

---

१ ख. ग. 'खेलन्तीं'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं यं पदार्थमभिकामयते पुमान्य-
स्तं तं प्रदाय समतूतुपतां तदीड्यौ ॥
देवद्रुमाविव महासुमनस्त्वयुक्तौ
संभूपितौ सदसि चेरतुरात्मलाभौ ॥ ५८ ॥
आधाय वह्निमथ तत्र जुहाव सम्य-
ग्गृह्योक्तमार्गमनुसृत्य स विश्वरूपः ॥
लाजाञ्जुहाव च वधूः परिजिघ्रति स्म
धूमं प्रदक्षिणमथाकृत सोऽपि चाग्निम् ॥ ५९ ॥
होमावसानपरितोपितविप्रवर्यः
प्रस्थापिताखिलसमागतबन्धुवर्गः ॥
संरक्ष्य वह्निमनया सममग्निगेहे
दीक्षाधरो दिनचतुष्कमुवास हृष्टः ॥ ६० ॥

---

सूनुर्विश्वरूपो हस्तकिसलयेन श्रीविष्णुमित्रकन्यायाः सरस्वत्या हस्तकमलमुक्तलक्षणे दिव्य-काले जग्राह ॥ ५७ ॥ [ हिममित्रविष्णुमित्रशब्दौ तत्तन्नामाप्रसिद्ध्यैव देवदत्तादिशब्द-वत्प्रयुक्ताविति बोध्यम् ] [ दिव्येति । निरुक्तरीत्या सरस्वत्युक्तत्वेन लोकोत्तरे विवाह-मुहूर्तसमय इत्यर्थः ] ॥ ५७ ॥

यो यः पुमान्यं यं पदार्थं प्रार्थयते तस्मै तस्मै तं तं पदार्थं प्रदाय तदीड्यौ तैः पुरुपैः स्तुत्यौ तयोः कन्यावरयोरीड्यौ पूज्यौ पितराविति वा । परितोपमजापतुः कल्पवृक्षाविव वृहदुदारतायुक्तावलंकृतौ प्राप्तकामौ सभायां चेरतुः ॥ ५८ ॥ [ महेति । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरान्महत्यः सुमनसः पुष्पाणि यस्य तस्य भावस्तेन युक्तौ । पक्षे 'सुपर्वाणः सुमनसः' इत्यमरादलौकिकवदान्यत्वान्महादेवत्वयुक्तौ । यद्वा महद्विशालमत एव शोभनमेतादृशं मनो यस्य परमविवेकिनः पुरुपधुरंधरस्य तद्भावयुक्तावित्यर्थः । अत्र चेरतुरित्यनेन व्यतिरेकालंकारो व्यज्यते ।

'व्यतिरेको विशेपश्चेदुपमानोपमेययोः ।
शैला इवोन्नताः सन्तः किंतु प्रकृतिकोमलाः' ।

इति कुवलयानन्दमूलोक्तेः ] ॥ ५८ ॥ अथानन्तरं स्वगृह्यसूत्रोक्तमार्गमनुसृत्य स विश्वरूपो वह्निमाधाय तत्र सम्यग्घोमं कृतवान् । च पुनर्वधूर्लाजान्भर्जितधान्यानि जुहाव तद्धूमं च जिघ्रति स्माथ विश्वरूपोऽपि पश्चादग्निं प्रदक्षिणं कृतवान् । अपि-शब्दादग्नेऽग्निं प्रदक्षिणं कुर्वत्या तया सह सोऽपि तथा कृतवानित्यर्थः ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिष्ठमाने दयिते वरेऽस्मि-
न्नुपेत्य मातापितरौ वरायाः ॥
आभाषिषातां शृणु सावधानो
बालेव बाला न तु वेत्ति किंचित् ॥ ६१ ॥
बालैरियं क्रीडति कन्दुकाद्यै-
र्जातक्षुधा गेहमुपैति दुःखात् ॥
एकेति बाला गृहकर्म नोक्ता
संरक्षणीया निजपुत्रितुल्या ॥ ६२ ॥
बालेयमङ्ग वचनैर्मृदुभिर्विधेया
कार्या न रूक्षवचनैर्न करोति रुष्टा ॥
केचिन्मृदूक्तिवशगा विपरीतभावाः
केचिद्विहातुमनलं प्रकृतिं जनो हि ॥ ६३ ॥

---

होमान्ते परितोषिता विप्रश्रेष्ठा येन प्रस्थापिताः सर्वे समागता बन्धुवर्गा ये विश्वरूपोऽनया सरस्वत्या सह दीक्षाधरोऽग्निं संरक्ष्य हृष्टः सन्नग्निगृहे दिनचतु... मुवास ॥ ६० ॥

अस्मिन्विश्वरूपे प्रिये वरे प्रस्थानं कुर्वति सति वरायाः कन्याया माता ... चाऽऽगत्य प्रोचतुः सावधानो भूत्वा शृणु बाला स्तनंधयी यथा किंचिन्न जानाति ... बाला सुकुमाराङ्ग्यस्मत्पुत्री न तु किंचिज्जानाति । उपजातिवृत्तम् ॥ ६१ ॥

इयं कन्दुकाद्यैः क्रीडोपस्करैर्बालैः सह क्रीडति जातक्षुधा दुःखाद्गेहमायाति । ... भवद्भ्यां गृहकर्मणि कुतो नानुशिष्टेति चेत्तत्राऽऽहतुरेकेति कृत्वेयं बाला गृहकर्म ... तस्मान्निजपुत्रितुल्या सम्यग्रक्षणीया । इन्द्रवज्रा वृत्तम् ॥ ६२ ॥

किं तर्हि सर्वथैव गृहकर्माणि न नियोक्तव्या नेत्याहतुरङ्गेति संबोधनमियं बाला ... भिर्वचनैर्नियोज्या कर्तव्या नतु रूक्षवचनैर्यतस्तैः कुपिता न करोति । ननु रूक्ष... करोति चेत्कथं मृदुवचनैः करिष्यतीति चेत्प्रकृतिवैचित्र्यादित्याहतुः । केचिन्मृदूक्ति... तिनः केचिद्विपरीतस्वभावाः रूक्षोक्तिवशगा हि यस्मात्स्वभावं त्यक्तुं कोऽपि जनः सम... भवति । वसन्ततिलका वृत्तम् ॥ [ ६३ ॥ [ हेऽङ्गेति जामातरं प्रति कोमलामन्त्र... एतेन मृदुवचनसरणिरपि सूचिता ] [ विधेया लौकिकादिकर्मण्याज्ञाप्येत्यर्थः । न रूक्षै... तत्र हेतुः—नेत्यादिना । तदुभयमपि सामान्यनिदर्शनेनोपपादयति—केचिदित्यादिपादाभ्या... विपरीतेति । यतो विरुद्धस्वभावा अपि केचिज्जीवा मृदूक्तिवशगाः सन्तीत्यतो ...

---

१ क., ख. घ. न दक्ष°। २ क. ख. घ. तु दक्ष°। ३ क. ख. घ. तु दक्ष°। ४ क. घ. ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कश्चिद्द्विजातिरधिगम्य कदाचिदेना-
मुद्वीक्ष्य लक्षणमवोचदनिन्दितात्मा ॥
मानुष्यमात्रजननं निजदेवभावे-
त्यस्माच्च वो वचनमुग्रमयोज्यमस्याम् ॥ ६४ ॥
सर्वज्ञतालक्षणमस्ति पूर्ण-
मेषा कदाचिद्वदतोः कथायाम् ॥
तत्साक्षिभावं व्रजिताऽनवद्या
संदिश्य नावेवमसौ जगाम ॥ ६५ ॥
श्वश्रूर्वराया वचनेन वाच्या
स्नुषाभिरक्षाऽऽयतते हि तस्याम् ॥
निक्षेपभूता तव सुन्दरीयं
कार्या गृहे कर्म शनैः शनैस्ते ॥ ६६ ॥

---

वाक्यं विहाय मृदुवाक्यैरेवं कार्ये विनियोज्येति प्रथमोपपत्तिः । यतः कश्चिज्जनः प्रकृतिं विहातुमनलमसमर्थ एव भवत्यत इयमपि परुषवचनकुपिता सती नैव करोतीति द्वितीयोपपत्तिः ] ॥ ६३ ॥

नन्वेकाऽपि कन्या बालैः सह क्रीडनस्वभावौ रूक्षवचनैरपि यशोधनैः शिक्षणीया तत्कुतो भवभ्यां न शिक्षितेति चेत्तत्राऽऽहतुः—कदाचित्कश्चिदनिन्दितात्मा ब्राह्मण आगस्यास्या लक्षणमुद्वीक्ष्योक्तवान्मानुष्यमात्रजननं वस्तुतो निजदेवभावा निजं नित्यं देवभावो देवत्वं नित्यो देवस्वभावो वा यस्याः ।

'निजं स्वीये च नित्ये च' । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु'

इति मेदिनी । इत्यस्मात्कारणादस्यां वो युष्माकमुग्रं वचनमयोज्यं योजनीयं न भवति ॥ ६४ ॥

किंचास्यां सर्वज्ञताया लक्षणं पूर्णमस्ति । किंच कदाचिदेषा वादं कुर्वतोर्वादिनोः कथायां तयोः साक्षित्वं प्राप्स्यतीत्येवमावामुपदिश्यासौ विप्रो जगाम । इन्द्रवज्रा वृत्तम् ॥ ६५ ॥

वराया दोषविमुक्तकन्यायाः श्वश्रूरस्मद्वचनेन वाच्या यतः स्नुषाया अभिरक्षाऽऽयतते तदधीनाऽस्ति तद्वचनं दर्शयति—इयं सुन्दरी तव न्यासभूता तस्मात्त्वेयं गृहे कर्म शनैः शनैः कर्तव्या शनैः शनैरनया कर्म कारयितव्यमित्यर्थः । उपजातिवृत्तम् ॥ ६६ ॥

[ भो जामातः । वरायाः सर्वगुणवत्याः सरस्वत्याख्यमत्कन्यकायाः । श्वश्रूस्त्वन्मातेत्यर्थः । या पूर्वोक्तगुणा वनिता तस्यां त्वन्मातृविषये यतते यत्नशीला भवति । तस्या वचनेनेति वाच्येति यत्तच्छब्दावध्याहृत्यान्वयः । इतीति किं तत्राऽऽह—स्नुषेत्यादि-

---

१ ख. घ. रक्षाऽऽय° । २ क. ख. घ. 'वा दक्ष°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाल्येषु बाल्यात्सुलभोऽपराधः
स नेक्षणीयो गृहिणीजनेन ॥
वयं सुधीभूय हि सर्व एव
पश्चाद्गुरुत्वं शनकैः प्रयाताः ॥ ६७ ॥
दृष्ट्वाऽभिधातुमनलं च मनोऽस्मदीयं
गेहाभिरक्षणविधौ नहि दृश्यतेऽन्यः ॥
दृष्ट्वाऽभिधानफलमेव यथा भवेन्नौ
ब्रूयात्तथेष्टजनता जननीं वरस्य ॥ ६८ ॥
वत्से त्वमद्य गमिताऽसि दशामपूर्वां
तद्रक्षणे निपुणधीर्भव * सुभ्रु नित्यम् ॥
कुर्यान्न बालविहृतिं जनतोपहास्यां
सा नाविवापरमियं परितोषयेत्त ॥ ६९ ॥

शेषेण । अयि विश्वरूपमातः । त्वयेयं स्नुषाऽभिरक्ष्याऽऽधिभौतिकादिभयात्... येति योजना । तत्र हेतुः—निक्षेपेति तृतीयपादेन । निक्षेपभूता निक्षेप इव विश्वास... नत्वेन गूढस्थाप्यचिन्तामण्यादिवस्तुविशेष इव बभूवेति तथेत्यर्थः । त्वत्पुत्रस्येत्यार्थिक... अस्तीति शेषः ।

'पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रो रक्षति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति'

इति वचनाद्यावदुद्वाहं कौमारावस्थायामियं पित्रा मया परिरक्षिता । इतः परमा... पौगण्डकैशोरावस्थयोर्भवत्या परिपालनीयेत्याशयः । एतदनन्तरं तु भर्तैव रक्षिष्यतीति ... क्षेपत्वमस्यां युक्तमेवेति तत्त्वम् । अत्र यतत इत्यादिना निरुक्तसंदेशकथने संभावित... दोषावमोषः सूच्यते ] ॥ ६६ ॥

वयं सर्वेऽपि सुबुद्धिमन्तो भूत्वा पश्चाच्छनैरुत्कृष्टतां प्राप्ताः ॥ ६७ ॥ [ बाल्ये... ति । बहुवचनं सर्वानुभूतत्व्याप्तिद्योतनार्थमेव । तदेवाऽऽह—वयमित्याद्युत्तरार्धेन ] ॥ ६...

ननु वरस्य जननीं दृष्ट्वा भवद्भ्यां वक्तव्यमिति चेत्तत्राऽऽहतुः—वरस्य जननीं दृ... भिधातुमस्मदीयं मनः शक्तं न भवति हि यस्माद्गृहाभिरक्षणविधावन्यो न दृश्यते ।... प्येवं तथाऽपि दृष्ट्वा कथनस्य फलमेव यथाऽऽवयोर्भवेत्तथेष्टजनसमुदायो वरस्य ... ब्रूयात् । वसन्ततिलका वृत्तम् ॥ ६८ ॥

अथेदानीं स्वपुत्रीं शिक्षयतो वत्स इत्यादिना । हे वत्सेऽद्य त्वमपूर्वां दशां ... सि हे सुभ्रु तद्रक्षणे तस्या अपूर्वदशाया रक्षणे नित्यं निपुणधीर्भव जनसमू...

* अत्र नदीलाभावेऽपि ह्रस्वस्तु भविष्यत्कन्याविरहजन्यदुःखातिरेकेण तद्बोधि... स्वद्योतनार्थः । तथा च शोकरसपोषकत्वादयं गुण एव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाणिग्रहात्स्वाधिपती समीरितौ
पुरा कुमार्याः पितरौ ततः परम् ॥
पतिस्तमेकं शरणं व्रजानिशं
लोकद्वयं जेष्यसि येन दुर्जयम् ॥ ७० ॥

पत्यावभुक्तवति सुन्दरि मा स्म भुङ्क्ष्व
याते प्रयातमपि मा स्म भवेद्विभूषा ॥
पूर्वापरादिनियमोऽस्ति निमज्जनादौ
वृद्धाङ्गनाचरितमेव परं प्रमाणम् ॥ ७१ ॥

रुष्टे धवे सति रुषेह न वाच्यमेकं
क्षन्तव्यमेव सकलं स तु शाम्यतीत्थम् ॥
तस्मिन्प्रसन्नवदने चकितेव वत्से
सिध्यत्यभीष्टमनवे क्षमयैव सर्वम् ॥ ७२ ॥

---

सयोग्यं बालानां व्यवहारं न कुर्या यतः सेयं ते बालविहृतिरावयोरिवापरं न परितोषयेदिति नकारस्यानुषङ्गेण योज्यं काका वा ॥ ६९ ॥ [ अपूर्वा बाल्योत्तरभाविनीं पौगण्डाख्याम्। एतेन नवोढात्वं ध्वन्यते ] तद्रक्षणेऽपूर्वपदद्योतितलोकोत्तरनवोढात्वपरिपालन इत्यर्थः । तत्राङ्कुरितस्मरसद्भावाद्विचारपरिपाकाभावाच्चावश्यं धर्मादिभीत्या भाव्यमिति भावः । नित्यं सर्वदैव । नतु क्षणमात्रम् । सुभ्रु शोभने नम्रे भ्रुवौ यस्मिन्कर्मणि यथा स्यात्तथेत्यर्थः । अहो यस्या मम पादतर्जन्यावपि स्वपतिभूतावङ्गुष्ठौ नैवातिक्रामतः सामुद्रिके पातिव्रत्यसूचकलक्षणत्वेन तथोक्तत्वात्तया मया स्वपतिपादपद्मपरागेतरनिरीक्षणमपि कथंकारं कार्यमिति समुद्घोषसिद्ध्यर्थं स्वाङ्घ्रिनिरीक्षणमेव कार्यमिति तात्पर्यम् ] ॥ ६९ ॥

किंच पाणिग्रहणाद्विवाहात्पूर्वं कुमार्याः पितरौ स्वाधिपती समीरितौ तस्मात्पाणिग्रहादूर्ध्वं पतिः स्वाधिपतिः समीरितो यस्मादेवं तस्मात्तं पतिमेकं शरणं व्रज येन शरणगमनेन पत्या वा लोकद्वयं जेष्यसि । उपजातिवृत्तम् ॥ ७० ॥ [ एकं केवलम् ] ॥ ७० ॥

किंच हे सुन्दरि पत्यावभुक्तवति मा भुङ्क्ष्व भोजनं त्वया न कर्तव्यं प्रयातं दीर्घाध्वानं पत्यौ गते सति तव विशेषेणालंक्रिया मा भवतु निमज्जनादौ पूर्वापरादिनियमोऽस्ति। आदिपदेन भोजनादिकं ग्राह्यम् । तत्र निमज्जनादिकं पत्युः पूर्वं भोजनादिकं तु पश्चात्कर्तव्यमत्र वृद्धाङ्गनानामरुन्धतीलोपामुद्रादीनां चरितमेव परं प्रमाणमेतदेव तव सौन्दर्यमिति संबोधनाशयः । वसन्ततिलका वृत्तम् ॥ ७१ ॥

किंच पत्यौ कोपाविष्टे सति त्वया रोषेणैकमपि न वाच्यम् । एकमिति क्षन्तव्यमित्य-

---

१ ख. ग. घ. °वे हि सुरु° । २ ख. ग. घ. °मेवमखिलं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मर्तुः समक्षमपि तद्वदनं समीक्ष्य
वाच्यो न जातु सुभगे परपूरुषस्ते ॥
किं वाच्य एष रहसीति तवोपदेशः
शङ्का वधूपुरुषयोः क्षपयेद्धि हार्दम् ॥ ७३ ॥

आयाति मर्तरि तु पुत्रि विहाय कार्य-
मुत्थाय शीघ्रमुदकेन पदावनेकः ॥
कार्यो यथाभिरुचि हे सति जीवनं वा
नोपेक्षणीयमणुमात्रमपीह कं ते ॥ ७४ ॥

धवे परोक्षेऽपि कदाचिदेयु-
र्गृहं तदीया अपि वा महान्तः ॥
ते पूजनीया बहुमानपूर्वं
नो चेन्निराशाः कुलदाहकाः स्युः ॥ ७५ ॥

---

नेन वा संबन्धनीयम् । केवलं क्षन्तव्यमेव स त्वित्थमनेन प्रकारेण स्वयमेव शा... प्रसन्ने च तस्मिन्हे वत्से चकितेव स्याः किं बहुना हेऽनघे सर्वमभीष्टं क्षमयैव सिध्यति ... चेतरथा ॥ ७२ ॥ [ प्रसन्नेति स्मितमुखे सतीत्यर्थः । त्वं चकितेव तं पश्येति ... तत्र हेतुः—सिध्यतीति ] ॥ ७२ ॥

तद्वदनं पुरुषान्तरमुखं समीक्ष्य दृष्ट्वा । एष परपुरुषो रहस्येकान्ते । यतः परपु... हाभाववत्यामपि स्त्रियामियं परपुरुषस्नेहवतीति शङ्का हार्दमान्तरं स्नेहं नाशयेत् ॥ ७३ ॥ [ अथ सुभ्रिति प्रथमपद्यक्रियाविशेषणसूत्रितमवलोकनभाषणादिनियमं स्पष्टयतः । ... रिति । जातु कदाचिदपीत्यर्थः । ते तव न वाच्यो नैव संभाष्य इत्यर्थः । किं ... मुखतश्चैव संभाषणीय इति भावः ] ॥ ७३ ॥

यथाभिरुच्यभिरुचिमनतिक्रम्य पादावनेकः पादप्रक्षालनं हे सति जीवनमणुमात्र... लोके कं सुखं वा ते तव नोपेक्षणीयम् ॥ ७४ ॥ [ कार्यं धानोपस्करादिकृत्यं विहा... उदकेनोष्णजलेन पदावनेकः पादप्रक्षालनविशेषः कार्यः । तस्य स्वहस्ताभ्यामेवेति ... किंच यथाभिमतं वस्तु जीवनमुदकं वा शिशिरसुरभिमधुरतरं तस्मै देयमित्यन्व... संबन्धः । फलितमाह—नेति । इह संसारे कान्ते भर्तरि विषये । शिष्टं तु ... मेव ॥ ७४ ॥

धवे पत्यौ परोक्षे बहिर्गते सति । उपजातिवृत्तम् ॥ ७५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पित्रोरिव श्वशुरयोरनुवर्तितव्यं
तद्वन्मृगाक्षि सहजेष्वपि देवरेषु ॥
ते स्नेहिनो हि कुपिता इतरेतरस्य
योगं विभिद्युरिति मे मनसि प्रतर्कः ॥ ७६ ॥
हितोपदेशे विनिविष्टमानसौ
वधूवरौ राजगृहं समीयतुः ॥
लब्धानुमानौ गुरुबन्धुवर्गतो
बभूव संज्ञोभयभारतीति ॥ ७७ ॥
सा भारती दुर्वसनेन दत्तं
पुनः प्रसन्नेन पुराऽऽत्तहर्षा ॥
शापावधिं संसदि वत्स्यते य-
त्सर्वज्ञतानिर्वहणाय साक्ष्यम् ॥ ७८ ॥
स भारतीसाक्षिकसर्वविस्त्वोऽ-
प्यात्मीयशक्त्या शिशुवद्विभातः ॥
स्वशैशवस्योचितमन्वकाङ्क्षी-
त्स केशवो यद्वदुदारवृत्तः ॥ ७९ ॥

---

पित्रोरिव श्वशुरयोरनुसरणं त्वया कार्यं तथा सहजातेषु सहोदरेषु देवरेष्वपि हे मृगाक्ष्यनुवर्तितव्यं यतः कुपितास्ते स्नेहवतोऽप्यन्योन्यस्य संयोगं विभिद्युर्नाशयेयुरिति मे मनसि प्रतर्कः सहजेष्वपीत्यत्र सहजेष्विवेति वा पाठः ॥ वसन्ततिलका वृत्तम् ॥ ७६ ॥ [ योगं प्रेमैक्यम् ] ॥ ७६ ॥

हितोपदेशे विनिविष्टं मानसं ययोस्तौ वधूवरौ भारतीमण्डनौ गुरुबन्धुवर्गतो लब्धानुमानौ प्राप्तसत्कारौ राजगृहं समीयतुः समागतौ बभूवेत्यादेरुत्तरेण संबन्धः । उपजातिवृत्तम् ॥ ७७ ॥ गुरुर्भट्टपादः । उभयभारत्युभयत्र पितृकुले भर्तृनिलये च भारतीव सर्वज्ञत्वाद्भारतीति संज्ञाऽभिधा सकलशिष्टसंमता बभूवेति संबन्धः ] ॥ ७७ ॥

योभयभारतीति संज्ञा बभूव सा भारती सरस्वती पुरा पूर्वं पुनः प्रसन्नेन दुर्वाससा दत्तं शापावधिं सभायां साक्ष्यं यस्य शंकरस्य सर्वज्ञताया निर्वाहाय वत्स्यते करिष्यति ॥ ७८ ॥

स भारतीसाक्षिकं सर्वविस्त्वं यस्य तथाभूतोऽपि श्रीशंकरः स्वीयशक्त्या स्वाधीनया मायया शिशुवद्विभातः सन्स्वशैशवस्य बाल्यभावस्योचितं क्रीडोपस्करणादिकमाका-

---

१ ख. ग. घ. °र्वं: । च° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शैशवे स्थितवता चपलाशे
शार्ङ्गिणेव वटवृक्षपलाशे ॥
आत्मनीदमखिलं विलुलोके
भाविभूतमपि यत्खलु लोके ॥ ८० ॥

तं ददर्श जनताऽद्भुतबालं
लीलयाऽधिगतनूतनदोलम् ॥
वासुदेवमिव वामनलीलं
लोचनैरनिमिषैरनुवेलम् ॥ ८१ ॥

कोमलेन नवनीरदराजि-
श्यामलेन नितरां समराजि ॥
केशवेशतमसाऽधिकमस्य
केशवेशचतुरास्यसमस्य ॥ ८२ ॥

---

ङ्क्षितवान् । तत्र दृष्टान्तो यथोदारचरितः स प्रसिद्धः केशवः श्रीकृष्णः स्वमायया दि[illegible] वद्धिमातः सन्स्वशैशवस्योचितमन्वकाङ्क्षीत्तथेत्यर्थः ॥ ७९ ॥

चपलाऽऽशा यस्मिन्नेवंभूतेऽपि शैशवे बाल्ये स्थितवता भावि भूतं च यदिदं [illegible] लोकेऽस्ति तदखिलमात्मनि विलुलोके सम्यगवलोकितम् । कर्मणि लिट् । तत्र दृ[illegible] यथा वटवृक्षस्य पलाशे पत्रे स्थितवता शार्ङ्गिणा श्रीविष्णुना यदिदं तदखिलमात्मन्य[illegible] कितं तद्वदित्यर्थः । स्वागता वृत्तम् । 'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात्॥ ८०

लीलयाऽधिगतः प्राप्तो दोलो येन वामना कमनीया लीला यस्य तमद्भुतबालं श्रीं[illegible] करं निमेषोज्झितैर्नेत्रैरनुवेलमनिशं जनसमूहो ददर्श । लीलयाऽधिगतदोलं वामनलील[illegible] तवाङ्कं श्रीकृष्णमिव ॥ ८१ ॥

केशवश्चेशश्च चतुरास्यश्च तैर्विष्णुशिवविधिभिः समस्य तुल्यस्यास्य श्रीशंकरस्य केश[illegible] शतमसाऽधिकं यथा स्यात्तथा समराजि सम्यक्शोभितं तद्विशिनष्टि कोमलेन पुनश्च न[illegible] रदानां नवीनजलदानां या राजिः पङ्क्तिस्तद्वच्छ्यामलेनातिश्यामेनेत्यर्थः ॥ ८२ ॥

---

१ क. °शपाश° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शाक्यैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवै-
रप्यन्यैरखिलैः खलैः खलु खिलं दुर्वादिभिर्वैदिकम् ॥
पन्थानं परिरक्षितुं क्षितितलं प्राप्तः परिक्रीडते
घोरे संसृतिकानने विचरतां भद्रंकरः शंकरः ॥ ८३ ॥

इति श्रीमाधवीये तत्तद्देवावतरार्थकः। संक्षेपशंकरजये
तृतीयः सर्ग आभवत् ॥ ३ ॥

---

अथ चतुर्थः सर्गः।

अथ शिवो मनुजो निजमायया
द्विजगृहे द्विजमोदमुपावहन् ॥
प्रथमहायन एव समग्रही-
त्सकलवर्णमसौ निजमापिकाम् ॥ १ ॥

द्विसम एव शिशुर्लिखिताक्षरं
गदितुमक्षमताक्षरवित्सुधीः ॥
अथ स काव्यपुराणसुवाग्गृणो-
त्स्वयमवैत्किमपि श्रवणं विना ॥ २ ॥

---

शाक्या बौद्धाः क्षपणका दिगम्बराः सर्वैः शाक्यादिदुर्वादिभिः खलु प्रसिद्धं खिलमुच्छिन्नं वैदिकं मार्गं परिरक्षितुं भूतलं प्राप्तो घोरे संसारारण्ये विचरतां भद्रं सर्वानर्थनिवृत्तिपुरःसरपरमानन्दप्राप्तिलक्षणं मोक्षाख्यं कल्याणं करोतीति भद्रंकरोऽन्वर्थसंज्ञः श्रीशंकरः परिक्रीडते स्म। शार्दूलविक्रीडितं वृत्तम्। [ इति श्रीति। अवतरोऽवतारः ॥ ८४ ॥]

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंस-
रामकुमारसूनुधनपतिसूरिकृते श्रीमच्छंकराचार्यविजयडिण्डिमे
तृतीयः सर्गः ॥ ३ ॥

---

अथ चतुर्थसर्गस्य टीका।

प्राकृतशिशुविलक्षणं तस्य चरितं दर्शयितुमुपक्रमते—अथेति। शिवो निजमायया मनुष्यः सन्विप्रगृहे द्विजस्य शिवगुरोः प्रीतिं संपादयन्प्रथमवर्ष एव सर्वमक्षरं निजभाषां च सम्यग्गृहीतवान्। 'द्रुतविलम्बितमाह नभौ भरौ' वसुयुगाविरतिः ॥ १ ॥ [ प्रथमेति। 'हायनोऽस्त्री शरत्समाः' इत्यमरः ] ॥ १ ॥

ततो द्वितीयवर्ष एव स बालकः सुबुद्धित्वादक्षरज्ञो लिखिताक्षरमुच्चारयितुं समर्थोऽभूत्। अथानन्तरं तृतीयवर्षे स शिशुः काव्यानि पुराणानि च श्रुतवान्। किमपि श्रवणं विना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अजनि दुःखकरो न गुरोरसौ
श्रवणतः सकृदेव परिग्रही ॥
सहनिपाठजनस्य गुरुः स्वयं
स च पपाठ ततो गुरुणा विना ॥ ३ ॥
रजसा तमसाऽप्यनाश्रितो
रजसा खेलनकाल एव हि ॥
स कलाधरसत्तमात्मजः
सकलाश्चापि लिपीरविन्दत ॥ ४ ॥
सुधियोऽस्य विदिद्युतेऽधिकं
विधिवच्चौलविधानसंस्कृतम् ॥
ललितं करणं घृताहुतिज्व-
लितं तेज इवाऽऽशुशुक्षणेः ॥ ५ ॥
उपपादननिर्व्यपेक्षधीः
स पपाठाऽऽहृतिपूर्वकागमान् ॥
अधिकाध्यमरंस्त कर्कशेऽ-
प्यधिकांस्तर्कनयेऽत्यवर्तत ॥ ६ ॥

---

स्वयमेव ज्ञातवान् ॥ २ ॥ [ शिशुः कुमारलीलः श्रीशंकरः । यतः सुधीः कुशाग्रबुद्धिः पक्षे शोभना धीर्यस्मात्स तथा ब्रह्मविद्याप्रद इत्यर्थः । अतोऽक्षरविल्लेखनज्ञ इति यावत् पक्षेऽक्षरा मोक्षफलतोऽविनाशिनी विज्ञानं यस्य स तथा मुक्तिप्रदप्रमाविषयः ] ॥ २ ॥

असौ शिशुर्गुरोर्दुःखकरो नाभूत् । यतः सकृदेव श्रवणात्परिग्रहणशीलः सहाध्यायि-नस्य स्वयं गुरुः स च श्रवणादनन्तरं गुरुणा विना पपाठ ॥ ३ ॥

रजोगुणेन तमोगुणेन चानाश्रितो धूल्या खेलनकाल एव हि प्रसिद्धं स शिशुः कला-धरेभ्यः श्रेष्ठस्य सुतः सर्वा अपि लिपीर्ज्ञातवान् । वियोगिनी वृत्तम् ॥ ४ ॥ [ कला-धरेति । कलानां चतुःषष्टिकलानामुपलक्षणमिदमष्टादशविद्यानामपि । धरा धारणकर्तारस्तेषां सत्तमः श्रेष्ठः शिवगुरुस्तस्याऽऽत्मजः पुत्र इत्यर्थः ] ॥ ४ ॥

अस्य सुधियः श्रीशंकरस्य विधिवच्चूडाकर्मणो विधानेन संस्कृतं सुन्दरं करणं शरीरम् । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः । विदिद्युते विशेषेण दिदीपे घृतस्याऽऽहुतिभिर्ज्वलितमग्नेस्तेज इव ॥ ५ ॥

उपपादने निर्व्यपेक्षाऽपेक्षारहिता धीर्यस्य स श्रीशंकरो भूप्रभृतिव्याहृतिपूर्वकं

---

१ शिवगुरो°। २ ख. °ष्टस्यातिशोभनस्य । ३ ग. घ. °कानागमान्प°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरतस्त्रिदशेज्यचातुरीं
पुरतस्तस्य न वक्तुमीश्वराः ॥
प्रभवोऽपि कथासु नैजवा-
ग्विभवोत्सारितवादिनो बुधाः ॥ ७ ॥
अमुकक्रमिकोक्तिधोरणी-
मुरगाधीशकथावधीरिणीम् ॥
मुमुहुर्निशमय्य वादिनः
प्रतिवाक्योपहृतौ प्रमादिनः ॥ ८ ॥
कुमतानि च तेन कानि नो-
न्मथितानि प्रथितेन धीमता ॥
स्वमतान्यपि तेन खण्डिता-
न्यतियत्नैरपि साधितानि केः ॥ ९ ॥

---

दान्पपाठ किंत्राधिकाव्यमरंस्त काव्ये तु क्रीडां कृतवानपिच कर्कशेऽतिकठिनेऽपि तर्कनये येऽधिकास्तानतिक्रान्तवान् ॥ ६ ॥ [ *आह्वतेति । आहृत आगमशब्दिताखिलतन्त्रग्रन्थान्प्रति शम्भुमुद्युक्तायां गौर्यां सत्यां शिवेन तेभ्यः सकाशादाकृष्य कक्षपुट्यां निवेशितत्वात्कक्षपुटीति नाम्ना प्रसिद्धस्तन्त्रविशेषः स पूर्वः प्रथमो येषां ते च त आगमा मन्त्रशास्त्रग्रन्थास्तानित्यर्थः । तथा अधीति अधिकं काव्यं येन तत्तथा रसालंकारादिसाहित्यशास्त्रमित्यर्थः । एवं चाथ स काव्येति द्वितीयश्लोकोत्तरार्धगतकाव्यपदेन सहास्य न पौनरुक्त्यम् । अरंस्त ज्ञातवानित्यर्थः ] ॥ ६ ॥

नैजायाः स्वकीयाया वाचो वैभवेनोत्सारिता दूरीकृता वादिनो यैस्ते बुधाः पण्डिता वादजल्पवितण्डाख्यासु कथासु प्रभवः समर्था अपि देवानां पूज्यस्य गुरोर्वाचस्पतेश्चातुरीं हरतस्तस्य शिवगुरोः कुमारस्य संमुखे वक्तुं प्रभवो न बभूवुरित्यर्थः ॥ ७ ॥

किंच सर्पाधीशस्य शेषस्य कथाया अप्यवधीरिणीं तिरस्कारिणीममुष्य क्रमेणोच्चारणस्य परिपाटीं श्रुत्वा वादिनो मुमुहुर्मोहं प्रापुर्यतः प्रतिवचनस्य व्याहृतौ प्रमादवन्तः ॥ ८ ॥ [ अमुकेति । वादिनो यावद्भेदवादिनः । अमुकस्य पूर्वप्रकृतस्य श्रीशंकराचार्यस्य क्रमिका कथा क्रमादागतैतादृशी योक्तिर्वाक्यव्यक्तिस्तस्या या धोरणी संघातविशेषस्तामित्यर्थः ] ॥ ८ ॥

किंच प्रख्यातेन बुद्धिमता तेन श्रीशंकरेण कानि कुमतानि नोन्मथितान्यपि तु स-

---

* मूले पपाठाऽऽहृतीत्यत्र ' पपाठाऽऽहृति ' पाठानुरोधेनेदम् ।

---

१ क. °द्यासु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अमुना तनयेन भूषितं
यमुनातातसमानवर्चसा ॥
तुलया रहितं निजं कुलं
कलयामास स पुत्रिणां वरः ॥ १० ॥
शिवगुरुः स जरंस्त्रिसमे शिशा-
वमृत कर्मवशः सुतमोदितः ॥
उपनिनीषितसूनुरपि स्वयं
नहि यमोऽस्य कृताकृतमीक्षते ॥ ११ ॥
इह भवेत्सुलभं न सुतेक्षणं
न सुतरां सुलभं विभवेक्षणम् ॥
सुतमवाप कथंचिदयं द्विजो
न खलु वीक्षितुमैष्ट सुतोदयम् ॥ १२ ॥
मृतमदीदहदात्मसनाभिभिः
पितरमस्य शिशोर्जननी ततः ॥
समनुनीतवती धवखण्डितां
स्वजनता मृतिशोकहरः पदैः ॥ १३ ॥

---

र्वाण्येवोन्मथितानि तेन खण्डितानि स्वमतान्यतिप्रयत्नैरपि कैः साधितानि न ... त्यर्थः ॥ ९ ॥ [ धीमताऽलौकिकप्रज्ञावता ] ॥ ९ ॥

स पुत्रवतां मध्ये श्रेष्ठः शिवगुरुः स्वीयं कुलं यमुनातातेन सूर्येण समानं ... यस्य तेनामुना पुत्रेणालंकृतं तुल्योपमया रहितं कलयामास चकार ददर्शेति वा ॥ ... [ कलयामास मेने ] ॥ १० ॥

स शिवगुरुः सुतेन मोदं प्रापितः स्वयमुपनिनीषित उपनयं कर्तुमिष्टः सूनुर्येन ... भूतोऽपि जरां गच्छञ्छिशौ त्रिहायने सति कर्माधीनोऽमृत मृतो हि यस्मादस्य ... कृताकृतमिदमनेन कृतमिदमनेनाकृतमिति यमो न पश्यति । द्रुतविलम्बितं वृत्तम् ॥ ...

अस्मिन्संसारे सुतस्येक्षणं सुलभं न भवति सुतविभवस्येक्षणं तु सुतरां सुलभं न ... स्यस्मिन्नर्थे शिवगुरुरेव निदर्शनमित्याशयेनाऽऽह—इहेति । अयं द्विजः सुतं कथं... परंतु सुतस्य वैभवं द्रष्टुं समर्थो नैवाभूत् ॥ १२ ॥

तदनन्तरमस्य शंकरस्य पितरं शिशोर्जननी स्वसापिण्डैरदीदहत्ततो धवेन पत्या ... रहितां सतीं स्वजनता मृतिशोकहरैः पदैर्नायमत्यन्तसंवासः कस्यचित्केनचित्कचिद... शरीरेण किमुतान्यैः पृथग्जनैरित्यादिभिः समाश्वासितवती ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतवती मृतचोदितमक्षमा
निजजनैरपि कारितवत्यसौ ॥
उपनिनीपुरभूत्सुतमात्मनः
परिसमाप्य च वत्सरदीक्षणम् ॥ १४ ॥
उपनयं किल पञ्चमवत्सरे
प्रवरयोगयुते सुमुहूर्तके ॥
द्विजवधूर्नियता जननी शिशो-
र्व्यधित तुष्टमनाः सह बन्धुभिः ॥ १५ ॥
अधिजगे निगमांश्चतुरोऽपि स
क्रमत एव गुरोः सषडङ्गकान् ॥
अजनि विस्मितमत्र महामतौ
द्विजसुतेऽल्पतनौ जनतामनः ॥ १६ ॥
सहनिपाठयुता बटवः समं
पठितुमैशत न द्विजसूनुना ॥
अपि गुरुर्विशयं प्रतिपेदिवा-
न्क इव पाठयितुं सहसा क्षमः ॥ १७ ॥

---

[ अस्य शिशोरिति देहलीदीपन्यायेन पितरमित्यत्रापि संबध्यते ] [ स्वेति । स्वजनसंहतिरित्यर्थः ] ॥ १३ ॥

मृतस्य यद्विहितं स्वेन कर्तुं शक्यं तत्स्वयं कृतवती यत्रासमर्था तत्स्वजनैरप्यसौ सती कारितवती किंच संवत्सरदीक्षां परिसमाप्य स्वस्य सुतमुपनिनीपुरभूत् ॥ १४ ॥ [ अक्षमा शोकातिशयादसमर्थाऽपि । मृतेति । वपनस्नानादिकं मृतोद्देशेन विहितं कर्मेत्यर्थः] ॥ १४ ॥

प्रवरयोगयुते श्रेष्ठयोगयुक्ते नियता नियमयुक्तोपनयं व्यधित कृतवती ॥ १५ ॥ [ द्विजेति । निरुक्तशिवगुरुपत्नी । नियता विधवाधर्मनियमयुक्ता सतीत्यर्थः । यतो जनन्यतो बन्धुभिः संबन्धिभिः सह । तुष्टेति । एतादृशी च सती । शिशोः श्रीशंकराचार्याख्यस्वपुत्रस्य ] ॥ १५ ॥

शिक्षादिभिः षड्भिरङ्गैः सहितांश्चतुरोऽपि वेदान्क्रमेण स गुरोः सकाशादधिजगेऽध्ययनेनावाप । अत्रास्मिन्द्विजसुतेऽल्पशरीरे महामतौ सति विषये वा जनताया हृदयं विस्मितमजायतात्रास्मिँल्लोक इति वा ॥ १६ ॥ [ क्रमत एवगांद्यनुक्रमेणैव ] ॥ १६ ॥

सहनिपाठः सहाध्ययनं तेन युक्ता बटवो द्विजपुत्रेण सह पठितुं समर्था नाभूवन् । किंच सहसा पाठयितुं कः समर्थ इति संशयं गुरुरपि प्राप्तवानिव ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र किं स यदशिक्षत सर्वां-
श्चित्रमागमगणाननुवृत्तः ॥
द्वित्रमासपठनादभवद्य-
स्तत्र तत्र गुरुणा समविद्यः ॥ १८ ॥

वेदे ब्रह्मसमस्तदङ्गनिचये गार्ग्योपमस्तत्कथा-
तात्पर्यार्थविवेचने गुरुसमस्तत्कर्मसंवर्णने ॥
आसीज्जैमिनिरेव तद्वचनजप्रोद्बोधकन्दे समो
व्यासेनैव स मूर्तिमानिव नवो वाणीविलासैर्वृतः ॥ १९ ॥

आन्वीक्षिक्यैक्षि तन्त्रे परिचितिरतुला कापिले काऽपि लेभे
पीतं पातञ्जलाम्भः परमपि विदितं भाट्टघट्टार्थतत्त्वम् ॥
यत्तैः सौख्यं तदस्यान्तरभवदमलाद्वैतविद्यासुखेऽस्मि-
न्कूपे योऽर्थः स तीर्थे सुपयसि वितते हन्त नान्तर्भवेत्किम् ॥

यो द्वित्रमासपठनात्तत्र तत्र शास्त्रे गुरुणा तुल्यविद्योऽभवत्स गुरुमनुसृतो ... नागमगणाञ्शिक्षितवानत्र किं चित्रं न किमपीत्यर्थः । स्वागतावृत्तम् ॥ १८ ॥

वेदे ब्रह्मसमश्चतुर्मुखतुल्य आसीत् । वेदाङ्गसमुदाये शिक्षादौ गार्ग्यसदृश ... वेदतदङ्गकथातात्पर्यविवेचने वाचस्पतितुल्य आसीत् । वेदोक्तकर्मसंवर्णने जैमिनिरेवाऽ... वेदवचनजन्यतत्त्वज्ञानस्य मूले व्यासेनैव तुल्यः । किंच स मूर्तिमान्नवीनो व्यास इव ... विलासैर्वृतः संयुत आसीत् । शार्दूलविक्रीडितम् ॥ १९ ॥ [ मूर्तीति । ... कृतिशालीव सन्नित्यर्थः । एतेन स्वदृष्ट्या तत्राद्वैतब्रह्मात्मत्वमेवेति द्योत्यते ] [ ... ङ्गेषु गार्ग्यस्यातिपाटवं पुराणादितो ज्ञेयम् ] ॥ १९ ॥

आन्वीक्षिकी तर्कविद्या तेनैक्षि सम्यगीक्षिता कापिले तन्त्रे कपिलप्रणीते सांख्य... नुपमा काऽपि परिचितिः परिचयो लेभे । कर्मणि लिट् । तेन लब्धेत्यर्थः । पतञ्ज... तशास्त्रात्मकं जलं तेन पीतं भाट्टस्य भट्टपादप्रणीतस्य वार्तिकस्य घट्टानां प्रघट्टका... तत्त्वं परमपि तेन विदितं परमपीत्यस्य पूर्वेण वा संबन्धः । किंच यत्तैस्तर्कशास्त्रादि... तदस्य श्रीशंकरस्यामलं च तदद्वैतं च तस्य या विद्याऽमला चासावद्वैतविद्येति वा ... सुखेऽस्मिन्नपरोक्षेऽन्तरभवत् । कूपे यो जलपानादिरूपोऽर्थः स शोभनजले विस्तृ... तीर्थे किमन्तर्न भवेदपि तु भवेदेव । तथाच स्मृतिः—

' यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ' इति ।

१ ख. 'दृपादार्थं' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स हि जातु गुरोः कुले वस-
न्सवयोभिः सह भैक्ष्यलिप्सया ॥
भगवान्भवनं द्विजन्मनो
धनहीनस्य विवेश कस्यचित् ॥ २१ ॥
तमवोचत तत्र सादरं
बटुवर्यं गृहिणः कुटुम्बिनी ॥
कृतिनो हि भवादृशेषु ये
वरिवस्यां प्रतिपादयन्ति ते ॥ २२ ॥
विधिना खलु वञ्चिता वयं
वितरीतुं बटवे न शक्नुमः ॥
अपि *भैक्ष्यमकिंचनत्वतो
धिगिदं जन्म निरर्थकं गतम् ॥ २३ ॥

---

स्रग्धरा वृत्तम् ॥ २० ॥ [ आन्वीक्षिकी ।

'आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः'

इत्यमरात्कणादगौतमोभयरचिततर्कविद्येत्यर्थः ] [ भाट्टेति । भट्टस्य प्रागुक्तकुमारिल-भट्टाचार्यस्येदं भाट्टं तत्प्रणीतद्वादशलक्षणीशाबरभाष्यवार्तिकं तस्य यानि घट्टानि प्रामाण्य-वादादिप्रघट्टानि तेषां यदर्थतत्त्वं तात्पर्यार्थरहस्यं तत्तथेत्यर्थः । विदितं क्लृप्तमिति यावत् ] [ अमलेति । अखिलदृश्येन्द्रजालमलविहीनस्वप्रकाशाद्वैतब्रह्मात्मैक्यापरिच्छिन्नानन्द इत्यर्थः ] ॥ २० ॥

एवंभूतः स भगवाञ्शंकरो गुरोः कुले वसन्कदाचिद्भैक्ष्यप्राप्तीच्छया वयस्यैः सह धनहीनस्य कस्यचिद्विप्रस्य गृहं प्रविष्टवान् । वियोगिनी वृत्तम् ॥ २१ ॥ [ सवयोभिः समानवयस्कैर्ब्रह्मचारिभिः सहेत्यर्थः ] ॥ २१ ॥

ये भवादृशेषु वरिवस्यां परिचर्यां प्रतिपादयन्ति ते कृतिनः कृतार्था ये पुण्यवन्तस्ते भवादृशेषु वरिवस्यां प्रतिपादयन्तीति वा ॥ २२ ॥ [ ये कृतिनः कृतानन्तसुकृतास्त एव भवादृशेषु भवत्समेष्वित्यर्थः । अवच्छेदकत्वं सप्तम्यर्थः । वरिवस्यां 'वरिवस्या तु शुश्रूषा' इत्यमरादुचितोपचारैः सेवामिति यावत् । प्रतिपादयन्ति संपादयन्तीत्यन्वयः । एवं चोपचा-रानुकूलधनाद्यभावलिङ्गानुमितजन्मान्तरीयसुकृतव्यतिरेकाद्वयं तु नैव तथा भवाम इति भावः ] ॥ २२ ॥

वयं तु दैवेन वञ्चिता यतोऽकिंचनत्वाद्भैक्ष्यमपि बटवे दातुं न शक्नुमः ॥ २३ ॥

---

* अत्र सर्वेष्वप्यादर्शपुस्तकेषु भैक्ष्यमित्येव पाठो दृश्यते स च स्वार्थष्यञा कथंचियोज्यः । अद्वैतराज्यलक्ष्म्यनुसारेण तु भैक्षमिति यकाररहित एव पाठो दृश्यते ।

---

१ ग. °या समानवयोभिर्वय° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति दीनमुदीरयन्त्यसौ
प्रददावामलकं व्रतीन्दवे ॥
करुणं वचनं निशम्य सोऽ-
प्यभवज्ज्ञाननिधिर्दयार्द्रधीः ॥ २४ ॥

स मुनिर्मुरभित्कुटुम्बिनीं
पदचित्रैर्नवनीतकोमलैः ॥
मधुरैरुपतस्थिवांस्तवै-
र्द्विजदारिद्र्यदशानिवृत्तये ॥ २५ ॥

अथ कैटभजित्कुटुम्बिनी
तडिदुद्दामनिजाङ्गकान्तिभिः ॥
सकलाश्च दिशः प्रकाशय-
न्त्यचिरादाविरभूत्तदग्रतः ॥ २६ ॥

अभिवन्द्य सुरेन्द्रवन्दितं
पदयुग्मं पुरतः कृताञ्जलिम् ॥
ललितस्तुतिभिः प्रहर्षिता
तमुवाच स्मितपूर्वकं वचः ॥ २७ ॥

---

इत्येवं दीनं कथयन्त्यसौ गृहस्थस्य कुटुम्बिनी व्रतिचन्द्राय श्रीशंकरायाऽऽ[illegible] प्रकर्षेण भक्तिपूर्वकं ददौ । तदीयं करुणं वचनं श्रुत्वा ज्ञाननिधिः सोऽपि दयार्द्र[illegible] भवत् ॥ २४ ॥ [ व्रतीन्दवे व्रतिषु ब्रह्मचारिषु मध्य इन्दुरिव चन्द्र इव शान्तं प्रका[illegible] नायेत्यर्थः ] ॥ २४ ॥

स मुनिः श्रीशंकरः पदचित्रैर्नवनीतवत्कोमलैर्मधुरैः स्तवैर्मुराख्यासुरविदारकस्य [illegible] कुटुम्बिनीं लक्ष्मीं द्विजदारिद्र्यदशानिवृत्तय उपासितवान् ॥ २५ ॥ [ पदेति । [illegible] कारसंग्रहार्थम । नवनीतेति । माधुर्याख्यगुणग्रहणार्थम् । मधुरपदेन रसा[illegible] योग्रंहः ] ॥ २५ ॥

अथानन्तरं कैटभाख्यासुरजितो विष्णोः कुटुम्बिनी विद्युद्वदुद्दामभिः स्वतन्त्राभिः [illegible] कान्तिभिः सकला अपि दिशः प्रकाशयन्ती सद्यः श्रीशंकराग्रे प्रादुरभूत् ॥ २६ ॥

देवेन्द्रवन्दितं पदद्वंद्वमभिवन्द्य कृताञ्जलिं पुरतः स्थितं श्रीशंकरं ललितस्तुतिभिः [illegible] प्राप्ता स्मितपूर्वकं वचनमुवाच ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदितं तव वत्स हृद्गतं
कृतमेभिर्न पुराभवे शुभम् ॥
अधुना मदपाङ्गपात्रतां
कथमेते महितामवाप्नुयुः ॥ २८ ॥
इति तद्वचनं स शुश्रुवा-
न्निजगादाम्ब मयीदमर्पितम् ॥
फलमद्य ददस्व तत्फलं
दयनीयो यदि तेऽहमिन्दिरे ॥ २९ ॥
अमुना वचनेन तोषिता
कमला तद्भवनं समन्ततः ॥
कनकामलकैरपूरय-
ज्जनताया हृदयं च विस्मयैः ॥ ३० ॥
अथ चक्रभृतो वधूमये
सुकृतेऽन्तर्धिमुपागते सति ॥
प्रशशंसुरतीव शंकरं
महिमानं तमवेक्ष्य विस्मिताः ॥ ३१ ॥

---

पुराभवे पूर्वजन्मनि मदपाङ्गस्य मदीयकृपाकटाक्षस्य पात्रतालक्षणां पूज्यताम् ॥ २८ ॥ [ शुभं सुकृतम् । महितां पूजिताम् । एतादृशीम् । मदपाङ्गेति । मत्कृपाकटाक्षविषयतामित्यर्थः ] ॥ २८ ॥

इति तद्वचनं श्रुत्वा स उवाच । हेऽम्ब यद्यप्येवं तथाऽप्यद्येदमामलकारुयं फलं मय्यर्पितं तस्य फलं ददस्व ह इन्दिरे यद्यहं तवानुकम्प्यः ॥ २९ ॥

अमुना तथाभूतेन वचनेन श्रीशंकरेण वा तोषिता लक्ष्मीः सुवर्णामलकैः समन्ताद्द्विजगृहमपूरयत् । जनसमुदायस्य हृदयं च विस्मयैरपूरयत् ॥ ३० ॥ [ अमुनेति । तुल्ययोगितालंकारः । तदुक्तम् ।

' वर्ण्यानामितरेषां च धर्मैक्यं तुल्ययोगिता ।
संकुचन्ति सरोजानि स्वैरिणीवदनानि च ' इति ] ॥ ३० ॥

अथ चक्रधरस्य विष्णोर्वधूमये पुण्येऽन्तर्धानं गते सति तथाभूतं महिमानमवेक्ष्य विस्मयं प्राप्ता जनाः श्रीशंकरमत्यन्तं प्रशशंसुः ॥ ३१ ॥

---

१ क. दि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिवि कल्पतरुर्यथा तथा
भुवि कल्याणगुणो हि शंकरः ॥
सुरभूसुरयोरपि प्रियः
सममूदिष्टविशिष्टवस्तुदः ॥ ३२ ॥
अमरस्पृहणीयसंपदं
द्विजवर्यस्य निवेशमात्मवान् ॥
स विधाय यथापुरं गुरोः
सविधे शास्त्रवराण्यशिक्षत ॥ ३३ ॥
वरमेनमवाप्य भेजिरे
परभागं सकलाः कला अपि ॥
समवाप्य निजोचितं पतिं
कमनिया इव वामलोचनाः ॥ ३४ ॥
सरहस्यसमग्रशिक्षिता-
खिलविद्यस्य यशस्विनो वपुः ॥
उपमानकथाप्रसङ्गम-
प्यसहिष्णु श्रियमन्वपद्यत ॥ ३५ ॥

---

स्वर्गे कल्पवृक्षो यथा तथा भूमौ कल्याणगुणः शंकर इष्टानि यानि श्रेष्ठानि [illegible] तानि ददातीति तथाभूतः समभूत्। किंच स तु देवप्रियोऽयं तु देवस्य विप्रस्य च [illegible] ॥ ३२ ॥

एवमप्राकृतं तच्चरितमुपवर्ण्योपसंहरति। अमरैर्देवैः प्रार्थनीया संपद्यस्मिन्नेतादृशं [illegible] श्रेष्ठस्य गृहं विधाय स आत्मवान्यथापूर्वं गुरोः सविधे समीपे शास्त्रवराण्यशिक्षत [illegible] [ अशिक्षताभ्यस्तवानित्यर्थः ] ॥ ३३ ॥

वामलोचनाः कपटदृष्टयः स्त्रियः कमनीयाः सुन्दर्यः स्वोचितं पतिं प्राप्य [illegible] भागं भाग्यं प्राप्नुवन्ति तथा सर्वाः कला अप्येनं श्रीशंकरं वरं प्राप्य परं भाग्यं प्रापु[illegible] ॥ ३४ ॥ [ कलाः संगीताद्याः । सकलाः संपूर्णाश्चतुःषष्टिसंख्याकत्वेन शास्त्र[illegible] सिद्धा अपीत्यर्थः ] ॥ ३४ ॥

सरहस्यं समग्रं यथा स्यात्तथा शिक्षिताऽखिला विद्या येन तथाभूतस्य य[illegible] श्रीशंकरस्य वपुः शरीरमुपमानकथायाः प्रसङ्गमप्यसहिष्णवपूर्वां शोभां प्रासक्त ॥ ३[illegible]

---

१ ग. भागमाप्नु° । २ ग. °हिष्णु श्रियमप्° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जयति स्म सरोरुहप्रभा-
मदकुण्ठीकरणक्रियाचणम् ॥
द्विजराजकरोपलालितं
पदयुग्मं परगर्वहारिणः ॥ ३६ ॥
जलमिन्दुमणिं स्रवेद्यदि
यदि पद्मं दृषदस्ततः सरः ॥
यदि तत्र भवेत्कुशेशयं
तदमुष्याङ्घ्रितुलामवाप्नुयात् ॥ ३७ ॥

---

अथ श्रीशंकरस्य पादाद्यवयवं वर्णयिष्यन्नादौ तदीयपदयुग्मं वर्णयति । जयति स्मेत्यादिना । सरोरुहस्य कमलस्य यः प्रभामदस्तस्य या कुण्ठीकरणक्रिया तया वित्तं प्रतीतम् । 'तेन वित्तश्चुञ्चुप्चणपौ' इति सूत्रेण चणप्प्रत्ययः । यतो द्विजराजस्य चन्द्रस्य करैः किरणैर्द्विजराजानां विप्राणां हस्तैश्चोपलालितं परेषां वादिनां गर्वं हर्तुं शीलमस्यास्तीति तथा तस्य चरणयुग्मं जयति स्म ॥ ३६ ॥ [ परेति । परे भेदवादिनस्तेषां यो गर्वो द्वैतस्थापनाभिनिवेशस्तं हरति तच्छीलस्तस्येत्यर्थः ] ॥ ३६ ॥

यदि जलमिन्दुमणिं चन्द्रकान्तमणिं स्रवेद्यदि च दृषदः कमलं भवेद्यदि च तस्मात्कमलात्सरस्तडागो भवेद्यदि च तस्मिन्सरसि कुशेशयं भवेत्तदा तत्कमलममुष्य पादसादृश्यं प्राप्नुयात् ।

'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' ॥ ३७ ॥

[ अत्र भवेत्सरोरुहमिति त्यक्त्वा भवेत्कुशेशयमिति विशेषोक्त्या शयनं शयः कुशे दर्भेषु शयो यस्य तत्तयेति व्युत्पत्तिसूचितश्लेषात्प्रकृतपदपक्षेऽपि योजनं ध्वन्यते निरुक्तनायकस्य तदानीं ब्रह्मचारित्वेन दर्भशय्यौचित्यादित्याशयः । अत्र प्रौढोक्तिसंभावनाश्लेषादयोऽलंकाराः । तदुक्तम्—

'प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ।
कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥
संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव' इति ] ॥ ३८ ॥

---

१ ग. °युगं व° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादौ पद्मसमौ वदन्ति कतिचिच्छ्रीशंकरस्यानघौ
वक्त्रं च द्विजराजमण्डलनिभं नैतद्द्वयं सांप्रतम् ॥
प्रेष्यः पद्मपदः किल त्रिजगति ख्यातः पदं दत्तवा-
नम्भोजे द्विजराजमण्डलशतैः प्रेष्यैरुपास्यं मुखम् ॥ ३८
मुहुः सन्तो नैजं हृदयकमलं निर्मलतरं
विधातुं योगीन्द्राः पदकमलमस्मिन्निदधति ॥
दुरापां शक्राद्यैर्वमति वदनं यन्नवसुधां
ततो मन्ये पद्मात्पदमधिकमिन्दोश्च वदनम् ॥ ३९ ॥

---

केचिच्छ्रीशंकरस्यानघौ पादौ पद्मसमौ वदन्ति मुखं च चन्द्रमण्डलसमं वदन्ति तै न्याय्यं यतः प्रेष्योऽनुचरो जगति ख्यातः पद्मपादः पद्मे पदं दत्तवांस्तथा मुखं ब्राह्मणचन्द्रमण्डलशतैः प्रेष्यैरुपास्यम् । अत्र नैतदित्यादिनोपमित्यनिष्पत्तेरुद्घाटनात्प्रतीपालंकार

'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत्'

इत्युक्तेः । शार्दूलविक्रीडितं वृत्तम् ॥ ३८ ॥ [ अत्र पादवर्णनप्रकरणेऽपि मुखवर्णनं कवेर्मनसि तत्कालावच्छेदेन मानसतन्मूर्त्याविर्भावेन तदाननानुसंधानादेवेति ध्येयम् । प्रतीपविशेषो हेतुश्चालंकारः । तदुक्तम्—

'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ।
मुधापवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम् ॥
हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्' इति ]॥ ३८ ॥

श्रीशंकरपादवदनयोः पद्मेन्दुभ्यामुत्कृष्टतां प्रकारान्तरेण दर्शयति—मुहुरिति सन्तो योगीन्द्राः स्वीयं हृदयकमलं निर्मलतरं विधातुमस्मिन्हृदयकमले श्रीशंकरस्य पदकमलं निदधति स्थापयन्ति । यद्यस्माच्चन्द्राद्यैर्दुरापां दुष्प्रापां ब्रह्मलक्षणां नव्यां सुधां मुद्गिरत्युद्वमति । यद्यस्येति वा । ततस्तस्मात्पद्मात्पदं चन्द्राच्च मुखमुत्कृष्टं मन्ये । शिखरिणी वृत्तम् ॥ ३९ ॥ [ निदधति ध्येयतयाऽनुसंदधतीत्यर्थः । यद्यपीदं जुगुप्सावहत्वादश्लीलमेव तथाऽपि प्रयोक्तुः कवेः श्रीमदाचार्यचरणादिचिन्तनरसाविष्टत्वेन तदनवधानं तत्परिपोषकत्वाद्गुणाधायकमेव नतु दोषावहमित्याकूतम् ] ॥ ३९ ॥

---

१ ख. नवसु' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्त्वज्ञानफलेग्रहिर्घनतरव्यामोहमुष्टिंधयो
निःशेषव्यसनोदरंभरिरघप्राग्भारकूलंकषः ॥
लुण्टाको मदमत्सरादिविततेस्तापत्रयारुंतुदः
पादः स्याद्मितंपचः करुणया मद्रंकरः शांकरः ॥ ४० ॥
पदाघातस्फोटव्रणकिणितकार्तान्तिकभुजं
प्रघाणव्याघातप्रणतविमतद्रोहबिरुदम् ॥
परं ब्रह्मैवासौ भवति तत एवास्य सुपदं
गतापस्मारार्तीञ्जगति महतोऽद्यापि तनुते ॥ ४१ ॥

तत्त्वज्ञानलक्षणं फलं गृह्णातीति तत्त्वज्ञानफलग्रहिः 'फलेग्रहिरात्मंभरिश्च' इत्युपमस्यैदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते। पुनश्च घनतरो यो व्यामोहोऽकर्त्रात्मास्फुरणरूपस्तं मुष्ट्या निष्पीड्य धयति पिबतीति तथा पुनश्च निःशेषैर्व्यसनैर्भक्तानां समस्तदुःखैरुदरं बिभर्तीति तथा सर्वव्यसनभक्षकः पुनश्च तेषामघस्य पापस्य यः प्राग्भारोऽतिशयस्तस्य कूलं तटं कषति नाशयतीति तथाभूते। नदीवन्मूलोन्मूलकः पुनश्च मदमत्सरदम्भादिपङ्क्तेर्लुण्टाकोऽपहारकस्तापानामाध्यात्मिकाधिदैविकाधिभौतिकानां त्रयं तस्यारुंतुदो मर्मस्पृग्विनाशकस्तथा मितंपचतीति मितंपचः कदर्यः।

'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः'

इत्यमरः। तद्विलक्षणोऽमितंपचोऽत्युदार एवंविधः शांकरः पादः कल्याणकरः स्यात्। शार्दूलविक्रीडितम् ॥ ४० ॥ [ तत्त्वेति। तत्त्वज्ञानमद्वैतब्रह्मात्मैक्यप्रत्यक्षमेव फलं गृह्णाति स्वभक्तजनार्थं स्वनिकटे स्थापयतीति तथा। अत एव। घनेति। घनतराऽतिगाढ एतादृशो यो व्यामोहस्तस्य मुष्टिं धयतीति मुष्टिंधयो भक्षक इत्यर्थः। तापेति। 'अरुंतुदस्तु मर्मस्पृक्' इत्यमरात्तापत्रयमर्मोच्छेदक इत्यर्थः ] ॥ ४० ॥

यमकिंकरेभ्यो मार्कण्डेयस्य रक्षणसमये पदाघातेन वामचरणप्रहारेण यः स्फोटस्तस्य व्रणेन चिह्नितौ कार्तान्तिकौ कृतान्तस्य यमस्य संबन्धिनौ भुजौ येन तत्प्रघाणो द्वारबाह्यप्रकोष्ठः 'अगारैकदेशे प्रघणः प्रघाणश्च' इति प्रघाणशब्दनिपातनाद्व्युत्पत्तिस्तु प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यत इति बोध्या। तत्र यो व्याघातः पादप्रहारस्तेन प्रणतस्य दीर्घनमस्कारवत्प्रकर्षेण नतस्य नम्रीभूतस्य ये बाह्याभ्यन्तरा विमताः शत्रवस्तेषां द्रोह इति बिरुदः प्रख्यातिकरं नामधेयं यस्य। बिरुदशब्दो देशीयशब्दः। तत्परं ब्रह्मैवासौ श्रीशंकरो भवति ततस्तस्मादेवास्य सुपदं शोभनं चरणं जगत्यद्यापि महतोऽक्षुद्रस्वभावान्गताऽज्ञानलक्षणापस्माराख्यासुरस्तत्कर्तृकाऽऽर्तिर्येभ्यस्तथाभूतांस्तनुते कुरुते। शिखरिणी वृत्तम् ॥ ४१ ॥ [ गतेति। अत्रापस्मारपदेन स्मरणं स्मारोऽप-

१ प. पद। २ क. भूतान्कुरु°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्तस्याभ्युदयं नवं कलयतः सारस्वतोज्जृम्भणं
स्वालोकेन विधूतविश्वतिमिरस्याऽऽसन्नतारस्य च ॥
तापं नस्त्वरितं क्षिपन्ति घनतापन्नं प्रसन्ना मुने-
राह्लादं च कलाधरस्य मधुराः कुर्वन्ति पादक्रमाः ॥ ४२

गतः स्मारो येन स तथेति व्युत्पत्त्या महामोह एव तेन याऽऽर्तिः संसार[illegible] सा गता येषां तादृशाः प्रध्वस्तद्वैतानित्यर्थः। रोगविशेषपक्षेऽपि दक्षिणस्यां दिशि [illegible] पुरक्षेत्रेऽदभ्रसभायां भगवता चिदम्बरनटेन स्वानन्दलीलानर्तनं कुर्वता चरणघातेनैवाप[illegible] नामा महादैत्यो मर्दित इति पुराणादिप्रसिद्धमेवेतीदानीमपि तद्ध्यानकर्तॄणां निरुक्त[illegible] पशमः स्यादेवेति भावः ] ॥ ४१ ॥

नव्यमभ्युदयं प्राप्तस्य सारस्वतं सामुद्रमुज्जृम्भणमुल्लासं कुर्वतः स्वीयप्रकाशेन [illegible] विश्वस्य तिमिरं येन तस्याऽऽसन्नाः. संनिधिं प्राप्तास्तारा यस्य तस्य कलाधरस्य [illegible] कलस्य चन्द्रस्य पादक्रमाः किरणप्रचाराः प्रसन्नाः स्वच्छा यथा घनतां प्राप्तं तापं [illegible] क्षिपन्ति नाशयन्त्याह्लादं च कुर्वन्ति तथा नवमभ्युदयं प्राप्तस्य सरस्वतीप्रतिपाद्यं सा[illegible] ब्रह्मतत्त्वं तस्योद्दीपनं कुर्वतः स्वस्य प्रत्यक्चैतन्यस्याऽऽलोकेन प्रकाशेन विधूतं विश्व[illegible] नलक्षणं तिमिरं येन तस्य सदैवोंकारजपाद्यभ्यासशीलस्य समस्तकलाधरस्य मुनेः श्री[illegible] रस्य प्रसन्नाश्चरणन्यासा नोऽस्माकं घनीभूतं संसृतिलक्षणं तापं नाशयन्त्याह्लादं [illegible] नन्दलक्षणं च प्रकटयन्तीत्यर्थः। शार्दूलविक्रीडितम् ॥ ४२ ॥ [ सारस्वतेति सरस्वत्या ऋगादिवेदत्रय्या इदं सारस्वतमेतादृशं यदुज्जृम्भणं विकसनं माप्यादिना [illegible] ख्यानमित्यर्थः। तदपि नवमभिनवमेवेत्यर्थः। कलयतः संपादयतः। स्वेति। [illegible] तप्रबोधेनेत्यर्थः। विधूतेति। निरस्तसंपूर्णाज्ञानस्येत्यर्थः। आसन्नेति। 'एत[illegible] वाक्षरं श्रेष्ठमेतद्ध्येवाक्षरं परम्' इत्यादिना कठवल्लीवाक्येन प्रणवस्यैव सर्वमन्त्रश्रेष्ठ[illegible] धानादासन्नः सर्वदा ध्येयत्वेन निकटस्तारः प्रणवो यस्य स तथेत्यर्थः। एतादृग्विशे[illegible] तुष्टयविशिष्टस्यात एव कलाधरस्य कं ब्रह्मसुखं लात्यादत्त इति कला अद्वैतविद्या [illegible] पष्टिकलास्तु प्रसिद्धा एव तस्यास्तासां च धरो धारकस्तस्येत्यर्थः। एतादृशस्य मुने[illegible] शीलस्य श्रीशंकराचार्यस्येति यावत्। प्रसन्नाः सुरम्याः पादक्रमाः पादप्रचाराः। [illegible] स्माकम्। घनतापन्नं गाढतामाप्तम्। एतादृशं तापं भवतापं त्वरितं शीघ्रं क्षिपन्ति [illegible] यन्ति। तथा मधुराः सन्तो घनतापन्नमाह्लादमपि कुर्वन्तीति योजना। कलाधर[illegible] चन्द्रपक्षे तु—'सरस्वान्सागरः' इत्यमरः। 'भं तारा' इत्यपि। 'पादा रश्म्यङ्घ्रितुर्यां[illegible] इति च। शिष्टं तु स्पष्टमेव। अत्र सारस्वतोज्जृम्भणे तावन्नवत्वमद्वैतमात्रपरत्वे[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नतिर्दत्ते मुक्तिं नतमुत पदं वेति भगव-
त्पदस्य प्रागल्भ्याज्जगति विवदन्ते श्रुतिविदः ॥
वयं तु ब्रूमस्तद्भजनरतपादाम्बुजरजः-
परीरम्भारम्भः सपदि हृदि निर्वाणशरणम् ॥ ४३ ॥

धवलांशुकपल्लवावृतं
विललासोरुयुगं विपश्चितः ॥
अमृतार्णवफेनमञ्जरी-
च्छुरितैरावतहस्तशस्तिभृत् ॥ ४४ ॥

---

तेन वेदव्याख्यातृषु प्राचीनेषु भट्टभास्करभर्तृप्रपञ्चादिषु भेदाभेदवादित्वेन रामानुजत्वतुच्छत्वं व्यज्यते । श्लेषादयोऽलंकाराः ] ॥ ४२ ॥

किं नतिर्नमस्कारो मुक्तिं ददात्यथवा नमस्कृतं भगवत्पादस्य पदमिति श्रुतिविदः प्रागल्भ्याज्जगति विवादं कुर्वन्ति तत्र वयं त्वेवं ब्रूमस्तस्य श्रीशंकरचरणस्य भजने सेवायां यो रतस्तस्य पादकमलस्य रजसो हृदय आलिङ्गनस्याऽऽरम्भस्तत्क्षणमेव मोक्षाश्रयमतो मुक्तिप्रद इत्यर्थः । शिखरिणी वृत्तम् ॥ ४३ ॥ [ श्रुतीति । वेदज्ञाः पुरुषाः । भगवदिति । भगं षड्गुणमैश्वर्यं विद्यते ययोस्तादृशे पदे यस्य स तथा तस्य श्रीशंकराचार्यस्येत्यर्थः ] [ प्रागल्भ्यात्प्रौढत्वात् ] [ निर्णयादिरलंकारः ] ॥ ४३ ॥

अथ तदीयमूरुयुगं वर्णयति—श्वेतवस्त्रलक्षणेन पल्लवेनाऽऽवृतं विपश्चित ऊरुद्वयं विललास शुशुभे । तद्विशिनष्टि—अमृतार्णवस्य क्षीरसमुद्रस्य फेनमञ्जर्या छुरितस्य व्याप्तस्यैरावतस्य हस्तस्य शुण्डायाः शस्तिं प्राशस्त्यं बिभर्तीति तथा । वियोगिनी वृत्तम् ॥ ४४ ॥ [ धवलेति । धवलः शुभ्रो योऽयमंशुकपल्लवो ब्रह्मचारिणां कौपीनोपरिष्टात्कट्यां वेष्टनीयो बहिर्वासस्तेनाऽऽवृतं वेष्टितमित्यर्थः ] [ अमृतेति । अमृतहेतुश्चासावर्णवश्चेति शाकपार्थिवादिवद्विगृह्य तस्य क्षीरसमुद्रस्य या फेनमञ्जरी फेनपरम्परा तया छुरितः परिवेष्टितत्वेन संबद्ध एतादृशो य ऐरावतहस्त ऐरावणशुण्डादण्डस्तस्य या शस्तिः प्रशस्तिस्तां बिभर्तीति तथेति ज्ञेयम् । एतेन समासपुनरात्तत्वमपि परास्तम् । अस्य कथं विललासेत्याकाङ्क्षापूरकत्वात् । विस्तरस्तु मदीये साहित्यसारादावेव बोध्यः । लुप्तोपमादिरलंकारः ] ॥

---

१ ख. रस्य च ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि हाटकवल्लरीत्रयी-
घटिता स्फाटिककूटभृत्तटी ॥
स्फुटमस्य तया कटीतटी
तुलिता स्यात्कलितत्रिमेखला ॥ ४५ ॥

आदाय पुस्तकवपुः श्रुतिसारमेक-
हस्तेन वादिकृततद्गतकण्टकानाम् ॥
उद्धारमारचयतीव विबोधमुद्रा-
मुद्बिभ्रतो निजकरेण परेण योगी ॥ ४६ ॥

सुधीराजः कल्पद्रुमकिसलयाभौ करवरौ
करोत्येतौ चेतस्यमलकमलं यत्सहचरम् ॥
रुचेश्चोरावेतावह्नि किमु रात्राविति भिया
निशादेराप्रातर्निजदलकवाटं घटयति ॥ ४७ ॥

---

सुवर्णवल्लीत्रयीयुक्ता स्फटिकमयस्य पर्वतस्य तटी यदि भवेत्तदा तया ताद[ृ]
कलिता संपादिता त्रिमेखला यस्यां साऽस्य श्रीशंकरस्य कटी तटी तुलिता स्यात् ॥४५॥
[ स्फाटिकेति । स्फटिकस्येमानि स्फाटिकानि तानि कूटानि 'अयोघने शैल[ाग्रे]
सीराङ्गे कूटमस्त्रियाम्' इत्यमराच्छृङ्गाणि तानि बिभर्तीति तथा तस्य तटी नि[तम्ब]
स्थलीत्यर्थः ] [ संभावनादिरलंकारः ] ॥ ४५ ॥

अथ तदीयकरौ वर्णयत्यादायेति द्वाभ्याम् । पुस्तकमेव वपुः शरीरं यस्य तच्छ्रु[ति]
सारमेकहस्तेन वामकरेण योग्यादाय ज्ञानमुद्रां तर्जन्यङ्गुष्ठसंयोजनरूपामुद्बिभ्रता
दक्षिणेन निजहस्तेन वादिकृतानां तस्मिञ्छ्रुतिसारे स्थितानां कण्टकानामुद्धारमारचयती[व]
त्प्रेक्षा । वसन्ततिलका वृत्तम् ॥ ४६ ॥ [ पुस्तकेति । पुस्तकरूपमित्यर्थः । श्रुति[सारम्]
उपनिषद्भागमिति यावत् ] [ अत्रोत्प्रेक्षया वस्तुतः श्रुतिसारे कण्टकसंचारलेशोऽपि [ना]
स्तीति द्योत्यते ] ॥ ४६ ॥

सुधीनां मध्ये राजत इति सुधीराट्तस्य श्रीशंकरस्यैतौ करवरौ कल्पद्रुम[...]
स्याविति यदा यत्सहचरं यत्तुल्यममलकमलं चेतसि करोति तदा रुचेः का[न्तेः चोरा]
वेतौ तत्रापि दिने किंवा रात्राविति भयेन रात्रौ चोराणामवकाश इति कृत्वा [नि]
सूर्यास्तमारभ्य सूर्योदयपर्यन्तं स्वदलात्मकं कपाटं घटयति योजयति । शि[खरिणी]
वृत्तम् ॥ ४७ ॥ [ पुनस्तावेव शिष्यादिमस्तकस्पर्शद्वारकयावत्तदभिलषित[...]
संवर्णयति—सुधीत्यादिशिखरिण्या ] [ कल्पेति । शिरस्पर्शमात्रेणैव यावदि[...]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रुचिरा तदुरःस्थली बभा-
वररस्फालविशालमांसला ॥
धरणीभ्रमणोदितश्रमा-
त्पृथुशय्येव जयश्रियाऽऽश्रिता ॥ ४८ ॥
परिघप्रथिमापहारिणौ
शुशुभाते शुभलक्षणौ भुजौ ॥
बहिरन्तरशत्रुनिग्रहे
विजयस्तम्भयुगीधुरंधरौ ॥ ४९ ॥
उपवीतममुष्य दिद्युते
बिसतन्तुक्रियमाणसौहृदम् ॥
शरदिन्दुमयूखपाण्डिमा-
तिशयोल्लङ्घनजाङ्घिकप्रभम् ॥ ५० ॥

---

रक्तत्वादिना सुरतरुशिखराङ्कुरसुरुचिरावित्यर्थः ] [ करेति । आजानुलम्बमानत्वात्कर-श्रेष्ठावित्यर्थः ] [ अत्र लुप्तोपमोत्प्रेक्षादयोऽलंकाराः ] ॥ ४७ ॥

अथ तस्योरःस्थलं वर्णयति—अररस्फालवत्कवाटफलकवद्विशाला चासौ मांसला मांस-व्याप्ता चातिमनोहरा तस्योरःस्थली बभौ शुशुभे । धरण्यां भूमौ भ्रमणेनोदिताच्छ्रमाज्ज-यलक्ष्म्याऽऽश्रिता शय्येवेत्यर्थः ॥ ४८ ॥ [ तदिति । तस्य श्रीभगवत्पादस्योरःस्थली वक्षोलक्षणा कृत्रिमभूमिरित्यर्थः । अररेति । 'कपाटमररं तुल्ये' इत्यमरादररवत्कपाट-वत्स्फाला रत्न्योः सावर्ण्यात्स्फारा विस्तीर्णा चासौ विशाला दीर्घा चासौ मांसला पुष्टा चेति तथेत्यर्थः ] [ तत्रोत्प्रेक्षते । धरणीत्याद्युत्तरार्धेन । पृथ्वीपरिभ्रमणसंजातश्रान्तेरित्यर्थः। एतेन विजयलक्ष्म्याः पृथ्व्यां न कुत्राऽपि विश्रान्तिलाभ इति ध्वन्यते ] पृथ्विति । विपुलविमलमृदुलशय्येव स्थितेति योजना । एतेन तत्र सितमसितोद्धूलितत्वेन शुक्लत्वमपि सूचितम् ] [ लुप्तोपमोत्प्रेक्षादयोऽलंकाराः ] ॥ ४८ ॥

अथ तदीयभुजौ वर्णयति—बहिरन्तरशत्रुनिग्रहे परिघप्रख्याततापहरणशीलौ परिघादधि-कतरप्रख्यातिमन्तौ विजयस्तम्भयुगलस्य धुरं भरत इति तौ [1] तच्छुस्यौ शुभलक्षणयुक्तौ श्रीशंकरस्य भुजौ शुशुभाते ॥ ४९ ॥ परिघेति । परिघस्य द्वाररोधककाष्ठविशेषस्य यः प्रथिमा पुष्टत्वं तदपहारिणौ तद्वत्परिपुष्टावित्यर्थः ] [ तत्रोत्प्रेक्षते बहिरित्याद्युत्तरार्धेन । बहिःशत्रवो भेदवादिनः । अन्तःशत्रवः कामादयः [ ॥ ४९ ॥ ]

अथ तदीयं यज्ञोपवीतं वर्णयति—बिसतन्तुभिर्मृणालतन्तुभिः क्रियमाणं सौहृदं

---

१ घ. तौ शु[?]।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समराजत कण्ठकम्बुराड्-
भगवत्पादमुनेर्यदुद्भवः ।।
निनदः प्रतिपक्षनिग्रहे
जयशङ्खध्वनितामविन्दत ।। ५१ ।।
अरुणाधरसंगताऽधिकं
शुशुभे तस्य हि दन्तचन्द्रिका ।।
नवविद्रुमवल्लरीगता
तुहिनांशोरिव शारदी छविः ।। ५२ ।।

---

येन तच्छरच्चन्द्रस्य किरणानां पाण्डिम्नः श्वेतताया अतिशयस्योल्लङ्घने जाङ्घिकाऽतिशे- वती प्रभा यस्य ।

'जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ'

इत्यमरः । तदमुष्य श्रीशंकरस्य यज्ञोपवीतं दिद्युते रेजे ।। ५० ।। [विशे- एतेन तत्सौक्ष्म्यसारल्यसितत्वस्निग्धत्वानि सूच्यन्ते ] [लुप्तोपमाप्रतीपादयोऽलंकाराः] ।। ५०

अथ तस्य कण्ठं वर्णयति—भगवत्पादमुनेः कण्ठात्मकशङ्खराजः सम्यगराजत । विशिनष्टि । य उद्भवः कारणमस्येति यदुद्भवो यत्कारणको यस्मादुद्भव उत्पत्तिर्- तथा यदुत्पन्न इति वा निनदो घोषः प्रतिपक्षाणां वादिरूपाणां शत्रूणां निग्रहे जयशङ्ख- ध्वनितां प्राप्तवान् ।। ५१ ।। [ भगवदिति । भगवन्तौ षड्गुणैश्वर्यशालिनौ पा- यस्य स चासौ मुनिर्मननशीलश्चेति तथा तस्येत्यर्थः । कण्ठेति । कण्ठ एव कम्बुः शङ्खश्रेष्ठः कण्ठः कम्बुराडिवेति वा रूपकलुप्तोपमादयोऽलंकाराः ] ।। ५१ ।।

अथ तस्य दन्तपङ्क्तिं वर्णयति—हि प्रसिद्धमरुणाधरसंगता तस्य दन्तचन्द्रिकाऽधि- शुशुभे । तत्र दृष्टान्तो नवविद्रुमो नवीनो रत्नवृक्षः ।

'विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्'

इति मेदिनी । तद्वल्लीगता हिमकिरणस्य शरत्कालिका छविः कान्तिर्यथा शो- तद्वदित्यर्थः ।। ५२ ।। [ अथास्य मन्दहासं स्तौति । अरुणेति । तत्रोल्लेखो- न वेति नूतनप्रवालमञ्जरीसंचरितेत्यर्थः । उत्प्रेक्षालंकारः ] ।। ५२ ।।

---

१ क. ख. घ. समरा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुकपोलतले यशस्विनः
शुशुभाते सितभानुवर्चसः ॥
वदनाश्रितभारतीकृते
विधिसंकल्पितदर्पणाविव ॥ ५३ ॥

समासीतस्याऽऽस्यं सुकृतजलधेः सर्वजगतां
पयःपारावारादजनि रजनीशो बहुमतात् ॥
सुधाधारोद्गारः सुसदृगनयोः किंतु शशभृ-
त्सतां तेजःपुञ्जं हरति वदनं तस्य दिशति ॥ ५४ ॥

---

अथ तदीयकपोलतले वर्णयति—सितभानोः शुभ्रांशोश्चन्द्रस्य वर्च इव वर्चस्तेजो यस्य तस्य यशस्विनः शोभने कपोलतले शुशुभाते । तथाभूतस्य वदनं मुखमाश्रिता या सरस्वती तस्याः कृते तदर्थं ब्रह्मणा संकल्पितौ संकल्पेनोत्पादितौ दर्पणाविव ॥ ५३ ॥ [भिन्नलिङ्गत्वं तु 'दर्पणे मुकुरादर्शौ' इत्यमराद्दर्पणशब्दस्य पुंलिङ्गत्वाद्यद्यपि प्रतीयते तथाऽपि—

'धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्'

इत्यादौ प्राचीनैरुत्प्रेक्षाप्रकरणे तथैवोदाहृतत्वादुपमायामेव तस्य दोषत्वमिति दिक् ] ॥ ५३ ॥

अथ तस्य मुखं वर्णयति—सर्वजगतां पुण्यमेव समुद्रस्तस्माद्बहुत्वेनाभिमताद्बहूनामभिमताद्वा तस्य श्रीशंकरस्य मुखं समासीत् । पयःपारावारात्क्षीरसमुद्राद्बहुमताद्रजनीशश्चन्द्रोऽजायत । अनयोरास्यचन्द्रयोः सुधाधाराया उद्गार उद्गमनं सुसदृक् सुसदृशः परं स्वयं विशेषः शशभृच्चन्द्रः सतां नक्षत्राणां तेजःपुञ्जं हरति तस्य मुखं सतां सज्जनानां तद्ददाति उपमेयाधिक्याभिधानाद्व्यतिरेकः ।

'व्यतिरेको विशेषश्चेदुपमानोपमेययोः'

इत्युक्ते । शिखरिणी वृत्तम् ॥ ५४ ॥ [ सर्वजगतामूर्ध्वमध्याधोभुवनानाम् । सुकृतेति । पुण्यार्णवादित्यर्थः ] [ बहुमताद्विष्णुशय्यास्थानत्वादिना सर्वसंमतादित्यर्थः ] [ सतां मुमुक्षूणां तेजःपुञ्जं हरति कामिनीवदनस्मारकत्वादिना विनाशयतीत्यर्थः । तस्य श्रीभगवत्पादस्य वदनं तु सतां तेजःपुञ्जमित्यनुकृष्यम् । दिशाति दृश्यमिथ्यात्वादिविवेकबोधनद्वारासमर्पयतीति संबन्धः ] ॥ ५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरा क्षीराम्भोधेरहह तनया यद्विषयता-
जुषो दीनस्याग्रे घनकनकधाराः समकिरत् ॥
इदं नेत्रं पात्रं कमलनिलयाप्रीतिवितते-
र्मुनीशस्य स्तोतुं कृतसुकृत एव प्रभवति ॥ ५५ ॥
दुर्वारप्रतिपक्षदूषणसमुन्मेषक्षितौ कल्पने
सेतोरप्यनघस्य तापसकुलैणाङ्कस्य लङ्कारयः ॥
आपन्नानतिकायविभ्रममुषः संसारिशाखामृगा-
न्पुष्णन्त्यच्छपयोब्धिवीचिवदलंकाराः कटाक्षाङ्कुराः ॥

---

अथ तदीयं नेत्रद्वंद्वं वर्णयति–पुरा । अहहेत्याश्चर्ये यस्य मुनीशनेत्रस्य विषयतां जुषते सेवत इति तथा तस्य दीनस्य ब्राह्मणकलत्रस्याग्रे क्षीरसमुद्रकन्या लक्ष्मीः स्याऽऽमलकाकारस्य सुवर्णस्य धाराः समकिरत् । तदिदं कमलालया लक्ष्मीस्तस्याः संततेः पात्रं मुनीशस्य नेत्रं स्तोतुं कृतपुण्य एव समर्थो भवति ॥ ५५ ॥ [ इदं बुद्धिस्थत्वात्साक्षिप्रत्यक्षम् । एतादृशं मुनीशस्य नेत्रं भगवत्पादलोचनम् । एतत् सामुद्रिकशास्त्रोक्तसव्यापसव्याङ्गयोरत्यन्तसाम्यलक्षणविश्ववन्द्यचिह्नत्वसूचनार्थमेव । दयोऽलंकाराः ] ॥ ५५ ॥

अथ मुनीशकटाक्षान्वर्णयति । यथा दुर्वारः प्रतिपक्षः शत्रुर्यो दूषणाख्यो राक्षस मुन्मेषस्य समुल्लासस्य क्षितौ क्षये ।

' क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम् '

इति मेदिनी । तन्निवासो यस्मिन्समुद्रे तत्र सेतोः कल्पने चानघस्य दुःख तापसगणशशाङ्कस्य तदाह्लादकस्य श्रीरामचन्द्रस्य लङ्काया राक्षसपुर्या अरयोऽच्छा ब्धितरङ्गवदलंकारा अतिकायादिराक्षसजनितसाध्वसमुषः कटाक्षाङ्कुरा आपन्नान् शाखामृगान्वानरान्पुष्णन्त्युज्जीवयन्ति । तथा दुर्वाराणां प्रतिपक्षाणां यानि दुर्वाराणि च तानि प्रतिपक्षदूषणानीति वा तेषां समुन्मेषस्य क्षितौ क्षये तन्निवासे यस्मिन्स्थाने वादिदूषणानि प्रसरन्ति तत्रेति यावत् । सेतोर्जलविधारकसेतुवत्तद्विधा समाधानलक्षणस्य कल्पनेऽप्यनघस्य तापसकुलचन्द्रस्य लङ्कानां शाकिनीनां वाऽरयः ।

' लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च '

इति मेदिनी । तथाभूता अतिकाये स्थूलादिदेहे य आत्माभिमानलक्षणो भ्रान्तिस्तं मुष्णन्तीति तथाऽतिकायस्य यो विभ्रम इति वाऽतिकायो विभ्रम इति वा तथाभूता अच्छपयोऽब्धिवीचिवदलंकाराः । कटाक्षाङ्कुरा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःशङ्कक्षतिरूक्षकण्टककुलं मीनाङ्कदावानल-
ज्वालासंकुलमार्तिपङ्किलतरं व्यध्वं धृतिध्वंसिनम् ॥
संसाराकृतिमामयच्छलचलद्दुर्वारदुर्वारणं
मुष्णन्ति श्रममाश्रिता नवसुधावृष्टायिता दृष्टयः ॥ ५७ ॥

---

मरणादिलक्षणापत्तिव्याप्तान्शरणगतानिति वा संसारिलक्षणाञ्शाखामृगान्पुष्णन्ति । संसाराख्यदुःखनिवृत्तिपूर्वकानन्दप्राप्तिलक्षणां पुष्टिं संपादयन्तीत्यर्थः । शार्दूलविक्रीडितम् ॥५६ ॥ [ सेतोरपि । अपिना तन्निराकरणपूर्वकं संसारसमुद्रोल्लङ्घनार्थं सूत्रभाष्यादिप्रस्थानत्रयलक्षणस्य सेतोरपि । कल्पने रचने । तापसेति । तापसास्तपस्विनस्तेषां कुलं वृन्दं तस्यैणाङ्कस्तत्प्रकाशत्वाच्चन्द्रस्तस्य श्रीमच्छंकराचार्यस्येत्यर्थः । लङ्केति ।

' राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः '

इति श्रुतेर्लङ्काशब्देनात्र राक्षसी प्रकृतिरेव लक्षणया विवक्षिता तस्या अरयः शत्रव इत्यर्थः । अच्छेति । अच्छः कालकूटाविर्भावेतरकालावच्छिन्नत्वेनातिनिर्मलो यः पयोधिः क्षीरसिन्धुस्तस्य या वीचयस्तत्तुल्यं यथा स्यात्तथेति क्रियाविशेषणम् । अलंकारा अलं परमानन्दावाप्त्या निरतिशयतृप्तिं कुर्वन्ति ते तथेत्यर्थः । एतेन तत्र शुक्लत्वस्निग्धत्वशिशिरत्वादि द्योतितम् । क्षीरोदलहरीणामपि तात्कालिकतृप्तिजनकत्वं युक्तमेव । कटाक्षेति । अङ्कुरोऽपि शुक्लः शिशिरः स्निग्धः कोमलश्चेति प्रसिद्धमेव । तथा च काटाक्षा एवाङ्कुराः कटाक्षा अङ्कुरा इवेति वा विग्रहः । तिर्यगवलोकनरूपापाङ्गदर्शनाभिधलोचनविलासा इत्यर्थः । संसारीति । संसारिण एव शाखामृगा मर्कटाः ' शाखामृगवलीमुखाः ' इत्यमरात्तानित्यर्थः । पुष्णन्त्यद्वैतात्मबोधेनापरिच्छिन्नतां नयन्तीति संबन्धः । पक्ष संसारीति । संसरन्तीतस्तत उड्डानं कुर्वन्ति ते तथा ते च ते शाखामृगाश्चेति तथा तान्वम्भ्रममाणवानरानित्यर्थः । पुष्णन्त्यतिकायमारणेन परिप्लुष्टान्कुर्वन्तीति योजना । अत्र वर्ण्यश्लेषोऽलंकारः ] ॥ ५६ ॥

नवसुधावृष्टिवदाचरन्त्यः श्रीशंकरस्य दृष्टय आश्रिताः सत्यः संसाराकारं श्रमं मुष्णन्ति । तं विशिनष्टि । निःशङ्का आकस्मिकाः क्षतय एव रूक्षकण्टकास्तेषां कुलानि यस्मिन्पुनश्च कामलक्षणदावाग्निज्वालया व्याप्तमार्तिलक्षणकर्दमेनातिशयेन व्याप्तं विरुद्धो विकटो वाऽधर्मलक्षणोऽध्वा मार्गो यस्मिन्धृतिध्वंसिनं धैर्यनाशकमामया रोगास्तच्छलेन चलन्तो दुर्वारा वारणा गजा यस्मिंस्तथाभूतं संसाराकृतिं श्रममित्यर्थः ॥ ५७ ॥ [ नवेति । नवाऽभिनवा सायुज्यमुक्तिप्रदत्वाद्विचित्रा चासौ सुधाऽमृतं

---

१ ख. ग. 'तिरक्ष°' । २ ग. °ना॰शाख°' । ३ ख. घ. 'व रुक्ष°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिपुण्ड्रं तस्याऽऽहुः सितभसितशोभि त्रिपथगां
कृपापारावारं कतिचन मुनिं तं श्रितवतीम् ॥
वयं त्वेतद्ब्रूमो जगति किल तिस्रः सुरुचिरा-
स्त्रयीमौलिव्याकृत्युपकृतिभवाः कीर्तय इति ॥ ५८ ॥
असौ शम्भोर्लीलावपुरिति भृशं सुन्दर इति
द्वयं संप्रत्येतज्जनमनसि सिद्धं च सुगमम् ॥
यदन्तः पश्यन्तः करणमदसीयं निरुपमं
तृणीकुर्वन्त्येते सुपममपि कामं सुमतयः ॥ ५९ ॥

---

तस्य वृष्टिवदाचरिता इत्यर्थः । ] [ मीनाङ्केति । मीनो मत्स्योऽङ्के ध्वजे य
तथा स एव दावानलो मदनदावाग्निस्तस्य या ज्वालास्तरुणीलक्षणाः शिखास्ताभिः
व्याप्तस्तमित्यर्थः । उक्तं हि वृद्धयोगवासिष्ठे—

'केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम्'

इति । आर्तीति । आर्तिराध्यात्मिकादित्रिविधपीडा सैव पङ्कः कर्दमस्तत्र
निमग्नस्तमित्यर्थः । अत एव । व्यध्वं विगतोऽध्वा मार्गो यस्य स तथा तम्
धृतीति । धृतेर्धैर्यस्य यो ध्वंसः सोऽस्यास्तीति तथा तमित्यर्थः । पित्तज्वरविशेषे
भ्रमो भवतीति प्रसिद्धमेव ] ॥ ९७ ॥

अथ त्रिपुण्ड्रं द्विधोत्प्रेक्षते—तस्य श्रीशंकरस्य सितभसितशोभि श्वेतभस्मना
त्रिपुण्ड्रं त्रिरेखात्मकं विभूतितिलकं कृपासिन्धुं तं मुनिमाश्रितवतीं त्रिमार्गगां गङ्गां
कविवर्या आहुर्वयं त्वृग्यजुःसामाख्यवेदत्रयीशिरसामुपनिषदां व्याकृतयो व्याख्या
तान्येवोपकृतय उपकारास्ततो भवा जाताः सुरुचिरा अतिसुन्दरास्तिस्रः कीर्तय
इत्यर्थः । शिखरिणी वृत्तम् ॥ ९८ ॥ [ सितेति । सितभसितेन शुभ्रभौतभस्मना
तत्तथा । एतादृशं कर्म । कृपेति । करुणासमुद्राम् । एतादृशीम् ] [ त्रयीति ।
शब्दितनिखिलवेदमुकुटीभूतोपनिषत्तदुपयुक्तस्मृतिसूत्रव्याख्यानलक्षणोपकारजन्या इ
जगति त्रिलोक्याम् । एवं च कीर्तिस्तावदेकैव तथाऽप्यवच्छेदकीभूतोध्वादिलोक
त्रैविध्यमापन्नेति भावः । सुरुचिरा अत्यन्तावदाताः । एतेन चन्द्रिकायामिव
व्युदस्तः ] ॥ ९८ ॥

एवं प्रत्येकमङ्गान्युपवर्ण्य तद्वपुर्वर्णनमुपक्रमते—असौ श्रीशंकरः शंभोः
यिनो लीलाविग्रह इति भृशमतिशयेन सुन्दर इति चैतद्द्वयमिदानीं जनानां
सुगमं यथा स्यात्तथा सिद्धं यद्यस्माददसीयममुष्य निरुपमं करणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशै-
स्त्रातुं लोकान्भवदवशिखातापपापच्यमानान् ॥
मुक्त्वा मौनं वटविटपिनो मूलतो निष्पतन्ती
शम्भोर्मूर्तिश्चरति भुवने शंकराचार्यरूपा ॥ ६० ॥
उच्चण्डाहितवावदूककुहनापाण्डित्यवैतण्डिकं
जाते देशिकशेखरे पदजुषां संतापचिन्तापहे ॥
कातर्थं हृदि भूयसाऽकृत पदं वैभाषिकादेः कथा-
चातुर्थं कलुषात्मनो लयमगाद्वैशेषिकादेरपि ॥ ६१ ॥

---

पश्यन्तो जनाः सुपमं सुन्दरमपि कामं मन्मथं तृणी कुर्वन्ति । कामविजयिशंभ्ववतार-भूतशंकरशरीरस्यातिसुन्दरस्यान्तःसंदर्शनेन तृणवदतिक्षुद्रं कुर्वन्तीत्यर्थः ॥ ५९ ॥ [ असाविति । तत्र हेतुः—यदित्याद्युत्तरार्धेन । सुमतयो मुमुक्षवः । काव्यलिङ्गादि-रलंकारः ] ॥ ५९ ॥

किंचाज्ञानान्तर्गहनेऽज्ञानलक्षणकाननमध्ये पतितान्भवः संसार एव दवो दावाग्निस्तस्य शिखानां पुत्रस्त्रीधनादिवियोगरूपाणां तापेन पापच्यमानान्भृशं दंदह्यमानानात्मविद्योपदेशै-स्त्रातुं मौनं त्यक्त्वा वटवृक्षस्य मूलान्निष्पतन्त्यवतरन्ती शंकराचार्यरूपा शंभोर्मूर्तिर्भुवने विच-रतीति योजना । मन्दाक्रान्ता वृत्तम् ॥ ६० ॥ [ अज्ञानमेवान्तर्गहनं ' गहनं काननं वनम् ' इत्यमरादभ्यन्तरारण्यम् । भवः संसार एव दवो ' दवदावौ वनानलौ ' इति मेदिन्याः काननवह्निः । आधिक्याभेदरूपकमलंकारः ] ॥ ६० ॥

किंच देशिकशेखरे श्रीशंकर उच्चण्डानामतिकोपनानामहितानां वावदूकानां जल्पनशी-लानां कुहनाऽतत्त्व आचारभेदस्य संभावना । ' कुहना लोभान्मिथ्येर्यापथकल्पना ' इत्य-मरः । तस्यास्तया वा यत्पाण्डित्यं तद्वितण्डा स्वपक्षस्थापनहीना विजिगीषुकथा तस्यां भवं वैतण्डिकं यथा स्यात्तथा पदसेविनां संतापचिन्ताविनाशके जाते सति वैभाषिकादे-र्हृदि कातर्यं भूयसा बाहुल्येन पदं स्थानमकृत । तथा कलुषान्तःकरणस्य वैशेषिकादेः कथा-चातुर्यं लयमगात् । आदिपदं सौत्रान्तिकयोगाचार्यमाध्यमिकजैनचार्वाकानाह । द्वितीयं तत्सांख्यमीमांसकपातञ्जलनैयायिकादीनाह । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

---

१ ख. °थिशंक° । २ ख ग. °रस्या° । ३ क. ख °दने प° । ४ ख. °नानात्म° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अमुना क्रतवः प्रसाधिताः
क्रतुविभ्रंशकरः स शंकरः ॥
इयमेव भिदाऽनयोर्जित-
स्मरयोः सर्वविदोर्बुधेड्ययोः ॥ ६२ ॥

कलयाऽपि तुलानुकारिणं
कलयामो न वयं जगत्त्रये ॥
विदुषां स्वसमो यदि स्वयं
भविता नेति वदन्ति तत्र के ॥ ६३ ॥

भुवनान्त इवामरद्रुमा
अमरद्रुष्विव पुष्पसंचयाः ।
भ्रमरा इव पुष्पसंचये-
ष्वतिसंख्याः किल शंकरे गुणाः ॥ ६४ ॥

---

अमुना शंकराचार्यमूर्तिना शंकरेण वैदिकपथस्थापनेन क्रतवो यज्ञाः प्रकर्षेण स[illegible] कैलासनिलयः शंकरो दक्षयज्ञध्वंसकरत्वेन क्रतुविभ्रंशकरो यज्ञनाशकर इतीयमेवान[illegible] दाऽयमेव भेदोऽन्यत्तु सर्वं समानमित्येवकारव्यावर्त्यप्रदर्शनायाऽऽह—जितकामयोः [illegible] विदोः सर्वज्ञयोर्बुधैः पण्डितैर्देवैश्च स्तुत्ययोरित्यर्थः । वियोगिनीवृत्तम् ॥ ६२ ॥ [ ' सप्ततन्तुर्मखः क्रतुः ' इत्यमराद्यज्ञाः । प्रसाधिता वेदप्रामाण्यप्रतिपादनद्वारा स[illegible] इत्यर्थः । रूपकविशेषोऽलंकारः ] ॥ ६२ ॥

जगत्त्रये ये विद्वांसस्तेषां मध्ये कलयाऽपि तुल्यं साहश्यमनुकरोतीति तुला[illegible] तथाभूतं वयं न कलयामो न चिन्तयामो न मन्यामह इति वा ।

' रामरावणयोर्युद्धं रामरावणयोरिव '

इति स्वयमेव स्वसदृश इति चेत्तत्राऽऽह—यदि स्वयं स्वसमः स्यात्तर्हि तत्र [illegible] वदन्ति न केऽपीत्यर्थः ।

' उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ' । अनन्वयालंकारः ॥ ६३ ॥ [ अन[illegible] लंकारः । तदुक्तम्—

' उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वये ' ] ॥ ६३ ॥

स्वर्गवनमध्ये यथा देवद्रुमा अमरद्रुषु देववृक्षेषु यथा पुष्पसंचयाः पुष्पसंचये[illegible] भ्रमरा एते सर्वे संख्यामतिक्रान्तास्तथा शंकरे गुणाः संख्यारहिताः किलेति [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कामं वस्तुविचारतोऽच्छिनदयं पारुष्यहिंसाक्रुधः
क्षान्त्या दैन्यपरिग्रहानृतकथालोभांस्तु संतोषतः ॥
मात्सर्यं त्वनसूयया मदमहामानौ चिरंभावित-
स्वान्योत्कर्षगुणेन तृप्तिगुणतस्तृष्णां पिशाचीमपि ॥६५॥

---

' गृहीतमुक्तरीत्याऽर्थश्रेणिरेकावलिर्मता ' ॥ ६४ ॥

[ भुवनान्त इवेति । नन्दनवनप्रान्त इत्यर्थः । एकावल्यनुप्राणितोपमालंकारः । तदुक्तम्—

' गृहीतमुक्तरीत्याऽर्थश्रेणिरेकावलिर्मता ।
नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भदोलिनौ ॥
दोःस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ ।
जानुनी रत्नमुकुरसाकारे तस्य महीभुजः ' इति ।

' अन्तः प्रान्तेऽन्तिके नाशे ' इत्यमरः ] ॥ ६४ ॥

कामं विषयाभिलाषं वस्तुविचारतः काम्यवस्तुदोषविचारेणायं श्रीशंकरोऽच्छिनत् । तथा पारुष्यं कठोरभाषणं हिंसा वृत्तिच्छेदादिना परपीडा क्रुत्क्रोधस्तान्क्षान्त्या परैराकृष्टे ताडितेऽप्यविकृतचित्तता क्षान्तिस्तयाऽच्छिनत् । दैन्यं पदार्थालाभे लब्धपरिक्षये च दीनता परिग्रहः संचयोऽनृतकथा मृषाभाषणं लोभः परद्रव्येषु लुब्धता तीर्थेषु धनात्यागश्च तांस्तु संतोषेणाच्छिनत् । परोत्कर्षासहनं मत्सरस्तस्य भावो मात्सर्यं तत्त्वनसूयया परगुणेषु दोषाविष्करणमसूया तद्वर्जनेनाच्छिनत् । मदो गर्वो धर्मातिक्रमहेतुर्महामानः स्वस्मिन्नतिपूज्यत्वाभिमानस्तौ चिरं दीर्घकालं भावितश्चिन्तितः स्वस्मादन्योत्कर्ष एव गुणस्तेनाच्छिनत् । इदं मे स्यादिदं मेस्यादित्येवंरूपां तृष्णालक्षणां पिशाचीमपि सम्यक्तृप्तिलक्षणेन गुणेनाच्छिनत् । शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥ [ काममिति । कामोऽत्र स्त्रीसंभोगविषयेच्छाविशेष एव तस्योच्छेदो हि तदालम्बनीभूतजीवस्त्रीशरीरलक्षणवस्तुविचारेणैवेत्यानुभविकमेव । तथाहि—संघातविशेषस्यैवोक्तकामिनीव्यक्तित्वेन संघातिनां त्वगादिपदार्थानां बुद्धया पृथग्विवेचने कृते संघातवैचित्र्याप्रतीत्या सद्य एव तदुपभोगेच्छाविच्छेद इति । विस्तरस्तु वृहद्वासिष्ठीयवैराग्यप्रकरण एव बोध्यः । क्रम एवालंकारः ] ॥ ६५ ॥

---

१ क. ख. 'र्थं त्वन॰'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कामं यस्तु समूलघातमवधीत्स्वर्गापवर्गापहं
रोषं यः खलु चूर्णपेषमपिषन्निःशेषदोषावहम् ॥
लोभादीनपि यः परांस्तृणसमुच्छेदं समुच्चिच्छिदे
स्वस्यान्तेवसतां सतां स भगवत्पादः कथं वर्ण्यते ॥ ६६ ॥
केऽमी कान्त दिवा निशाकरकरा घर्मस्य मर्मच्छिदो
मुग्धे शंभुनवावतारसुगुरोरेते गुणानां गणाः ॥
कस्मादुत्पलसंततिर्विकसिता विस्मेरदिग्योषिता-
मेषाऽपाङ्गझरीतिदिग्गजवधूप्रश्नोत्तरे रेजतुः ॥ ६७ ॥

---

शिष्याणामपि कामादीन्यः समूलमुदमूलयत्तस्मिंस्तेषां स्थितिः कथं स्यादित्य नाऽऽह—काममिति। यस्तु स्वस्यान्तेवसतां शिष्याणां सतां कामं स्वर्गमोक्षयो समूलघातमवधीत्समूलं नाशितवान्। 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यनेन ण 'कषादिषु यथाविध्यनुप्रयोगः' इत्यनेन हन्तेरनुप्रयोगः। तथा यः खलु समस्तदो रोषं क्रोधं चूर्णपेषमपिषच्चूर्णमपिषत्। 'शुष्कचूर्णरूक्षेषु पिषः' इत्यनेन णमुल्। लोभादीनपि परान्शत्रूंस्तृणसमुच्छेदं समुच्चिच्छिदे तृणवत्समुच्चिच्छिदे। 'उपमाने क च' इति णमुल्। स एवंभूतः पूज्यपादः कथं वर्ण्यते। केनापि प्रकारेण वर्णयि शक्यत इत्यर्थः ॥ ६६ ॥

दिग्गजतद्वध्वोः प्रश्नोत्तरे वर्णयन्नादौ वधूकर्तृकं प्रश्नमुदाहरति—क इति। हे दिवा दिवसे घर्मस्य ग्रीष्मदिनप्रयुक्तसंतापस्य मर्मणां छेदका निशाकरस्य चन्द्रस्य किरणा अत्यन्तासंभाविता अमी उपलभ्यमानाः के किं निशाकरकरा एवेत्य किंचिदेवं कान्तया पृष्टो दिग्गज उवाच हे मुग्धे शंभोर्नवावतारस्य सुगुरोः श्रीशं र्यस्य गुणानां गणा एवं दिग्गजकर्तृकमुत्तरमुपवर्ण्य पुनस्तत्कान्ताकृतं प्रश्नमाह— तर्हि निशाकरकरैर्विकसनशीलानामुत्पलानां नीलकमलानां संततिः कस्माद्विकसिता प्रश्नैवं पृष्टस्तत्कान्त उवाच—हे मुग्धे नेयं नीलोत्पलसंततिरपि तु शंकराचार्यगुणश्र राणां विस्मयशीलानां दिगङ्गनानामेषा कटाक्षाणां झरीत्येवंलक्षणे दिग्गजवधूप्र रेजतुरित्यर्थः।

'भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे' ॥ ६७ ॥

[ केऽमी इति। हे मुग्धेऽङ्कुरितयौवने स्वरमणि। अमी प्रत्यक्षतयोपलभ्य क इति प्रश्नः। भोः कान्तामी इत्यनुकृष्यम्। घर्मस्योष्मागमस्य मर्मस्त स्तारः। एतादृशाः। दिवाऽपि दिवसेऽपि। निशाकरकराश्चन्द्रकिरणाः स्वर्गी बन्धः। उत्तरमिदम्। हे मुग्ध इति साभिप्रायं विशेष्यमेव। दिवाऽपि घर्मस्य स्पृशो निशाकरकराः कथं संभाव्यन्ते तर्हि क एते तथा प्रतीयमाना इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाक्ष्णा माक्षिकमीक्षितं क्षणमपि द्राक्षा मुहुः शिक्षिता
क्षीरेक्षू समुपेक्षितौ भुवि यया सा शंकरश्रीगुरोः ॥
कान्तानन्तदिगन्तलङ्घनकलाजङ्घालतत्तद्गुण-
श्रेणी निर्भरमाधुरीमदधुरा धन्येति मन्यामहे ॥ ६८ ॥
क्षान्तिश्चेद्वसुधा जहातु महतीं सर्वंसहत्वप्रथां
विद्या चेद्विरहन्तु षण्मुखमुखाः स्वाखर्वगर्वावलीम् ॥
वैराग्यं यदि बादरायणियशः कार्श्यं परं गाहतां
किं जल्पैर्मुनिशेखरस्य न तुलां कुत्रापि वीक्षामहे ॥ ६९ ॥

---

शंभ्विति । शंभोः श्रीशंकरस्य नवः प्राचीनदुर्वासःप्रभृत्यवतारापेक्षयाऽभिनव एतादृशो योऽवतारो लीलाविग्रहविशेषावच्छिन्नचैतन्यविशेषः स चासौ सुगुरुः शुद्धाद्वैतब्रह्मविद्यामात्रोपनिषदेकरहस्योपदेष्टा तस्य श्रीशंकराचार्यस्येत्यर्थः । शिष्टं तु पूर्वार्धे सरलमेव ] [ अतिशयोक्तिगर्भितभ्रान्तिरेवालंकारः ] ॥ ६७ ॥

यया माक्षिकं मधु क्षणमात्रमप्यक्ष्णा नेत्रेण नेक्षितं न दृष्टं द्राक्षा तु बहुवारं शिक्षिता क्षीरेक्षू तु भुवि सम्यगुपेक्षितौ सा निर्भरमाधुर्या अत्यर्थमधुरताया मदेन धुरा श्रेष्ठा निर्भरमाधुर्या मदो येषां तेभ्यो धुरेति वा । कान्ता चासावनन्तदिगन्तलङ्घनकलायां जङ्घालानामतिवेगवतां तत्तद्गुणानां श्रेणी पङ्क्तिर्धन्येति मन्यामहे । तथाभूतगुणपङ्क्तिलक्षणा कान्तेति वा ॥ ६८ ॥ [ नाक्ष्णेति । यया करणीभूतया । जनैरित्यार्थिकम् । माक्षिकं क्षौद्रमक्ष्णाऽपि क्षणमपि नेक्षितम् । तथा—द्राक्षा मुहुर्भूयः शिक्षिता त्वयैतस्याः सकाशान्माधुर्यसंपादनं कार्यमित्यनुशासितेत्यर्थः । तथा—क्षीरेक्षू इत्यादि । कान्तेत्यादि । कान्ताः स्वसंनिकर्षमात्रेणैव प्राङ्मलिना अपि कर्पूरामोदनोपरा इवैतादृशा येऽनन्तदिगन्तास्तत्तद्ब्रह्माण्डावच्छेदेनासंख्यातदिक्प्रान्तास्तेषां या लङ्घनकलासमतिक्रमणयुक्तिस्तस्यां जङ्घाला 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमराद्वेगवत्तरा एतादृशा ये तत्तद्गुणास्ते च ते गुणाश्च ते तथा नानाविधा लौकिकविद्यावैराग्यवैभवादिधर्मास्तेषां याः श्रेण्यः पङ्क्तयस्तासां यो निर्भर उत्कर्षस्तस्य माधुरीत्यर्थः । अस्तीति शेषः । इति वयं मन्यामह इत्यन्वयः । तत्र हेतुं वदंस्तां विशिनष्टि—मदेति । मदस्य माक्षिकादिप्रतिक्षेपदक्षत्वजन्यगर्वस्य या धुरी परा काष्ठा तया धन्या सर्वमान्येति यावत् । प्रतीपविशेषोऽलंकारः ] ॥ ६८ ॥

मुनिशेखरस्य क्षान्तिश्चेत्तर्हि वसुधा भूमिर्महतीं सर्वंसहत्वख्यातिं जहातु तथा तस्य विद्या चेत्तर्हि स्कन्दप्रमुखाः स्वामनल्पगर्वावलीं त्यजन्तु तथा तस्य वैराग्यं चेत्तर्हि

---

१ क. °खाः स्वां सर्व° । २ ख. ग. घ. °ङ्क्तिश्चेति सा धन्ये° । क. °ङ्क्तिश्च धन्ये° । ३ ग. °क्षणका° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या मूर्तिः क्षमया मुनीश्वरमयी गोत्रासगोत्रायते
विद्याभिर्निरवद्यकीर्तिभिरलं भाषाविभाषायते ॥
भक्ताभीप्सितकल्पनेन नितरां कल्पादिकल्पायते
कस्तां नान्यपृथग्जनैस्तुलयितुं मन्दाक्षमन्दायते ॥ ७० ॥
न बभूव पुरातनेषु त-
त्सदृशो नाद्यतनेषु दृश्यते ॥
भविता किमनागतेषु वा
न सुमेरोः सदृशो यथा गिरिः ॥ ७१ ॥

---

बादरायणेः शुकस्य यशः कार्श्यं परं गाहतां प्राप्नोतु । किं बहुजल्पैर्मुनिशेखरस्य शंकरस्य तुलामुपमां कुत्रापि न वीक्षामहे । अत्र त्यागस्य सकृद्धर्मस्य प्रतिपादनात्तुल्ययोगिताऽलंकारः ।

' नियतानां सकृद्धर्मः स पुनस्तुल्ययोगिता ' इत्युक्तेः ॥ ६९ ॥

[ मुनिशेखरस्य मननशीलसार्वभौमस्य श्रीशंकराचार्यस्येत्यपकृष्यात्रापि योज्यम् ] ॥ ६९ ॥

किंच या मुनीश्वरमयी मूर्तिः क्षमया गोत्रासगोत्रायते गोत्राया भूमेः सगोत्रं सजातीयं तद्वदाचरति भूमिसाम्यं लभते । तथा या मुनीश्वरमयी मूर्तिर्निरवद्या निर्दोषा कीर्तिर्यासां ताभिस्तथाभूताभिर्विद्याभिरलमत्यन्तं भाषाविभाषायते भाषायाः सरस्वत्या विभाषा विकल्पस्तद्वदाचरति विकल्पेन सरस्वतीभावं प्राप्नोतीव । तथा या मुनीश्वरमयी मूर्तिर्भक्ताभीप्सितस्य साधनेनात्यन्तं कल्पादिकल्पायते कल्पवृक्षचिन्तामण्यादिसदृशवदाचरति तत्साम्यं प्राप्नोति तां मुनीश्वरमयीं मूर्तिमन्यैः प्राकृतजनैस्तुलयितुं को वा न मन्दाक्षमन्दायते मन्दाक्षेण लज्जया मन्दो मन्दाक्षमन्दस्तद्वदाचरत्यपि तु सर्वोऽपीत्यर्थः ॥ ७० ॥ [ भाषेत्यादि । ' ब्राह्मी तु भारती भाषा ' इत्यमराद्भाषायाः सरस्वत्या विभाषायते विकल्पवत्तुल्यबलतया व्रीहिभिर्वा यवैर्वा यजेतेत्यादिवत्सरस्वतीकार्यकारिणी भवतीत्यर्थः ] ( उपमाविशेषोऽलंकारः ) ॥ ७० ॥

पुरातनेष्वतीतेषु श्रीशंकरतुल्यो न बभूवाद्यतनेषु वर्तमानेषु नैव दृश्यतेऽनागतेषु भविष्येषु किं वा भविताऽपि तु नैव भविष्यति । यथा कालत्रयेऽपि सुमेरोः सदृशो गिरिर्न तद्वत् । वियोगिनी वृत्तम् ॥ ७१ ॥ [ न बभूवेति । अनन्वयानुप्राणितोऽलंकारः ] ॥ ७१ ॥

---

१ ख. घ. 'भिर्यासां वा तथा । २ क. वैतालीयं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समशोभत तेन तत्कुलं
स च शीलेन परं व्यरोचत ॥
अपि शीलमदीपि विद्यया
ह्यपि विद्याविनयेन दिद्युते ॥ ७२ ॥
सुयशःकुसुमोच्चयः श्रय-
द्विबुधालिर्गुणपल्लवोद्गमः ॥
अवबोधफलः क्षमारसः
सुरशाखीव रराज सूरिराट् ॥ ७३ ॥
न च *शेषभवी न कापिली
गणिता काणभुजी न गीरपि ॥
फणितिष्वितरासु का कथा
कविराजो गिरि चातुरीजुषि ॥ ७४ ॥

तेन श्रीशंकरेण तस्य कुलं सम्यक्शोभां प्राप्तवत्स च श्रीशंकरः शीलेन साधुस्वभावेन शुचिचरितेन वाऽत्यन्तमशोभत शीलमपि विद्यया दीप्तिमद्भूद्विद्याऽपि विनयेन नम्रीभावेन शुशुभे ॥ ७२ ॥ [ समशोभतेति । दिद्युते दीप्ता बभूवेत्यर्थः । एकावल्यलंकारः ] ॥ ७२ ॥

किंच सूरिराट्पण्डितराजः श्रीशंकरः कल्पवृक्षो यथा राजते तथा रराज यतः शोभन-यशोलक्षणपुष्पाणामुच्चयो निचयो यस्मिन् । श्रयन्त आश्रयन्तो विबुधाः पण्डिता एवालयो भ्रमरा यस्मिन्श्रयतां पण्डितलक्षणानां देवानामालिः पङ्क्तिर्यत्रेति वा गुणलक्ष-णानां पल्लवानामुद्गम उद्भवो यस्मादवबोधस्तत्त्वज्ञानमेव फलं यस्मिन्क्षमैव रसो यस्मिन्नत इत्यर्थः ॥ ७३ ॥ [ पूर्णोपमालुप्तोपमारूपकश्लेषाश्चालंकारः ] ॥ ७३ ॥

किंच कविराजः श्रीशंकरस्य गिरि वाण्यां चातुरीं सेवितवत्यां सत्यां पातञ्जली वाणी न च गणिता न च कापिली गीर्गणिता नाऽपि काणादी गीर्गणिताऽन्यासु नास्तिकानां गीर्षु का कथा ॥ ७४ ॥ [ कवीति । कवीषु वाल्मीक्यादिषु मध्ये राजत इति तथा तस्य सकलकविशिरोमणेः श्रीभगवत्पादस्येत्यर्थः ] [ शेषेति । शेषात्तदवतारात्पतञ्जले-र्भवो यस्याः सा तथेत्यर्थः । योगशास्त्रं हि पतञ्जलिप्रणीतमिति तु प्रसिद्धमेव ] [ काणेति । कणभुक्संबन्धिनीत्यर्थः ] [ काव्यार्थापत्तिरलंकारः । तदुक्तम्—

'कैमुत्येनार्थसंपत्तिः काव्यार्थापत्तिरुच्यते ।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्' इति ] ॥ ७४ ॥

* सर्वेष्वप्यादर्शपुस्तकेष्वेवमेव दृश्यते गौरादेराकृतिगणत्वाच्च ङीषिति बोध्यम् ।

१ ख. घ. प्राऽऽप स च । २ क. घ. 'न्तश्चाऽऽश्र' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भट्टभास्करविमर्ददुर्दशा-
मज्जदागमशिरःकरग्रहा ॥
हन्त शंकरगुरोर्गिरः क्षर-
न्त्यक्षरं किमपि तद्रसायनम् ॥ ७५ ॥
जाटाटङ्कजटाकुटीरविहरन्नैलिम्पकल्लोलिनी-
क्षोणीशप्रियकृन्नवावतरणावष्टम्भगुम्फच्छिदः ॥
गर्जन्तोऽवतरन्ति शंकरगुरुक्षोणीधरेन्द्रोदरा-
द्वाणीनिर्झरिणीझराः क्व नु भयं दुर्भिक्षुदुर्भिक्षतः ॥ ७६

किंच भट्टभास्कराख्येन सर्वशंकरवादिना यो विमर्दस्तेन दुर्दशायां मज्जतामागमशि-रसां वेदान्तानां करग्रहा हस्तावलम्बिन्य उद्धारिका इति यावत् । एवंभूताः श्रीशंकर-गिरो हन्तेत्याश्चर्ये हर्षे वा किमपि वक्तुमशक्यं तत्प्रख्यातं परमरसाश्रयभूतमक्षरं स्रवन्ति । 'रो नराविह रथोद्धता लगौ' ॥ ७५ ॥ [ शंकरेति । श्रीमद्भगवत्पादस्येत्यर्थः ] [ किमप्यद्वैतब्रह्मात्मैक्यत्वादवाङ्मनसगम्यम् । एतादृशम् । तन्निरुक्ताद्वैरूपम् । रसेति । रसस्य पद्मसवरतरस्य मधुररसस्यायनं स्थानं तथा यावन्मधुराधिभूतममृतामित्यर्थः । पक्षे रसस्य पारदस्यायनमाश्रयीभूतं नवरत्नमृगाङ्कादि—

'रसायनं विषेऽपि स्याज्जराव्याधिभिदौषधे'

इति मेदिन्याः प्रसिद्धमेवेति यावत् । अत एव—अक्षरमविनाशिफलमित्यर्थः । स्रवन्ति वर्षन्तीति योजना । जलादौ मग्नस्योद्धरणोत्तरं तद्दुःखस्योपशान्त्यर्थं प्रयच्छन् लोके प्रसिद्धमेवेति भावः । रूपकादिरलंकारः ] ॥ ७५ ॥

जटाटङ्कस्य शिवस्य जटालक्षणेषु कुटीरेषु ह्रस्वकुटीषु 'कुटीशमीशुण्डाभ्यो रः' रः । विहरन्ती या नैलिम्पकल्लोलिनी निलिम्पानां देवानामिदं नैलिम्पं त्रिविष्टपं तरङ्गिणी गङ्गा तस्याः क्षोणीशस्य राज्ञो भगीरथस्य प्रियकृद्यदपूर्वमवतरणं तेनावष्टम्भगुम्फः स्तम्भानां ग्रन्थनं तं छिन्दन्तीति तथा ते गर्जनां कुर्वन्तः श्रीशंकरगुरुलक्षणस्य भूमिधरेन्द्रस्य हिमालयस्योदराद्वाणीलक्षणाया निर्झरिण्यास्तरङ्गिण्या झराः प्रवाहा अवतरन्ति यत एवमतो दुष्टभिक्षुलक्षणदुर्भिक्षतः क्व नु भयं क्वापि नास्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ७६ ॥ [ जाटाटङ्केति । 'धूर्जटिर्जटाटङ्काव्ययाः' इति त्रिकाण्डशेषे जटाटङ्केति शिवनामपर्यायाज्जटाटङ्कः स्तस्यायं जाटाटङ्कः स चासौ जटालक्षणः कुटीरः 'कुटीरोऽल्पकुटी स्त्रियाम्' इ-

१ क. ख. 'टाटीरञ्र°' । ग. °टारीरज' । २ ग. घ. 'वंसंक°' । ३ क. ख. जाटाटीरस्य जाटा टीरस्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वारी चित्तमतङ्गजस्य नगरी बोधात्मनो भूपते-
र्दूरीभूतदुरन्तदुर्वदझरी हारीकृता सूरिभिः॥
चिन्तासंततितूलवातलहरी वेदोल्लसच्चातुरी
संसाराब्धितरीरुदेति भगवत्पादीयवाग्वैखरी॥ ७७॥

---

धानादल्पगृहविशेषश्चेति तथाऽत्र विहरन्ती या निलिम्पानां शोभा 'निलिम्पा द्युपदः' इति त्रिकाण्डशेषाद्देवानामियं नैलिम्पा नैलिम्पी वा सा चासौ कल्लोलिनी नदी चेति तथा तस्याः स्वर्धुन्याः क्षोणीशो भगीरथाख्यः क्षितिपतिस्तस्य प्रियं सगरोद्धारणादि तत्करोतीति तथा यन्नवं गौतमार्थं यत्प्राचीनमवतरणं गङ्गायाः समभूदेव तदपेक्षयाऽभिनवमेतादृशं यदवतरणं भूलोकं प्रत्यागमनं तस्य योऽवष्टम्भोऽवलम्बनस्तेन यो गुम्फः परमनिर्मलातिवेगविलोलशुक्लशीतलसुमधूलीरसालजलकल्लोलकोलाहलकलनविशेषस्तं छिन्दन्ति स्वसौन्दर्येण तिरस्कुर्वन्तीति तथेत्यर्थः। एतादृशोऽत एव गर्जन्तः सन्तः। **शंकरेति**। शं कल्याणमैहिकादिनिखिलपुमर्थं करोतीति तथा स चासौ गुरुर्हितोपदेष्टा चेति तथा स एव क्षोणीधरेन्द्रः सुमेरुस्तस्योदरं तस्मादित्यर्थः। **वाणीति**। वाक्तरङ्गिणीप्रवाहा इत्यर्थः। यद्यवतरन्त्याविर्भवन्ति तर्हि। **दुर्भिक्ष्विति**। दुष्टाः शाक्यादयो नास्तिका ये भिक्षवो भिक्षाचरणशीलास्तद्रूपं यद्दुर्भिक्षं महानर्थकालस्तस्मादित्यर्थः। भयं कन्तु नैव कुत्रचिदपि देशे काले भयं भवतीत्यन्वयः। निरुक्तवाणीतरङ्गिणीनिर्झराणामेवामृतमयत्वेन सकलानर्थनाशकत्वसंभवान्नैव भीसंभावनाऽपीति भावः। प्रतीपरूपकादयोऽलंकाराः ]॥ ७६॥

किंच भगवत्पादीया वैलर्थकारादिक्षकारान्तवर्णमालारूपा वागुदेति जयति तां विशिनष्टि—चित्तलक्षणस्य मतङ्गजस्य हस्तिनो वारी बन्धिनी 'वारी स्याद्गजबन्धिन्याम्' इति मेदिनी। तथा बोधात्मकस्य राज्ञो नगरी तथा दूरीभूता दुरन्तानां दुर्वदतां दुर्वादिनां झरी प्रवाहो यस्यास्तथा सूरिभिर्हारीकृताऽतिप्रेम्णा हारवत्कण्ठे कृता तथा चिन्तासंततिलक्षणस्य तूलस्य कार्पासलवस्यापाकरणे ज्ञातस्य वायोर्लहरी प्रवाहस्तथा वेदस्योल्लसन्ती चातुरी चित्तेतिपाठे चेतनाया इति व्याख्येयम्[1]। तथा संसारलक्षणसमुद्रस्य तर्युद्धारहेतुभूता नौका तथाचैवंभूता शंकरस्य वाणी सर्वोत्कर्षेण वर्तत इत्यर्थः। अत्र चित्तादेर्भिन्नशब्दवाच्यमतङ्गजत्वाद्यारोपेण वैखर्या वारीत्वाद्यारोपबोधनाद्भेदभाजि रूपकम्। वाचके भेदभाजि वेत्युक्तेः॥ ७७॥ [ **दूरीभूतेति**। दूरीभूता पराकृतत्वेन दिगन्तं गता दुरन्ता जीवकोटिनिविष्टैः कदाऽप्यनिरस्या एतादृशा ये दुर्वदा दुष्टं वदन्तीति दुर्वदाश्चार्वाकादिसांख्यान्तनिखिलभेदवादिनस्तेषां वाग्रूपिणी या झरी प्रवाहसरणिर्यया सा तथेत्यर्थः। अत एव

---

१ ख. ग. घ. °तनताया।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथादर्पोत्सर्पत्कथककुधकण्डूलरसना-
सनालाधःपाते स्वयमुदयमन्त्रो व्रतिपतेः ॥
निगुम्फः सूक्तीनां निगमशिखराम्भोजसुरभि-
र्जयत्यद्वैतश्रीजयविरुदघण्टाघणघणः ॥ ७८ ॥
कस्तूरीघनसारसौरभपरीरम्भप्रियंभावुका-
स्तापोन्मेषमुषो निशाकरकराहंकारकूलंकषाः ॥
द्राक्षामाक्षिकशर्करामधुरिमग्रामाविसंवादिनो
व्याहारा मुनिशेखरस्य न कथंकारं मुदं कुर्वते ॥ ७९ ॥

सूरिभिः पण्डितैः । हारीकृता हृदि मुक्ताहारवन्निहितेत्यर्थः । तरीरिति च्छेदः ।

'अवीतन्त्रीतरीलक्ष्मीह्रीधीश्रीणामुदाहृतः ।
सप्तस्त्रीलिङ्गजातीनां सोर्लोपो न कदाचन'

इति वचनात् । वागिति । वागिव साक्षात्सरस्वतीव वैखरी तुरीयवाणी... लुप्तोपमारूपकादयोऽलंकाराः ॥ ७७ ॥

किंच व्रतिपतेः श्रीशंकरस्य सूक्तीनां निगुम्फो ग्रन्थनं जयति यः कथागर्वेणोत्सर्पतां कथकानां मध्ये ये बुधास्तेषां कण्डूला ... या जिह्वा तस्या नाभिस्थनालेन ... धःपाते स्वयमुदयमन्त्रो वेदवत्स्वयं प्रादुर्भूतो व दिजिह्वास्तम्भनादौ विनियुक्तः षट्त्रिंश... त्मको बगलामुख्याख्यो मन्त्रः पुनश्च निगमशिखराणि वेदान्तास्तल्लक्षणकमलानां ... सुगन्धिः पुनश्चाद्वैतलक्ष्म्या जयस्य विरुदघण्टायाः प्रख्यातिकराया घण्टाया घणघणा... त्मकः शब्द इत्यर्थः ।

'नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परम्परितं श्लिष्टे'

इत्युक्तपरम्परितरूपकान्तर्गतं मालारूपकमत्र द्रष्टव्यम् ॥ ७८ ॥ [ कथेति । ... ब्रह्मचर्याश्रमशिखामणेः घणेत्याद्यनुकरणम् । जयतीति योजना । तत्र हेतु... कथादर्पेत्यादि । कथाऽनेकवक्तृकः पूर्वोत्तरवाक्यपरम्परा सैव दरी दुष्प्रवेश... कन्दरा तया हेतुभूतयेत्यर्थः । उदिति । उत्कर्षेण तारस्वनन्यादिना सर्पन्ती ... न्यादिना प्रसारणशीला रूपकलुप्तोपमापरिकरादयोऽलंकाराः ] ॥ ७८ ॥

किंच कस्तूरीघनसारयोः कस्तूरीकर्पूरयोः सौरभं सुरभिस्तस्य परीरम्भः ...

१ घ. 'दर्पोत्स' । २ घ. घास्त एव वा बुधास्ते' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वैते परिमुक्तकण्ठकपथे कैवल्यघण्टापथे
स्वाहंपूर्वकदुर्विकल्परहितप्राज्ञाध्वनीनाकुले ॥
प्रस्कन्दन्मकरन्दवृन्दकुसुमस्रक्तोरणप्रक्रिया-
माचार्यस्य वितन्वते नवसुधासिक्ताः स्वयं सूक्तयः ॥८०॥

स्तद्वत्प्रियभावुकाः प्रियंभविष्णवस्तापस्याऽऽध्यात्मिकादितापत्रयस्योन्मेषमुल्लासं मुष्णन्तीति तथा तेऽत एव बाह्यतापनिवारकाणां निशाकरस्य चन्द्रस्य कराणामंशूनां यस्तापविनाशनाहंकारस्तस्य कूलंकषाः समूलोन्मूलनसमर्थास्तथा द्राक्षादीनां मधुरिम्णां माधुर्याणां ग्रामेण समुदायेनाविसंवादिनस्तत्तुल्या मुनिशेखरस्य श्रीशंकरस्य व्याहारा उक्तयो मुदं प्रीतिं कथंकारं कथं न कुर्वतेऽपितु कुर्वन्त्येव । 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' इत्यनर्थकादेव करोतेर्णमुल् । शार्दूलविक्रीडितं वृत्तम् ॥ ७९ ॥ [ कस्तूरीति । 'घनसारस्तु कर्पूरः' इति मेदिन्युक्तेः कस्तूरीकर्पूरयोर्यत्सौरभं सौगन्ध्यं तस्य यः परीरम्भ आलिङ्गनं तेनेव प्रियं हितं भावयन्ति संपादयन्ति ते तथेति यावत् । एतेन व्यञ्जनयाऽऽनन्दजनकत्वं सूचितम् । यतः । तापेति । शान्तिदाः । अतः । निशेति । चन्द्रकिरणाभिमानविनिवर्तका इत्यर्थः । एतेन लक्षणयाऽपि तद्ध्वन्यते । द्राक्षेति । द्राक्षादीनां ये मधुरिमाणस्तेषां ग्रामः समुदायस्तं न विसंवदन्ति विरुद्धा भवन्ति ते तथा द्राक्षादिसममाधुर्या इति यावत् । एतेन शक्त्याऽपि तदावेदितम् । वृत्तित्रयेणाप्यानन्दका एव तद्वाक्यकलापमकोरका इत्याशयः । लुप्तोपमाप्रतीपपरिकरसंदर्योऽलंकाराः ] ॥ ७९ ॥

किंच परिमुक्तो विनिवृत्तो भेदवादिलक्षणः कण्टकमार्गो यस्मात्तथाभूतेऽद्वैत एव कैवल्यघण्टापथे कैवल्यस्य मोक्षस्य घण्टापथे संसरणे राजमार्गे स्वाहंपूर्वकैः स्वीयाहंकारपूर्वकैर्दुर्विकल्पै रहिताः प्राज्ञा विद्वांस एवाध्वनीनाः पान्थास्तैराकुले व्याप्ते । पाठान्तरेऽहंपूर्वकेणाहंकारेण तदादिभिर्वा सह वर्तमानैरिति व्याख्येयम् । स्वयं नवसुधासिक्ताः शंकराचार्यस्य सूक्तयः प्रस्कन्दन्प्रस्रवन्मकरन्दानां पुष्परसानां वृन्दं निचयो येभ्यस्तथाभूतानां कुसुमानां पुष्पाणां याः स्रजो मालास्तासां यानि तोरणानि तेषां प्रक्रियां रचनां वितन्वते विस्तारयन्ति ॥ ८० ॥ [ साहंपूर्वकेति ।

'अहं पूर्वमहं पूर्वमित्यहंपूर्विका मता'

इत्यमरात्तया सहिताः साहंपूर्विकास्ते च ते दुर्विकल्पाश्चेति तथा सगर्वदुर्वितर्ककुशलाः सकलभेदवादिनस्तै रहितास्तत्संपर्कशून्या ये प्राज्ञाः साधनचतुष्टयविशिष्टाः पण्डितश्रेष्ठास्तएवाध्वनीना 'अध्वनीनोऽध्वगोऽध्वन्यः' इत्यमरात् । पान्थास्तैराकुलो व्याप्तस्तस्मि-

१ क. ग. घ. °थे साहंपूर्वक° । २ ख. ग. ग. ङ. °कराम्° । ३ ख. घ. °भ्रगक° । ४ क. घ. °स्ते स्व° । ५ ख. घ. कुर्वान्वि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूरोत्सारितदुष्टपांसुपटलीदुर्नीतयोऽनीतयो
वाता देशिकवाङ्मयाः शुभगुणग्रामालया मालयाः ॥
मुष्णन्ति श्रममुल्लसत्परिमलश्रीमेदुरा मे दुरा-
यासस्याऽऽधिहाविर्भुजो भवमये धीप्रान्तरे प्रान्तरे ॥ ८१

न्नित्यर्थः । प्रस्कन्ददित्यादि । प्रस्कन्दति प्रकर्षेण क्षरति मकरन्दवृन्दं पुष्परसनिकु- येभ्यस्तानि तथैतादृशानि यानि कुसुमानि पुष्पाणि तेषां याः स्रजो मालास्ताभिर्या त- प्रक्रिया मार्गशोभाजनकपुष्पवितानलम्बमानगुच्छविशेषरचना तामित्यर्थः ] 'तोरणो- बहिर्द्वारम्' इत्यमराल्लाक्षणिकमेव प्रकृते तोरणपदम् । लुप्तोपमारूपकाद्यलं- काराः ] ॥ ८० ॥

किंच दूरमुत्सारिता दुष्टानां पांसुपटलीतुल्या दुर्नीतयो दुष्टनया यैस्तेऽनीतयं विद्यन्त ईतयोऽतिवृष्ट्यादिरूपा बाधा येभ्यस्ते शुभगुणाः प्रसादादयस्तल्लक्षणानां शै- शुभगुणानां ग्रामस्याऽऽलयभूता माया लक्ष्म्याश्चाऽऽलयभूता उल्लसत्परिमलश्रिया च मे- स्निग्धा देशिकवाङ्मया वाता भवमये संसारमये प्रान्तरे विपिने कथंभूते धीप्रान्तरे बुद्धि- क्षणानि प्रान्तराणि कोटराणि बुद्धिलक्षणो दूरः शून्यो मार्गो वा यस्मिंस्तत्राऽऽधिर्मनः- प्रत्याशा वा तल्लक्षणाद्धविर्भुजो भावाग्नेर्हेतोर्यो मे मम दुरायासस्तस्य श्रमं मुष्- णन्तीत्यर्थः ।

'प्रान्तरं विपिने दूरशून्यमार्गे च कोटरे ।
आधिः पुमांश्चित्तपीडाप्रत्याशाबन्धकेषु च'

इति मेदिनी ॥ ८१ ॥ [ दूरेति । दूरमुत्सारिता दुष्टपांसुपटलीरूपा निन्द्यमू- घातात्मका दुर्नीतयो भेदवादिकल्पितासन्न्याययुक्तयो यैस्ते तथा । पक्षे दूरोत्सारिता दु- पांसुपटल्य इव दुर्नीतयो यैस्ते तथेत्यर्थः । अत एव । अनीतय इतिच्छेदः । न वि- ईतिरतिवृष्ट्यादिरूपा यैस्ते तथेत्यर्थः । पक्षेऽप्युत्पादहरत्वादेवमेव बोध्यम् । एतादृ- यतः । शुभेति । शुभाः परमरस्या ये गुणाः शीतमन्दसुगन्धादिलक्षणाः पवनस्य शास्त्रे लोके च प्रसिद्धा एव तेषां ये ग्रामाः समुदायास्तेषामालयाः

'गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः'

इत्यमराद्गृहा एवेत्यर्थः । पक्षे शुभाः सुमङ्गला ये गुणाः प्रसादादयो धर्मा- षामालया इवेत्यर्थः । अत एव मालयाः शोभाश्रया इति पक्षद्वयेऽपि । अत ए- उल्लसदिति । उल्लसन्ती विकसमाना या परिमलश्रीर्नानाविधकुसुमसंपर्कसं- कोत्तरसुगन्धलक्ष्मीस्तया मेदुरा मांसलाः पुष्टा इति यावत् । पक्षे उल्लसत्परि- मनोहरा श्रीः शोभा तया मेदुरा इत्यर्थः । 'सान्द्रस्निग्धस्तु मेदुरः' इत्यम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नृत्यन्त्या रसनाग्रसीमनि गिरां देव्याः किमङ्घ्रिक्वण-
न्मञ्जीरोर्जितसिञ्जितान्युत नितम्बालम्बिकाञ्चीरवाः ॥
किं वल्गत्करपद्मकङ्कणझणत्कारा इति श्रीमतः
शङ्कामङ्कुरयन्ति शंकरकवेः सद्युक्तयः सूक्तयः ॥ ८२ ॥
वर्षारम्भविजृम्भमाणजलमुग्गम्भीरघोषोपमो
वात्यातूर्णविघूर्णदर्णवपयःकल्लोलदर्पापहः ॥
उन्मीलन्नवमल्लिकापरिमलाहंतानिहन्ता निरा-
तङ्कः शंकरयोगिदेशिकगिरां गुम्फः समुज्जृम्भते ॥ ८३ ॥

---

एतादृशाः सन्तोऽत एव । आधीति । आधिरेव ' पुंस्याधिर्मानसी व्यथा ' इत्यमरान्म-नोव्यथैव हविर्भुग्दावानलो यस्य स तथा तस्य मानसव्यथादावानलवलयितस्येत्यर्थः । एता-दृशस्य । अत एव । भवेति । संसाररूप इत्यर्थः । स्वार्थ एव मयट् । दुरायासस्य दुष्ट आयासो यस्य स तथा तस्येत्यर्थः । दुरित्युपसर्गस्तु सुखव्याप्ये सुरतायासे सुखफलके सत्कर्मायासे चानादरवारणायैवेति ध्येयम् । श्रमं भ्रमणखेदम् । मुष्णन्त्यपहरन्तीत्यन्वयः । लुप्तोपमारूपकयमकादयोऽलंकाराः ] ॥ ८१ ॥

किंच श्रीशंकरजिह्वाग्रलक्षणे रङ्गे नृत्यन्त्या गिरां देव्याः शारदायाः किमङ्घ्र्योश्च-रणयोः क्वणतोः शब्दं कुर्वतोर्मञ्जीरयोर्नूपुरयोरूर्जितसिञ्जितान्युल्लसत्स्वनितानि किंवा नितम्बालम्बिन्याः कट्याः पश्चाद्भागमालम्बिन्याः काञ्च्या मेखलाया रवाः शब्दाः किंवा वल्गतोरितस्ततश्चलतोः करकमलकङ्कणयोर्झणत्कारा इति शङ्कां श्रीमतः शंकरस्य कवेः समीचीना युक्तयो यासु ताः सुष्ठूक्तयोऽङ्कुरयन्ति जनयन्तीत्यर्थः ॥ ८२ ॥ [ श्रीमतः षड्गुणैश्वर्यवतः । शंकरेति । श्रीशंकराचार्यसंज्ञककवीन्द्रवरस्येत्यर्थः ] [ विकल्पत्रयबीजं तु निरुक्तसूक्तिषु शक्तिलक्षणाव्यञ्जनाख्यशाब्दवृत्तित्रयमूलकध्वनित्रयवैजात्यमेव ] [ संदे-हानुप्राणितोत्प्रेक्षाविशेषादिरेवालंकारः । तदुक्तम्—

' पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ' इति ।

' धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम् ' इति च ] ॥ ८२ ॥

वर्षारम्भे विजृम्भमाणानां जलमुचां मेघानां गम्भीरघोष उपमा यस्य स पुनश्च वात्यया वायुसमुदायेन तूर्णमत्यन्तं शीघ्रं विघूर्णतां समुद्रपयसां कल्लोलानां बृहत्त-रङ्गाणां दर्पापहो गर्वनाशकः पुनश्चोन्मीलन्तीनां विकसन्तीनां मालतीनां परिमलाहं-ताया विमर्दोत्थजनमनोहरगन्धस्याहंभावस्य निहन्ता नाशकः पुनश्च निरातङ्को निर्भयः शंकरयोगिदेशिकस्य गिरां गुम्फो ग्रन्थनं समुज्जृम्भते समुल्लसति ॥ ८३ ॥ ] वर्षेति ।

---

१ ख. ग. घ. क्षेत्रे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हृद्या पद्यविनाकृता प्रशमिताविद्याऽमृषोद्या सुधा
स्वाद्या माद्यदरातिचोद्यभिदुराऽभेद्या निपद्यायिता ॥
विद्यानामनघोद्यमा सुचरिता साद्यापदुद्यापिनी
पद्या मुक्तिपदस्य साऽद्य मुनिवाङ्नुद्यादनाद्या रुजः॥८४

वृष्टिकाल एवात्र वर्षाशब्दार्थः ] वात्येति । ' स्याद्वात्या वातमण्डले ' इति वि-
शेषाद्वात्याशब्दितचक्रवातेन तूर्णमतिसत्वरम् ' सत्वरं चपलं तूर्णम् ' इत्यमरः । [
माप्रतीपविशेषादयोऽलंकाराः ] ॥ ८३ ॥

सा प्रसिद्धा भाष्यादिरूपा मुनिवागद्यानाद्या रुजोऽज्ञानादिलक्षणात्रोगोन्नुद्यात्...
तां विशिनष्टि—पद्यविनाकृता गद्यरूपाऽपि हृद्या मनोज्ञा । पठान्तरे दोषविन...
पुनश्च प्रशमिताऽविद्या यया सा प्रशमिताविद्या । पुनश्च मिथ्यावाच्या न भवतीत्य...
यथार्थेत्यर्थः । ' राजसूयसूर्यमृषोद्य ' इत्यादिना वदेः क्यबन्तो निपातः । प्रशमित...
मृषोद्या ययेति वा । पुनश्च सुधास्वाद्याऽमृतवदास्वादनीया पुनश्च माद्यतां मदेन ...
रातीनां वादिलक्षणारीणां यानि चोद्यानि कुतर्कोद्भाविताः शङ्कास्तेषां भिदुरा ...
स्वयं तु तैरभेद्या भेत्तुमशक्या पुनश्च सर्वासां विद्यानां निपद्यायिताऽऽपणवदाचरि...
श्चानघोऽनवद्य उद्यमो यस्याः सा पुनश्च शोभनं चरितं यस्याः सा पुनश्च ...
नन्यानां सकारणानां वाऽऽपदामाध्यात्मिकादिदुःखानामुद्यापिन्युन्मूलिनी पुनश्च ...
दस्य पद्या पद्धतिरेवंभूता सा मुनिवागद्यानाद्या रुजोऽपनुद्यादित्यर्थः ॥ ८४ ॥ [
रमणीयेत्यर्थः । एतेन कुतार्किकदिकण्टकशङ्कापाकरणं सूच्यते । तत्र हेतुः—पद्य...
पद्यैः श्लोकैर्विनाऽकृताऽनिर्मिता प्रायः श्लोकरूपेणैवाऽऽविर्भवनस्वभावेत्यर्थः । अ...
नैसर्गिकमेव श्लोकरूपेण निःसरणं वाल्मीक्यादेरिव वाचस्तत्र क नामोक्तकुतार्कि...
ण्टकशङ्कासंभवावकाश इत्याशयः ] [ मृषेति । मृषा मिथ्यावस्तु प्रत्युदुत्क...
विमतं मिथ्यादृश्यत्वाच्छुक्तिरजतवदित्यादियुक्त्या ' अतोऽन्यदार्तम् ' इत्यादिश्रु...
प्रसरतीति तथेति यावत् । यावत्कल्पितवस्तुबाधिकेत्यर्थः । तत्र हेतुः—सुधेति । [
वाद्वैतब्रह्मात्मैक्यावबोधनत आस्वाद्यते रसास्वादविषयी क्रियत इति तथेत्यर्थः ] [
विद्यामदोन्मत्ता येऽरातयो द्वैतवादिनः शत्रवस्तेषां यानि चोद्यानि पूर्वपक्षास्तान्येव...
राणि ' कुलिशं भिदुरं पविः ' इत्यमराद्वज्राणि तैरभेद्या कालत्रयेऽप्यखण्ड...
[ अनघेति । निर्दुष्टव्यापारा सफलेत्यर्थः ] [ अत्र लुप्तोपमारूपकानुमा...
लंकाराः ] ॥ ८४ ॥

१ ख. ग. °गानपनुद्या° । २ ख. ग. घ. °श्च ज° । ३ क. °न्मूलनी । ४ क. °द्यान्...
रुजो नु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आयासस्य नवाङ्कुरं घनमनस्तापस्य बीजं निजं
क्लेशानामपि पूर्वरङ्गमलघुप्रस्तावनाडिण्डिमम्॥
दोषाणामनृतस्य कार्मणमसच्चिन्ताततेर्निष्कुटं
देहादौ मुनिशेखरोक्तिरतुलाऽहंकारमुत्कृन्तति॥ ८५॥
तथागतपथाहतक्षपणकप्रथालक्षण-
प्रतारणहतानुवर्त्यखिलजीवसंजीविनी॥
हरत्यतिदुरत्ययं भवभयं गुरूक्तिर्नृणा-
मनाधुनिकभारतीजरठशुक्तिमुक्तामणिः॥ ८६॥

मुनिशेखरोक्तिरतुला देहादौ योऽहंकारस्तमुत्कृन्तत्युन्मूलयति। तं विशिनष्टि—आयासस्य खेदस्य नव्यमङ्कुरं पुनश्च घनीभूतो यो मनस्तापो मानसं दुःखं तस्य निजमसाधारणं बीजं क्लेशानामपि पूर्वरङ्गं प्रथमं नर्तनस्थलं दोषाणां रागद्वेषादीनामलध्वी महती या प्रस्तावना नाटककथाप्रारम्भस्तस्या डिण्डिममनृतस्य कार्मणं मूलकर्म 'मूलकर्म तु कार्मणम्' इत्यमरः। असच्चिन्तासंततेर्निष्कुटं गृहोद्यानं केदारं वा।

'निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः'

इति मेदिनी। एवंभूतं देहादिनिष्ठमहंकारमित्यर्थः॥ ८५॥ [ देहादावादिना प्राणादिः ] [ अतुलेत्येकपदम्। निरुपमतादात्म्यात्मकाहंकाराध्यासमित्यर्थः ] [ अतुलेति विभिन्ने पदे तु यतोऽहंकारमुत्कृन्तत्यतोऽतुलाऽतीति ये जना। ननु देहादावहंकारमात्रोच्छेदनदक्षत्वेन किं निरुक्तोक्तौ निरुपमत्वं वर्ण्यते निरुक्ताहंकारस्य सिद्धान्तेऽपीदंवृत्तिरहंवृत्तिरित्यन्तःकरणं द्विधा—

विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत्'

इति प्राचां वचनाद्बुद्धिविशेषत्वेन ज्ञानत्वात्तस्य च स्वोत्तरगुणनाश्यत्वनियमादित्याशङ्क्य ज्ञानरूपस्य तस्य तथात्वेऽप्यनिर्वचनीयस्यार्थलक्षणतस्तस्य सर्वानर्थनिदानत्वेन परम दुरुद्धरत्वात्तदुच्छेदकब्रह्मात्मैक्यविषयतत्त्वसाक्षात्काराथमेव निखिलशब्दब्रह्मप्रवृत्तेश्चेत्याशयेन समादर्शयंस्तं विशिनष्टि—आयासस्येत्यादि षड्भिर्विशेषणैः। दोषाणामलघु वि लमेतादृशम्। प्रस्तावनेत्यादि योज्यम्। कार्मणमिति।

'कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च'

इति मेदिनी। निष्कुटमिति। 'गृहारामास्तु निष्कुटाः' इत्यमरः। अपरं तु सरलमेव। रूपकविशेषोऽलंकारः ]॥ ८५॥

तथागता बौद्धास्तेषां यथा मार्गेणाऽऽहताः क्षपणकानां वैनाशिकानां प्रख्यातिल-

१ क. ख. °जीवनी। २ क. वैभाषिकाणां।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

झंझामारुतवेल्लितामरधुनीकल्लोलकोलाहल-
प्राग्भारैकसगर्भ्यनिर्भरजरीजृम्भद्वचोनिर्झराः ।
नैकालीकमतालिधूलिपटलीमर्मच्छिदः सद्गुरो-
रुद्यद्दुर्मतिधर्मदुर्मतिकृताशान्तिं निकृन्तन्ति नः ॥ ८७ ॥
उन्मीलन्नवमल्लिसौरभपरीरम्भप्रियंभावुका
मन्दारद्रुमरन्दवृन्दविलुठन्माधुर्यधुर्या गिरः ॥
उद्गीर्णा गुरुणा विपारकरुणावाराकरेणाऽऽदरा-
त्सच्चेतो रमयन्ति हन्त मदयन्त्यामोदयन्ति द्रुतम् ॥ ८८ ॥

क्षणेन प्रतारणेन वञ्चनेन हताश्चानुवर्तिनो विप्रादयोऽखिला जीवास्तेषां संजीविनी पुन... धुनिकाऽनादिभूता या वेदवाणी तल्लक्षणाया अतिप्राचीनशुक्तेर्मुक्तामणिरेवंभूत... श्रीशंकरस्योक्तिर्नराणामतिदुरत्ययं संसारभयं हरतीत्यर्थः । पृथ्वी वृत्तम् ॥ ८... [ गुरूक्तिः श्रीभगवत्पादाचार्यवाणीत्यर्थः । अतिदुरत्ययं परमदुर्निरसम् ] [ रूपका... लंकाराः ] ॥ ८६ ॥

सद्गुरोः श्रीशंकरस्य झंझामारुतेन वृहद्वायुना वेल्लितायाः कम्पितायाः देवधुन्या ग... कल्लोलानां वृहत्तरङ्गाणां यः कोलाहलस्तस्य यः प्राग्भारोऽतिशयस्तदेकसगर्भ्यनिर्भ... कातिसदृशा जरीजृम्भन्तो भृशमुल्लसन्तो वचोलक्षणा निर्झरा नैकान्यनेकानि या... न्यसत्यानि मतानि तेषामालिः पङ्क्तिः सैव धूलीपटली धूलीसमूहस्तस्या मर्मच्छिद... शका नोऽस्माकमुद्यद्दुर्मतिलक्षणधर्माद्या दुःखिता बुद्धिस्तत्कृता याऽशान्तिस्तां वि... न्मूलयन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ ८७ ॥ [ लुप्तोपमारूपकादयोऽलंकाराः ] ॥

उन्मीलन्तीनां विकसन्तीनां नवमालतीनां यत्सौरभं तस्य परीरम्भ आलिङ्गनं त... तद्वद्वा प्रियंभावुकाः प्रियंभविष्णवस्तथा मन्दारद्रूणां मन्दाराख्यद्रुमाणां मकरन्द... लुठतो माधुर्याद्धुर्याः श्रेष्ठाः श्रीशंकराचार्येण गुरुणाऽऽदरादुद्गीर्णा उद्गमिता उच्चारि... सतां चेतो रमयन्ति हन्तेति हर्षे मदयन्ति तथा द्रुतमविलम्बितमामोदयन्ति प्रमोद... गुरुं विशिनष्टि—विपारायाः पारविमुक्तायाः करुणाया वाराकरेण जलनिधिना ह... दीपकालंकारः ।

'सैव क्रियासु बह्वीषु कारकस्येति दीपकम्'

इत्युक्तेः । सैव सकृद्वृत्तिः ॥ ८८ ॥ [ विपारेति । विगतः पारो यस्य ह... हशो यः करुणाया अवारो भामेत्यादिवन्नामैकदेशग्रहान्नामग्रहणन्यायेन ...

१ क. °जीवनी । २ ग. °न्वि संनो° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धारावाहिसुखानुभूतिमुनिवाग्धारासुधाराशिपु
क्रीडन्द्वैतिवचःसु कः पुनरनुक्रीडेत मूढेतरः ॥
चित्रं काञ्चनमम्बरं परिदधच्चित्ते विधत्ते मुहुः
कश्चित्कच्चरदुष्पटच्चरजरत्कन्थानुबद्धादरम् ॥ ८९ ॥

तत्तादृक्षमुनिक्षपाकरवचःशिक्षासपक्षाशयः
क्षारं क्षीरमुदीक्षते बुधजनो न क्षौद्रमाकाङ्क्षति ॥
रूक्षां क्षेपयति क्षितौ खलु सितां नेक्षुं क्षणं प्रेक्षते
द्राक्षां नापि दिदृक्षते न कदलीं क्षुद्रां जिघृक्षत्यलम् ॥ ९० ॥

---

सरित्पतिः' इत्यमरात्समुद्रः स एवाऽऽकरः सूक्तिरत्नखानिस्तेनेत्यर्थः ] [उन्मीलदिति । एतेन व्यङ्ग्यार्थसौष्ठवं व्यज्यते ] [ मन्दारेति । मन्दारद्रुः कल्पद्रुमस्तस्य ये मरन्दा मकरन्दास्तेषां यद्वृन्दं तस्य यद्विलुठन्माधुर्यं तेन धुर्याः श्रेष्ठा इति यावत् । एतेन शब्दसौष्ठवमपि तत्र सूचितम् ] [ अत्र लुप्तोपमादयोऽलंकाराः ] ॥ ८८ ॥

किंच धारावाह्यनवच्छिन्नं यत्सुखं तस्यानुभूतिरनुभवो याभ्यस्तथाभूतमुनिवाग्धारालक्षणसुधाराशिपु क्रीडन्सन्द्वैतिनां वचनेषु विपकल्पेषु पुनर्मूर्खादन्यः कः क्रीडेदपितु मूढ एव तत्र क्रीडां कर्यात्तत्र दृष्टान्तः— चित्रं विचित्रं सुवर्णमयं वस्त्रं परिदधत्पुनः कच्चराणां मलदूषितानां दुष्टानां पटच्चराणां जीर्णवस्त्राणां या जर्जरीभूता कन्था तस्यामनुबद्धो य आदरस्तं कश्चिन्मनसि धत्तेऽपितु नैव धत्त इत्यर्थः । पाठान्तरे तामनुबद्धादरं यथा स्यात्तथेति व्याख्येयम् । 'कच्चरं मलदूषितम्' 'पटच्चरं जीर्णवस्त्रम्' इत्यमरः ॥ ८९ ॥ [ क्रीडञ्जीवन्मुक्तिजलक्रीडासुखमनुभवन्सन्नित्यर्थः । [ रूपकार्थान्तरन्यासादयोऽलंकाराः ] ॥ ८९ ॥ ]

किंच तत्तादृक्षैस्तथाभूतैर्मुनिनिशाकरवचोभिर्मुनिचन्द्रवचनैर्या शिक्षा तया सपक्षोऽद्वैतारूयैस्वपक्षसहितस्तदवलम्ब्याशयोऽन्तःकरणं यस्य शिक्षायाः सपक्षोऽधिकरणभूत आशयो वा यस्य स बुधजनः क्षीरं पयः क्षारं पश्यति क्षौद्रं माक्षिकं नाऽऽकाङ्क्षति तथा सितां शर्करां रूक्षां बुद्ध्वा भूमौ क्षेपयति पातयति तथेक्षुं क्षणमात्रमपि न प्रेक्षते तथा क्षुद्रां कदलीं न जिघृक्षति घ्रातुमपि नेच्छति ॥ ९० ॥ [ तदिति । तत्तस्माद्धेतोः । तादृक्षेति । तादृक्षं तादृशं निरुक्तानन्तगुणमेतादृशं यन्मुनिक्षपाकरवचः श्रीशंकराचार्यरूपचन्द्रवाक्यामृतं तस्य या शिक्षा पूजितोपदेशस्तेन सपक्षो निश्चितमाध्यवानाशयोऽन्तःकरणं यस्य स तथा तद्वागमृतपरितृप्त इत्यर्थः ] [ प्रतीपादिरलंकारः ] ॥ ९० ॥

---

१ क. ख. घ. रुक्षां । २ ग. °दयप° । ३ क. ख. घ. रुक्षां ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विक्रीता मधुना निजा मधुरता दत्ता मुदा द्राक्षया
क्षारैः पात्रधियाऽर्पिता युधि जिताल्लब्धा बलादिक्षुतः॥
न्यस्ता चोरभयेन हन्त सुधया यस्य द्रुतस्तद्गिरां
माधुर्यस्य समृद्धिरद्भुततरा नान्यत्र सा वीक्ष्यते ॥ ९१॥
कर्पूरेण ऋणीकृतं मृगमदेनाधीत्य संपादितं
मल्लीभिश्चिरसेवनादुपगतं क्रीतं तु काश्मीरजैः ॥
प्राप्तं चौरतया पटीरतरुणा यत्सौरभं तद्गिरा-
मक्षय्यं महि तस्य तस्य महिमा धन्योऽयमन्यादृशः ॥ ९
अप्सां द्रप्सं सुलिप्सं चिरतरमचरं क्षीरमद्राक्षामक्षुं
साक्षाद्द्राक्षामजक्षं मधुरसमधयं प्रागविन्दं मरन्दम् ॥
मोचामाचाममन्यो मधुरिमगरिमा शंकराचार्यवाचा-
माचान्तो हन्त किं तैरलमपि च सुधासारसीसारसीभिः

---

किंच यस्मान्मधुना माक्षिकेण स्वकीया मधुरता यासु विक्री॥ यस्माच्च
निजा मधुरता मुदा याभ्यो दत्ता यस्माच्च दुग्धैर्निजा मधुरता पात्रबुद्ध्या
यस्माच्च युधि जितादिक्षुतस्तदीया मधुरता बलाद्याभिर्लब्धा हन्तेति हर्षे
सुधयाऽमृतेन चोरभयेन निजा मधुरता यासु न्यस्ता न्यासतया स्थापिताऽत एव
श्रीशंकरस्य गिरां तथाभूतानां गिरां वा माधुर्यस्य साऽद्भुततरा समृद्धिरन्यत्र नैव
इत्यर्थः ॥ ९१ ॥ [ गम्योत्प्रेक्षादिरलंकार ] ॥ ९१ ॥

किंच यदीयं सौरभं कर्पूरेणर्णीकृतम् ऋणतया गृहीतम् । वाक्यत्वेन संहितायाः
भावात्संधिः । तथा यदीयं सौरभं मृगमदेन कस्तूरिकयाऽधीत्य संपादितं तथा मल्लि-
कोभिश्चिरसेवनादुपगतं प्राप्तं तथा काश्मीरजैस्तु यदीयं सौरभं क्रीतं मौल्येन
तथा पटीरतरुणा चन्दनवृक्षेण तत्सौरभं चौरतया प्राप्तं तस्य श्रीशंक-
तथाभूतानां गिरां वाऽक्षय्यं मह्यक्षयं माहात्म्यं तस्मात्तस्य श्रीशंकरस्य तस्य गिरां
महिमाऽयमन्यादृशः सर्वलोकविलक्षणो धन्य इत्यर्थः ॥ ९२ ॥ [ महितस्य
अन्यादृशो लोकोत्तर एव । प्रतीपविशेषगम्योत्प्रेक्षोदयोऽलंकारः ] ॥ ९२ ॥

किंच सुलिप्सं सुरुच्यं द्रप्सं घनेतरं दध्यप्साम् । भक्षणार्थस्य प्साधातोर्लङि
तथा क्षीरं चिरतरं बहुकालमचरम् । भक्षणार्थस्य चरधातोर्लङि रूपम् ।

---

* सर्वेष्वादर्शपुस्तकेष्वेवमेवोपलभ्यते स च प्रमादपाठः कथंचिद्योज्यं मूल्यमिति तु सम्यक्

---

१ ख. ग. घ. चोरतया । २ क. ग. °क्रीतं तं° । ३ ख. ग. घ. चोरतया । ४ क.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संतप्तानां भवदवथुभिः स्फारकर्पूरवृष्टि-
र्मुक्तायष्टिः प्रकृतिविमला मोक्षलक्ष्मीमृगाक्ष्याः ॥
अद्वैतात्मानवधिकसुखासारकासारहंसी
बुद्धेः शुद्ध्यै भवतु भगवत्पादादिव्योक्तिधारा ॥ ९४ ॥
आम्नायान्तालवाला विमलतरसुरेशादिसूक्ताम्बुसिक्ता
कैवल्याशापलाशा विबुधजनमनःसालजालाधिरूढा ॥
तत्त्वज्ञानप्रसूना स्फुरदमृतफला सेवनीया द्विजैर्या
सा मे सोमावतंसावतरगुरुवचोवल्लिरस्तु प्रशस्त्यै ॥ ९५ ॥

---

क्षुमद्राक्षं तथा प्रत्यक्षेण द्राक्षामजक्षं भक्षितवान् । 'जक्ष भक्षहसनयोः' इति स्मरणात् । तथा मधुरसं माक्षिकरसमधयं पीतवांस्तथा मरन्दं मकरन्दं प्रागविन्दं पूर्वं लब्धवांस्तथा मोचा कदली ।

'कदली वारणबुसा रम्भा मोचांऽशुमत्फला'

इत्यमरः । तामाचामं भक्षितवान् । अदनार्थस्य चमुधातोर्लङि मिपि 'ष्ठिवुक्लमुचमाम्' इति दीर्घं च रूपम् । इदानीं त्वन्योऽतिविलक्षणः श्रीशंकराचार्यवाचां मधुरिम्णो माधुर्यस्य गरिमाऽऽचान्तो हन्तेति हर्षे तैर्द्रप्सादिभिः किं यतः सुधाया अमृतस्य सारसी सारस्यं तस्याः सारस्य लिप्साऽप्यलं कृत्यं नास्ति । स्रग्धरा वृत्तम् ॥ ९३ ॥ [ सुलिप्समिति सर्वत्र संबध्यते । सुतरां लिप्सा लब्धुमिच्छा यत्र विषये तत्तथेत्यर्थः ] [ तथा प्रागिति सर्वत्र । वक्ष्यमाणवाणीरसास्वादात्पूर्वमित्यर्थः ] [ प्रतीपविशेषादिरलंकारः ]॥९३॥

किंच 'दवथुः परितापः स्यात्' इत्यमराद्भवदवथुभिः संसारपरितापैः संतप्तानां स्फारा विशाला कर्पूरस्य वृष्टिः पुनश्च मोक्षलक्ष्म्या मृगाक्ष्या अङ्गनायाः प्रकृतिविमला स्वभावतो विमला मुक्तायष्टिर्मुक्तामयी हारलतिका पुनश्चाद्वैतात्मैवानन्तसुखस्याऽऽसारेण प्रसरणेन कासारस्तडागस्तस्य हंसी ।

'आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले'

इति मेदिनी । एवंभूता भगवत्पादस्य श्रीशंकरस्य दिव्योक्तिधारा बुद्धेः शुद्ध्यै भवतु । मन्दाक्रान्ता वृत्तम् ॥ ९४ ॥ [ मुक्तेति । मौक्तिकलतिकेति यावत् । अद्वैतेति । अद्वैतात्मनोऽनवधिकं यत्सुखं तदनुसंधानानन्दः स एवाऽऽसारो 'धारासंपात आसारः' इत्यमराद्धारासंघविनिपातस्तत्पूरितो यः कासारो जीवन्मुक्तचित्तपद्माकरस्तस्यां हंसीत्यर्थः । रूपकलुप्तोपमादयोऽलंकाराः ] ॥ ९४ ॥

आम्नायान्ता वेदान्ता एवाऽऽलवालं सर्वतोरक्षा भित्तिर्यस्याः पुनश्च विमलतर-

---

१ क. 'विनिःश्र ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नृत्यद्भूतेशवल्गन्मुकुटतटरटत्स्वर्धुनीस्पर्धिनीभि-
र्वाग्भिर्निर्भिन्नकूलोच्चलदमृतसरःसारिणीधोरणीभिः।
उद्वेलद्वैतवादिस्वमतपरिणताहंक्रियाहुंक्रियाभि-
र्भाति श्रीशंकरार्यः सततमुपनिषद्गाहिनीगाहिनीभिः॥
साहंकारसुरासुरावलिकराकृष्टभ्रमन्मंदर-
क्षुब्धक्षीरपयोधिवीचिसचिवैः सूक्तैः सुधावर्षणात्।
जङ्घालैर्भवदावपावकशिखाजालैर्जटालात्मनां
जन्तूनां जलदः कथं स्तुतिगिरां वैदेशिको देशिकः॥

---

सुरेश्वरपद्मपादादिसूक्तिलक्षणैर्जलैः सिक्ता कैवल्यस्य मोक्षस्याऽऽशैव पलाशाः पत्राणि पुनश्च विबुधजनो देवजनः पण्डितजनश्च तस्य मन एव सालाख्यवृक्षसमुदायस्तत्र तत्त्वज्ञानलक्षणं प्रसूनं पुष्पं यस्यां स्फुरत्स्वयंप्रकाशमानममृतं ब्रह्मानन्दस्तदेव फलं मेवंभूता या द्विजैः सेवनीया सोमावतंसस्य चन्द्रशेखरस्य शिवस्यावतारस्य गुरोः करस्य वचोलक्षणा वल्लिर्मे मम प्रशस्त्या अस्तु ॥ ९५ ॥ [ रूपकश्लेषादयोऽलं स्रग्धरावृत्तम् ] ॥ ९५ ॥

नृत्यतो भूतेशस्य श्रीशंकरस्य वल्गति स्फुरति मुकुटतटे रटन्ती या स्वर्धुनी तया स्पर्धिनीभिः पुनश्च निर्भिन्नतटा उच्चलन्त्यो या अमृतसरसः सारिण्यः निर्भिन्नकूलादुच्चलतोऽमृतरसो वा सारिण्यस्तद्धोरणीवद्धोरणी परिपाटी यासां पुनश्चोद्वेला उल्लङ्घितवेदमर्यादा ये द्वैतवादिनस्तेषां स्वमतेन परिणता या अहंक्रिया हुंक्रियाभिस्तिरस्क्रियाभिः । उद्वेलेत्यहंक्रियाविशेषणं वा । पुनश्च सततमुपनिषत्सु नदीषु गाहिनीभिर्वाग्भिः श्रीशंकरार्यो भाति राजते ॥ ९६ ॥ [ नृत्यदिति । ' खण्डपरशुः ' इत्यमरः । वल्गच्चलदेतादृशं यन्मुकुटतटं तत्र रटन्ती शब्दविशेषं त्यादि ] [ एतादृशीभिर्वाग्भि श्रीशंकरार्यः श्रीशंकराचार्यो भातीति संबन्धः । प्युक्तवाचां कथं द्वैतवादिमात्रतिरस्कारकारित्वमित्यत्राऽऽह—सततमित्यादि । निरन्तरम् । उपनिषदिति । उपनिषद एव वाहिन्यो ' ध्वजिनी वाहिनी ' इत्यमरात्सेनास्ता गाहन्ते प्रविशन्तीति तथा ताभिरित्यर्थः । एतेन समासपुनरात्तत्वं सेनारूपकेण शत्रुनिराकरणनिपुणत्वमुक्तवाणीषु व्यज्यते ] ॥ ९६ ॥

साहंकाराणां सुरासुराणां याऽऽवलिः पङ्क्तिस्तस्याः करैर्हस्तैराकृष्टेन भ्रमता क्षुब्धस्य क्षीरसमुद्रस्य वीचयस्तरङ्गास्तत्सचिवैस्तत्तुल्यैः सूक्तैरमृतवर्षणा वेगवद्भिः संसाराख्याग्निशिखाजालैर्जटालात्मनां व्याप्तात्मनां जन्तूनां जलदो

---

१ ख. ग. घ. °जंडाला° । २ ग. मनोलक्षणसा । ३ क. ग. नवस्त° । ४ °जंडाला° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कलशाब्धिकचाकचिक्षमं
क्षणदाधीशगदागदिप्रियम् ॥
रजताद्रिभुजाभुजिक्रियं
चतुरं तस्य यशः स्म राजते ॥ ९८ ॥
परिशुद्धकथासु निर्जितो
यशसा तस्य कृताङ्कनः शशी ॥
स्वकलङ्कनिवृत्तयेऽधुनाऽ-
प्युदधौ मज्जति सेवते शिवम् ॥ ९९ ॥

---

गुरुः श्रीशंकरः स्तुतिगिरां वैदेशिको विदेशोऽगोचरः कथं न कथमपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥ [ साहंकारेति । वैदेशिको विदेशादागतो वैदेशिक आत्मदेशीय एव हि लोके दानादिपात्रं प्रायो भवति न त्वन्यदेशीय इति लोके प्रसिद्धमेव । तथा च जलद इत्यन्तविशेषणविशिष्टो देशिकः श्रीशंकराचार्यः । स्तुतिगिराम् । वैदेशिको निरुक्तरीत्याऽपात्रं कथं स्यादपि तु नैव स्यात्किं तु स्तुतिगिरां पात्रमेव स्यादिति योजना । 'जङ्घालोऽतिजवः' इत्यमरः । लुप्तोपमारूपकादयोऽलंकाराः ॥ ९७ ॥

अथ श्रीशंकरस्य यशो वर्णयति—कलशेति । कचेषु कचेषु केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं कचाकचि । तत्र तेनेदमिति सरूप इति समासः । अन्येषामपि दृश्यत इति पूर्वपदान्तस्य दीर्घः । 'इच्कर्मव्यतिहारे' इतीच्समासान्तः । कलशाब्धिः क्षीराब्धिस्तेन कचाकचियुद्धे क्षम शक्तं पुनश्च गदाभिश्च गदाभिश्च प्रहृत्येदं युद्धं प्रवृत्तं गदागदि क्षणदाधीशेन निशाधीश्वरेण चन्द्रेण गदागदि प्रियं यस्य पुनश्च भुजैश्च भुजैश्च प्रहृत्येदं युद्धं प्रवृत्तं भुजाभुजि रजताद्रिणा कैलासगिरिणा भुजाभुजियुद्धलक्षणा क्रिया यस्य तत्तस्य श्रीशंकरस्य चतुरं यशो राजते स्म । वियोगिनी वृत्तम् ॥ ९८ ॥ [कलशेति । अत्र मञ्चाः क्रोशन्तीत्यादिवजहत्स्वार्थलक्षणया कलशपदेन तद्गतं क्षीरं लक्ष्यते । तथैव कार्नाटकादीनां प्रायः प्रयोगदर्शनादन्यथोक्तप्रयोगनिर्वाहाभावादमरहैममेदिन्याद्यखिलनानार्थकोशेषु कुत्रापि कलशशब्दस्य क्षीरवाचकत्वादर्शनाच्च । एवं च क्षीराब्धिना सह यत्कचाकचि कचेषु कचेषु गृहीत्वेदं युद्धं प्रवृत्तं कचाकचि तत्र क्षमं दक्षं क्षीराब्धितिरस्कारसमर्थमित्यर्थः । क्षणदेति । क्षीराब्धिकुमारीभूतामृतकरस्यापि निरासचतुरमिति यावत् । प्रतीपमलंकारः ] ॥ ९८ ॥

कः परिशुद्ध इति परिशुद्धानां कथासु चन्द्रः परिशुद्ध इति केनचित्कथिते सकलङ्कात्तस्मान्निष्कलङ्कं श्रीशंकरयशः परिशुद्धमित्यपरेणोक्ते तस्य यशसा नितरां जितः

---

१ घ. °रस्य च°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धम्मिल्ले नवमल्लिवल्लिकुसुमस्रक्कल्पनाशिल्पिनो
भद्रश्रीरसचित्रचित्रितकृतः कान्ते ललाटान्तरे ॥
तारावल्यनुहारिहारलतिकानिर्माणकर्माणुकाः
कण्ठे दिक्सुदृशां मुनीश्वरयशःपूरा नभःपूरकाः ॥ १००
उत्सङ्गेषु दिगङ्गना निदधते ताराः कराकर्षिका-
रागाद्द्यौरवलम्ब्य चुम्बति वियद्गङ्गा समालिङ्गति ॥
लोकालोकदरी प्रसीदति फणी शेषोऽस्य दत्ते रतिं
त्रैलोक्ये गुरुराजकीर्तिशशिनः सौन्दर्यमत्यद्भुतम् ॥१०१

कृताङ्कनः शशी सकलङ्कश्चन्द्रः स्वकलङ्कनिवृत्तयेऽधुनाऽप्युदधौ समुद्रे मज्जति ... सेवते ॥ ९९ ॥ [ परीति । परिशुद्धवार्तास्वित्यर्थः । अवच्छेदकत्वं सप्तम्यर्थः । ... त्प्रेक्षाविशेषोऽलंकारः ] ॥ ९९ ॥

नभःपूरकाः मुनीश्वरयशःपूरा दिक्सुदृशां दिगङ्गनानां धम्मिल्ले धम्मिल्लः ... कचास्तस्मिन्नवीना या मल्लिर्वल्लिर्मालतीलता तस्याः कुसुमानि तेषां स्रजां मालानां ... शिल्पिनस्तथा दिक्सुदृशां कान्ते ललाटान्तरे भद्रश्रीश्चन्दनम् 'भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः । तस्य रसेन चित्रमालेख्यं चित्रितं कुर्वन्तीति भद्रश्रीरसचित्रचित्रितकृतः ... दिक्सुदृशां कण्ठे तारावल्येकावल्येकयष्टिका 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरोक्ता नक्षत्रमालाख्याऽनुहारिणी मनोहरा हारलतिका तस्या निर्माणकर्मणि ... निपुणाः । 'अणुको निपुणाल्पयोः' इति मेदिनी । शार्दूलविक्रीडितं वृत्तम् ॥ १०० ॥ [ ललाटेति । भालमध्य इत्यर्थः । भद्रेति । भद्रः कल्याणकरो यः श्रीरसः ... ण्डाख्यचन्दनरसस्तेन यच्चित्रमद्भुतमेतादृशं यच्चित्रितं चित्रकाख्यतिलकरचनाजातं ... न्तीति तथेत्यर्थः । शृङ्गारशास्त्रे ज्योत्स्नाभिसारिकाणां भाले चन्दनतिलकमपि प्रसिद्ध... भावः । अत एवोक्तं गीतगोविन्दे—

'अत्रान्तरे च कुलटाकुलवर्त्मपात-
संजातपातक इव स्फुटलाञ्छनश्रीः ।
वृदावनान्तरमदीपयदंशुजालै-
र्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः' इति ।

रूपकादयोऽलंकाराः ] ॥ १०० ॥

गुरुराजस्य श्रीशंकरस्य कीर्तिर्यशस्तल्लक्षणस्य चन्द्रस्य त्रैलोक्ये सौन्दर्यम... मस्ति यतो दिगङ्गनास्तत्कीर्तिचन्द्रमुत्सङ्गेऽङ्के निदधते धारयन्ति प्रसिद्धचन्द्रं तु ... दिगङ्गना नैवं कुर्वन्ति तथा ताराः किरणात्मकैर्हस्तैराकर्षिकाः प्रसिद्धचन्द्रस्तु ... स्तस्य क्रमेण तारासु गमनप्रसिद्धेस्तथा द्यौस्तं रागादवलम्ब्य सदैव चुम्बति ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संप्राप्ता मुनिशेखरस्य हरितामन्तेषु सांकाशिनं
कल्लोला यशसः शशाङ्ककिरणानालक्ष्य सांहासिनम् ॥
कुर्वन्ति प्रथयन्ति दुर्मदसुधावैदग्ध्यसांलोपिनं
सम्यग्घ्नन्ति च विश्वजाङ्घिकतमःसंघातसांघातिनम् ॥ १०२ ॥
सोत्कण्ठाकुण्ठकण्ठीरवनखरवरक्षुण्णमत्तेभकुम्भ-
प्रत्यग्रोन्मुक्तमुक्तामणिगणसुषमाबद्धदोर्युद्धलीला ॥
मन्थाद्रिक्षुब्धदुग्धार्णवनिकटसमुल्लोलकल्लोलमैत्री-
पात्रीभूता प्रभूता जयति यतिपतेः कीर्तिमाला विशाला ॥१०३॥

---

प्रसिद्धं तं तस्य तत्र सर्वदा स्थित्ययोगात्तथा वियद्गङ्गा तं सम्यगालिङ्गति नतु प्रसिद्धं तं तथा लोकालोकाभिधपर्वतदरी तेन प्रसीदति नतु प्रसिद्धचन्द्रेण तस्य तत्र गत्यभावात्तथा शेषाख्यः फणी सर्पोऽस्य रतिं प्रीतिं दत्ते नतु प्रसिद्धस्योक्तहेतोस्तथाचैवंभूतस्य तस्य लोकत्रये सौन्दर्यमत्यद्भुतमित्यर्थः ॥ १०१ ॥ [ उत्सङ्गेष्विति । गुरुराजकीर्तिशशिन-मित्यार्थिकम् । निदधते प्रेम्णा स्थापयन्तीत्यर्थः । गुर्विति । षष्ठ्यन्तमेव । रागादि-त्यादि । गुर्विति द्वितीयान्तमेवात्र भगवदार्थिकम् । एवमेव वियदित्यादावपि । लोका-लोकेति । अत्र गुर्वित्यादिसप्तम्यन्तमध्याहार्यम् । शेष एतन्नामा फणी नागः । अस्य निरुक्तशशिनः । इयं षष्ठी चतुर्थ्यर्थिका ज्ञेया । अत्र दिगङ्गनादिनायिकापञ्चकानुरागादुक्त-नायकसौन्दर्यवर्णनध्वनितः शृङ्गारोऽपि रसः । काव्यलिङ्गादयोऽलंकाराः ] ॥ १०१ ॥

किंच मुनिशेखरस्य यशोलक्षणस्य क्षीरनिधेः कल्लोला हरितां दिशामन्तेषु सांकाशिनं समन्तात्प्रकाशं प्राप्ताः सम्शब्दोऽभिविधिद्योतकः । 'अभिविधौ भाव इनुण्' इत्यनेने-नुण्प्रत्ययः । एवमग्रेऽपि तथा शशाङ्ककिरणानालक्ष्य सांहासिनं समन्ताद्धासं कुर्वन्ति तथा दुर्मदाया गर्वयुक्तायाः सुधाया वैदग्ध्यस्य चातुर्यस्य सांलोपिनं समन्ताल्लोपं प्रथयन्ति तथा विश्वजाङ्घिकस्य जगति व्याप्तस्याज्ञानलक्षणस्य तमसः संघातस्य सांघातिनं समन्ताद्घातं सम्यग्घ्नन्ति घ्नन्ति पाकं पचतीतिवत्पुनः प्रयोगः ॥ १०२ ॥ [ मुनीति । मननशील-शिरोमणेः श्रीशंकराचार्यस्येत्यर्थः । अत्र यशसः कल्लोला इत्युक्त्या तस्य क्षीरार्णवत्वं व्यज्यते । एवं च रूपकादिरलंकारः ] ॥ १०२ ॥

सोत्कण्ठमुत्कण्ठया सह वर्तमानोऽकुण्ठोऽनिवार्यः कण्ठीरवः सिंहस्तस्य नखरवरा नखश्रेष्ठास्तैर्हतान्मत्तगजकुम्भात्प्रत्यग्रोन्मुक्तानां नवोन्मुक्तानां सद्यः पतितानां मुक्ताख्यम-णिगणानां सुषमा सौन्दर्यं तेनाऽऽबद्धा बाहुयुद्धलीला यया पुनश्च मथनाद्रिणा मन्दराचलेन क्षुब्धस्य क्षीरसमुद्रस्य निकटवर्तिनः सम्यक्चञ्चला ये वृहत्तरङ्गास्तैः

---

१ छ. 'क्षुब्धम°'। २ ग. दुर्मदव°। ३ क. °नां मुक्ताख्य°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकालोकदरि प्रसीदसि चिरात्किं शंकरश्रीगुरु-
प्रोद्यत्कीर्तिनिशाकरं प्रियतमं संश्लिष्य संतुष्यसि ॥
त्वं चाप्युत्पलिनि प्रहृष्यसि चिरात्कस्तत्र हेतुस्तयो-
रित्थं प्रश्नगिरां परस्परमभूत्स्मेरत्वमेवोत्तरम् ॥ १०४ ॥
दुर्वाराखर्वगर्वाहितबुधजनतातूलवातूलवेगो
निर्बाधागाधबोधामृतकिरणसमुन्मेषदुग्धाम्बुराशिः ॥
निष्प्रत्यूहं प्रसर्पद्भवदवदहनोद्भूतसंतापमेघो
जागर्ति स्फीतकीर्तिर्जगति यतिपतिः शंकराचार्यवर्यः ॥ १०५ ॥

---

सह या मैत्री तस्याः पात्रीभूता तत्तुल्या प्रभूता विशाला यतिपतेः कीर्तिमाला सर्वोत्कर्षेण वर्तते । स्रग्धरा वृत्तम् ॥ १०३ ॥ [ सोत्कण्ठेति । उत्कण्ठया सहितस्तथा स चासावकुण्ठकण्ठीरवश्चेति तथा परमोत्साहशाल्यप्रतिहतशक्तिसिंह इत्यर्थः । ' सिंहः कण्ठीरवः ' इति त्रिकाण्डशेषः । प्रतीपलुप्तोपमादयोऽलंकाराः ॥ १०३ ॥ ]

कमलिनी लोकालोकाख्यपर्वतकन्दरां पृच्छति हे लोकालोकदरि त्वं चिरात्प्रसीदसि किं शंकराख्यश्रीगुरोः प्रोद्यत्कीर्तिलक्षणचन्द्रमेव प्रियतमं सम्यगालिङ्ग्य संतुष्यसि । लोकालोकदरी कमलिनीं पृच्छति हे उत्पलिनि त्वं चापि चिरात्प्रहृष्यसि तत्र को हेतुरितीत्थं तयोर्दरीकमलिन्योः प्रश्नगिरां स्मेरत्वं विकसितवदनत्वमेवोत्तरमभूत् ॥ १०४ ॥ [ हे लोकालोकदरि त्वम् । शंकरेति । एतादृशम् । प्रियतमं चिरात्संश्लिष्य किं वा संतुष्यसीति वदेत्यन्वयः । त्वं चेत्यादि तु सरलमेव । इहातिशयोक्तिलुप्तोत्प्रेक्षादयोऽलंकाराः । अद्भुतानुप्राणितः शृङ्गारोऽपि रसः । शार्दूलविक्रीडितं वृत्तम् ॥ १०४ ॥ ]

दुर्वाराऽनल्पगर्वाऽऽहिता पण्डितजनतैव तूलः कार्पासकणस्तस्य वातूलवेगो ... स्तथा बाधरहितो योऽगाधो बोधस्तत्त्वज्ञानं स एवामृतकिरणश्चन्द्रस्तदुन्मेषे ... क्षीरसमुद्रस्तथा निष्प्रत्यूहं निर्विघ्नं प्रसर्पतः संसारदावाग्नेरुद्भूतस्य संतापस्य ... भूतः । स्फीता विशाला कीर्तिर्यस्य स शंकरश्चासावाचार्यवर्यो यतिपतिर्जगति ... स्रग्धरा वृत्तम् ॥ १०५ ॥ [ दुर्वारेति । दुर्वारो दुर्निरस एतादृशो ... र्वोऽतिमहाभिमानस्तत्राऽऽहिता दैवादभिषिक्ता यद्वा तेनाहितमनिष्टं यस्याः ... या बुधजनता भेदवादिपण्डितजनजातिः सैव तूलं नीरसत्वात्फल्गुत्वात्पेलवत्वा... कार्पासाद्यकृत्रिमतन्तुजालं प्रसिद्धमेव तस्य वातूलो वातसमूह एतादृशो ... वात्याविशेष इत्यर्थः । तथा । निर्बाधेति । निर्बाधः कालत्रयेऽप्यविनाश्यत... घोऽतलस्पर्शोऽनन्त इति यावत् । एतादृशः । अत एव—बोधेति । बोधो ...

---

१ घ. °ह्वितप° । २ घ. °न समुदाय एव । ३ क °वे क्षी° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिहासपुराणभारत-
स्मृतिशास्त्राणि पुनः पुनर्मुदा ॥
विबुधैः सुबुधो विलोकय-
न्सकलज्ञत्वपदं प्रपेदिवान् ॥ १०६ ॥
स पुनः पुनरैक्षताऽऽदरा-
द्वरवैयासिकशान्तिवाक्ततीः ॥
समगादुपशान्तिसंभवां
सकलज्ञत्ववदेव शुद्धताम् ॥ १०७ ॥
असत्प्रपञ्चश्चतुराननोऽपि स-
न्न भोगयोगी पुरुषोत्तमोऽपि सन् ॥
अनङ्गजेताऽप्यविरूपदर्शनो
जयत्यपूर्वो जगदद्वयीगुरुः ॥ १०८ ॥

---

क्षयसाक्षात्कारः स एवामृतकिरणः पीयूषभानुश्चन्द्र इत्यर्थः । तस्य सम्यगुन्मेष आविर्भावो यस्मात्स तथा । रूपकलुप्तोपमादयोऽलंकाराः ॥ १०५ ॥

इतिहासपदबोध्यानि महाभारतादीनि पुराणानि ब्राह्मादीनि भारतस्मृतयः सनत्सुजातीयगीतासहस्रनामाख्याः शास्त्राण्युत्तरमीमांसादीनि । भारतस्मृतीनामितिहासग्रहणेन ग्रहेऽपि पृथगुपादानं ब्राह्मणपरिव्राजकन्यायेन समाधेयम् । भारतस्यैव वा पृथगुपादानं बोध्यम् । स्मृतयो मन्वादिस्मृतयः । इतिहासादीनि पुनः पुनर्मुदा विबुधैः पण्डितैः सह सुबुधः पण्डिताग्रणीः श्रीशंकरो विलोकयन्सर्वज्ञत्वपदं प्राप्तवान्विबुधैः सकलज्ञत्वपदं प्राप्तवानिति वा संबन्धः । वियोगिनी वृत्तम् ॥ ६ ॥ [एवं श्रीमद्भगवत्पादवाण्याद्यभिवर्ण्य तस्य सार्वज्ञ्यमाह—इतिहासेति ] ॥ १०६ ॥

स श्रीशंकरः पुनः पुनरादराद्वराः श्रेष्ठा वैयासिकीः शान्तिवाक्ततीः शान्तिपर्वस्थावाक्यपङ्क्तीरैक्षत सर्वज्ञत्वं यथा प्राप्तवांस्तद्वदेवोपशान्तिसंभवां शुद्धतामपि समगात्सम्यगाप्तवान् । तथाच केवलं सकलज्ञतैव न तेनाऽऽप्ताऽपि तु मुख्यफलं शुद्धत्वमपीति भावः ॥ १०७ ॥ [ वरेति । वराः सकलत्रय्यन्ततात्पर्यसूत्रणादत्युत्कृष्टा एतादृश्यो वैयासिक्यो व्याससंबन्धिन्यो याः शान्तिवाचस्तासां ततीः पङ्क्तीरित्यर्थः । आदरात्प्रेम्णा ] ॥ १०७ ॥

किंच चतुरमाननं मुखं यस्य स चतुराननोऽपि सन्नसत्प्रपञ्चः प्रपञ्चरहितः प्रसिद्धश्चतुराननश्चतुर्मुखो हिरण्यगर्भस्तु सत्प्रपञ्चस्तथा पुरुषेभ्य उत्तमोऽपि सन्विषयभोगसंबन्धवान्न भवति प्रसिद्धस्तु पुरुषोत्तमो विष्णुः शेषशरीरयोगित्वाद्भोगोपयोगी तथाऽनङ्गस्य कामस्य जेताऽपि विरूपं दर्शनं यस्य स विरूपदर्शनो न भवति प्रसिद्धस्त्वनङ्गजेता महादेवो विरूप-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आलोक्याऽऽननपङ्कजेन दधतं वाणीं सरोजासनं
शश्वत्संनिहितक्षमाश्रियममुं विश्वंभरं पूरुषम् ॥
आर्याराधितकोमलाङ्घ्रिकमलं कामद्विषं कोविदाः
शङ्कन्ते भुवि शंकरं व्रतिकुलालंकारमङ्कागताः ॥ १०९

दर्शनस्तथाचैवंभूतोऽपूर्वोऽद्वयीगुरुः श्रीशंकराचार्यो जगज्जयतीत्यर्थः । अत्र श्लेष विरोधाभासः ।

' आभासत्वे विरोधस्य विरोधाभास इष्यते '

इत्युक्तेः ॥ १०८ ॥ [ अथ संक्षेपेण श्रीशंकराचार्यं सर्गान्ते परममङ्गलरूप सरत्वेन वर्णयति ] [ चतुरेति । चत्वार्याननान्यस्येति चतुराननो ब्रह्मा स असदिति । असन्नलीकः प्रपञ्चो यस्य स एतादृशो न भवति । किंतु व्यावहारि सप्रपञ्चकर्तैव भवतीति विरोधः । एतदाभासस्त्वेवम् । चतुरेति । चतुरं वक्तुं कुश मुखं यस्य स तथेत्यर्थः ] [ अभोगेत्यादि । पुरुषोत्तमोऽपि विष्णुरपि सन् । योगी—

'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः '

इत्यमराद्भोगशब्दितशेषशरीरं तस्य योगः शय्याकालिकः संयोगः सोऽस् भोगयोगी तथा न भवतीति तथेति विरोधः । पक्षे भोगशब्देन स्त्र्यादिभृतिः सा न स्त्यभोगः स चासौ योगी चेति तथा । भोगविशिष्टयोगिनो हि वसिष्ठादयः प्रसिद्धा एव पार्थस्तु पुरुषोत्तमोऽपीश्वरत्वात्सकलजीवश्रेष्ठोऽपि सन्नभोगयोग्येवेत्यर्थः] तथा । अ अनङ्गस्य कामस्य जेता हि शिवो विरूपदर्शनो विरूपाक्षो भवति न त्वविरूपदर्श स्त्वनङ्गस्य कामस्य जेता निग्रहीताऽप्यविरूपदर्शनो विरूपाक्षो न भवति किंतु सर्वत्र सुरूपदर्शन एव भवतीति भावः ] [ जगदिति । जगताऽद्वया न द्वैतं यस्यां विषयतया सा तथाऽद्वैतब्रह्मविद्या तस्या गुरुरुपदेष्टा श्रीभगवत् मंथति सर्वोत्कृष्टत्वेन वर्तत इत्यन्वयः । अत्राद्भुतो रसः । धीरोदात्तो नायकः । भासोऽलंकारः । तदुक्तम्—

' आभासस्य विरोधत्वे विरोधाभास इष्यते ।
विनाऽपि तन्वि हारेण वक्षोजौ तव हारिणौ ' इति ।

वंशस्थं वृत्तम् । तदुक्तम्—

' जतौ तु वंशस्थमुदीरितं जरौ ' इति ] ॥ १०८ ॥

किंच मुखपङ्कजेन वाणीं सरस्वतीं दधतं ब्रह्मचारिकुलालंकारं श्रीशंकर ङ्कमन्तिकं समीपमागता विद्वांसः कमलासनं ब्रह्माणं शङ्कन्ते । तथा सततं क्षमा लक्ष्मीर्यस्य तथाभूतं तं दृष्ट्वा विश्वंभरं पुरुषं श्रीविष्णुं शङ्कन्ते । त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकस्मिन्पुरुषोत्तमे रतिमतीं सत्तामयोन्युद्भवां
मायाभिक्षुहृतामनेकपुरुषासक्तिभ्रमान्निष्ठुराम् ॥
जित्वा तान्बुधवैरिणः प्रियतया प्रत्याहरद्यश्चिरा-
दास्ते तापसकैतवात्त्रिजगतां त्राता स नः शंकरः ॥ ३८४ ॥

इति श्रीमाधवीये तदाशुद्धाष्टमवृत्तगः ॥
संक्षेपशंकरजये चतुर्थः सर्ग आभवत् ॥ ४ ॥

---

धिते कोमले चरणकमले यस्य तं कामद्विपं महादेवं शङ्कन्ते। शार्दूलविक्रीडितं वृत्तम् ॥ १०९ ॥ [ संनिहितेति । संनिहिते निकटगते क्षमाश्रियौ पृथ्वीलक्ष्म्यौ यस्य स तथा तमित्यर्थः। 'क्षितिक्षान्त्योः क्षमा' इत्यमरः। पूरुषं 'पूरुषाः पुरुषाः' इत्यमरः। 'आर्या दाक्षायणी' इत्यमरः। पक्षे। सरोजेति। पद्मासनस्थितमालोक्येति यावत्। क्षमा क्षान्तिः श्रीः शोभैश्वर्यसंपत्तिर्वा। आर्याः श्रेष्ठा ब्राह्मणाः। कुलेति। शिवगुरु-कुलभूषणम्। एतादृशं शंकरं श्रीशंकराचार्यं प्रत्यङ्कागता निकटप्राप्ताः कोविदाः सरोजा-सनं विश्वंभरं कामद्विपं च पूरुषं शङ्कन्त इति संबन्धः। श्लेषसंदेहादयोऽलंकाराः]॥१०९॥

किंचैकस्मिन्पुरुषोत्तमे भगवति रामचन्द्रे रतिमतीमयोन्युद्भवां सीतालक्षणां सत्तां माया-भिक्षुणा रावणेन हृतां तान्बुधवैरिणो देवद्विषो राक्षसाञ्जित्वाऽनेकपुरुषेऽश्रेष्ठपुरुषे राक्षसे रावणे आसक्तिभ्रमाद्रावणेऽस्या आसक्तिरिति रामचन्द्रनिष्ठाद्भ्रमान्निष्ठुरां नैष्ठुर्येण वह्निं प्रविष्टाम-श्रेष्ठपुरुषस्य रावणस्य स्वस्मिन्नासक्तिभ्रमात्तं प्रति निष्ठुरामिति वा श्रेष्ठपुरुषस्य रामचन्द्रस्य स्वस्मिन्नासक्त्यभावभ्रमान्निष्ठुरामिति वा यो रामचन्द्रात्मनाऽवतीर्णः शिवश्चिरात्प्रियतया प्रत्याहरत्स त्रिजगतां त्राता नोऽस्माकं सुखकरस्तापसकैतवाद्यतिवेषमिषादास्ते नस्त्रिजगतां त्राता शंकर इति वा शिवस्य रामचन्द्रात्मनाऽवतरणप्रकारस्तु स्कन्दपुराणादवगन्तव्यः। पक्ष एकस्मिन्नद्वितीये पुरुषोत्तमे क्षराक्षरातीते परमात्मनि रतिमतीं जन्मादिशून्यां सत्तां मायाभिक्षुभिः क्षणिकविज्ञानवौद्धादिभिर्हृतामनेकात्मप्रसक्तिभ्रमान्निष्ठुरां तान्विवेकिवैरिणो जित्वा यश्चिरात्प्रत्याहरत्समानमन्यत् ॥ ११० ॥ [ इह निरुक्त एव नायकः। धीरो रसः शान्तोऽपि। श्लेषादयोऽलंकाराः ] ॥ ११० ॥

[ इति श्रीति । तदाशुद्धेति । शुद्धाष्टममा मर्यादीकृत्येत्याशुद्धाष्टमं तस्याऽऽशुद्धाष्टमं यद्वृत्तं तद्गच्छतीति प्रतिपादकत्वेनेति तथेत्यर्थः। सप्तमवर्षान्तश्रीशंकरा-चार्यवर्णनपर इति यावत् ] ॥ १११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपूज्यपादशिष्यदत्तवंशावतंसराम-कुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजयडिण्डिमे चतुर्थः सर्गः ॥४॥

---

१ क. 'वां सीताम°'। २ ख. ग. 'क्तिरि' ३ क. 'वादिभि'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ पञ्चमः सर्गः ।

इति सप्तमहायनेऽखिल-
श्रुतिपारंगततां गतो बटुः ॥
परिवृत्य गुरोः कुलाद्गृहे
जननीं पर्यचरन्महायशाः ॥ १ ॥
परिचरज्जननीं निगमं पठ-
न्नपि हुताशरवी सवनद्वयम् ॥
मनुवरैर्नियतं परिपूजय-
ञ्शिशुरवर्तत संस्तरणिर्यथा ॥ २ ॥
शिशुमुदीक्ष्य युवाऽपि न मन्युमा-
न्दिशति वृद्धतमोऽपि निजासनम् ॥
अपि करोति जनः करयोर्युगं
वशगतो विहिताञ्जलि तत्क्षणात् ॥ ३ ॥

---

एवं प्राकृतजनविलक्षणं तस्य बालचरितमुपवर्ण्य तुर्याश्रमस्वीकृतिमुपवर्णयितुं प्रस्तौ इतीति । इत्युक्तप्रकारेण सप्तमवर्षे सर्ववेदपारंगततां प्राप्तो बटुर्ब्रह्मचारी गुरोः कु वृत्य परिवर्तनं समावर्तनं विधाय गुरुकुलवासं समाप्य महायशा गृहे जननीं पर्यच असेवितवान् । वियोगिनी वृत्तम् ॥ १ ॥ [ इतीति । 'हायनोऽस्त्री शरत्समाः' इ महायशाः सन्पर्यचरदित्यन्वयः । तेन न समाप्तपुनरात्तत्वम् । चन्द्रवद्यश पूर्वं परावृत्तिवारकत्वेनोक्तविशेषणस्य सार्थक्यादित्याशयः ] ॥ १ ॥

मातरं परिचरन्वेदं पठंश्च मनुश्रेष्ठैः स्वायंभुवादिभिरग्निसूर्यसंपूजायां नियमितं प्र तृतीयसवनमित्येवंरूपं सवनद्वयं वह्निमूर्यौ परिपूजयन्सञ्शिशुर्भानुवदवर्तत । मनुवरै र्नियतं यथा स्यात्तथा परिपूजयन्निति वा । द्रुतविलम्बितं वृत्तम् ॥ २ ॥ [ सव

' सवनं स्वध्वरे स्नाने सोमनिर्दलनेऽपि च '

इति मेदिन्याः सायं प्रातरग्निकार्याख्यं यज्ञवाचकसवनपदवाच्यहोमद्वयं प्रती [ शिशुः

' कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि '

इति वचनात्पौगण्डवयाः श्रीशंकराचार्यः ] [ उपमादिरलंकारः ] ॥ २ ॥
किंच शिशुं श्रीशंकरं दृष्ट्वा क्रोधाद्यालयो युवाऽपि कोपवान्न भवति । वृद्ध

---

१ घ. °सप्ते ब° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृदु वचश्चरितं कुशलां मतिं
वपुरनुत्तममास्पदमोजसाम् ॥
सकलमेतदुदीक्ष्य सुतस्य सा
सुखमवाप निरर्गलमम्बिका ॥ ४ ॥
जातु मन्दगमनाऽस्य हि माता
स्नातुमम्बुनिधिगां प्रति याता ॥
आतपोग्रकिरणे रविबिम्बे
सा तपःकृशतनुर्विललम्बे ॥ ५ ॥

---

तमोऽत्यन्तमादरणीयोऽपि स्वासनं ददाति। अपिच तत्क्षणाद्दर्शनक्षण एव वशं प्राप्तः सर्वोऽपि जनो हस्तयोर्युगलं विहिताञ्जलि करोति ॥ ३ ॥ [ तस्य सर्वमान्यतामाह— शिशुमिति ] [ जनः सामान्यतः सर्वलोकः ] [ विहितेति । विहितो विधिचोदितोऽञ्जलिर्निर्मुक्ताङ्गुष्ठकरद्वयसंयोजनमित्यर्थः ] ॥ ३ ॥

मृद्विति चरितस्यापि विशेषणं मृदु कोमलं वचो यस्मिंस्तच्चरितमिति वा । ओजसां मनआदिबलानामास्पदमाश्रयभूतं वपुः शरीरं सुतस्यैतत्सर्वमवेक्ष्य सा सती कुमारजननी निरर्गलमप्रतिबन्धं सुखमवाप ॥ ४ ॥ [ अनुत्तमं न विद्यत उत्तमं यस्मात्तत्तथा निरुपममित्यर्थः । तत्र हेतुः—आस्पदमित्यादि ] [ निरर्गलम् ।

' कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना '
इत्यमरान्निर्गतमर्गलं प्रतिबन्धकं यस्मात्तत्तथेत्यर्थः ] ॥ ४ ॥

कदाचिदस्य श्रीशंकरस्य माता हि प्रसिद्धं मन्दं गमनं यस्याः सा समुद्रगां नदीं प्रति स्नानार्थं गता सूर्यमण्डल आतपेनोग्राः किरणा यस्यैतादृशे सति तपसा कृशा तनुः शरीरं यस्याः सा सती विलम्बं कृतवतीत्यर्थः । स्वागता वृत्तम् ॥ ५ ॥ [ आतपेति । आतपेन ' प्रकाशो द्योत आतपः ' इत्यमरात्प्रकाशविशेषेणोग्राः क्रूराः किरणा यस्य तत्तथेत्यर्थः ] [ तप इति । तपसा भर्तृवियोगवशात्समनुष्ठितचान्द्रायणादितपसा कृशा शुष्का तनुः शरीरं यस्याः सा तथेत्यर्थः । एतादृश्यत एव सा विललम्ब इत्यन्वयः ]॥५॥

---

१ ख. °शला मतिर्वपु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शंकरस्तदनुशङ्कितचित्तः
पङ्कजैर्विगतपङ्कजलार्द्रैः ॥
वीजयन्नुपगतो गतमोहां
तां जनेन सदनं सह निन्ये ॥ ६ ॥
सोऽथ नेतुमनवद्यचरित्रः
सद्मनोऽन्तिकमृषीश्वरपुत्रः ॥
अस्तवीज्जलधिगां कविहृद्यै-
र्वस्तुतः स्फुरदलंकृतपद्यैः ॥ ७ ॥
ईहितं तव भविष्यति कल्ये
यो हितं जगत इच्छसि बाल्ये ॥
इत्यवाप्य स वरं तटिनीतः
सत्यवाक्सदनमाप विनीतः ॥ ८ ॥

---

तत्तदा विगतकर्दमेन जलेनाऽऽर्द्रैः पङ्कजैर्वीजयन्नुपगतो जनेन जनसमुदायेन स[...] प्रति निन्ये । हेत्यव्ययं स श्रीशंकर इति वा ॥ ६ ॥

अथ नयनानन्तरं दोषरहितचरित्र ऋषीणामीश्वरस्य शिवगुरोः पुत्रः श्रीशंकरो[...] समीपं नेतुं समुद्रगा नदीं कवीनां मनोज्ञैर्वस्तुतः । स्फुरन्त्यलंकृतानि च तानि प[...] तैर्नत्वाऽऽपततः स्फुरदलंकृतपद्यैरस्तुवीत ॥ ७ ॥ [ ऋषीति । ऋषीणां म[...] मध्य ईश्वरः शिवावतारपात्रत्वेन श्रेष्ठो यः शिवगुरुस्तस्य पुत्र इत्यर्थः । अत [...] अनवद्येति ] [ अथ निरुक्तमातृक्लेशावेक्षणानन्तरम् । जलधिगां समुद्रगां [...] र्णाभिधां नदीम् ] [ वस्तुतः पारमार्थिकब्रह्मत्वेनेति यावत् ] ॥ ७ ॥

तेन स्तुता संतुष्टा नद्युवाच—तवेहितमभिलपितम् । कल्यति चेष्टामिति कल्ये[...] काले भविष्यति । ' अघ्न्यादयश्च ' इति कल्लेर्यकि ततः प्रज्ञाद्यणि रूपम् । '[...] हर्मुखं कल्यम् ' इत्यमरः । यस्त्वं बाल्यावस्थायां जगतो हितमिच्छसीत्येवंप्रकारे[...] वरं प्राप्य सत्यवचनः श्रीशंकरः सदनं प्राप । एतादृशसामर्थ्यवत्त्वेऽपि विनययुक्तः[...] [ सत्येति । सत्यब्रह्मप्रतिपादिका वाग्यस्य स तथा । एतेन तत्स्तुतेः सगुणब्र[...] नैवास्तीति सूचितम् । स्तुतिवरप्रदानयोः कार्यकारणभावलीला तु लोकानां प्रायो [...] ब्रह्मानधिकारित्वात्तादृशसगुणभक्त्यादिप्रवृत्तिसिद्ध्यर्थमेवेति भावः । एतादृशः स श[...] कराचार्यः । विनीतो वरलाभगर्वशून्यः सन्सदनं स्वगृहम् ] [ काव्यलिङ्गपरि[...] लंकाराः ] ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातरेव समलोकत लोकः
शीतवातहृतशीकरपूतः ॥
नूतनामिव धुनीं प्रवहन्तीं
माधवस्य समया सदनं ताम् ॥ ९ ॥
एवमेनमतिलोकचरित्रं
सेवमानजनदैन्यलवित्रम् ॥
केरलक्षितिपतिर्हि दिदृक्षुः
प्राहिणोत्सचिवमादृतभिक्षुः ॥ १० ॥
सोऽप्यतन्द्रितमभीरुपदाभिः
प्राप्य तं तदनु सद्विरदाभिः ॥
उक्तिभिः सरसमञ्जुपदाभिः
शक्तिभृत्समममजिह्मपदाभिः ॥ ११ ॥

---

शीतेन वायुनाऽऽहृतैर्जलकणैः पवित्रितो लोकः प्रातरेव माधवस्य लक्ष्मीपतेर्विष्णोः समया सदनं मन्दिरस्य समीपे प्रवहन्तीं तां धुनीं नदीं नूतनामिव समलोकत ॥ ९ ॥ [ लोको जनः । प्रातरेव । शीतेति । एतादृशः सन् । सदनं श्रीमद्भगवत्पादगृहं प्रति । समया 'समया निकषा हिरुक्' इत्यमरान्निकटप्रदेश इत्यर्थः । नूतनामभिनवामेव । माधवस्य विष्णोः । धुनीमिव 'तटिनी ह्रादिनी धुनी' इत्यमराद्विष्णुचरणसंभूतां भागीरथीमिवेत्यर्थः । एतादृशीं तां पूर्वोक्तस्वकृतप्रार्थनया दत्तवरां पूर्णानदीमिति यावत् । समलोकत सम्यक्प्रमयैव व्यालोकयामासेति संबन्धः ] ॥ ९ ॥

एवमनेन प्रकारेण मर्त्यानतिक्रान्तानि चरित्राणि यस्य तं सेवमानानां जनानां मनोरथपूरणेन दैन्यस्य लवित्रं छेदकमेनं श्रीशंकरं द्रष्टुमिच्छरादृता भिक्षवो येन स केरलक्षितिपती राजशेखराख्यः सचिवममात्यं प्रेषितवान् ॥ १० ॥ [ सेवमानेति । दात्रं लवित्रम्' इत्यमराद्भक्तजनदैन्यच्छेदकमित्यर्थः ] [ ननु किमुक्तभूपेन सचिवप्रेषणं तच्छलार्थं कृतम् । नेत्याशयेन तं विशिनष्टि—आदृतेति । सत्कृतभिक्षुक इत्यर्थः । एतेन समाप्तपुनरात्तत्वं युक्तम् । विशेषणस्याऽऽकाङ्क्षापूरकत्वात् ] ॥ १० ॥

सोऽमात्योऽपि तं सममतन्द्रितमनलसमतन्द्रितं यथा स्यात्तथेति वा । अभीर्भयवर्जित उपदीयत इत्युपदोपायनम् । 'डुदाञ् दाने' 'आतश्चोपसर्गे' इत्यङ् ।

'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । उपदाभिरुपायनभूताभिः समीचीनाभिर्द्विरदाभिः करेणुभिः सह तं श्रीशंकरं प्राप्य तदनु ततः प्राप्तेः[1] पश्चात्सरसानि मनोज्ञानि पदानि यासु सरसानामिति वा । एवंविधाभिराभिरुक्तिभिः शक्तिं शिवां

---

[1] ख. तत्प्राप्तेः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्य नैव सदृशो भुवि बोद्धा
दृश्यते रणशिरःसु च योद्धा ॥
तस्य केरलनृपस्य नियोगा-
द्दृश्यसे मम च सत्कृतियोगात् ॥ १२ ॥
राजिताभ्रवसनैर्विलसन्तः
पूजिताः सदसि यस्य वसन्तः ॥
पण्डिताः सरसवादकथाभिः
खण्डितापरगिरोऽवितथाभिः ॥ १३ ॥

---

सामर्थ्यं वा बिभर्तीति शक्तिभृत्सचिवोऽनिज्ञपत्समं यथा स्यात्तथो विज्ञापितवानि ॥ ११ ॥ [ तदनु निरुक्तराजाज्ञोत्तरमेव । सेति । संपदवधीभूतदिव्यगजोपलक्षित विधरत्नसहिताभिरिति यावत् ] [ सरसेति । रम्यशब्दार्थाभिरित्यर्थः । एताद आभिर्वक्ष्यमाणाभिरुक्तिभिः समं सार्धम् । अनिज्ञपद्विज्ञापयामासेत्यन्वयः । श्ली रलंकारः ] ॥ ११ ॥

ता एव दर्शयति—यस्य सदृशो बोद्धा रणमूर्धसु युद्धकर्ता च भुवि नैव दृश्यते केरलदेशाधिपतेराज्ञातस्त्वं सर्वोत्तमो दृश्यसे । नन्वन्य एव तन्नियोगादागत्य मां दृ दृष्टवान्भवानेव वा पूर्वमित्याशङ्क्याऽऽह—मम सत्कृतेः पुण्यस्य योगात् । ममेत्यन वृत्तिः । योगादिति पूर्वकालव्यावृत्तिः ॥ १२ ॥ [ अत्र नृपस्येत्यन्तं सरलमेव । तीति । सत्कृतेस्त्वत्सत्कारस्य योगो योजनं यस्मिन्स तथा तस्मादित्यर्थः । एत न्नियोगादाज्ञाविशेषादित्यर्थः । भो भगवन्निति शेषः । मम च ममापीति यावत् । स्वानधिकारित्वध्वनने स्वस्मिन्नमानित्वं सूच्यते । स्वमित्यार्थिकम् । दृश्यसे चाक्षुषी संबन्धः । एतेन समाप्तपुनरात्तत्वं सत्कृतीत्यस्य प्रत्युक्तम् । निरुक्तविशेषणस्य मनप्रयोजनाकाङ्क्षापूरकत्वात् ] ॥ १२ ॥

अथ राज्ञः प्रार्थितप्रदानपात्रतासूचनाय तं स्तुवन्प्रार्थयते—राजितेतिद्वाभ्याम् । तैर्दीप्तिमद्भिराभ्रैः सुवर्णमयैर्वस्त्रैर्विलसन्तः शोभमानाः पूजिताः पूजां प्राप्ता अवितथा व्यर्थाभिः सरसा रसयुक्ताश्च ता वादकथाश्च ताभिः खण्डिता अपरेषामन्येषां गिरो वाचो पण्डिता यस्य सदसि सभायां वसन्तो वसन्तीत्यर्थः ।

'अभ्रं मेघे च गगने धातुभेदे च काञ्चने'

इति मेदिनी ॥ १३ ॥ [ पूजिता राज्ञेति शेषः । अत एव विलसन्तः ] ॥ १३ ॥

---

१ ख. °था वा वि° । २ ख. °वान् ॥ ११ ॥ ता° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सोऽयमाजिजितसर्वमहीपः
स्तूयमानचरणः कुलदीपः॥
पादरेणुमवनं भवभाजा-
मादरेण तव विन्दतु राजा॥ १४॥
एष सिन्धुरपरो मदपूर्णो
दोषगन्धरहितः प्रवितीर्णः॥
अस्तु तेऽद्य रजसा परिपूतं
वस्तुतो नृपगृहं शुचिभूतम्॥ १५॥
इत्युदीर्य परिसाधितदौत्यं
प्रत्युदीरितसदुक्तिममात्यम्॥
अत्युदारमृषिभिः परिशस्तं
प्रत्युवाच वचनं क्रमशस्तम्॥ १६॥

---

आजौ सङ्ग्रामे जिताः सर्वे महीपा भूमिपाला येनात एव स्तूयमानौ चरणौ यस्यात एव कुलस्य दीपो दीपवत्प्रकाशकः सोऽयं राजा भवभाजां संसारं भजतामवनं पालकं तव चरणरेणुमादरेण विन्दतु लभताम्। अभ्यर्थनायां लोट्॥ १४॥

तत्राऽऽनीतासूपदासु मुख्यमेकं गजं दर्शयति—एष सिन्धुरपरो हस्तिश्रेष्ठो मदेन पूर्णो दोषस्य गन्धेनापि वर्जितः प्रवितीर्णो राज्ञा प्रेम्णा दत्तस्तस्माद्वस्तुतः शुचिभूतमपि नृपगृहं तव चरणरजसां परित आ समन्तात्पूतं पवित्रमस्तु॥ १५॥ [एष इति। एषोऽङ्गुलिनिर्देश्यः पुरोवर्तीत्यर्थः। सिन्धुरेति।

'कुम्भीकुञ्जरवारणेभरदिनः सामोद्भवः सिन्धुरः'

इति हलायुधाद्गजश्रेष्ठ इत्यर्थः]॥ १५॥

एवं युक्तियुक्तं सचिववाक्यमुदाहृत्य तदुत्तररूपं श्रीशंकरवाक्यमुदाहर्तुमाह—इत्येवंप्रकारेणोदीर्योक्त्वा परिसाधितं दूतकृत्यं येन प्रत्युदीरिताः प्रत्युच्चारिताः सतामुक्तयः समीचीना उक्तयो वा येन तममात्यं सचिवं प्रति क्रमशः क्रमेण वचनमुवाच। तद्विशिनष्टि—अत्युदारमत एवर्षिभिः परिशस्तं संस्तुतम्॥ १६॥ प्रत्युदीरितेति। भगवत्पादवाक्यश्रवणोत्तरं मध्ये मध्ये प्रत्युदीरिताः प्रत्युत्तरीकृताः सदुक्तयो येन स तथा तमित्यर्थः। एतेन सोऽसीत्येकादशश्लोकोक्तत्प्राप्त्युत्तरमभिवादने तेन कृते सति कस्त्वं कुत आगतोऽसीत्यादिर्भगवत्पादीयः प्रश्नः सूचितः। परिशस्तं स्तुतमित्यर्थः]॥ १६॥

---

१ ग. 'रिपूतमास'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भैक्ष्य*मन्नमजिनं परिधानं
रूक्षमेव नियमेन विधानम् ॥
कर्म दातृवर शास्ति वटूनवं
शर्मदायिनिगमाप्तिपटूनाम् ॥ १७ ॥
कर्म नैजमपहाय कुभोगैः
कुर्महेऽह किमु कुम्भिपुरोगैः ॥
इच्छया सुखममात्य यथेतं
गच्छ नार्थमसकृत्कथयेत्थम् ॥ १८ ॥

---

तदुदाहरति—भैक्ष्यं भिक्षया लब्धमन्नं परिधानमाच्छादनमजिनं मृगचर्म कर्तव्यं नियमेन रूक्षमेव कष्टसाध्यमेव त्रिकालस्नानादि[2] कर्म कर्मप्रतिपादकं शास्त्रं हे दातृवर शर्मदायिनां दृष्टादृष्टसुखदायिनां वेदानां प्राप्तौ पटूनां कुशलानां ब्रह्मचारिणां शास्ति। यद्वा विधानं श्रुतिस्मृत्यादि नियमेन रूक्षमेव कर्म तत्रापि ... वा शास्तीत्यर्थः। शर्मदायीति कर्मणो वा विशेषणम् ॥ १७ ॥ [ अजिनं कृष्ण... रूक्षमेवेत्यन्नपरिधानयोरुभयोरपि विशेषणम्। विधानं संध्यावन्दनाग्निकार्यवेदाध्ययन... श्रूषाद्यनुष्ठानमित्यर्थः ] ॥ १७ ॥

तथाचैवंविधा ब्रह्मचारिणो वयं नैजं स्वीयं कर्म विहाय कुम्भिपुरोगैः कुत्सिताः ... इति भोगा विषयास्तैरिभपुरःसरैः कुत्सितैर्विषयसंभोगैः किं कुर्महे। अहेति ... द्वार्थकमाश्चर्यार्थकं वाऽव्ययम्। तर्हि मया किं विधेयमित्याकाङ्क्षायामाह—इच्छया सुखं यथा स्यात्तथा यथेतं यथागतं तथा गच्छ[3]। इत्थममुना प्रकारेण ... कथय ॥ १८ ॥ [ कुम्भीति। प्रकृतत्वदानीतदन्तिपतिमुख्यैरित्यर्थः। एतादृशैः स्वधर्मविरुद्धविषयोपभोगैरिति यावत् ] [ किं कुर्महे न किमपीति संबन्धः ... शेषः। अत एव। इच्छयेत्यादि। इच्छया निरुक्तगजान्तसंपत्त्युपभोगाभावे... सुखं कुर्महे संपादयामो न किमपीति प्राग्वदेव। अतः। हे अमात्य त्वं ... स्वस्वामिनं प्रति गच्छ ततोऽसकृदित्थं कथयेत्यन्वयः। नाथं प्रतीत्यार्थिकमेव ]

---

* भैक्षमिति तु समीचीनम्।

---

१ क. माघ न°। २ ख. ग. 'दि कर्मम'। ३ क. ख. 'च्छ। यत इ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्युत क्षितिभृताऽखिलवर्णा
वृत्त्युपाहरणतो विगतर्णाः ॥
धर्मवर्त्मनिरता रचनीयाः
कर्म वर्ज्यमिति नो वचनीयाः ॥ १९ ॥
इत्यमुष्य वचनादकलङ्कः
प्रत्यगात्पुनरमात्यमृगाङ्कः ॥
वृत्तमस्य स निशम्य धरापः
सत्तमस्य सविधं स्वयमाप ॥ २० ॥
भूसुरार्भकवरैः परिवीतं
भांसुरोडुपगभस्त्युपवीतम् ॥
अच्छजह्नुसुतया विलसन्तं
सुच्छविं नगमिव द्रुमवन्तम् ॥ २१ ॥

---

यत्त्वयोक्तं तद्राज्ञः कर्तव्यं न भवति प्रत्युत भूमिपेन सर्वे वर्णा ब्राह्मणाद्या वृत्त्युपाहरणतस्तत्तद्वर्णोचितशुद्धजीविकासंपादनेन विगतानि देवर्षिपितृणानि येभ्यस्तथाविधा धर्ममार्गे निरता रचनीयाः स्वीयं कर्म वर्ज्यमिति नो वचनीया नैव वक्तव्याः ॥१९॥ [ वृत्तीति ।

' वृत्तिर्विवरणाजीवकौशिक्यादिप्रवर्तने '

इति मेदिन्याः समुचितजीवनोपायोपसमर्पणेनेत्यर्थः ] ॥ १९ ॥

ततः किं वृत्तमित्याकाङ्क्षायामाह—इत्येवंविधादमुष्य शंकरस्य वचनादमात्यचन्द्रश्चन्द्राद्व्यतिरेकसूचकं विशेषणमकलङ्कः पुनः प्रत्यगात्स्वस्वामिनं प्रति गमनं कृतवान्स भूमिपोऽस्य वृत्तं श्रुत्वाऽत्युत्कृष्टस्य श्रीशंकरस्य सविधं समीपं स्वयं प्राप ॥ २० ॥

इतश्चतुर्थश्लोकस्थं मुनिवरस्य कुमारं विशिनष्टि— भूसुराणां भूमिदेवानां ब्राह्मणानामर्भकवरैर्बालकश्रेष्ठैः परिवीतं परितो व्याप्तं भासुरैर्देदीप्यमानैर्भास्वरस्य वोडुपस्य चन्द्रस्य गभस्तिभिः किरणैस्तुल्यमुपवीतं यज्ञोपवीतं यस्याच्छा स्वच्छा या जह्नुसुता गङ्गा तया विलसन्तं द्रुमवन्तं नगं हिमालयमिवं सुच्छविं सुष्ठु च्छविः कान्तिर्यस्य तम् ॥ २१ ॥ [ कीदृशस्तेन राज्ञा भगवान्श्रीमगवत्पादो दृष्ट इत्यत्राऽऽह—भूसुरेत्यादिचतुर्भिः कालापकेन । तदुक्तम्—

' द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ।
कालापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् '

---

१ क. ख. ग. घ. भास्वरो° । २ ख. ग. घ. नो कथनी° । ३ ख. ग. घ. भास्वरै° । ४ ख. °व सुष्ठु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चर्मं कृष्णहरिणस्य दधानं
कर्म कृत्स्नमुचितं विदधानम् ॥
नूतनाम्बुदनिभाम्बरवन्तं
पूतनारिसहजं तुलयन्तम् ॥ २२ ॥
जातरूपरुचिमुञ्जसुधाम्ना
छातरूपकटिमद्भुतधाम्ना ॥
नाकभूजमिव सत्कृतिलब्धं
पाकपीतलतिकापरिरब्धम् ॥ २३ ॥
सस्मितं मुनिवरस्य कुमारं
विस्मितो नरपतिर्बहुवारम् ॥
संविधाय विनतिं वरदाने
तं विधातृसदृशं भुवि मेने ॥ २४ ॥

---

इति । भासुरेति । भासरः शरद्राकाभवत्वेनातिप्रकाशमान एतादृशो य 'तारकाऽप्युडु वा स्त्रियाम्' इत्यमरादुडूनि नक्षत्राणि पातीत्युडुपश्चन्द्रस्तस्य ये 'गभस्तिघृणिरश्मयः' इत्यमरात्किरणास्तद्वन्निर्मलं शुक्लमुपवीतं यज्ञसूत्रं यस्य तमित्यर्थः ] ॥ २१ ॥

कृष्णहरिणस्य चर्म दधानं सर्वमुचितं कर्म विदधानं नूतनमेघतुल्यमम्बरम तथा तं पूतनायाः कंसप्रेषिताया अरिः शत्रुः कृष्णस्तस्य सहजं भ्रातरं बलभद्रं तत्तुल्यं दधानम् ॥ २२ ॥ [ चर्मेति । तत्रापि प्रथमप्रतीपमाह— नूतनेति । स्वात्मसमं कुर्वाणमिति यावत् । प्रतीपलक्षणं तूक्तं चन्द्रालोककारिकासु—

'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः' इति ॥ २२ ॥

जातरूपस्य सुवर्णस्य रुचिरिव रुचिर्यस्य तस्य मुञ्जसंज्ञकस्य तृणविशेषस्य सुष्ठु तेजसाऽऽश्चर्यमन्दिरेण च्छातं छन्नं रूपं यस्यास्तथाभूता कटिः श्रोणिर्यस्य सुकृतं तया लब्धं पाकेन परिणत्या पीता या लतिकाः सूक्ष्मलतास्ताभिः परिरब्धं स्वर्गभूमिजं कल्पद्रुममिव ॥ २३ ॥ [ सदिति । सती या कृतिर्ज्योतिष्टो तया लब्धः प्राप्तस्तमित्यर्थः । एतादृशम् । पाकेति । पाकः परिपाकस्तेन पीताः या लतिका 'वल्ली तु व्रततिर्लता' इत्यमराद्वल्लयस्ताभिः परिरब्धः संवेष्टितस्तं नाकभूजमिव स्वर्गभूमिरुहमिव कल्पद्रुममिवेति यावत् । एतेनाऽऽचार्ये लक्ष्मी ध्वन्यते । पूर्णोपमालंकारः ] ॥ २३ ॥

स्मितेन मन्दहसितेन सहितं मुनिवरस्य शिवगुरोः कुमारं नरपतिर्बहुवार

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन पृष्टकुशलः क्षितिपालः
स्वेन सृष्टमथ शात्रवकालः ॥
हाटकायुतसमर्पणपूर्वं
नाटकत्रयमवोचदपूर्वम् ॥ २५ ॥
तद्रसार्द्रगुणरीतिविशिष्टं
भद्रसंधिरुचिरं सुकवीष्टम् ॥
संग्रहेण स निशम्य सुवाचं
तं गृहाण वरमित्यमुमूचे ॥ २६ ॥

---

विधाय तं भुवि वरदाने ब्रह्मणा समं मेने । सुवीत्यस्य विनतिमित्यनेन वा संबन्धः ॥२४॥ [ नरपतिः पूर्वोक्तकेरलेश्वरः । भुवि पृथिव्याम् । बहुवारम् । विनतिं साष्टाङ्गत्वलक्षणविशेषेण या नतिर्दण्डवत्प्रणतिस्तामित्यर्थः । संविधाय । सस्मितं नैसर्गिकमन्दहासयुक्तम् ] [ वरदानेऽभीप्सितवितरणविषये विधातृसदृशं मुन्यपि मेन इति संबन्धः । अद्भुतो रसः । उदात्तो नायकः । लुप्तोपमालंकारः ] ॥ २४ ॥

तेन श्रीशंकरेण पृष्टं कुशलं यस्मै स शात्रवस्य शत्रुसमूहस्य शत्रुसंबन्धिनो वा कालोऽन्तको भूमिपालो दशसहस्रसंख्याकसुवर्णमुद्रासमर्पणपूर्वकं स्वेन रचितमपूर्वं नाटकानां त्रयमवोचत् ॥ २५ ॥ [ शात्रवेति ।

'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमराद्विपक्षान्तक इत्यर्थः । एतादृशः । अत एव । क्षितीति । निरुक्तनृपतिः । अवोचन्निवेदयामासेत्यन्वयः । एतेन स्वस्य काव्यनाटकादिपाटवं व्यज्यते ] ॥ २५ ॥

नाटकत्रयं विशिनष्टि—तदित्यर्धेन । तन्नाटकत्रयं—

'शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः'

इत्युक्तै रसैरार्द्रगुणैः ।

'ये रसस्याङ्गिनो धर्माः शौर्यादय इवाऽऽत्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ।
माधुर्यौजःप्रसादाख्यास्त्रयस्ते च पुनर्दश ।
आल्हादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।
दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः ।
बीभत्सरौद्ररसयोस्तस्याऽऽधिक्यं क्रमेण च ।
शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः' इत्युक्तैर्गुणैः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

' रीतिर्नाम गुणाश्लिष्टा वर्णसंघट्टना मता '

' वैदर्भी गौडी पाञ्चाली ' इत्युक्ताभी रीतिभिश्च विशिष्टं युक्तं तथा श्रेष्ठसंधिभिः सुन्दरं संधिर्नामैकेन प्रयोजनेनान्वितानां कथांशानामवान्तरप्रयोजनं तत्र पञ्च संधयस्तदुक्तं दशरूपके—

' मुखं प्रतिमुखं गर्भः सावमर्शोऽपसंहृतिः ।
मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा ।
लक्ष्यालक्ष्यस्य बीजस्य शक्तिः प्रतिमुखं मतम् ।
गर्भस्त्वदृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
हेतुना येन केनापि विमर्शः संधिरिष्यते ।
बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐक्यार्थमुपवर्ण्यन्ते यत्र निर्वहणं हि तत् '

इत्यादि । संधिषु भद्रत्वं ग्राम्यचेष्टादिविनिर्मुक्तत्वमत एव शोभनकवीनामिष्टं शोभनत्वं रसग्राहित्वम् । एवंविधनाटकत्रयं स श्रीशंकरः संग्रहेणाऽऽकर्ण्य तममुं राजानं वरं गृहाणेत्युवाच ॥ २१ ॥ [ तदिति । स श्रीशंकराचार्यः । रसैर्वक्ष्यमाणलक्षणैर्नवरसैरार्द्रं सुस्निग्धं तच्च तद्गुणरीतिविशिष्टं गुणैर्वक्ष्यमाणै वक्ष्यमाणाभिर्विशिष्टं चेति तथा यावत्काव्यधर्मधुरीणमित्यर्थः । रसादयस्तु तत्तल्लक्षणपूर्वकं प्रपञ्चिताः साहित्यसार एवास्माभिः । तत्र रससामान्यलक्षणं यथा—

' विभावाद्यैरपाज्ञानचिह्नैर्व्यस्थाय्यसौ रसः ।
यद्वा तत्संयुतिव्यक्तस्थाय्युपाधिश्चिदेव सः ' ।

विभावाद्या विभावानुभावव्यभिचारिभावाः । अथ तद्भेदाः—

' शान्तशृङ्गारकरुणाहास्याद्भुतभयानकाः ।
वीरबीभत्सरौद्राश्च लोके नव रसाः स्मृताः ।
त्रयस्त्रयः क्रमादेते विज्ञेयाः सात्त्विकादयः ।
जाग्रदादिष्वदेकैकत्रिकेऽपि च पुनस्तथा ' ।

अथ तत्स्थायिभावाः—

' निर्वेदोऽथ रतिः शोको हासोऽथो विस्मयो भयम् ।
उत्साहोऽथ जुगुप्सा च क्रोधश्चेति पुरातनैः ।
स्थायिभावाः क्रमादेते शान्तादीनां प्रकीर्तिताः ।
स्थायित्वं वासनात्वेऽपि मुहुर्व्यक्तत्वमिष्यताम् ' ।

अथ सामान्यतो विभावादिस्वरूपम्—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'एतेषां कारणानि स्युर्विभावा द्विविधा अपि ।
अनुभावास्तु कार्याणि सहाया व्यभिचारिणः ।
आलम्बनविभावाश्च तथैवोद्दीपनाभिधाः ।
अनुभावा अथ तथा क्रमाद्बोध्याश्चतुर्विधाः ।
कायिका मानसास्तद्वदाहार्याः सात्त्विका अपि ।
श्रवणाद्याः प्रमोदाद्या रामत्वाद्या नटे क्रमात् ।
इत्यसंख्यास्त्रयोऽथाष्टौ स्तम्भाश्रुस्वरभङ्गकाः ।
कम्पवैवर्ण्यरोमाञ्चलयस्वेदा इमेऽन्तिमाः' ।

अथ गुणलक्षणादि—

'सात्त्विकैकरसस्थो यो धर्मो धीधृतिकार्यसौ ।
माधुर्यं भोगकरुणाऽयोगशान्तेऽधिकं क्रमात्' ।

अयोगो विप्रलम्भशृङ्गारः ।

'तामसैकरसस्थो यो धर्मो धीदीप्तिकार्यसौ ।
ओजो वीरे च बीभत्से रौद्रे च क्रमशोऽधिकम् ।
राजसेषु तु तेषु स्यात्प्राधान्यमुभयोरपि ।
यः सर्वरसगोऽपीन्दुं दीपवच्चीनमम्बुवत् ।
ओजोमाधुर्ययोर्द्रुत्तं नयेद्द्राक्स प्रसादकः' ।

इन्दुं कर्पूरम् । चीनं सुक्ष्मवस्त्रम् । ओजोमाधुर्ययोः सतोः । तं शृङ्गारादिरसम् । द्राक्शीघ्रम् । मनः प्रतिनयेत् । स गुणः प्रसादकः प्रसादाभिध इत्यर्थः । अथ रीतयः—

'तत्तद्रसार्हपदसंघटनारीतिरीरिता ।
वैदर्भी च तथा गौडी पाञ्चाली चेति तत्क्रमात् ।

माधुर्यादिव्यञ्जकगुणक्रमेण' इत्यर्थ इति । विस्तरस्तु व्यभिचारिभावादिलक्षणादिस्तत्र तट्टीकायां च द्रष्टव्यो गौरवान्नेह प्रतन्यत इति दिक् । एतादृशम् । तथा । मद्रेति । मद्राः सुमङ्गला याः संधयो वक्ष्यमाणास्ताभी रुचिरं रम्यम् । तदुक्तं दशरूपकेऽन्तरैकार्थसंबन्धः संधिरिति सामान्यलक्षणमुपक्रम्य सोदृशं संधिजातम्—

'मुखं प्रतिमुखं गर्भः सावमर्शोऽपसंहृतिः' ।
अथोक्तसंधीनां पञ्चानामपि क्रमाल्लक्षणानि-
'मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा ।
लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तां नितान्तहृदयंगमसारां
गां निशम्य तुलितामृतधाराम् ॥
भूपतिः स रचिताञ्जलिबन्धः
स्वोपमं सुतमियेष सुसंधः ॥ २७ ॥
नो हिताय मम हाटकमेत-
द्देहि नस्तु गृहवासिजनाय ॥
ईहितं तव भविष्यति शीघ्रं
याहि पूर्णमनसेत्यवदत्तम् ॥ २८ ॥

---

गर्भस्त्वदृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ।
बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ' ।

लक्ष्येति । तस्य बीजस्य । किंचिल्लक्ष्यः किंचिदलक्ष्य इवोद्भेदः प्रकाशनं ह स्तम् । निर्वहणमुपसंहृतिरिति बोध्यम् । एतादृशं च । अत एव । सुकवीष्ट च । तदुक्तनाटकत्रयम् । संग्रहेण संक्षेपेण । निशम्य श्रुत्वा । अत एव शोभनवाग्वन्तम् । एतादृशम् । तं पूर्वोक्तम् । अमुं केरलनरपतिं प्रति त्वं वरं तार्थम् । गृहाण याचय । इत्यूच उवाचेत्यन्वयः ] ॥ २६ ॥

नितान्तमत्यन्तं हृदयंगमो मनोहरः सारो यस्यां तुलिताऽमृतधारा यया तां गृहाणेति वाचं निशम्य रचितोऽञ्जलिबन्धो येन स बद्धाञ्जलिः सुष्ठु संधा प्रतिज्ञा स भूपतिः स्वोपमं स्वसदृशं पुत्रमियेषेच्छति स्म ॥ २७ ॥ [ ततः स राजा किं इत्यत्राऽऽह—तामिति । सुसंधः । ' संधा स्थितिप्रतिज्ञयोः ' इति मेदिन्या संधा स्थितिर्यस्य स तथेत्यर्थः । एतेन वक्ष्यमाणाञ्जलिकरणे हेतुर्द्योतितः । डिण्डिम सुष्ठु संधा प्रतिज्ञा यस्येति व्याचष्टे । एतादृशः । अत एव । रचितेति ॥ २७ ॥

एवं प्रार्थितः श्रीशंकरस्तं राजानमुवाच । एतद्दशसहस्रसंख्याकं हाटकं मम नास्ति । तर्हि कथं विधेयमिति तत्राऽऽह—नोऽस्माकं गृहवासिजनाय तु देहि मनसाऽभिलषितं शीघ्रं भविष्यति तस्मात्पूर्णमनसा शीघ्रं याहि गच्छेति । भविष्यति शीघ्रपदमुभयत्र संबन्धनीयम् ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजवर्यकुलवृद्धनिमित्तां
व्याजहार रहसि श्रुतिवित्ताम् ॥
इष्टिमस्य सकलेष्टविधातु-
स्तुष्टिमाप हि तया क्षितिनेता ॥ २९ ॥
स विशेषविदा समाजितः
कविमुख्येन कलाभृतां वरः ॥
अगमत्कृतकृत्यधीर्निजां
नगरीमस्य गुणानुदीरयन् ॥ ३० ॥
बहवः श्रुतिपारदृश्वनः
कवयोऽध्यैपत शंकराद्गुरोः ॥
महतः सुमहान्ति दर्शना-
न्यधिगन्तुं फणिराजकौशलीम् ॥ ३१

---

एवं जनसमाज उक्त्वा पुना रहस्येकान्ते राजवर्यकुलस्य वृद्धेर्निमित्तभूतां श्रुतिवित्तां श्रुतिप्रसिद्धाम् ।

' वित्तं क्लीबे धने वाच्यलिङ्गं ख्याते विचारिते '

इति मेदिनी । अस्य राज्ञः सकलेष्टानां विधाता परमात्मा तस्येष्टिं पूजां व्याजहार तत्प्रकारमुक्तवान् । तयेष्ट्या भूमिनेता राजा तुष्टिमापेत्यर्थः ॥ २९ ॥ [ राजेति । स्पष्टम् । इष्टिं पुत्रेष्टिमस्य प्रकृतनृपस्य । कर्मणि षष्ठीयम् । रहसि व्याजहारेति योजना । क्षितीति । ' अधिभूर्नायको नेता ' इत्यमराद्भूपतिरित्यर्थः । अत्र तेन निरुक्तव्याहारेणेत्याधिकम् । परामृश्यम् । तुष्टिमापेत्यन्वयः । ' तुष्टिमाप हि तया क्षितिनेता ' इति डिण्डिमपाठः ] ॥ २९ ॥

विशेषज्ञेन कविमुख्येन श्रीशंकरेण समाजितः पूजितः कलाभृतां मध्ये श्रेष्ठः कृतं कृत्यं यया सा बुद्धिर्यस्य स राजाऽस्य गुणान्वर्णयन्स्वीयां नगरीमगमद्गतवान् । वियोगिनी वृत्तम् ॥ ३० ॥

एवं केरलभूमिपतेर्वरप्रदानादिकमुपवर्ण्य वृत्तान्तान्तरं वर्णयितुमुपक्रमते—बहवः श्रुतिपारदृश्वनो वेदपारं दृष्टवन्तः कवयः । श्रीशंकरान्महतो गुरोर्महान्ति दर्शनानि शास्त्राणि फणिराजस्य शेषस्य कुशलतामधिगन्तुमध्यैपताध्ययनं कृतवन्त इत्यर्थः ॥ ३१ ॥ [ बहवोऽनेकशः । कवयः । एतेन तन्निकटेऽध्ययनेऽधिकारसमृद्धिर्व्यज्यते । सुमहान्ति महाभाष्याद्यतिविस्तृतानि । फणीति । शेषपाण्डित्यचातुरीमित्यर्थः । श्रुतीति । वेदपारगात् । एतेन शब्दब्रह्मनिष्णातत्वं व्यज्यते । तथा । महतः ।

' महान्तं विभुमात्मानं मत्वा धीरो न शोचति ' इति श्रुतेः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पठितं श्रुतमादरात्पुनः
पुनरालोक्य रहस्यनूनकम् ॥
प्रविभज्य निमज्जतः सुखे
स विधेयान्विदधेतमां सुधीः ॥ ३२ ॥

सर्वार्थतत्त्वविदपि प्रकृतोपचारैः
शास्त्रोक्तभक्त्यतिशयेन विनीतशाली ॥
संतोषयन्स जननीमनयत्कियन्ति
संमानितो द्विजवरैर्दिवसानि धन्यः ॥ ३३ ॥

सा शंकरस्य शरणं स च तज्जनन्या
अन्योन्ययोगविरहस्त्वनयोरसह्यः ॥
नो वोढुमिच्छति तथाऽप्ययमनुष्यभावा-
न्मेरुं गतः किमभिवाञ्छति दुष्प्रदेशम् ॥ ३४ ॥

---

परब्रह्मरूपेश्वरावतारादिति यावत्। एतेनैश्वर्यं द्योत्यते। एतादृशात्। शंकराद्गुरोः

पठितं श्रुतमनूनकमखण्डमाराद्रहस्येकान्त आलोक्य प्रविभज्य च साराऽसारं विधाय निजसुखे निमज्जतो विधेयाञ्शिष्यान्स सुधीः श्रीशंकरो विदधेतमां सम्यक् ॥ ३२ ॥ [ आदरात्पठितं श्रद्धयाऽधीतम्। श्रुतं शास्त्रम्। रहसि पुनः पुनः संचिन्त्य। प्रविभज्य विषयविभागेनाविरुद्धं कृत्वाऽत एव। सुखेऽद्वैतानन्दे। हि तच्छिष्याः परापरब्रह्मनिष्ठा एव बभूवुरिति भावः ] ॥ ३२ ॥

विनीतशाली विनयवान्। वसन्ततिलका वृत्तम् ॥ ३३ ॥ [ विनीते। शाक-वादिवत्समासेन विनीतचित्तशालीत्यर्थः।

' घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ' इत्यमरः ] ॥ ३३ ॥

अन्योन्ययोगस्यैं परस्परसंयोगस्य विरहस्त्वनयोः शंकरतज्जनन्योरसह्यो तथाऽपि वोढुं परिणयं कर्तुं नो इच्छति स्म। तत्र हेतुमाह—अमनुष्यभावाद् त्वात्। मेरुं प्राप्तः किं दुष्प्रदेशं दुष्टस्थानमभिवाञ्छति नैव वाञ्छतीत्यर्थः ॥ [ अथास्य विवाहकाले प्राप्तेऽपि संन्यासेन जननीविरहासहिष्णुत्वेऽपि च वे द्विहिच्छाऽप्यकारीत्याह—सेति। शरणं संरक्षणसाधनमित्यर्थः। ' शरणं गृह इत्यमरः। दुष्प्रदेशं मर्यादिदुष्टदेशविशेषम्। वाञ्छति किमपि तु नैव वाञ्छति तस्माद्गुरुकुलात्परावृत्तत्वेन विद्यास्नातस्य तस्य संन्यासकरणे मातृविरोध

---

१ प. संआलेनो। २ क. °न्यो°। ख°न्यो°। ३ क. °स्य सं°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतविद्यममुं चिकीर्षवः
श्रितगार्हस्थ्यमथाऽऽप्तबन्धवः ॥
अनुरूपगुणामचिन्तय-
न्ननवद्येषु कुलेषु कन्यकाम् ॥ ३५ ॥
अथ जातु दिदृक्षवः कला-
मवतीर्णां मुनयः पुरद्विषम् ॥
उपमन्युदधीचिगौतम-
त्रितलागस्त्यमुखाः समाययुः ॥ ३६ ॥
प्रणिपत्य स भक्तिसंनतः
प्रसवित्र्या सह तान्विधानवित् ॥
विधिवन्मधुपर्कपूर्वया
प्रतिजग्राह सपर्यया मुनीन् ॥ ३७ ॥
विहिताञ्जलिना विपश्चिता
विनयोक्त्याऽर्पितविष्टरा अमी ॥
ऋषयः परमार्थसंश्रया
अमुना साकमचीकरन्कथाः ॥ ३८ ॥

---

पीश्वरावतारत्वेन विषयसुखादौ तुच्छत्वधीस्वाभाव्याद्विवाहानिच्छुत्वमुचितमेवेति भावः ॥ ३४ ॥

आप्ताश्च बन्धवश्च त आप्ताश्च ते बन्धवश्चेति वा। कृता संपादिता विद्या येन तममुं श्रितं गार्हस्थ्यं येनैवंविधं चिकीर्षवः कर्तुमिच्छवोऽनुरूपा गुणा यस्यास्तथाभूतां कन्यकां दोषवर्जितेषु कुलेष्वचिन्तयन्। वियोगिनी वृत्तम् ॥ ३५ ॥ [ अथ तदुद्वाहकालप्राप्त्यनन्तरम् ॥ ३५ ॥

अथानन्तरं जातु कदाचित्त्रिपुरघ्नं महादेवं कलियुगे श्रीशंकरात्मनाऽवतीर्णं द्रष्टुमिच्छव उपमन्युप्रमुखा मुनयः समाययुः ॥ ३६ ॥

भक्त्या सम्यङ्नतो नम्रः प्रसवित्र्या जनन्या सह प्रमाणपूजादिविधानवित्स श्रीशंकरस्तान्मुनीन्प्रणिपत्य प्रकर्षेण नत्वा मधुपर्कः पूर्वमादौ यस्यास्तया सपर्यया पूजया प्रतिजग्राह स्वागतं कृतवानित्यर्थः ॥ ३७ ॥

विहिताञ्जलिना विपश्चिता विदुषा श्रीशंकरेण भगवन्त एतान्यासनानि परिगृह्यन्तामिति विनयपूर्विकयोक्त्याऽर्पिता विष्टरा आसनानि येभ्यस्ते परमार्थस्य संश्रयो येषां ते मोक्ष-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजगाद कथान्तरे मुनी-
ञ्जननी तस्य समस्तदर्शिनः ॥
वयमद्य कृतार्थतां गता
भगवन्तो यदुपागता गृहान् ॥ ३९ ॥
क्व कलिर्बहुदोषभाजनं
क्व च युष्मच्चरणावलोकनम् ॥
तदलभ्यत चेत्पुराकृतं
सुकृतं नः किमिति प्रपञ्चये ॥ ४० ॥
शिशुरेष किलातिशैशवे
यदशेषागमपारगोऽभवत् ॥
महिमाऽपि यदद्भुतोऽस्य त-
द्द्वयमेतत्कुरुते कुतूहलम् ॥ ४१ ॥

निष्ठा अमी ऋषयोऽमुना श्रीशंकरेण सह कथाः कृतवन्तः । [1]मोक्ष[2]संश्रया इति कथा... विशेषणम् ॥ ३८ ॥ परमार्थेति । अद्वैतमात्रपर्यवसायिनीरित्यर्थः ] ॥ ३८ ॥

कथानामन्तरेऽन्तराले तस्य सर्वज्ञस्य जन[3]नी मुनीनुवाच । यदुवाच तदाह—... कृतार्थतां प्राप्ता वयमस्माद्भगवन्तो गृहानुपागताः ॥ ३९ ॥

भगवदागमनं न केवलं कृतार्थताया एव संपादकमपितु जन्मान्तरीयानन्तसुकृत... पीत्याशयेनाऽऽह—क्वेति । बहुदोषभाजनं कलिः क्व । क्व च युष्मच्चरणावलोकनं ... समस्तदोषाश्रये कलियुगेऽत्यन्तालभ्यं तद्युष्मच्चरणावलोकनमलभ्यत चेत्तर्हि ... पुराकृतं पुण्यं किमिति प्रपञ्चये तद्वर्णनमशक्यमित्यर्थः ॥ ४० ॥ [ ननु कोऽत्र ... सुब्राह्मणानां गृहान्प्रति हि सुब्राह्मणाः समायान्त्येवेत्यत्राऽऽह—क्वेति । तर्हि ... निरुक्तकल्मषच्छेदेनापि श्रीमच्चरणावलोकनमित्यर्थः ] [ अलभ्यत चेत्तर्हि ... पुराकृतं जन्मान्तरार्जितम् । निरुक्तकार्यलिङ्गानुमितम् । नोऽस्माकं सुकृतमेवास्तीति ... अथ 'धर्मः क्षरति कीर्तनात्' इति स्मरणाज्झटिति सावधाना सत्याह—किमिति ... शेषेण । तत्सुकृतमहं किमिति प्रपञ्चये कस्माद्धेतोर्वर्णयामि तत्फलस्य संजातत्वाद... तस्य वर्णनेन नाशसंभवादमानित्वभङ्गापाताच्च नैव वर्णयामीत्यन्वयः ] ४० ]

एवं स्तुत्वाऽभिमुखीकृतान्मुनीन्किंचित्प्रष्टुमारभते—शिशुरिति । एष ... स्थितः शिशुरतिबाल्ये सर्वागमपारगो यदभवन्महिमाऽप्यस्य यदद्भुतोऽभवदेत...

१ ग. मोक्षान्न° । २ ख. °क्षय° । ३ ख. °नी सर्वज्ञान्मुनी° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करुणार्द्रदृशाऽनुगृह्यते
स्वयमागत्य भवद्भिरप्ययम् ॥
वदतास्य पुराकृतं तपः
क्षममाकर्णयितुं मया यदि ॥ ४२ ॥
इति सादरमीरितां तया
गिरमाकर्ण्य महर्षिसंसदि ॥
प्रतिवक्तुमभिप्रचोदितो
घटजन्मा प्रवयाः प्रचक्रमे ॥ ४३ ॥
तनयाय पुरा पतिव्रते
तव पत्या तपसा प्रसादितः ॥
स्मितपूर्वमुपाददे वचो
रजनीवल्लभखण्डमण्डनः ॥ ४४ ॥

---

तूहलं कुरुते ॥ ४१ ॥ [ ततः सा जन्माऽऽरभ्य स्वकुमारमाहात्म्यं स्त्रीस्वाभान्यात्सं-क्षिप्य सूचयति शिशुरित्यादिसार्धेन । आगमशब्दोऽत्र शब्दब्रह्मपरः । महिमा प्रागुक्तनद्याः स्वगृहनिकटानयनादिरूपः । तदेतद्द्वयमिति योज्यम् ] ॥ ४१ ॥

भवदागमनमप्येतदद्भुतमाहात्म्यसूचकमित्याशयेनाऽऽह—भवद्भिरप्यत्यन्तालभ्यदर्शनैरपि तत्रापि स्वयमागत्य तत्रापि करुणार्द्रदृशाऽयमनुगृह्यते तस्मादस्य पुराकृतं तपो वदत मयाऽऽकर्णयितुं यदि क्षमं योग्यं तर्हि ब्रूतेत्यर्थः ॥ ४२ ॥

इत्येवंप्रकारेण सादरं यथा स्यात्तथा तस्योच्चारितां वाचमाकर्ण्य सादरमाकर्ण्येति वा । महर्षीणां संसदि सभायां तैरेव प्रेरितोऽतिवृद्धोऽगस्त्यः प्रतिवक्तुं प्रचक्रमे ॥ ४३ ॥

साक्षाच्छिव एव तव पत्याऽतितपसा समाराध्य लब्धो न स्वयं कश्चित्तपस्वीत्याशयेनाऽऽह—तनयायेति त्रिभिः । हे पतिव्रते पूर्वं तव पत्या पुत्रार्थं तपसा प्रसादितो रजनीवल्लभस्य चन्द्रस्य खण्डो मण्डनमलंकारो यस्य स निशाकरकलाशेखरो भगवाञ्शंकरो वचनमुपाददे प्रोक्तवान् । त्वया सहैव तव पत्या तपस्तप्तमिति द्योतनाय संबोधनम् ॥ ४४ ॥ [ किं तदगस्त्यकृतं प्रत्युत्तरमित्यपेक्षायां पुरा तया पत्या सह तपःकालावच्छेदेन तद्वचसा ज्ञातमपि पुत्रैश्वर्यवीक्षणानन्दमराद्विस्मृतं तदेव पुनः स कथयामासेत्याह—तनयायेत्यादित्रिभिः । अयि पतिव्रते । एतेन त्वयाऽपि पत्या सह पुत्रार्थं तपः कृतमिति द्योत्यते ] ॥ ४४ ॥

---

१ ग. 'हिं कथयते' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वरयस्व शतायुषः सुता-
नपि वा सर्वविदं मितायुषम् ॥
सुतमेकमितीरितः शिवं
सति सर्वज्ञमयाचताऽऽत्मजम् ॥ ४५ ॥
तदभीप्सितसिद्धये शिव-
स्तव भाग्यात्तनयो यशस्विनि ॥
स्वयमेव बभूव सर्ववि-
न्न ततोऽन्योऽस्ति यतः सुरेष्वपि ॥ ४६ ॥
इति तद्वचनं निशम्य सा
मुनिवर्यं पुनरप्यवोचत ॥
कियदायुरमुष्य भो मुने
सकलज्ञोऽस्यनुकम्पया वद ॥ ४७ ॥
शरदोऽष्ट पुनस्तथाऽष्ट ते
तनयस्यास्य तथाऽप्यसौ पुनः ॥
निवसिष्यति कारणान्तरा-
द्भुवनेऽस्मिन्दश षट् च वत्सरान् ॥ ४८ ॥

शैवं वचनमुदाहरति—वरयस्वेति। असर्वविदः शतायुषः सुतान्वरयस्वाथि
मल्पायुषमेकं सुतं वरयस्वेतीरितस्तव पतिर्हे सति सर्वज्ञमात्मजं शिवादयाचत ॥

तस्य तव पत्युरभिलषितस्य सिद्धये स्वयमेव शिवो भाग्यात्तव तनयो
यशस्विनीति संबोधयंस्तव यशःख्यापनार्थं बभूवेति सूचयति। ननु सर्वज्ञ
कुतो न दत्तवानिति चेत्तत्राऽऽह—यतः कारणाद्देवेष्वपि तस्माच्छिवादन्यः
तत इत्यर्थः ॥ ४६ ॥ [ तदिति। तस्य तव पत्युर्यदभीप्सितं सर्वज्ञैकपुत्र
वाञ्छितं तस्य या सिद्धिस्तस्यै ] [ अपिना मनुष्यादिषु तदभावकैमुत्यं द्योत्यते

इत्थंप्रकारेण तस्यागस्त्यस्य वचनं मितायुषमित्यादिरूपं श्रुत्वा सा सती
पुनरप्युवाच। भो मुने यतः सकलज्ञोऽस्यतोऽमुष्याऽऽयुः कियत्परिमितमस्ति
वद यतो मितायुषमिति श्रुत्वा मम त्रासो जात इति भावः ॥ ४७ ॥ [
कसर्वज्ञशिवावतारस्य मत्पुत्रस्येत्यर्थः ] ॥ ४७ ॥

एवं पृष्टो मुनिरुवाच—शरदः संवत्सरा अष्ट तथा पुनरष्ट मिलित्वा षोडश
अस्य तव पुत्रस्याऽऽयुर्यद्यपि तथाऽप्यसौ ते तनयः कारणान्

१ क. घ 'त्मजमया'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति वादिनि माविनीं कथा-
मृषिमुख्ये घटजे निवार्य तम् ॥
ऋषयः सह तेन शंकरं
समुपामन्त्र्य ययुर्यथागतम् ॥ ४९ ॥
सृणिना करिणीव साऽर्दिता
शुचिना शैवलिनीव शोषिता ॥
मरुता कदलीव कम्पिता
मुनिवाचा सुतवत्सलाऽभवत् ॥ ५० ॥
अथ शोकपरीतचेतनां
द्विजराडित्थमुवाच मातरम् ॥
अवगम्य स संसृतिस्थितिं
किमकाण्डे परिदेवना तव ॥ ५१ ॥

---

वने षोडशसंवत्सरान्पुनर्निवासिष्यति वासं करिष्यति ॥ ४८ ॥ [ शरदो ' हायनोऽस्त्री शरत्समाः ' इत्यमराद्वर्षाणि । अस्य पुरोवर्तिनस्ते तनयस्य आयुरिति शेषः । किमेतावदेव नेत्याह— तथाऽपीत्यादिशेषेण । एतदनुरोधेन पूर्वं यद्यपीत्यध्याहार्यम् ॥ ४८ ॥

इत्येवंप्रकारेण माविनीं भविष्यां कथां कुम्भजेऽगस्त्ये वादिनि सति मुनयस्तं निवार्य श्रीशंकरं समुपामन्त्र्य तेन घटजेन सह यथागतं[1] जग्मुः ॥ ४९ ॥ [इतीति । तं घटजं निवार्य देवतागुह्यमिदं नैव प्रकाशनीयमिति नेत्रादिना संसूच्य । तेनागस्त्येन सहर्षयः शंकरं श्रीशंकराचार्यम् । उपामन्त्र्य वयं गच्छाम इत्यनुज्ञाप्य ] ॥ ४९ ॥

अतिकष्टदां मुनिवाचं श्रुतवतीं सतीं वर्णयति—सृणिनाऽङ्कुशेन हस्तिनीव सा मुनिवाचाऽर्दिता पीडिताऽभवत् । शुचिनाऽऽषाढेन शैवालिनी शैवलं पद्मकाष्ठं तत्संबन्धिनी पुष्करिणीव सा शोषिताऽभवत् । वायुना कदलीव कम्पिताऽभवत् । यतः पुत्रवत्सला ॥५०॥ [ सृणिनेति । 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इत्यमरादङ्कुशेनेत्यर्थः । शुचिना । 'शुचिस्त्वयम् । आषाढे ' इत्यमरादाषाढमासेनेत्यर्थः । शैवलिनीव ' तरङ्गिणी शैवलिनी ' इत्यमरान्नदीव ग्रीष्मर्तुवशाच्छोषितेत्यर्थः ] ॥ ५० ॥

एवमतिकष्टवतीं मातरं श्रीशंकरो यदुक्तवांस्तद्वक्तुमुपक्रमते—अथ मातुर्मुनिवाचाऽतिदुःखप्राप्त्यनन्तरं शोकेन परीता व्याप्ता चेतना बुद्धिर्यस्यास्तां संसारस्य स्थितिं क्षणभङ्गुररूपामवगम्याकाण्डेऽसमये परिदेवनो शोकस्तव किमर्थमपार्थेत्यर्थः ॥ ५१ ॥ [ अथ निरुक्तमुनिवाक्यश्रवणानन्तरम् । शोकेति । शोकेन परीता व्याप्ता चेतना ' प्रतिपज्ज-

---

१ ख. घ. °ना तेन ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रबलानिलवेगवेल्लित-
ध्वजचीनांशुककोटिचञ्चले ॥
अपि मूढमतिः कलेवरे
कुरुते कः स्थिरबुद्धिमम्बिके ॥ ५२ ॥
कति नाम सुता न लालिताः
कति वा नेह वधूरभुञ्जि हि ॥
क्व नु ते क्व च ताः क्व वा वयं
भवसङ्गः खलु पान्थसंगमः ॥ ५३ ॥

सिचेतना ' इत्यमराद्बुद्धिर्यस्याः सा तथा तामित्यर्थः । एतादृशीं मातरं प्रति । राट्च्छ्रीशंकराचार्यः । संसृतिस्थितिं संसारव्यवस्थाम् । चोऽप्यर्थे । अकाण्डे—

' काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु '

इत्यमरादनवसर इत्यर्थः । किमिति परिदेवना शोचनाऽनुचितैवेति भावः ]॥

अतिचञ्चले शरीरे मूढमतिरपि स्थिरबुद्धिं न कुरुते त्वं त्वतिसुज्ञा तत्र तां योग्येति बोधयन्नाह—प्रबलो योऽनिलो वायुस्तस्य वेगेन वेल्लितोऽतिकम्पितो स्तस्य यचीनदेशीयमतिसूक्ष्मं वस्त्रं तस्य कोटिरग्रभागस्तद्वच्चञ्चले कलेवरे शरीरे मूढमतिरपि कः कुरुते न कोऽपीत्यर्थः । उक्ताशयसूचकं संबोधनमम्बिके इति । त्वदम्बिकाऽतिसुज्ञाऽतिचञ्चले कलेवरे स्थिरबुद्धित्वेनैवं शोचितुमनर्हाऽसीत्यर्थः । [ स्थिरबुद्धिमिदमनश्वरमेवेति मतिं कुरुते न कोऽपि करोतीत्यर्थः ] ॥ ५२ ॥

किंच तत्तज्जन्मन्यनुभूतानां पुत्रादीनामानन्त्यात्सर्वेषां शोकासंभवादेते नेत्यस्मिन्विनिगमकाभावान्न केऽपि शोच्या इत्याशयेनाऽऽह—कतीति । संसारे कति वधूर्ललना नाभुञ्जि हि न भुक्तास्ते सुताः क्व ता वध्वश्च क्व तथाच भवसङ्गः पान्थानां तत्तद्दिग्भ्य आगतानां पथिकानामेकस्मिन्प्रपादौ मस्तद्वद्भवसङ्गोऽप्यनियतः क्षणभङ्गुरश्चेत्यर्थः । प्रसिद्धं चेदमित्याह—खलु तस्मात्केऽपि शोच्या न भवन्तीत्याशयः ॥ ५३ ॥ [ ननु स्वशरीरार्थं तदर्थं पुत्राद्यर्थं तदौचित्यमेवेति चेन्न । तत्तज्जन्मावच्छेदेनानुभूतानां तेषामानन्त्येन नर्हत्वात् । न चातीतानां तेषां तथात्वेऽपि वार्तमानिकानां तदर्हत्वेति पुत्रत्वाद्यविशेषेणातीतत्ववार्तमानिकत्वयोरशोच्यशोच्यत्वाप्रयोजकत्वात्केषांचिदेव

१ प. भवन्तीत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भ्रमतां भववर्त्मनि भ्रमा-
न्न हि किंचित्सुखमम्ब लक्षये ॥
तदवाप्य चतुर्थमाश्रमं
प्रयतिष्ये भवबन्धमुक्तये ॥ ५४ ॥

इति कर्णकठोरभाषण-
श्रवणाद्बाष्पपिनद्धकण्ठया ॥
द्विगुणीकृतशोकया तया
जगदे गद्गदवाक्यया मुनिः ॥ ५५ ॥

त्यज बुद्धिमिमां शृणुष्व मे
गृहमेधी भव पुत्रमाप्नुहि ॥
यज च क्रतुभिस्ततो यति-
र्भवितास्यङ्ग सतामयं क्रमः ॥ ५६ ॥

---

विनिगमनाविरहाद्वैषम्यापत्तेश्च । तस्मान्न केऽपि शोच्या इत्याशयेनाऽऽह—कति नामेति । अस्माभिरिति शेषः । कति नाम सुताः पुत्रा न लालिता अपि तु ततच्छरीरावच्छेदेनासंख्याता अपि पुत्राः संलालिता एवेत्यर्थः । एवं च त्वयाऽऽत्मपुत्रीभूतमदर्थे मद्विवाहाद्यभावेन मम पुत्राभावात्तदर्थं च शोचनं कर्तुमनुचितमेवेति सूचितम् । नन्वेवमपि त्वया विवाहाकरणाद्गार्हस्थ्यसुखं नानुभूतमिति प्रत्यक्षमेवातस्तदर्थमहं शोचामीति शङ्कां शमयितुमाह—कति वेत्यादिद्वितीयपादेन । विशेष्यीभूतवधूवाचकपदस्य द्वितीयाबहुवचनान्तत्वेन विशेषणीभूतकतिपदस्यापि तथात्वं बोध्यम् । इहानादिसंसारे । वधूः कान्ताः । ततस्तदर्थमपि शोकानवसर एवेति भावः ॥ ५३ ॥

एवं शोकापहारकैर्वाक्यैर्मातरं प्रबोध्य स्वेन यदवश्यं कर्तव्यं तदाह—भ्रमतामिति । संसारमार्गे भ्रमादज्ञानाद्भ्रमतां किंचिदपि सुखं न लक्षयेऽपितु जननीजठरवासादिरूपं दुःखमेवेति सूचयन्संबोधयति—अम्बेति । हि यस्मादेवं तत्तस्माच्चतुर्थं संन्यासाश्रममवाप्य संसारलक्षणाद्बन्धाद्विमुक्त्यर्थं प्रकर्षेण यत्नं करिष्यामि ॥ ५४ ॥

एवं श्रीशंकरवाक्यमुदाहृत्य तद्वचनेन द्विगुणीकृतशोकायाः सत्या वचनमुदाहर्तुमाह—इत्येवंप्रकारेण यत्कर्णयोः कठोरं दुःस्पर्शं भाषणं चतुर्थमाश्रममित्यादिरूपं तस्य श्रवणाद्बाष्पैरश्रुभिः पिनद्धः पिहितः कण्ठो यस्या द्विगुणीकृतः शोको यस्या अत एव गद्गदं वाक्यं यस्यास्तया मुनिः श्रीशंकरो जगदे । कर्मणि प्रत्ययः । एवंभूता सा मुनिं जगादेत्यर्थः ॥ ५५ ॥

यदुवाच तदाह—त्यजेति । इदानीमेव चतुर्थाश्रमं प्राप्य प्रयतिष्य इतीमां बुद्धिं

---

१ क. 'ति । देऽन्दे° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथमेकतनूभवा त्वया
रहिता जीवितुमुत्सहेऽबला ॥
तनयैव शुचौर्ध्वदैहिकं
प्रमृतायां मयि कः करिष्यति ॥ ५७ ॥
त्वमशेषविदप्यपास्य मां
जरठां वत्स कथं गमिष्यसि ॥
द्रवते हृदयं कथं न ते
न कथंकारमुपैति वा दयाम् ॥ ५८ ॥

---

त्यज । तर्हि किं कर्तव्यमिति चेतत्राऽऽह—मे मम वचनं शृणु । किं तदिति तत्राऽऽह—गृहमेधी गृहस्थो भव । किं तत इत्यत आह—पुत्रं प्राप्नुहि क्रतुभिर्यजनं च कुरु तदनन्तरं यतिर्भवितासि भविष्यस्यङ्ग हे पुत्र सतां शास्त्रोक्तोऽयमेव क्रम इत्यर्थः । तथाच स्मृतिः—

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति ॥ ५६ ॥

[ हेऽङ्गेति कोमलामन्त्रणेऽयि पुत्रेत्यर्थः । इमां संन्यासकरणविषयिणीम् । क्रममिति । तथाच श्रूयते—ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेत्ततः प्रव्रजेदिति । स्मर्यते च—

'अधीत्य विधिवद्वेदाःपुत्रानुत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्' इति ] ॥ ५६ ॥

किंचैकस्तनुभवः पुत्रो यस्यास्तथाविधाऽबलाऽहं त्वया विरहिता शुचा शोकेनैव जीवितुं कथमुत्सहे । पुत्रस्य तवैवंविधदुःखदातृत्वमनुचितमिति—सूचयन्त्संबोधयति । तनयेति । तनयेनेति पाठान्तरे त्वयेत्यनेन संबन्धनीयम् । किंच यदर्थं त्वमुत्पादितस्तदौर्ध्वदैहिकं प्रमृतायां कः करिष्यतीत्यर्थः ॥ ५७ ॥

किंचाल्पविदाऽपि वृद्धा जननी न परित्यज्यते यदि केनाचिदतिमूढेन त्यज्यते त्यज्यतां त्वं त्वशेषज्ञोऽपि मां स्वमातरं तत्रापि वृद्धां त्यक्तुमत्ययोग्यां परित्यज्य गमिष्यसि मामपास्य गन्तुमत्यन्तायोग्योऽसीत्यर्थः । वत्सगमनं यथा गोः पीडाकरं तथा तव गमनं ममेति द्योतयन्ती संबोधयति—वत्सेति । एवमुक्तमप्यद्रवीभूतान्तःकरणं पुत्रमालक्ष्याऽऽह—द्रवत इति । ननु वास्तवसंबन्धाभावविदो मम तत्त्वविदो ममत्वाभावात्स्नेहवशात्कथं मे हृदयं द्रवीभूतं भवेदित्याशङ्क्य तत्त्वविदामपि दुःखश्रवणात्ते हृदयं दयां कथं न प्राप्नोतीत्याह—न कथमिति वा ॥ ५८ ॥

सर्वज्ञं प्रत्यपि मया किं कथनीयमथापि पुत्रमोहात्किंचिद्वक्ष्यामीत्यभिप्रेत्य हृदयकाठिन्यं सोपालम्भं व्यनक्ति—त्वमिति । अयि वत्स त्वमशेषविदपि सर्वज्ञोऽपि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं व्यथां तां बहुधाऽऽश्रयन्ती-
मपास्तमोहैर्बहुभिर्वचोभिः ॥
अम्बामशोकां व्यदधाद्विधिज्ञः
शुद्धाष्टमेऽचिन्तयदेतदन्तः ॥ ५९ ॥
मम न मानसमिच्छति संसृतिं
न च पुनर्जननीं विजिहासति ॥
न च गुरुर्जननी तदुदीक्षते
तदनुशासनमीपदपेक्षितम् ॥ ६० ॥
इति विचिन्त्य स जातु मिमङ्क्षया
बहुजलां सरितं समुपाययौ ॥
जलमगाहत तत्र समग्रही-
ज्जलचरश्चरणे जलमीयुपः ॥ ६१ ॥

---

वृद्धां मामपास्य त्यक्त्वा कथं गमिष्यसीति संबन्धः । तस्मात्सर्वज्ञस्त्वं वृद्धां मां त्यक्त्वा नैव संन्यासं करिष्यसीत्युपालम्भः । एवमपि तदनुत्तरमेवाऽऽलक्ष्याऽऽक्षिपति द्रवत इत्याद्युत्तरार्धेन । द्रवत इत्यादिनैव चारितार्थ्ये चरमचरणस्वतिकारुण्यसूचनार्थ एनेति ध्येयम् । तस्मात्त्वया मत्त्यागो नैव कार्यः संन्यासेनेत्याशयः ] ॥ ५८ ॥

एवंप्रकारेण बहुधा व्यथां पीडामाश्रयन्तीं तां मातरमपास्तस्तिरस्कृतो मोहोऽविवेको यैस्तैर्बहुभिर्वचोभिर्विधिं शोकनिवृत्तिप्रकारं जानातीति विधिज्ञः श्रीशंकरः शोकरहितां व्यदधादकृत ततश्च शुद्धेऽष्टमवर्षेऽन्तर्मनस्येतद्वक्ष्यमाणमचिन्तयत् । अष्टमवर्षात्मकस्य कालस्य शुद्धत्वं कलिमलशून्यत्वम् । उपजातिवृत्तम् ॥ ५९ ॥ [ विधिज्ञो विधिं तत्तद्देशकालाद्यवच्छेदेन कर्तव्यांशं जानातीति तथा । सर्वव्यवहारचतुरः श्रीशंकरभगवत्पादः ] [ तामम्बां स्वमातरम् । अशोकां शान्तशोकाम् । शुद्धाष्टमे संभावितकलिमलकालुष्यविकले स्ववयोऽष्टमवर्ष इत्यर्थः । व्यदधादकरोदित्यर्थः । ततोऽन्तरभ्यन्तरे । एतद्वक्ष्यमाणम् । अचिन्तयचिन्तयामासेति संबन्धः ] ॥ ५९ ॥

यदचिन्तयत्तद्दर्शयति—ममेति । मम मनः संसृतिं संसृतिसाधनं प्रवृत्तिमार्गं नेच्छति जननी पुनर्न च जिहासति हातुं त्यक्तुं नैवेच्छति मामिति विपरिणामेन संसृतिपदं वाऽनुषञ्जनीयम् । ननु जननी संसृत्यनभिवाञ्छिनं त्वां तव मनसाऽनिष्टां संसृतिं वा कुतो न जिहासतीत्याशङ्क्य तस्यास्तदीक्षणाभावादित्याह—न चेति । तत्तां संसृतिं तन्मानसमिति वा । ननु त्वया प्रसह्य प्रबोधनीयेति चेत्तत्राऽऽह—गुरुरिति । अत एव संन्यासाश्रयणे तस्या ईषदनुशासनमाज्ञाऽपेक्षितम् । द्रुतविलम्बितं वृत्तम् ॥ ६० ॥

एवं मनसि श्रीशंकरकृतां चिन्तामुपवर्ण्येषदनुशासनं ग्रहीतुं तत्कृतं चरित्रं वर्णयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स च रुरोद जले जलचारिणा
धृतपदो ह्रियतेऽम्ब करोमि किम् ॥
चलितुमेकपदं न च पारये
बलवता विवृतोरुमुखेन ह ॥ ६२ ॥
गृहगता जननी तदुपाशृणो-
त्परवशा द्रुतमाप सरित्तटम् ॥
मम मृतेः प्रथमं शरणं धव-
स्तदनु मे शरणं तनयोऽभवत् ॥ ६३ ॥
स च मरिष्यति नक्रवशं गतः
शिव न मेऽजनि हन्त पुरा मृतिः ॥
इति शुशोच जनन्यपि तीरगा
जलगतात्मजवक्त्रगतेक्षणा ॥ ६४ ॥

---

इत्येवंप्रकारेण विचिन्त्य स कदाचिन्मज्जनेच्छया बहुजलां नदीं समुपाययौ गत्वा मगाहत तत्र नद्यां जलं प्राप्तवतश्चरणे जलचरः सम्यगग्रहीत् ॥ ६१ ॥ [ सरितं निकटानीतप्रागुक्तपूर्णाभिधनदीमिति यावत् । समुपाययावित्यन्वयः । ततस्तज्जलमध्ये स्नातुं प्राविशदित्यर्थः । चरणे पादे । समग्रहीत्पादावच्छेदेन तं जग्राहेति संबन्धः ] ॥

स च रुरोद रोदनं कृतवान्बलवता विवृतमुरु बृहन्मुखं यस्य तेन जलचारिणा धृतो गृहीतः पादो यस्य स हेऽम्ब जले ह्रियतेऽतः किं करोमि । ननु जलाद्बहिर्नाऽऽयासीत्याशङ्क्याऽऽह—एकं पदं चलितुं न च पारये समर्थो न भवामि हेति ॥ ६२ ॥ [ जलचारिणा ग्राहविशेषेण । यतो बलवता प्रबलेन । धृतपदः सन् । पदमात्रमपि । चलितुं न च पारये । चोऽवधारणे नैव शक्नोमि । अतः किं करोमि योनना ] ॥ ६२ ॥

तत्स्वसुतरोदनं गृहस्था जनन्युपाशृणोच्छ्रुत्वा च परवशाऽतिविह्वला[2] द्रुतमाशु सरित्तटमवाप तीरं गता सा जनन्यपि जलगतस्य पुत्रस्य मुखं गते प्राप्ते ईक्षणे नेत्रे यस्याः सेति शुशोच । कथमित्यत आह—मम मृतेरिति । मरणात्प्रथमं मम शरणं धवस्ततः पतिमृत्यनन्तरं पुत्रो मे शरणमभवत् । स च तनयो मरिष्यति नक्रस्य जलजन्तोर्वशं गतो हन्तातिकष्टं हे शिव पुरा पूर्वमुचिता मम मृतिर्नाजनि नाभूत् । शिवोपासकाया ममाशिवप्राप्तिरत्यन्तानुचितेति संबोधनाशयः । इति शुशोचेत्यर्थः ॥ ६३ ॥ ६४ ॥ [ शिवेति । हे शिव कल्याणमूर्ते शंभो ।

---

१ ध. समग्र° । २ ख. ग. °विह्वला ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यजति नूनमयं चरणं चलो
जलचरोऽम्ब तवानुमतेन मे ॥
सकलसंन्यसने परिकल्पिते
यदि तवानुमतिः परिकल्पये ॥ ६५ ॥
इति शिशौ चकिता वदति स्फुटं
व्यधित साऽनुमतिं द्रुतमम्बिका ॥
सति सुते भविता मम दर्शनं
मृतवतस्तदु नेति विनिश्चयः ॥ ६६ ॥

---

खेदे । मे मृतिः पुरा भर्तृमरणात्प्रागेव कुतो नाजनि न समुत्पन्नेत्यन्वयः । अत्र शिवेति संबोधनात्कल्याणमूर्तिभक्ताया ममैवंविधभर्तृमरणपुत्रमरणावेक्षणाकल्याणमयुक्तमेवेति भावः ] ॥ ६४ ॥

एवमतिशोकपरीतां मातरमालक्ष्याऽऽह—त्यजतीति । हेऽम्ब मे चरणमयं चञ्चलो जलचरस्तेऽनुमतेन सकले संन्यसने परिकल्पिते सति त्यजति तथाच यदि तवानुमतिस्तर्ह्यहं परिकल्पये सकलसंन्यसनमिति विपरिणामेन संबन्धनीयम् ॥ ६५ ॥ [ अयमम्बायं प्रत्यक्षः ] [ अयं भावः—दुःखं हि पापैकफलमिति निर्विवादम् । तच्च पापं 'धर्मेण पापमपनुदति' इति श्रुतेर्भोगेनेव धर्मेणापि नश्यति । स च धर्मः सत्यं परामित्याद्युपक्रम्य न्यास एवात्यरेचयदित्युपसंहारेण संन्यासैकावधिक इति तेन सद्य एवालौकिकपुण्योत्पत्त्या निखिलपापनाशस्तन्मूलकनक्रकृतदुःखनाशो भविष्यत्येवेति । तत्र यदि तवानुमतिरनुमोदनमस्ति तर्ह्यहं सकलसंन्यसनं यथाविधिप्रैषोच्चारणाभयदानादिलक्षणातुरसंन्यासविधिना परिकल्पयेऽनुतिष्ठामीति संबन्धः । तस्मात्त्वयाऽत्रानुमतिर्देयैवेति भावः ] ॥ ६५ ॥

इत्येवंप्रकारेण स्फुटं यथा स्यात्तथा शिशौ वदति सति चकिता साऽम्बिका द्रुतं शीघ्रमनुमतिमनुमोदनं व्यधिताकृत । स्फुटमिति मध्यमणिन्यायेनात्रापि संबन्धनीयम् । शीघ्रानुमतिकरणे हेतुं तत्कृतं निश्चयं दर्शयति—सति सुते सुतस्य दर्शनं मम भविष्यति मृतवतस्तु तद्दर्शनं न भविष्यतीति विशेषेण निश्चयोऽस्तीत्यर्थः ॥ ६६ ॥ [ 'उ' इत्यवधारणेऽव्ययम् ] ॥ ६६ ॥

---

१ प. बली ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदनु संन्यसनं मनसा व्यधा-
दथ मुमोच शिशुं खलनक्रकः ॥
शिशुरुपेत्य सरित्तटमत्रस-
न्प्रसुवमेतदुवाच शुचाऽऽवृताम् ॥ ६७॥
मातर्विधेयमनुशाधि यदत्र कार्यं
संन्यासिना तदु करोमि न संदिहेऽहम् ॥
वस्त्राशने तव यथेष्टममी प्रदेयु-
र्गृह्णन्ति ये धनमिदं मम पैतृकं यत् ॥ ६८॥
देहेऽम्ब रोगवशगे च सनाभयोऽमी
द्रक्ष्यन्ति शक्तिमनुसृत्य मृतिप्रसङ्गे ॥
अर्थग्रहाज्जनभयाच्च यथाविधानं
कुर्युश्च संस्कृतिममी न विभेयमीषत् ॥ ६९॥

तस्या मातुरनुमतेः पश्चाच्छ्रीशंकरो मनसा संन्यसनं व्यधादथ [illegible] दुष्टजलचरः शिशुं मुमोच । संसाराख्येनाज्ञानजलचरेण दुष्टनक्रेण गृ[illegible] विना न मोक्ष इत्याशयः । ततः किं वृत्तमित्यपेक्षायामाह—शिशु[illegible] शोकेन व्याप्तां जननीमेतद्वक्ष्यमाणमुवाच ॥ ६७ ॥ [ मनसा संन्यसनं [illegible] त्यन्वयः ' यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत् ' इत्याम्नायत एव [illegible] दुष्टनक्रकः ] [ अत्रसन्नेव दुःखमननुभवन्नेत्यर्थः । एतेनोक्तग्राहग्रहादेर्मायिक[illegible] [ प्रसुवं ' जनयित्री प्रसूर्माता ' इत्यमराज्जननीम् ] ॥ ६७ ॥

यदुवाच तदाह—हे मातर्विधेयमाज्ञापयात्राऽस्मिँल्लोके यत्संन्यासिना कर्तुं [illegible] येन करोमि नाहं संदिहे संशययुक्तो न भवामि । ननु संन्यासिना संग्रहशून्ये[illegible] र्तव्यं भोजनाच्छादनप्रदानं कः करिष्यतीति चेत्तत्राऽऽह—वस्त्रेति । ये [illegible] न्त्यमी वस्त्राशने तव यथेष्टं प्रदेयुर्यस्माद्धनं मम पितृसंबन्धि तस्मादि[illegible] पैतृकं तदिदमिति वा । वसन्ततिलका वृत्तम् ॥ ६८ ॥ [ ननु विवाहादि[illegible] त्वया नैवानुष्ठितं चेत्किं मदनुशासनफलमित्याशङ्क्य प्रत्याह—तदित्यादि[illegible] ' उः ' अवधारणे ॥ ६८ ॥

ननु संन्यस्य त्वयि गते रोगाधीने मद्देहे सति मरणप्राप्तौ च [illegible] चेत्तत्राऽऽह—देह इति । हे मातस्तव देहे रोगवशगे च पुनर्मरणप्रसङ्गे [illegible] सपिण्डाः शक्तिमनुसृत्य दर्शनं करिष्यन्ति मरणानन्तरं दाहादिसंस्कारं [illegible] कुर्युस्तत्र हेतुद्वयमाह—अर्थस्य मम पैतृकधनस्य ग्रहणाज्जनानां भयाच्च [illegible]

१ ग. घ. 'त्रेऽमी । २ ग. °रणप्रसक्तौ दा° । घ. °रणप्रसक्तौ च दा° । ३ [illegible] °द्रक्ष्यति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्जीवितं जलचरस्य मुखात्तदिष्टं
संन्याससंगरवशान्मम देहपाते ॥
संस्कारमेत्य विधिवत्कुरु शंकर त्वं
नो चेत्प्रसूय मम किं फलमीरय त्वम् ॥ ७० ॥
अह्न्यम्ब रात्रिसमये समयान्तरे वा
संचिन्तय स्ववशगाऽवशगाऽथ वा माम् ॥
एष्यामि तत्र समयं सकलं विहाय
विश्वासमाप्नुहि मृतावपि संस्करिष्ये ॥ ७१ ॥
संन्यस्तवाञ्छिशुरयं विधवामनाथां
क्षिप्त्वेति मां प्रति कदाऽपि न चिन्तनीयम् ॥
यावन्मया स्थितवता फलमापनीयं
मातस्ततः शतगुणं फलमापयिष्ये ॥ ७२ ॥

---

यमपि भयं त्वया न कर्तव्यमित्यर्थः ॥ ६९ ॥ [ अमी प्रत्यक्षाः । जनेति । लोकाप-वादभयादित्यर्थः । कुर्युः करिष्यन्त्येवेति यावत् । अतस्त्वयाऽन्नाच्छादनव्याध्यादिपरामर्शि-र्ध्वदैहिकविषयेऽत्रेपदपि नैव चिन्ता कार्येत्याह—नेत्यादिना ] ॥ ६९ ॥

संस्कृतिं चामी कुर्युरिति सुतोक्तमसहमाना सत्युवाच—यदिति । संन्यासस्य संग-राऽङ्गीकृतिस्तद्वशाज्जलचरस्य मुखाद्यज्जीवितं तव यज्जीवनं तदिष्टम् । ‘संगरोऽङ्गीकृतौ युधि’ इति विश्वप्रकाशः । तथाऽपि मम देहस्य पाते सति यत्र क्वापि स्थितस्त्वमागत्य विधिवन्मम दाहादिसंस्कारं कुरु । ननु संन्यासिनो मम दाहादिकर्मण्यधिकाराभावात्कथमेवं वदसीति चेत्तत्राऽऽह—हे शंकर परमेश्वरस्य तव न किंचिदपि दोषावहमिति भावः । ननु तथाऽपि लोकविरुद्धत्वात्किमर्थमेवं विधेयमिति तत्राऽऽह—नो चेदिति । मरणानन्तरं दाहसंस्कारस्याप्यलाभे सति त्वामुत्पाद्य मया किं फलं लब्धमिति त्वमेव कथय ॥ ७० ॥

एवं स्वकर्तृकदाहसंस्कारेऽतिनिर्बन्धवतीमातिदुःखितां मातरमालक्ष्य श्रीशंकर उवाच—हेऽम्बाह्नि दिवसे स्ववशगा स्वाधीना रोगादिना पराधीनाऽवशगा वा मां चिन्तय तत्र च चिन्तनसमये सर्वं समयमाचारं विहायाऽऽगमिष्यामि । ‘समयः शपथाचारसिद्धान्तेषु’ इति मेदिनी । मदुक्ते विश्वासं प्राप्नुहि मृतावपि संस्कारं करिष्ये ॥ ७१ ॥ [ भो अम्ब । त्वमह्न्यथवा रात्रिसमये । यद्वा समयान्तरे संध्यासमये ] ॥ ७१ ॥

संन्यासिना कर्तुमयोग्यमप्यङ्गीकुर्वतो ममैका प्रार्थना त्वयाऽप्यवश्यं स्वीकर्तव्ये-त्याशयवानाह—अयं शिशुर्विधवामनाथां मां त्यक्त्वा संन्यासं कृतवानिति मां प्रति

---

१ क. स्वदा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थं स मातरमनुग्रहणेच्छुरुक्त्वा
प्रोचे सनाभिजनमेष विचक्षणाढ्यः ॥
संन्यासकल्पितमना व्रजितोऽस्मि दूरं
तां निक्षिपामि जननीमधवां भवत्सु ॥ ७३ ॥

एवं सनाभिजनमुत्तममुत्तमाढ्यः
श्रीमातृकार्यमभिभाष्य करद्वयेन ॥
संप्रार्थयन्स्वजननीं विनयेन तेषु
न्यक्षेपयन्नयनजाम्बुनिपिञ्चमानां ॥ ७४ ॥

---

कस्यांचिदप्यवस्थायां त्वया न चिन्तनीयम् । ननु त्वया परित्यक्तत्वादति… कथं न चिन्तनीयमिति तत्राऽऽह—स्थितवता मया यत्परिमितं फलं त्वया… मातस्तस्माच्छतगुणं फलमहं प्रापयिष्ये ॥ ७२ ॥ [ मां प्रति मदुद्देशेन ]॥

अनेन प्रकारेण मातरमुक्त्वा सगोत्रजनमुवाचेत्याह—**इत्थमिति** । यदु… संन्यासेति । संन्यासाय कल्पितं मनो येन सोऽहं दूरं गन्तुमुद्यतोऽस्मि तस्… तां जननीं भवत्सु रक्षार्थं स्थापयामि ॥ ७३ ॥ [ विचक्षणाढ्यो विद्… श्रीभगवत्पादः । एप प्रकृतः । **सनाभीति** । 'सपिण्डास्तु सनाभयः' इ… व्रजितश्चेतसः स्वाभिमतस्थानं प्रति गतत्वाद्भूतार्थकः प्रयोगः । एतेन तदनुष्ठान… तिशयात्स्वरोत्कर्षः सूच्यते । अतस्तां गृहान्तस्थत्वेन परोक्षाम् । अधवां पतिही… भवत्सु संरक्षकत्वेनाऽऽधारीभूतेषु युष्मास्वित्यर्थः । निक्षिपामि समाभिरक्षणार्थं … योजना ] ॥ ७३ ॥

एवंप्रकारेणोत्तमं सनाभिजनमुत्तमाढ्यः श्रीशंकरः श्रीमातृकार्यं सम्यगुक्त्… हस्तद्वयेन सम्यक्प्रार्थयन्सन्नेत्रजाम्बुभिर्निषिञ्चमानां मातरं स विनयेन तेषु … न्यक्षेपयत् ॥ ७४ ॥ [ एवं परोक्षतया तानुक्त्वा तत्समक्षमपि तां सविनयं ते… स्थापितवानित्याह—**एवमिति** । अत्रोत्तमपदेन तन्निक्षेपयोग्यत्वं व्यज्यते । … पदेन परीक्षकत्वं च सूच्यते । करद्वयेन संप्रार्थयन्नित्यादरातिशयस्तेनावश्यकर्तव्… तस्यां द्योत्यते । नयनेत्यनेन कारुण्यानुभावो ध्वन्यते । अत्र भर्तृहीनतरु… संन्याससिद्ध्यर्थं स्वदूरगमनावसरोद्दीपितः प्रकटाश्रुपातानुभावितः पूर्वोक्त… दिसप्तति-श्लोकेरिततद्वाक्यस्मृतिसंचारितः शोकाख्यः स्थायिभाव एव श्री… करुणरस एव ]॥ ७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मीयमन्दिरसमीपगतामथासौ
चक्रे विदूरगनदीं जननीहिताय ॥
तत्तीरसंश्रितयदूद्वहधाम किंचि-
त्सा निम्नगाऽऽरमत ताडयितुं तरङ्गैः ॥ ७५ ॥
वर्षासु वर्षति हरौ जलमेत्य किंचि-
दन्तःपुरं भगवतोऽपनुनोद मृत्साम् ॥
आरब्ध मूर्तिरनघा चलितुं क्रमेण
देवोऽबिभेदिव न मुञ्चति भीरुहिंसाम् ॥ ७६ ॥

संन्यासग्रहणाय श्रीशंकरस्य गमनं वर्णयिष्यन्गमनसमये स यत्कृतवांस्तद्वर्णयितुमारभते—आत्मीयेति । अथानन्तरमसौ यां विदूरगां नदीं मातुर्हिताय स्वीयमन्दिरसमीपगता चक्रे तस्यास्तीरं संश्रितस्य यदुश्रेष्ठस्य श्रीकृष्णस्य धाम स्थानं किंचित्सा नदी तरङ्गैस्ताडयितुमारभत ॥ ७५ ॥ [ अथ मातृसंरक्षणव्यवस्थाविधानानन्तरम् । इत्थं तदीयं गमनावसरे चरितमासीदित्यार्थिकम् । तदेवाऽऽह—असौ श्रीशंकराचार्यः । याम् । विदूरेति । पूर्वोक्तामतिदूरस्थां पूर्णाभिधनदीमित्यर्थः । जननीति । आत्मीयेति । चक्रे । सा निम्नगा । एतेन वक्ष्यमाणकर्मणि नीचगत्वं हेतुर्द्योतितः ] ॥ ७५ ॥

किंच वर्षासु हरौ देवेन्द्रे वर्षति सति । 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः । किंचिज्जलं भगवतो विष्णोरन्तःपुरमागत्य मृत्सां प्रशस्तां मृत्तिकामपनुनोद ततश्चानघा कृष्णमूर्तिः क्रमेण चलितुमारब्धं प्रवृत्ता । ननु तज्जलं तद्धिंसां कुतो न मुक्तवदिति तत्राऽऽह—देवोऽबिभेदिव भयं प्राप्त इवाभवत् । भीरुहिंसां च कोऽपि न त्यजतीत्यत इत्यर्थः ॥ ७६ ॥ [ भगवतो निरुक्तश्रीकृष्णस्य । अन्तःपुरमन्तर्गृहमेत्य । किंचिन्मृत्सां 'प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' इत्यमरात्प्रशस्तमृदमित्यर्थः । अपनुनोद दूरी चकारेत्यन्वयः । ततः किं तत्राऽऽह—आरब्धेत्यादिना । अतोऽनघा निर्दोषाऽपि श्रीकृष्णमूर्तिः क्रमेण चलितुम् । आरब्ध प्रवृत्ताऽऽसीदिति संबन्धः । नन्वेवं तर्हीश्वरेण श्रीकृष्णेन सा नद्येव किमिति सेतुस्थलीयसमुद्रवन्न शिक्षितेत्याशङ्क्य समाधत्ते—देव इत्यादिचरमचरणेन । यतो देवः श्रीकृष्णः । अबिभेदिव न परमेश्वरावतारेण श्रीशंकराचार्येण साक्षात्स्वमात्रनुग्रहार्थमियं नदी स्वगृहनिकटमानीता मया कथं वा तिरस्कार्येति केवलं भयमेवाऽऽपेवेति न किंतु भीरुहिंसाम् । 'विशेषास्त्वङ्गना भीरुः' इत्यमराच्चयाः स्त्रीत्वाद्भीरोर्नदीरूपायाः स्त्रिया हिंसामपि मुञ्चति अतस्तेनाखण्डं त्यजतीति योजना । उत्प्रेक्षावाचकेवशब्देन वस्तुतो हरिहरयोरुभयोरपि परब्रह्मत्वेनाभेदाद्भक्तानुग्रहार्थं लीलानाट्यमेवोक्तभयादिति द्योत्यते ] ॥ ७६ ॥

१ ग. मृत्स्नाम् । २ ग. मृत्स्ना ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रस्थातुकाममनघं भगवाननङ्ग-
वाचाऽवदत्कथमपि प्रणिपत्य मातुः ॥
पादारविन्दयुगलं परिगृह्य चाऽऽज्ञां
श्रीशंकरं जनहितैकरसं स कृष्णः ॥ ७७ ॥
आनेष्ट दूरगनदीं कृपया भवान्यां
सा माऽतिमात्रमनिशं बहुलोर्मिहस्तैः ॥
क्लिश्नाति ताडनपरा वद कोऽभ्युपायो
वस्तुं क्षमे न नितरां द्विजपुत्र यासि ॥ ७८ ॥
आकर्ण्य वाचमिति तामतनुं गुरुर्नः
प्रोद्धृत्य कृष्णमचलं शनकैर्भुजाभ्याम् ॥
प्रातिष्ठिपन्निकट एव न यत्र बाधा
नद्येत्युदीर्य सुखमास्स्व चिराय चेति ॥ ७९ ॥

---

एवं नद्या क्लेशितो भगवाञ्श्रीकृष्णोऽनङ्गयाऽशरीरया वाचा श्रीशंकरमवददुद
तं विशिनष्टि मातुश्चरणकमलद्वंद्वं प्रणिपत्य केनापि प्रकारेण मातुराज्ञां च परिगृह्य
कामं सकलदोषविनिर्मुक्तमेतेन स्वस्याज्ञानादिदोषनिवृत्त्यर्थं तस्य गमनेच्छा
किमर्थं तस्य गमनेच्छेत्यत आह—जनानां हितमेको मुख्यो रसो यस्य तं तथा
पकाराय तस्य गमनसंन्यासग्रहणादिकमिति भावः ॥ ७७ ॥ [ स पूर्वोक्तः । भग
गुणैश्वर्यवान्कृष्णः । अत एव—अनङ्गेति । अशरीरवाण्येत्यर्थः । कथमपि यथ
दपि । एतेन प्रेमातिशयः सूचितः ] ॥ ७७ ॥

यदुवाच तदाह—यां दूरगनदीं भवान्कृपयाऽऽनीतवान्साऽत्यन्तं निरन्तरमनल्पै
र्हस्तैस्ताडनपरा मां क्लिश्नाति क्लेशनिवृत्तौ वद कोऽभ्युपायो यतो वस्तुं न समर्थो
हे द्विजपुत्र त्वं यास्यतः सुतरां वस्तुं न क्षम इत्यर्थः ॥ ७८ ॥ [ बहुलेति ।
कल्लोलकरैरित्यर्थः ] ॥ ७८ ॥

श्रीकृष्णोक्तं श्रुत्वा किं कृतवानित्यपेक्षायामाह—आकर्ण्येति । इत्येवं
शरीरां वाचं श्रुत्वा नोऽस्माकं गुरुरिति ग्रन्थकारोक्तिः । अचलमपि कृष्णं शनैः
प्रकर्षेणाङ्गभङ्गादिकं विनैवोद्धृत्य समीप एव प्रकर्षेण पुनश्चलनं यथा न स्यात्तथा
वान् । ननु निकटस्थापनेन पुनरपि नदीबाधा भविष्यतीति चेत्तत्राऽऽह—
न्स्थाने नद्या बाधा नास्ति तत्रेत्यर्थः । चिरकालं सुखमुपविशेत्युक्त्वा
ष्ठिपदित्यन्वयः ॥ ७९ ॥ [ अचलमपि कृष्णं प्रकृतमूर्तिभूतं श्रीकृष्णमित्यर्थः
स्य । अवयवभङ्गाभावरूपप्रकर्षेणोद्धरणकर्मकृत्येत्यर्थः । यत्र नद्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्स्वमातुरपि भक्तिवशादनुज्ञा-
मादाय संसृतिमहाब्धिविरक्तिमान्सः ॥
गन्तुं मनो व्यधित संन्यसनाय दूरं
किं नौस्थितः पतितुमिच्छति वारिराशौ ॥ ८० ॥
इत्थं सुधीः स निरवग्रहमातृलक्ष्मी-
शानुग्रहो घटजबोधितभाविवेदी ॥
एकान्ततो विगतभोग्यपदार्थतृष्णः
कृष्णे प्रतीचि निरतो निरगान्निशान्तात् ॥ ८१ ॥

---

बाधा पीडा । न तत्र निकट एव । भो भगवंस्त्वं चिराय सुखमास्स्वोपविशेत्युदीर्योचार्थं प्रातिष्ठिपत्प्रतिष्ठापितवानिति योजना ] ॥ ७९ ॥

तस्माच्छ्रीकृष्णाद्भक्तिवशात्स्वमातुरप्यनुज्ञां गृहीत्वा स संसारमहासमुद्राद्विरक्तिमान्सं-न्यसनाय दूरं गन्तुं मनोऽकृत । किमर्थमित्यत आह—किमिति । नौकायां स्थितः समुद्रे किं पतितुमिच्छति नैवेच्छति तद्वद्वैराग्यादिलक्षणनौस्थितः संसारसमुद्रे पतितुं नैवेच्छतीत्यर्थः ॥ ८० ॥

इत्थमनेन प्रकारेण स सुधीर्निशान्तात्सदनान्निरगान्निर्गतवानिति योजना ।

'निशान्तपस्त्यसदनं भवनागारमन्दिरम्'

इत्यमरः । तं विशिनष्टि—माता च लक्ष्मीशश्च मातृलक्ष्मीशौ निरवग्रहो निरवधिर्मातृ-विष्णोरनुग्रहो यस्मिंस्तेन मातृश्रीकृष्णाभ्यां प्रसन्नतापूर्वकं प्रेषित इति बोधितम् । नन्व-तिशीघ्रं किमर्थं गतवानित्यत आह—घटजेनागस्त्येन बोधितं भविष्यं जानातीति तथा । ननु जीवनोपायमेव कुतो न कृतवानित्यत आह—

अत्यन्तं विगता निवृत्ता भोग्यपदार्थेभ्यो देहादिभ्यस्तृष्णा यस्य सः । यतः ।

'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते'

इत्युक्तत्वात्कृष्णे प्रतीचि प्रत्यगभिन्ने ब्रह्मणि नितरां रत इत्यर्थः ॥ ८१ ॥ [ सुधीः शोभना सार्वदिकविवेकवती धीर्बुद्धिर्यस्य स तथा । सर्वविषयकसार्वकालिकविचारवा-नित्यर्थः । तत्र पाथेयार्थं तं विशिनष्टि—निरवग्रहेति ।

'वृष्टिर्वर्षं तद्विघाते वग्राहावग्रहौ समौ'

इत्यमरादवग्रहशब्देन वृष्टिप्रतिबन्धकवत्प्रकृतेऽपीष्टवृष्टिप्रतिबन्धकः प्रत्यूहविशेष एवो-च्यते । तथा च निर्गतोऽवग्रह इष्टवस्तुवृष्टिबन्धकप्रत्यूहविशेषो यस्मात्स तथा तादृशो मातृलक्ष्मीशयोर्जननीजनार्दनयोरनुग्रहो यस्य स तथा । एवं च मातृलक्ष्मीपतिभ्यां यत्प्रस-न्नतया गमनायानुमोदनं दत्तं तदेवास्य सकलेष्टपुष्टिकरं मार्गे पाथेयमित्यर्थः । नन्वेतावत्त्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्य त्रिनेत्रापरविग्रहस्य
कामेन नास्थीयत दृक्पथेऽपि ॥
तन्मूलकः संसृतिपाशबन्धः
कथं प्रसज्येत महानुभावे ॥ ८२ ॥
स्मरेण किल मोहितौ विधिविधू च जातूत्पथौ
तथाऽहमपि मोहिनीकचकुचादिवीक्षापरः ॥
अगामहह मोहिनीमिति विमृश्य सोऽजागरी-
द्यतीशवपुषा शिवः स्मरकृतार्तिवार्तोज्झितः ॥ ८३ ॥

---

राया अपि किं कारणमित्याशङ्क्य तत्सूचयितुं तं विशिनष्टि—घटजेति । अ... चितद्वात्रिंशद्वर्षपर्यन्तमेव भूर्लोके स्वलीलाविग्रहावस्थित्या तावत्कालमध्य एव नि... कमार्गप्रतिष्ठापनतत्परिपन्थिनिरसनं च कर्तव्यमिति ज्ञानवानित्यर्थः । नन्वेवमप्यायु... योगाभ्यासादिकमेव कुतो नाकरोदितः पुनर्विशिनष्टि—एकान्तत इत्यादिना तृतीय... एकान्ततोऽभिचारित्वेन । विगतेति । विगता भोग्यपदार्थेष्वणिमाद्यैश्वर्याद्यखिले... स्वपि तृष्णा लालसा यस्य स तथेत्यर्थः । अत्र संस्कारात्मनाऽपि रागो निराकृत... पूर्वपद्योक्तेन संसृतीत्यादिविशेषणेन सह पौनरुक्त्यमस्येति ध्येयम् । प्रतीचि ... सित्वोपलक्षितचिन्मात्रे । निरतः सर्वदा तदेकनिष्ठ इत्यर्थः ॥ ८१ ॥

तस्मिन्नैतच्चित्रमित्याह—यस्य त्रीणि नेत्राणि कामदाहकाग्निसोमसूर्यात्मकानि ... सोऽपरो विग्रहो यस्य तस्यापरविग्रहस्येति वा । दृष्टिपथेऽपि कामेन नास्थीयत कामः ... न शक्तस्तस्मिन्महानुभावे काममूलकः संसृतिपाशबन्धः कथं प्रसज्येत । उपप... ॥ ८२ ॥ [ यस्येति । त्रीणि नेत्राणि यस्य तादृशः पार्वतीपतिलक्षणोऽपरविग्र... शरीरं यस्य स तथा तस्येत्यर्थः । यद्वा त्रिनेत्रस्य पार्वतीपतेर्योऽपरविग्रह आजन्मो... शाल्यन्यलीलावतारविशेषस्तस्येत्यर्थः । अत्र प्रथमपक्षे यदीयत्रिनेत्राख्यलीलाविग्रहे ... कामेनावस्थातुं न शक्यं ततः साक्षात्तस्मिन्नेव तत्संचाराभावः कैमुत्यसिद्ध इति द्योत्यते । ... यपक्षेऽपि यस्य गार्हस्थ्यानुभववतोऽपि दृक्पथेऽपि कामोऽवस्थातुं न शक्तस्तस्या... र्ध्वरेतस्त्वशालिलीलाविग्रहविशेषे तत्संचाराभावः किमु वक्तव्य इति ध्वन्यत इति ... तन्मूलकः काममूलकः । तथा चाऽऽम्नायते—'काममय एवायं पुरुषः' इति ।

'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च' इति ] ॥ ८२ ॥

ननु नित्यमुक्तस्य शिवस्य संन्यासेन किमाधिक्यमिति चेत्तत्राऽऽह—स्मरे...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निष्पत्राऽकुरुतासुरानपि सुरान्मारः सपत्राऽकरो-
दप्यन्यानिह निष्कुलाऽकृततरां गन्धर्वविद्याधरान् ॥
यो धानुष्कवरो नराननलसात्कृत्वोदलासीदलं
यस्तस्मिन्नशुशूरतैष मुनिभिर्वर्ण्यः कथं शंकरः ॥ ८४ ॥
शान्तिश्चावशयन्मनो गतिमुखा दान्तिर्न्यरुन्द्ध क्रिया
आधात्ता विषयान्तरादुपरतिः क्षान्तिर्मृदुत्वं व्यधात् ॥
ध्यानैकोत्सुकतां समाधिविततिश्चक्रे तथाऽऽस श्रिया
श्रद्धा हन्त वसुप्रथाऽस्य तु कुतो वैराग्यतो वेद्मि नो॥८५॥

विधिर्ब्रह्मा विधुश्चन्द्रस्तौ कामेन मोहितौ जातु कदाचिदुत्पथौ च सुतानुधावनेन ताराग्रहेण चोन्मार्गौ च तथाऽहं शिवोऽपि कामेन मोहितो मोहिन्याः केशस्तनादिनिरीक्षणपरः। अहहेत्यत्यन्ताश्चर्ये। मोहिनीमगामनुगतवानिति विचार्य स शिवो यतीशस्य वपुषा कामेन कृतायाः पीडाया वार्तयाऽप्युज्झितोऽजागरीदतिशयेन जागर्ति स्मेत्यर्थः। पृथ्वी-वृत्तम् ॥ ८३ ॥

किंच यो धानुष्कवरो धनुष्मच्छ्रेष्ठो मारः कामोऽसुरान्निष्पत्राऽकुरुत सपुंखानां शराणामपरपार्श्वेषु निर्गमनान्निष्पत्रान्कृतवान्। तथा सुरानपि सपत्राऽकरोत्सपुंखशरप्रवेशनेन सपत्रान्कृतवान्। 'सपत्रनिष्पत्रादतिव्यथने' इति डाच्। तथाऽन्यानपि गन्धर्वविद्याधरानिह जगति निष्कुलाऽकृततरां निर्गतं कुलमन्तरवयवानां समूहो येभ्यस्तथाभूतानत्यन्तं कृतवान् 'निष्कुलान्निष्कोषणे' इति डाच्। तथा नराननलसात्साकल्येनाग्निरूपान्कृत्वा भृशं दग्ध्वाऽलमुदलासीत्सम्यग्दीप्तिमानभूत्तस्मिन्कामे योऽशुशूरत शूरतां कृतवान्स एष श्रीशंकरो मुनिभिः कथं वर्ण्यो न कथमपीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ८४ ॥

किंचास्य श्रीशंकरस्य कुतो वैराग्यतः कस्माद्वैराग्यात्परवैराग्यादपरवैराग्याद्वा शान्तिः श्रवणाद्यतिरिक्ताखिलबुद्धिव्यापारेभ्यः स्वाधिकारानुपयुक्तेभ्योऽफलत्वज्ञानपूर्वकश्चित्तनिरोधः सा मनोऽवशयद्वशमनयत्। तथा दान्तिस्तथाभूतबाह्यव्यापारेभ्यो बाह्यकरणनिरोधः सा गतिमुखाः क्रिया न्यरुन्द्ध गमनादानवदनविसर्गानन्दश्रवणस्पर्शनदर्शनास्वादनाघ्राणात्मिकाः क्रिया वाक्पाणिपादपायूपस्थश्रोत्रत्वक्चक्षूरसनघ्राणाख्येन्द्रियव्यापारान्संरुद्धवती तथोपरतिः सत्त्वशुद्धौ नित्यानामपि विधित एव त्यागः सा विषयान्तराच्छ्रवणादिव्यतिरिक्तविषयात्ता उक्तक्रिया आधात्तासां धारणं स्तम्भनं कृतवती तथा क्षान्तिः स्वाधिकारापेक्षितजीवनविच्छेदकातिरिक्तानां शीतोष्णादिद्वंद्वानां सहिष्णुता सा मृदुत्वं कोमलतां व्यधाद्विहितवती तथा समाधिविततिर्विविधिरिसतश्रवणादिविरोधिनिद्रादिनिरोधेन चेतसोऽवस्थानं समाधिस्तस्य

१ ग. 'ष स मुनिर्व'। २ ग. 'दिकृ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विजनतावनितापरितोषितो
विधिवितीर्णकृतात्मतनुस्थितिः ॥
परिहरन्ममतां गृहगोचरां
हृदयगेन शिवेन समं ययौ ॥ ८६ ॥

गच्छन्वनानि सरितो नगराणि शैला-
न्ग्रामाञ्जनानपि पशून्पथि सोऽपि पश्यन् ॥
नन्वैन्द्रजालिक इवाद्भुतमिन्द्रजालं
ब्रह्मैवमेव परिदर्शयतीति मेने ॥ ८७ ॥

वादिभिर्निजनिजाध्वकर्शितां
वर्तयन्पथि जरद्गवीं निजे ॥
दण्डमेकमवहज्जगद्गुरु-
र्दण्डिताखिलकदध्वमण्डलः ॥ ८८ ॥

---

संततिर्ध्यानैकोत्सुकतां चक्रे । आत्मेति वा पाठः । तथा श्रद्धावित्तो भूत्वेति वित्तामिति प्रथा यस्याः सा श्रद्धा गुरुवेदान्तवाक्येषु विश्वासरूपा प्रियाऽऽस वेद्म्येतत्सर्वं कस्माद्वैराग्याज्जातमिति न जानामीत्यर्थः ॥ ८५ ॥

एवं श्रीशंकरमुपवर्ण्य तस्य गमनं वर्णयति—विजनतेति । जनसमूहशून्य वनितयाऽङ्गनया तोषं प्रापितो विधिना दैवेन वितीर्णेन दत्तेन भोगेन कृता स्थितिर्येन स गृहविषयां ममतां परिहरन्हृदयगेन शिवेन समं ययौ परमात्मानं न्ययावित्यर्थः । द्रुतविलम्बितं वृत्तम् ॥ ८६ ॥ [ जनसंघशून्यतारूपवनितया परितोषितः संजातानन्दः सन्नित्यर्थः । एतेन मात्राज्ञप्तगार्हस्थ्यमकृत्वैव कथं प्रस्थितोऽस्मीति चेतसि पश्चात्तापशून्यत्वं सूचितम् ] [ शिवेन 'शिवमद्वैतं' श्रुतेरद्वैतब्रह्मणैव समं सार्धं ययौ जगामेति योजना ] ॥ ८६ ॥

अथ स गच्छन्वनादीनि पश्यन्नपि यथेन्द्रजालिको मायाव्यद्भुतमिन्द्रजालं मायावच्छिन्नं ब्रह्म वनादिरूपमिदमद्भुतमिन्द्रजालं दर्शयतीति मेने । ॥ ८७ ॥ [ गच्छन्स्वग्रामादुदीचीं प्रति गमनं कुर्वन्सन्नित्यर्थः ] ॥ ८७ ॥

कुत्सितोऽध्वा मार्गो येषां* ते दण्डितं सर्वेषां कदध्वनां मण्डलं

---

* सर्वेष्वप्यादर्शपुस्तकेष्वेवमेवोपलभ्यते । कुत्सितो मार्गः कदध्वा दण्डितानां चीनं तत्पुरुष एव कदादेशविधानात् ।

१ क. ग. °मू। ८६॥ स।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सारङ्गा इव विश्वकद्रुभिरहं कुर्वद्भिरुच्छृङ्खलै-
र्जल्पाकैः परमर्मभेदनकलाकण्डूलजिह्वाञ्चलैः ॥
पाखण्डैरिह कांदिशीकमनसः कं नाऽऽप्नुयुर्वैदिकाः
क्लेशं दण्डधरो यदि स्म न मुनिस्त्राता जगद्देशिकः ॥ ८९ ॥

---

जगद्गुरुर्वादिभिः स्वे स्वे मार्गे कर्शितां जरद्गवीं कर्शितत्वाच्छिथिलावयवां श्रुतिलक्षणां वृद्धां गां निजेऽद्वैतलक्षणे पथि प्रवर्तयन्दण्डमेकमवहत् । तस्य दण्डधारणमेतदर्थमित्यर्थः । ' रो नराविह रथोद्धता लगौ ' ॥ ८८ ॥ [ जरद्गवीम् । जरती चासौ गौश्च तामनादिवेदवाणीमिति यावत् । पक्षे वृद्धधेनुम् । निजे तदभिमतेऽद्वैते पथि मार्गे वर्तयन्परावर्तयन्सन्नि-त्यर्थः । एकं वैणवं दण्डमवहत्करे दधारेति योजना । बालैर्दुर्मार्गप्रवर्तितत्वेन कृशीभूतां वृद्धधेनुं सन्मार्गे प्रवर्तयितुं प्रौढः करे वेणुदण्डं दधातीति लोकेऽपि प्रसिद्धमेव तद्वद्यमपीति श्लेषसूचितोपमालंकारोऽपि ] ॥ ८८ ॥

किंचाहंकुर्वद्भिः शृङ्खलारहितैर्जल्पनशीलैः परमर्मभेदनकलालक्षणया कण्ड्वा व्याप्तं जिह्वाञ्चलं जिह्वाप्रान्तभागो येषां तैर्विश्वकद्रुभिः खेटसारमेयैर्भयद्रुतमनसः सारङ्गा मृगा इव विश्वकद्रुभिः खलैरहंकुर्वद्भिस्तथाभूतैः पाखण्डैरिह भयद्रुतमनसो वैदिकाः कं क्लेशं नाऽऽप्नुयुरपि तु सर्वमपि प्राप्नुयुर्यदि जगद्देशिको दण्डधरो मुनिर्न त्राता स्म त्राणं न कुर्यात् ।

' विश्वकद्रुस्त्रिषु खले ध्वानखेटशुनोः पुमान् ।
सारङ्गः पुंसि हरिणे ' इति मेदिनी ।

शार्दूलविक्रीडितं वृत्तम् ॥ ८९ ॥ [ वैदिका इह लोके । पापण्डैर्नास्तिकादिभेदवादिभिः । विश्वकद्रुभिः खेटश्वभिः सारङ्गा इव हरिणा इव कांदिशीकमनसः 'कांदिशीको भयद्रुतः ' इत्यमराद्भयद्रुतचेतसः सन्तः कं क्लेशं नाऽऽप्नुयुरपि सर्वमपि क्लेशमाप्नुयुरित्यन्वयः । पापण्डत्वे हेतुः—विश्वेति । यतः खलैरतः पापण्डैरित्यर्थः । अथाऽऽखेटसारमेयान्पापण्डानपि निखिलक्लेशदानदक्षत्वार्थं विशिनष्टि—अहमित्यादि पूर्वार्धान्तचतुर्भिः । तत्राऽऽद्यं साभिमानैरित्युभयत्रापि समानम् । तत्रापि । उच्छृङ्खलैरिति श्वपक्षे निर्मुक्तलोहशृङ्खलैरित्यर्थः । अन्यत्र त्यक्तवेदमार्गमर्यादैरित्यर्थः । एतेन दुःसहत्वं ध्वन्यते । तत्रापि । जल्पाकैः ' स्याज्जल्पाकस्तु वाचालः ' इत्यमराच्छब्दकारिभिरिति पक्षद्वयेऽपि । एतेन भयजनकत्वं व्यज्यते । तत्रापि । परेति । परेषां यन्मर्म ग्रीवादिस्थानं पक्षे रहस्यं तस्य यद्भेदनं छेदनं तद्विपयिणी या कला युक्तिस्तल्लक्षणया कण्ड्वा व्याप्तं जिह्वाञ्चलं रसनाग्रं येषां ते तथा तैरित्यर्थः । एतेन प्राणहरणप्रवीणत्वं द्योत्यते । परंतु कदैतदित्यत्राऽऽह—दण्डेत्यादिशेषेण

---

१ ग. पापण्डै° । २ ग. पापण्डै° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दण्डान्वितेन धृतरागनवाम्बरेण
गोविन्दनाथवनमिन्दुभवातटस्थम् ॥
तेन प्रविष्टमजनिष्ट दिनावसाने
चण्डत्विषा च शिखरं चरमाचलस्य ॥ ९० ॥
तीरद्रुमागतमरुद्विगतश्रमः स-
न्गोविन्दनाथवनमध्यतलं लुलोके ॥
शंसन्ति यत्र तरवो वसतिं मुनीनां
शाखाभिरुज्ज्वलमृगाजिनवल्कलाभिः ॥ ९१ ॥

---

यदि स्म जगद्देशिको विश्वगुरुः श्रीमद्भगवत्पादः। दण्डधरः। एतादृशो मुनिर्भवन्...
हंसः संन्यासी त्राता न स्याच्चेदिति योजना। तस्माच्छ्रीमद्भगवत्पादावतारप्रसङ्गे...
वैदिकानां नैव भेदवादिमात्रभीतिरिति भावः ] ॥ ८९ ॥

एवंभूतः श्रीशंकरो गोविन्दनाथस्य वनं प्रविष्ट इत्याह—दण्डसंयुक्तेन धृत...
नवीनमम्बरं वस्त्रं यस्य धृतानुरागश्चासौ नवाम्बरश्चेति वा। तेन श्रीशंकरे...
नर्मदाख्याया नद्यास्तटे स्थितं गोविन्दनाथवनं दिनान्ते प्रविष्टमजनिष्टाभूदस्ताचल...
च चण्डप्रभेण भानुना प्रविष्टमभूदित्यर्थः। वसन्ततिलका वृत्तम् ॥९०॥ [इन्दु...
इन्दुभवाया नर्मदाख्याया नद्यास्तटे स्थितमिति डिण्डिमकृत्। 'रेवा तु नर्मदा सो...
इति पदे रामाश्रमास्तु सोमात्सोमवंशजात्पुरूरवस उद्भवति। तेनावतारित...
सोमोऽमृतमुद्भवत्यस्याः। स्वर्गप्रदत्वात्। अप्। सोमाद्रुद्रादुद्भवति। पचाद्...
व्याचक्षते। सर्वथाऽपि रेवातीरस्थमिति यावत् ] [ उक्तेऽर्थे संमुचितोपमां तु...
योगितामाह—चण्डेत्यादिशेषेण। चण्डा तिग्मा त्विट्कान्तिर्यस्य तेन सू...
श्रीमदाचार्यपक्षेऽपि। तपस्तिग्मतेजसेत्यर्थः। धृतेति। धृतो रागः सं...
तादृशं नवमभिनवमम्बरमाकाशं येन स तथा तेनेत्यर्थः। एतादृशेन सता। च...
स्ताचलस्य। शिखरं तदन्तिकं नभ इत्यर्थः। प्रविष्टमजनिष्टेति संबन्धः।
तुल्ययोगिता श्लेषोपमादयोऽलंकाराः ] ॥ ९० ॥

तीरवृक्षेभ्य आगतेन वायुना विशेषेणापगतः श्रमो यस्य स तथाविधः स...
थवनस्य मध्यतलं लुलोके ददर्श। दर्शनार्थस्य लोकृधातोर्लिट्यभ्यासहलो...
यस्मिन्नुज्ज्वलानि मृगचर्मकौपीनाच्छादनानि यासु ताभिः शाखाभिर्वृक्षा...
यतीनां निवासं बोधयन्ति तदित्यर्थः ॥ ९१ ॥ [ उज्ज्वलेति। उज्ज्वलानि...
वल्कलानि वृक्षविशेषत्वङ्निर्मितप्रावरणानि च यासु तास्तथा ताभिरित्यर्थः ]॥

---

१ क. ग °क्षेप्याग° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदेशमेकमनुयोक्तुमयं व्यवस्य-
न्प्रादेशमात्रविवरप्रतिहारभाजम् ॥
तत्र स्थितेन कथितां यमिनां गणेन
गोविन्ददेशिकगुहां कुतुकी ददर्श ॥ ९२ ॥

तस्य प्रपन्नपरितोषदुहो गुहायाः
स त्रिः प्रदक्षिणपरिक्रमणं विधाय ॥
द्वारं प्रति प्रणिपतञ्जनतापुरोगं
तुष्टाव तुष्टहृदयस्तमपास्तशोकम् ॥ ९३ ॥

पर्यङ्कतां भजति यः पतगेन्द्रकेतोः
पादाङ्गदत्वमथवा परमेश्वरस्य ॥
तस्यैव मूर्ध्नि धृतसाब्धिमहीध्रभूमेः
शेषस्य विग्रहमशेषमहं भजे त्वाम् ॥ ९४ ॥

---

आदेशमुपदेशमेकमनुयोक्तुं प्रष्टुमयं श्रीशंकरो व्यवस्यन्निश्चयं कुर्वन्प्रादेशमात्रं छिद्रमेव द्वारपालं भजतीति तथा तां यमिनां समूहेन कथितां गोविन्दनाथगुहां कौतुकयुक्तः सन्ददर्श ॥ ९२ ॥ [ एकमद्वैतात्मरूपम् । आदेशमुपदेशम् । अनुयोक्तुं प्रष्टुम् ] ॥ ९२ ॥

दृष्ट्वा यत्कृतवांस्तदाह—तस्य प्रपन्नानां शरणागतानां संतोषं दोग्धि पूरयतीति तथा तस्य शरणागतसंतोषप्रदस्य श्रीगोविन्दनाथस्य गुहाया वारत्रयं प्रदक्षिणं परिक्रमणं विधाय द्वारं प्रति प्रणिपातं दीर्घनमस्कारं कुर्वञ्जनसमूहस्य समक्षं तुष्टहृदयः श्रीशंकरोऽपास्तः शोकोपलक्षितः संसारो यस्मात्तं निरस्तसंसृतिचक्रमपास्तो दूरीकृतः शिष्याणां वा शोको येन तं श्रीगोविन्दनाथं तुष्टाव ॥ ९३ ॥

स्तुतिमेव वर्णयति चतुर्भिः—यो गरुडध्वजस्य श्रीविष्णोः पर्यङ्कतां भजति । अथवेत्यस्य तथैवेत्यर्थः । परमेश्वरस्य महादेवस्य यः पादाङ्गदत्वं भजति पुनश्च शिरसि धृता समुद्रपर्वतैः सहिता भूमिर्येन तस्यैव शेषस्याशेषं सर्वं विग्रहमनुग्रत्वाद्वा शेषविलक्षणमशेषं सर्वात्मत्वाद्वाऽशेषं त्वामहं भजे ॥ ९४ ॥ [ शेषस्य विग्रहं तदनुगृहीतत्वात्तत्समकक्ष-विद्यत्वाद्वा तत्स्वरूपमित्यर्थः । अत्र शेषस्य विग्रहमित्यनेन श्रोत्रियत्वमशेषमित्यनेन ब्रह्म-निष्ठत्वं च तत्र द्योतितम् । अवशिष्टत्रिपाद्या शेषमाहात्म्यात्तत्प्रतिमत्वेन तत्र तत्तुल्यैश्वर्य-मपीति । एवं च सर्वाऽपि गुरुत्वसामग्री व्यज्यते ] ॥ ९४ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्ट्वा पुरा निजसहस्रमुखीमभैषु-
रन्तेवसन्त इति तामपहाय शान्तः ॥
एकाननेन भुवि यस्त्ववतीर्य शिष्या-
नन्वग्रहीन्ननु स एव पतञ्जलिस्त्वम् ॥ ९५ ॥

उरगपतिमुखादधीत्य साक्षा-
त्स्वयमवनेर्विवरं प्रविश्य येन ॥
प्रकटितमचलातले सयोगं
जगदुपकारपरेण शब्दभाष्यम् ॥ ९६ ॥

तमखिलगुणपूर्णं व्यासपुत्रस्य शिष्या-
दधिगतपरमार्थं गौडपादान्महर्षेः ॥
अधिजिगमिषुरेष ब्रह्मसंस्थामहं त्वां
प्रसृमरमहिमानं प्रापमेकान्तभक्त्या ॥ ९७ ॥

---

एवं शेषात्मकस्ववर्णनेन श्रीगोविन्दनाथं स्तुत्वा तदवतारभूतपतञ्जल्यात्मना तं ... दृष्ट्वेति । यः पूर्वं स्वीयां सहस्रमुखीं मूर्तिं दृष्ट्वाऽन्ते समीपे ये वसन्तोऽन्ते ... शिष्या अभैषुर्भयमापुरिति हेतोस्तां भयजनकां मूर्तिं परित्यक्त्वा शान्तो निर्विषः ... भुव्यवतीर्य शिष्यानन्वग्रहीदनुगृहीतवान्स पतञ्जलिर्ननु निश्चयेन त्वमेवेत्यर्थः ॥ [ अन्तेवसन्तः 'छात्रान्तेवासिनौ शिष्ये' इत्यमराच्छिष्या इत्यर्थः ] [ यः ... ग्रहीदनुजग्राह । तु पुनः स पतञ्जलिः । योगसूत्रमहाभाष्यचरकपरमार्थसारकारत्वं ... संबन्धः । उत्प्रेक्षानुप्राणितरूपकमलंकारः ] ॥ ९५ ॥

जगदुपकारकतां वर्णयन्नाह—स्वयं भूमेश्छिद्रं पातालं प्रविश्योरगपतेः शेषस्य ... त्साक्षादधीत्य जगदुपकारपरेण येन योगशास्त्रेण सहितं व्याकरणभाष्यं भूमितले ... तमित्युत्तरेण संबन्धः ॥

'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥ ९६ ॥ ... स्वयमेव योगैश्वर्यसामर्थ्यात् । अवनेः पृथ्व्याः । विवरं पातालाख्यं बिलं प्रविश्य ... दव्यवधानेन । उरगेति । शेषवदनादित्यर्थः । अधीत्य । जगदिति । ... परायणेन सतेति यावत् । अचलेति । 'भूर्भूमिरचलाऽनन्ता' इत्यम... इत्यर्थः । सयोगं योगशास्त्रसहितमित्यर्थः । उपलक्षणमिदं तदीयस्य चरकपरमार्थ... वैद्यकाद्वैतशास्त्रीयग्रन्थद्वयस्येति ध्येयम् । एतादृशं शब्दभाष्यमष्टाध्याय्यभिध... शब्दशास्त्रीयभाष्यमित्यर्थः ] ॥ ९६ ॥

तं सर्वगुणैः पूर्णं व्यासपुत्रस्य शुकाचार्यस्य शिष्याद्गौडपादान्महर्षेः ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मिन्निति स्तुवति कस्त्वमिति ब्रुवन्तं
दिष्टया समाधिपदरुद्धविसृष्टचित्तम् ॥
गोविन्ददेशिकमुवाच तदा वचोभिः
प्राचीनपुण्यजनितात्मविबोधचिह्नैः ॥ ९८ ॥
स्वामिन्नहं न पृथिवी न जलं न तेजो
न स्पर्शनो न गगनं न च तद्गुणा वा ॥
नापीन्द्रियाण्यपि तु विद्धि ततोऽवशिष्टो
यः केवलोऽस्ति परमः स शिवोऽहमस्मि ॥ ९९ ॥

---

परमार्थो येन तं प्रसृमरः प्रसरणशीलो महिमा यस्य तं त्वां ब्रह्मनिष्ठामधिजिगमिषुरधिगन्तुमिच्छुरेषोऽहमनन्यया भक्त्या प्राप प्राप्तोऽस्मि ।

' ननमयययुतेयं मालिनी भोगिलोकैः ' ॥ ९७ ॥

तस्मिन्श्रीशंकर एवं स्तुवति स्तुतिं कुर्वति सति कस्त्वमिति ब्रुवन्तं भाग्यवशात्समाधिपदे निरुद्धमपि विसृष्टं व्युत्थापितं चित्तं येन तं गोविन्ददेशिकं प्राचीनैः पुण्यैर्जनितस्याऽऽत्मविबोधस्य चिह्नं येषु तैर्वचोभिस्तस्मिन्काले श्रीशंकर उवाचेत्यर्थः । वसन्ततिलका वृत्तम् ॥ ९८ ॥ [ दिष्टचा 'दिष्टया समुपजोषं चेत्यानन्दे' इत्यमरादानन्दोत्कर्षेणेत्यर्थः । तन्मूलं त्वग्रे मूल एव शंकरेत्यादिना तद्वाक्य एव स्पष्टी भविष्यति । तस्मादयं भगवाञ्शिव एवाद्वैतविद्याप्रतिष्ठापनार्थमवतीर्ण इति समाधावनुभूय तद्दर्शनेच्छाहर्षेणेत्याशयः । समाधीति । समाधेरसंप्रज्ञातसमाधेर्यत्पदमद्वैतात्मस्थानं तत्र पूर्वं निरुद्धं पश्चान्निरुक्तनिमित्तेन विसृष्टं व्युत्थापितं चित्तं येन स तथा तमित्यर्थः । प्राचीनेति । प्राचीनानां तत्र तत्कालावच्छेदेन स्थितानामस्मदाद्यपेक्षया प्राचीनानां पुरातनानां कथितां यमिनां गणेनेति जनता पुरोगमिति च मूल एव प्रसिद्धानां संयमीन्द्राणां यानि पुण्यानि सुकृतानि तैर्जनितानि प्रकटितान्यात्मविबोधचिह्नान्यद्वैतब्रह्मप्रमालक्ष्माणि येषु तानि तथा तैरित्यर्थः । एतादृशैः । वचोभिर्वाक्यैरेव । ननु

' राधा हरिं दर्शवोचे निश्चयैवैहि गृहानिति '

इत्यादिवच्चेष्टाविशेषैरित्यर्थः । तेषां तत्रोपयुक्तत्वेऽपि प्रकृतेऽनुपयुक्तत्वात् ।

' स्वात्मानं प्रकटी करोति भजतां यो मुद्रया भद्रया '

इति श्रीमदाचार्यचरणैरेव दक्षिणामूर्तिस्तोत्रे तस्य दक्षिणकराङ्गुष्ठाग्रतर्जन्यग्रमेलनलक्षणचिन्मुद्राख्यचेष्टाविशेषेणैव मुमुक्षूणामात्मप्रबोधकतत्त्वमस्यादिमहावाक्यार्थकथकत्ववर्णनेन तद्वन्मुद्रासावश्यकत्वाच्च ] ॥ ९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्वचनमुदाहरति—**स्वामिन्निति** । उपनिषत्प्रतिपाद्यमात्मानं दर्शयितुमितरः मतं[1] तं निराकरोत्यहं न पृथिवीत्यादिना । तत्र स्थूलोऽहं जानामीत्यादिप्रतीत्या ज्ञातृत्वप्रतीतिर्देहाकारेण परिणतं भूम्यादिभूतचतुष्टयमात्मेति चार्वाकेषु केषांचिदभि निराकरोति । या पृथिवी[2] साऽहं न भवामि योऽहं[3] स पृथिवी न भवतीति परस्पर निषेध एवमग्रेऽपि । ननु वादिना संघातस्यैवाऽऽत्मत्वाभ्युपगमात्प्रत्येकं पृथिव्यादेस्त करणं कोपयुज्यत इति चेद्वादिना द्विगुणगुरुत्वभियाऽतिरिक्तावयव्यनभ्युपगमाद्भू चत्वारि तत्त्वानीति वदता पञ्चमतत्त्वाभ्युपगमप्रसक्तिभिया संयोगादिसंबन्धानभ्युपगम कर्तुरभावाच्च । संघातानुपपत्त्या प्रत्येकभूतनिराकरणं भौतिकदेहात्मत्ववादनिरास इति स्पर्शिनो वायुस्तथाचाऽऽत्मनो देशकालाद्यपरिच्छिन्नत्वात्परिच्छिन्नानां घटादिवदना थिव्यादिरहं नेत्यर्थः । एवं देहात्मवादं निराकृत्य शून्यवादिमाध्यमिकस्य मतं निरा गगनं यच्छून्यं तदहं न भवामि योऽहं स शून्यं न भवति । अस्तीत्येवोपलब्धव्य दिश्रुतेः । निरधिष्ठानकभ्रमानुपपत्तेः स्तनपानादिप्रवर्तकजन्मान्तरीयसंस्कारोपलब्धेः निराकरणेन ' आपोमयः प्राणोऽन्नमयं हि सोम्य मनः ' इति श्रुत्या भूतकार्य कृतयोः प्राणमनसोः क्रियाशक्तिज्ञानशक्तिप्रधानयोर्निरासः । मनोनिराकरणेन च क्षणिकविज्ञानस्य न तावत्प्राणात्मवादः साधुः । सुषुप्तौ तस्य भोक्तृत्वादर्शनात् आत्मवादस्तस्य करणत्वानुभवात् । नापि क्षणिकविज्ञानात्मवादः । सौगताभिमत भोक्तृत्वयोर्वैयधिकरण्यापत्तेः । यद्वा न गगनमित्यनेनाऽऽकाशस्य पञ्चमभूतस्य यद्यपि भूतचतुष्टयतत्त्ववादिनो मत आवरणाभावत्वेनाभिमतस्य स्थिरस्यासत देहानुपादानत्वं तथाऽपि तस्य सिद्धान्ते भावत्वदेहोपादानत्वाद्यभ्युपगमात्तत्राप्यात्म तन्निराकृतम् । एवं देहोपादानानां भूतानामात्मत्वं निराकृत्य तदुपादानभूतानां स्पर्शशब्दाख्यानां तद्गुणत्वेन प्रसिद्धानां पञ्चतन्मात्राणामात्मत्वं निराचष्टे । न वा वाशब्दस्तथाशब्दार्थमिदानीं पश्यामि शृणोमीत्याद्यनुभवात्प्रत्येकमिन्द्रियाण्यात्म द्विनिगमकाभावान्मिलितानीत्यपरे तान्निराचष्टे—**नापीन्द्रियाणीति** । प्रत्येकं णामात्मत्वे योऽहमश्रौषं सोऽहं पश्यामीति प्रत्यभिज्ञानुपपत्तिर्मिलितानां तथात्वे नाश आत्मविनाशापातः । तस्मादिन्द्रियाण्यप्यहं नापि तु ततस्तस्मात्सर्वेषां शिष्टः सर्वद्वैतबाधेऽप्यबाधितः केवलः कर्तृत्वभोक्तृत्वादिविनिर्मुक्तः परमः सर्वोत्तमः दानन्दोऽस्ति सोऽहमस्म्यवशिष्ट इत्यनेन शून्यमतनिरासः । कर्ता भोक्ता कतार्किकप्राभाकरा भोक्तैवेति सांख्याश्च केवलपदेन निराकृताः । शिव[6] इत्य काद्यभिमतमात्मनः सुखादिगुणकत्वं पराकृतम् । परम इत्यनेन निरति

---

१ ग. °तं नि° । २ ख. °वी सोऽहं । ३ ख. °हं सा पृ° । ४ ख °त्मवा° । ५ ... ना° । ६ ख. निराकृतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आकर्ण्य शंकरमुनेर्वचनं तदित्थ-
मद्वैतदर्शनसमुत्थमुपात्तहर्षः ॥
स प्राह शंकर स शंकर एव साक्षा-
ज्जातस्त्वमित्यहमवैमि समाधिदृष्ट्या ॥ १०० ॥

तस्योपदर्शितवतश्चरणौ गुहाया
द्वारे न्यपूजयदुपेत्य स शंकरार्यः ॥
आचार इत्युपदिदेश स तत्र तस्मै
गोविन्दपादगुरवे स गुरुर्यतीनाम् ॥ १०१ ॥

---

मपुरुषार्थत्वं तस्य बोधितं यद्वा पदार्थशोधनपुरःसरोऽखण्डार्थोऽत्रोक्तस्तत्र पृथिव्यादिनिषे-धेन त्वंपदार्थः शोधितः केवलः परमः शिवो योऽस्तीति शोधिततत्पदार्थानुवादः सोऽहम-स्मीत्यखण्डार्थः । वसन्ततिलका वृत्तम् ॥ ९९ ॥ [ स्वामिन्निति । इदं हि पद्यं न भूमिर्न तोयमित्यादिदशश्लोक्याद्यश्लोकच्छायमेवेति श्रीमधुसूदनसरस्वतीकृतसिद्धान्तबिन्द्वा-ख्यतद्व्याख्यानेनैव व्याख्यातमिति नैवात्र मया लेखनीयमवशिष्यते । डिण्डिमकृता तु बहुशस्तान्येव वाक्यानि विलिखितानीति तथा लेखने मन्दाक्षमेव ममेति क्षन्तव्यं विद्वद्भिः । भोः स्वामिंस्त्वं शिवोऽहमस्मीति विद्धि जानीहीति योजना ] ॥ ९९ ॥

इत्थमेवंभूतमद्वैतसाक्षात्कारात्समुत्थितं शंकरमुनेर्वचनं श्रुत्वा संप्राप्तहर्षः स गोविन्दनाथः प्रोवाच—हे शंकर स प्रसिद्धः शंकर एव साक्षात्त्वं प्रादुर्भूत इत्यहं जानामि कथमित्यत आह—समाधिदृष्ट्येति ॥ १०० ॥ [ समाधिदृष्ट्या समाधौ कृतधारणाविशेषेणेत्यर्थः । अवैमि ऋतंभरा तत्र प्रज्ञेत्यादियोगसूत्रात्प्रमिनोमीति तं प्रति प्राहेत्यन्वयः ] ॥ १०० ॥

तस्यैवमुक्तवत उक्त्वा च चरणौ गुहाया द्वारे दर्शितवतो गोविन्दनाथस्य स शंकरा-चार्यः समीपे आगत्य चरणौ न्यपूजयत्किमर्थं न्यपूजयदित्यत आह—स शंकराचार्यस्तत्र तेषु यतिषु तस्मिन्काल इति वा गुरुचरणपूजनमाचार इत्युपदिदेश । गोविन्दपादो गुरुर्यस्य तस्मै शंकराचार्याय स गोविन्दनाथ उपदिदेशेत्यनुषङ्गः ॥ १०१ ॥ [ न्यपूजयन्नितरां श्रद्धाभक्तिभ्यामभ्यर्चयामासेति संबन्धः । ननु तेनापि किमिति चरणावुपदर्शितौ किं मानित्वेन पूजार्थं तथाचेदनेनापि किमिति तावर्चिताविति प्रत्याहाऽऽचार इतीत्याद्युत्तरा-र्धेन । स गोविन्दभगवत्पूज्यपादाख्यः । यतीनां परमहंससंन्यासिनाम् । गुरुराचार्यः । अतः । तस्मै पूर्वप्रकृतश्रीशंकराचार्याख्याय । गोविन्देति । गोविन्दभगवत्पूज्यपादो गुरुराचार्यो यस्य तस्मै निजशिष्याय । आचारः शिष्येण हि गुरोः पादौ पूजनीयाविति

---

१ क. °पमाग° । २ ख. ग. °रार्थं° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शंकरः सविनयैरुपचारै-
रभ्यतोषयदसौ गुरुमेनम् ॥
ब्रह्म तद्विदितमप्युपलिप्सुः
संप्रदायपरिपालनबुद्ध्या ॥ १०२ ॥

भक्तिपूर्वकृततत्परिचर्या-
तोषितोऽधिकतरं यतिवर्यः ॥
ब्रह्मतामुपदिदेश चतुर्भि-
र्वेदशेखरवचोभिरमुष्मै ॥ १०३ ॥

---

शिष्टाचारः । इत्युपदिदेश संप्रदायं सूचयामास नतु किंचिदप्यन्यदिति प्रथमप्रश्न-
नार्थं योजना । तथा स श्रीशंकराचार्योऽपि तत्र तेषु पूर्वोक्ततत्रस्थसंयमिषु मध्ये।'
इत्युपदिदेशेति प्रागवदेवेति द्वितीयप्रश्नोपशान्त्यर्थं योजनीयम् ] ॥ १०१ ॥

असौ शंकरो विनयसहितैरुपचारैरेनं गोविन्दनाथं गुरुमभ्यतोषयत् । किमि-
आह—तदुपनिषत्प्रसिद्धमखण्डैकरसं ब्रह्म सम्यग्ज्ञातमप्युपलब्धुमिच्छुः । ननु वि-
लिप्सायां को हेतुरिति तत्राऽऽह—संप्रदायेति । 'तद्विज्ञानार्थं स गुरुमेवाभि-
' आचार्यवान्पुरुषो वेद ' इत्यादिश्रुत्युक्तगुरूपसदनादिलक्षणसंप्रदायस्य परिपाल-
त्यर्थः । स्वागता वृत्तम् ॥ १०२ ॥ [ विदितमपीश्वरत्वेनाऽऽवरणाभावादन-
मपीत्यर्थः ] [ विदितेऽप्युपलिप्साऽनुचितैवेत्यत्राऽऽह—संप्रदायेत्यादिशेषेण । 'त-
स गुरुमेवाभिगच्छेत् ' इति श्रुत्याद्युपदिष्टसंप्रदायसंरक्षणबुद्ध्यैव विदितमपि
ह्मोपलिप्सुः सन्नित्यादियोजना । तस्माद्गुरुभक्तिरेव मुक्तिमूलमित्याशयः ] ॥ १०

भक्तिपूर्वं कृता या तस्य परिचर्या तत्कृता सेवा तयाऽधिकतरं यथा स्यात्त-
षितो यतिश्रेष्ठो गोविन्दनाथो वेदानामृग्यजुःसामाथर्वणाख्यानां यानि शिरांसि-
वचोभिः क्रमेण ' प्रज्ञानं ब्रह्म ' अहं ब्रह्मास्मि ' ' तत्त्वमसि ' ' अयमात्मा
इति चतुर्भिर्वचनैरमुष्मै श्रीशंकराय ब्रह्मभावमुपदिदेश ॥ १०३ ॥ [ यतिवर्यो
श्रेष्ठः श्रीगोविन्दभगवत्पूज्यपादः । अत्र डिण्डिमकारः पञ्चदश्युक्तमूलकारैकदेश-
विवेकानुसारेणर्गादिवेदानां क्रमेण ' प्रज्ञानं ब्रह्म ' ' अहं ब्रह्मास्मि ' ' तत्त्व-
' अयमात्मा ब्रह्म ' इति चत्वारि महावाक्यान्युदाजहार तत्समीचीनमेव ।
त्याद्युत्तरपद्योक्तनिरुक्तोपदेशमात्राकलितचतुर्लक्षणोत्तरमीमांसारहस्यत्ववर्णनात् ।
' प्रज्ञानं ब्रह्म ' इत्यृग्वेदमहावाक्ये स्वप्रकाशचिन्मात्रवस्तुन एव

' अन्यावृत्तानुगतं वस्तु ब्रह्मेति मण्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि ' इति

वार्तिकोक्तलक्षणं त्रिविधपरिच्छेदवैधुर्यं ब्रह्मत्वमेवोक्तमिति तु निर्विवादमेव । समन्वयाध्याये हि ' अथातो ब्रह्मजिज्ञासा ' इति प्रतिज्ञाय ब्रह्मण्येव सर्ववेदान्तानां तात्पर्यपर्यवसानं वर्णितमिति निरुक्तवाक्योक्ततदभेदाच्चिन्मात्र एव समन्वयः सुघट एवेति युक्तमेव प्रथमवाक्योपदेशेन प्रथमाध्यायार्थाकलनम् । एवम् ' अहं ब्रह्मास्मि ' इति यजुर्वेदमहावाक्येऽप्यहंकारोपलक्षितात्मन एव ब्रह्मत्वं प्रमीयते । तथा चाविरोधाध्याये सर्वप्रमाणाविरोधो योऽभिहितसमन्वयेन सहोक्तः स तावद्यावत्प्रमाणानां प्रत्यक्षैकमूलकत्वात्तस्यापि नित्यापरोक्षस्वप्रकाशात्ममात्रायत्तत्वात्तद्ब्रह्मत्वावबोधेनावगन्तुं सुकर एवेति समुचितमेव द्वितीयवाक्येन द्वितीयाध्यायार्थाकलनमपि । तथा ' तत्त्वमसि ' इति सामवेदमहावाक्ये तु जीवस्य ब्रह्माभेदोपदेशः स्फुट एव । तेन साधनेषु सर्वेषु मध्ये साक्षादुपकारकं ब्रह्मज्ञानमेव मोक्षसाधनमिति साधनाध्यायस्य तृतीयस्य तृतीयवाक्येनाऽऽकलनं युक्तमेव । एवम् ' अयमात्मा ब्रह्म ' इत्यथर्ववेदमहावाक्येऽपि नित्यापरोक्षस्याऽऽत्मनो ब्रह्मत्वोक्तेर्मोक्षाख्यफलस्याविद्याध्वंसरूपस्यापि तदनतिरेकाच्चतुर्थवाक्येनापि तेन चतुर्थाध्यायस्य फलाभिधस्योचितमेवाऽऽकलनमिति । अन्यथा यदि चतुर्लक्षण्यर्थावगमार्थं चत्वारि महावाक्यानि निरुक्ताचार्यः प्रकृते कथंचिदपि नैवोपदिदेश किं त्वद्वैतब्रह्मात्मैक्यसाक्षात्कारार्थमेवेति ब्रूषे चेत्सांप्रदायिकेत्याद्यव्यवहितोत्तरपद्ये निरुक्तोपदेशस्य कृत्स्नोत्तरमीमांसाशास्त्रार्थावबोधलक्षणं फलं नैव वर्णितं स्यात्किंत्वविद्याध्वंसोपलक्षितद्वन्द्वशोच्छेदरूपमेव तदभिहितं स्यात् । किंच श्रीमच्छंकरभगवत्पादस्य हि कुलक्रमागता शाखा तैत्तिरीयैवेति तु प्रागेवोपपादितं प्रसिद्धमेव च तथा लोकेऽपि । तस्य सर्वज्ञत्वेऽपि लोकसंग्रहार्थानुष्ठेयगुरूपसत्तिपूर्वकसंन्यासानुष्ठानादिसहिताद्वैतब्रह्मसाक्षात्कारफलकमहावाक्योपदेशो स्वशाखीयमेव तदुपदेष्टव्यम् । तत्तु नैवास्ति निरुक्तचतुर्ष्वपि । ननु कोऽयं निर्बन्धो यत्स्वशाखीयमेव महावाक्यमुपदेष्टव्यमधिकारिणे ब्रह्मात्मैक्यसाक्षात्कारार्थमिति चेत्तुल्यः पर्यनुयोगोऽयं वेदशिरोवाक्येऽपि । जीवब्रह्मैक्यावबोधस्य स्मृत्यादिवाक्येभ्योऽपि संभवात्तादृशवाक्यानाम् ' क्षेत्रज्ञं चापि मां विद्धि ' इति स्मृत्यादिष्वपि दर्शनाच्च । न च ' वेदान्तविज्ञानसुनिश्चितार्थाः ' इत्यादिश्रुतिभिः ' श्रोतव्यः श्रुतिवाक्येभ्यः ' इत्यादिस्मृतिभिश्च श्रुतिशिरोवाक्यमात्रगम्यत्वस्याधिकारिविशेषसाध्यब्रह्मात्मैक्येऽभिहितत्वान्निरुक्तस्मृत्यादिमहावाक्यानां तदुपबृंहकत्वेन तदेकानुग्राहकत्वाच्च वेदशिरोवाक्यमेवावश्यमुक्तबोधेऽपेक्षितमिति वाच्यम् । एवं शाखासत्त्वस्य तदीयस्वशाखीयत्वेऽपि तुल्यत्वात् । तथा चोक्तं संक्षेपशारीरके—

' स्वाध्यायधर्मपठितं निजवेदशाखा-
वेदान्तभूमिगतमादरपालितं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सांप्रदायिकपराशरपुत्र-
प्रोक्तसूत्रमतगत्यनुरोधात् ॥
शास्त्रगूढहृदयं हि दयालोः
कृत्स्नमप्ययमबुद्ध सुबुद्धिः ॥ १०४ ॥

---

संन्यासिना परदृशा गुरुणोपदिष्टं
साक्षान्महावचनमेव विमुक्तिहेतुः '

इति । विस्तरस्तु मदीये प्रारब्धध्वान्तविध्वंसन एव ज्ञेय इति दिक्। तर्हि श्रीमद्गोविन्दभगवत्पूज्यपादैः श्रीशंकराचार्यं प्रति ब्रह्मात्मैक्यविषयकप्रासा... 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ' इति तैत्तिरीयाख्यस्वशाखो... वाक्यं तु नैवोपदिष्टम् । तथा चाधिजिगमिषुः ' एष ब्रह्मसंस्थामहं स्वाम् ' इति... नानर्थक्यमेवेति वाच्यम् । ब्रह्मसंस्थापदेन पारमहंस्यपूर्वकब्रह्मनिष्ठाया एव विवक्षि... त्मैक्यसाक्षात्कारस्य स्वीश्वरत्वेन स्वभावसिद्धस्य तेन करत्वमिति प्रश्नोत्तरे स्वा... पद्य एव स्फुटीकृतत्वाच्च । अत एव चतुर्लक्षण्युपकारकोक्तवाक्यचतुष्टयमेव तैरु... दिष्टं न तु स्वशाखोपनिपन्महावाक्यमिति ध्येयं धीरैः । एतद्रहस्यानभिज्ञा इदानीं... प्रायस्तैत्तिरीयशाखिनमपि संन्यासिनं शिष्यं प्रति यजुर्वेदीयत्वेन काण्वादिशाखी... ब्रह्मास्मि ' इत्येव महावाक्यमुपदिशन्ति पश्चात्तानि त्रीण्यपीति केन ते निवारिते... इत्युपेक्ष्यन्त इति ] ॥ १०३ ॥

एवं गुरुणोपदिष्टः सकलं विज्ञातवानित्याह—संप्रदाये भवेन पराशरपुत्रेण प्रोक्तेषु ' अथातो ब्रह्मजिज्ञासा ' इत्यादिसूत्रेषु यन्मतं ब्रह्माद्वैतलक्षणं तस्य ग... स्तस्या अनुरोधाद्दयालोर्व्यासस्य शास्त्रे गूढं यद्धृदयमभिप्रायस्तत्सर्वमपि सुबुद्धिः... करो विज्ञातवान् ॥ १०४ ॥ [ अत एव श्रीशंकराचार्यः श्रीगोविन्दभगवत्पूज्य... चतुर्वेदशिरोनिविष्टवाक्यचतुष्टयोपदेशमात्रेणैव चतुर्लक्षणोत्तरमीमांसारहस्यमप्यवग... सांप्रदायिकेति । सुबुद्धिः सुष्ठु ब्रह्मात्मैक्यविषयत्वादतिरमणीया बुद्धिः... त्वग्र्यया बुद्ध्या ' इति श्रुतेः

' ददामि बुद्धियोगं तं येन मामुपयान्ति ते ' इति

' बुद्धिग्राह्यमतीन्द्रियम् '

इति च स्मृतेरपि विचारितमहावाक्यकरणकब्रह्मविद्याख्याद्वैतास्थितिफलकचा... रधिकारिणां येन स तथाऽद्वैतविद्यादेशिक इति यावत् । एतादृशः । सांप्रदा... प्रकृष्टो निरुपमो यो दायः पितृधनं—

' त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि ' इति श्रुतेः... द्विदितसद्गुरोर्धनमिव सर्वस्वीभूतमद्वैतब्रह्मात्मैक्यविषयकं ज्ञानमेव । तस्य प्रकृ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यासः पराशरसुतः किल सत्यवत्यां
तस्याऽऽत्मजः शुकमुनिः प्रथितानुभावः ॥
तच्छिष्यतामुपगतः किल गौडपादो
गोविन्दनाथमुनिरस्य च शिष्यभूतः ॥ १०५ ॥
शुश्राव तस्य निकटे किल शास्त्रजालं
यश्चाशृणोद्भुजगसद्मगतस्त्वनन्तात् ॥
शब्दाम्बुराशिमखिलं समयं विधाय
यश्चाखिलानि भुवनानि बिभर्ति मूर्ध्ना ॥ १०६ ॥

---

तिबद्धत्वेन सद्यःफलजनकत्वान्निरुपमत्वमेव । स सम्यगपरोक्षो येनेश्वरादिगुरुपारम्पर्येण स संप्रदायः सद्गुरुपरम्पराविशेषस्तत्र भवः सांप्रदायिक एतादृशो यः पराशरस्तस्य यः पुत्रः सत्यवत्यां समुत्पन्नो बादरायणस्तेन प्रोक्तानि यानि सूत्राणि 'अथातो ब्रह्मजिज्ञासा' इत्यादि 'अनावृत्तिः शब्दात्' इत्यन्तानि चतुरध्यायात्मकान्यद्वैतब्रह्मसूचकवाक्यानीत्यर्थस्तेषां यन्मतं संमतमद्वैतं ब्रह्म तद्विषयिणी या गतिः सरणिः प्रक्रियेति यावत्तस्या योऽनुरोधोऽनुसारस्तस्माद्धेतोरित्यर्थः । *हृदयालोः 'हृदयालुः सहृदयः' इत्यमरात्सहृदयस्य भगवतो वेदव्यासस्येत्यर्थः ] [ अत्र सांप्रदायिकेत्यनेन सूत्रे भ्रमप्रमादविप्रलिप्साशून्यत्वं ध्वन्यते ] [ सुबुद्धिपदेनाऽऽचार्येऽद्वैतविद्याप्रतिष्ठापकत्वं व्यज्यते । शास्त्रेत्यनेन तत्तात्पर्यस्य तदितरदुरवगाह्यत्वं द्योत्यते । कृत्स्नपदेनैकदेशित्वं व्युदस्यते ] ॥ १०४ ॥

संप्रदायबोधनाय गुरुपरम्परां दर्शयति—व्यास इति । सत्यवत्यां पराशरमुनेः पुत्रो व्यासस्तस्य प्रथितानुभावः शुकमुनिः सुतस्तस्य शिष्यतां प्राप्तो गौडपादोऽस्य गोविन्दनाथमुनिः शिष्यभूतः । वसन्ततिलका वृत्तम् ॥ १०५ ॥

तस्य गोविन्दनाथमुनेः समीपे शास्त्रकदम्बं श्रीशंकरः शुश्राव यश्च गोविन्दनाथः शेषालयं गतो भवदीयं शास्त्रं भूतले प्रवर्तयिष्य इति संकेतं विधाय शब्दशास्त्रसमुद्रं शेषादशृणोत् । यश्चानन्तो निखिलानि भुवनानि शिरसा धारयति ॥ १०६ ॥ [ शुश्रावेति । श्रीशंकराचार्य इत्यार्थिकम् । प्रकृतत्वात् । किलेत्यवधारणे । तस्यैव निकटे । शास्त्रजालं शुश्राव महावाक्यचतुष्टयश्रवणमात्रेणैव संपूर्णोत्तरमीमांसामवबुद्धवानित्यर्थः । तच्छब्दाकाङ्क्षितं पूरयति—यश्चेत्यादिपादाभ्याम् । यस्तु भुजगेति । पातालगतः सन्ननन्ताच्छेषात् । समयं—

---

* एतेन मूले हृदयं हि दयालोरित्यत्र हृदयं हृदयालोरित्येवं पाठ इति ज्ञायते । आदर्शपुस्तकेषु तु स नोपलभ्यते ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सोऽधिगम्य चरमाश्रममार्यः
पूर्वपुण्यनिचयैरधिगम्यम् ॥
स्थानमर्च्यमपि हंसपुरोगै-
रुन्नतं ध्रुव इवैत्य चकाशे ॥ १०८ ॥
छन्नमूर्तिरतिपाटलशाटी-
पल्लवेन रुरुचे यतिराजः ॥
वासरोपरमरक्तपयोदा-
च्छादितो हिमगिरेरिव कूटः ॥ १०८ ॥

---

' समयाः शपथचारकालसिद्धान्तसंविदः '

इत्यभिधानाद्युष्मच्छास्त्रं भूलोके प्रवर्तयिष्यामीति प्रतिज्ञाम् । विधाय । अखिलं म्बुराशिं तस्मादशृणोदिति संबन्धः । तस्मादित्या ध्याहृताकाङ्क्षितं संक्षिपति— दिचरमचरणेन । एतेन श्रीगोविन्दभगवत्पूज्यपादमाहात्म्यं ध्वन्यते ] ॥ १०६ ॥

एवं प्राप्तसंन्यासं श्रीशंकरं वर्णयितुमुपक्रमते—स इति । पूर्वपुण्यसमूहै सर्वोत्कृष्टं यतिप्रमुखैरप्यभ्यर्च्यमन्त्यं संन्यासाश्रमं स आर्यः श्रीशंकरो लब्ध्वा तद प्रमुखैरप्यर्च्यमुन्नतं स्थानमागत्य ध्रुव इव रराज । स्वागता वृत्तम् ॥ १०७ ॥ [ अनन्तजन्मीयसुकृतसंघैरित्यर्थः ] [ अधिगम्यं प्राप्य । यत उन्नतमत्युच्चम् । मान्यम् । अत एव । हंसपुरोगैः

' हंसः स्यान्मानसौकसि ।
निर्लोमनृपविष्ण्वर्कपरमात्मविमत्सरे '

इति मेदिन्याः सूर्यप्रमुखैरित्यर्थः । पक्षे हंसाख्यसंन्यासविशेषस्य प्रसिद्धत्वा मुख्यो येषामेतादृशैर्ब्रह्मचर्याद्यखिलाश्रमैरिति यावत् । अपिना तदन्यैः पूज्य वाच्यमिति सूच्यते । अर्च्यं प्रदक्षिणीकरणादि ना पूज्यमित्युभयत्रापि । एताद ध्रुवलोकाख्यं स्थलम् । पक्षेऽन्तिमाश्रमरूपं स्थलम् । एत्य प्राप्य ध्रुव इव चका इति संबन्धः । अत्र श्लेषघटितपूर्णोपमालंकारः ] ॥ १०७ ॥

अत्यन्तं पाटला श्वेतरक्ता या शाटी पटी तल्लक्षणेन पल्लवेन छन्नाऽऽच्छा र्यस्य स यतिराजो रुरुचे शुशुभे । तत्र दृष्टान्तमाह—वासरस्य दिवसस्योपर रक्तो यो भेवस्तेन च्छादितो हिमगिरेः कूटः शृङ्गमिव ॥ १०८ ॥ [ कारः ] ॥ १०८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एष धूर्जटिरबोधमहेभं
संनिहत्य रुधिराप्लुतचर्म ॥
उद्यदुष्णकिरणारुणशाटी-
पल्लवस्य कपटेन बिभर्ति ॥ १०९ ॥
श्रुतीनामाक्रीडः प्रथितपरहंसोचितगति-
र्निजे सत्ये धाम्नि त्रिजगदतिवर्तिन्यभिरतः ॥
असौ ब्रह्मैवास्मिन्न खलु विशये किंतु कलये
बृहेरर्थं साक्षादनुपचरितं केवलतया ॥ ११० ॥

---

यथा स धूर्जटिः शिवो गजासुरं निहत्य रुधिराप्लुतं तदीयं चर्म बिभर्ति स्म तथैष शंकरोऽज्ञानात्मैकमहागजं सम्यङ्निहत्योद्यत्सूर्यवदरुणशाटीपल्लवस्य व्याजेन रुधिराप्लुतं महेभस्य चर्म बिभर्ति ॥ १०८ ॥ [रूपकलुप्तोपमाकैतवापह्नुत्यादयोऽलंकाराः] ॥ १०९ ॥

ब्रह्मविष्णुशिवेभ्यो व्यतिरेकप्रदर्शनपूर्वकं श्रीशंकरस्य निगमप्रतिपाद्यत्वं दर्शयति—श्रुतीनामित्यादिना । श्रुतीनां मध्य आ समन्तात्क्रीडा यस्य प्रथितैः प्रख्यातैः परमहंसैः परमहंसपरिव्राजकैः सहोचिता गतिर्गमनं यस्य निजे स्वस्वरूपभूते सत्येऽबाध्ये धाम्नि तेजसि त्रिजगदतिवर्तिनि सर्वबाधावधिभूतेऽभिरतः सदैव रतोऽसौ श्रीशंकरो ब्रह्मैव यतः परब्रह्मापि 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतेः श्रुतीनामा समन्तात्क्रीडा यस्मिन्प्रथितानां परमहंसानां तत्त्वविदामुचिता मोक्षाख्या गतिः 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतेः । प्रथितेति गतेर्वा विशेषणम् 'स भूमा क्व प्रतिष्ठितः स्वे महिम्नि' इति श्रुतेरुक्तधाम्न्यभिरतं हिरण्यगर्भस्तु नैवंविधो यतस्तस्योरवनादौ क्रीडा तथा हंसैर्गतिस्तथा त्रिलोकिपक्षाश्रयणेन त्रिजगतश्चतुर्दशभुवनात्मकस्य ब्रह्माण्डस्यान्तर्वर्तिनि बाध्ये स्वीये जडे लोकेऽभिरतस्तस्मादस्मिन्श्रीशंकरे किल बृहिधातोरर्थमनवच्छिन्नबृहत्त्वरूपं साक्षादुपचाररहितं केवलतया निर्णीततया कलये जानामि नतु संदिहे ।

'केवलः कुहनेऽपि च ।
नपुंसकं तु निर्णीते वाच्यवच्चैककृत्स्नयोः'

इति मेदिनी । तथाच 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादिनिगमगतब्रह्मशब्दप्रतिपाद्यत्वं श्रीशंकरस्य निरुपचारेणेत्यर्थः । शिखरिणी वृत्तम् ॥ ११० ॥ [ एवं शिवरूपकेणोपमानस्योपमेयापेक्षयाऽऽधिक्यदर्शनात्तत्राऽऽधिक्येऽस्य तदवतारत्वमौपचारिकमेवेत्याशङ्क्य तस्य ब्रह्मविष्णुरुद्राख्यगुणमूर्तिभ्योऽप्याधिक्यं शुद्धाद्वैतब्रह्मत्वेनैवोपनिषत्प्रतिपादिततया द्योतयति ]

---

१ क. °त्मकं म° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतीत्यादिशिखरिणीभिः । ' ब्रह्म वेद ब्रह्मैव भवति ' इति श्रुत्या ब्रह्मवित्वेन शुद्ध रूपत्वस्यैवाऽऽचार्ये प्रतिपादनात्सकलश्रुतीनां समन्वयाधिकरणन्यायेनात्रैव तात्पर्ये नाचार्यं संपूर्णश्रुतीनां ' पुमानाक्रीड उद्यानम् ' इत्यमराद्विलासस्थानं भवतीति विग्रहविशिष्टत्वपक्षेऽपि सर्वज्ञत्वात्तत्त्वमुचितमेवेति बोध्यम् । चतुरास्यपक्षे तु चतुर्वेद णत्वं प्रसिद्धमेव । प्रथितेति । ' ब्रह्मसंस्थोऽमृतत्वमेति ' इति श्रुतेः प्रथिता प्रसिद्धा परमहंसानां परमहंसपरिव्राजकानामुचिता पुनरावृत्तिविरहाद्योग्या गतिर्विदेहकैवल्य येनेत्यर्थः । यद्यपि सिद्धान्ते मुक्तिर्ब्रह्मरूपैव तथाऽपि चरमवृत्तिप्रतिबिम्बितत्वेन तद् ध्वंसं प्रति करणत्वाद्युक्त एव तृतीयाघटितत्रिपदबहुव्रीहिरित्याकूतम् । पक्षे जगति ये श्रीपद्मपादाचार्यश्रीमत्सुरेश्वराचार्यादयः परमहंसाः परमहंसाख्यसंन्यासिनस्तेषाम्

' गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः '

इति मेदिन्यास्तत्त्वसाक्षात्कारो यस्मात्स तथेत्यर्थः । पक्षान्तरे तु

' वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे '

इति श्रुतेः प्रसिद्धा परमहंसानां क्रममुक्तीच्छूनां संन्यासिनामुचितगतिर्विमान यस्मात्स तथेत्यर्थः । तथा प्रथिता पुराणप्रसिद्धा परहंसैः राजहंसैरुचितगतिर्विमानं योग्यगमनं यस्य स तथेति यावत् । तथा । निज इत्यादि । निजे स्वात्मरूपे । त्रैकालिकाबाध्ये । धाम्नि स्वप्रकाशे तेजसि । अत एव । त्रिजगत्त्रैकालिकं द्वैतं वर्तत इति तथेति यावत् । तत्र । अभिरतः स्वमहिमप्रतिष्ठितत्वादित्याशयः । न्मुक्तत्वेन रममाण इत्यर्थः । पक्षान्तरे निजे स्वकीये । एतादृशे । त्रिजगति त्रिलोक्यूर्ध्वस्य इत्यर्थः । एतादृशे सत्ये सत्याख्ये । धाम्नि—

' धाम देहे गृहे रश्मौ स्थानजन्मप्रभेदयोः ।

इति मेदिन्याः स्थान इत्यर्थः । अभिरतोऽभिविहरमाण इति यावत् । प्रकृतः श्रीशंकराचार्यो ब्रह्मैवास्मिन्विषये नैव विशये नैव संदेहः । किंत्वस्मिन् बृंहणार्थे केवलतयाऽद्वैततया । साक्षादव्यवधानेन । नतु परम्परया । अनुपचारेण वेद्मीति योजना । पक्षे—

' दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम् '

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मितं पादेनैव त्रिभुवनमिहैकेन महसा
विशुद्धं यत्सत्त्वं स्थितिजनिलयेष्वप्यनुगतम् ॥
दशाकारातीतं स्वमहिमनि निर्वेदरमणं
ततस्तं तद्विष्णोः परमपदमाख्याति निगमः ॥ १११ ॥

---

इति स्मृतेर्युक्तमेव तत्र तथात्वमिति तत्त्वम् । पक्षान्तरे तु निरुक्तधात्वर्थस्य गौणत्वं प्रसिद्धमेवेति व्यतिरेकोऽलंकारः । तदुक्तम्—

व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।
शैला इवोन्नताः सन्तः किंतु प्रकृतिकोमलाः ' इति ] ॥ ११० ॥

एवं ' तद्विष्णोः परमं पदम् ' इति निगमोऽपि निरुपचारेण श्रीशंकरे वर्तत इत्याह— मितमिति ।

' एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि '
' अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु '

इत्यादिश्रुतेरेकेनैव महसा ज्योतीरूपेण यद्यस्य पादेनेह त्रिभुवनं मितं मापितं विष्णोस्तु पादद्वयेन त्रिभुवनं मापितं तथा तस्य सत्त्वमबाधितस्वरूपं स्थित्युत्पत्तिलयेष्वप्यनुस्यूतं विष्णोस्तु सत्त्वं सत्त्वगुणस्थितावेवानुगतम् । सत्त्वं विशिनष्टि—दशाकारातीतमवस्थाकाराभ्यां विनिर्मुक्तं विष्णोस्तु तद्दशभिराकारैर्मत्स्यादिभिरतीतं न भवति ततस्तस्मात्स्वमहिम्नि निर्वेदेन वैराग्येण सम्यग्बोधेन वा रमणं यस्य तं श्रीशंकरं वैकुण्ठे लक्ष्म्या क्रीडतो विष्णोः सकाशात्परमं विष्णुसंबन्धि वा परमं पदमित्यर्थक उक्तनिगमो निरुपचारेणाऽऽख्याति वक्तीत्यर्थः ॥ १११ ॥ [ अथ क्रमप्राप्तं विष्णोः सकाशादपि श्रीशंकराचार्यस्य व्यतिरेकं व्यनक्ति—मितमिति । इह प्रपञ्चे शास्त्रे वा यस्येति शेषः । महसा स्वप्रकाशज्योतीरूपेण । एकेन नतु द्वाभ्याम् । एतादृशेन पादेनैव

' पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि '

इति श्रुतेः शिवमद्वैतं चतुर्थं मन्यन्त इत्यादौ वास्तविकचतुर्थत्वाभावेऽपि विश्वाद्यपेक्षया चतुर्थत्ववत्कल्पितैकदेशापेक्षया तुरीयांशेनैवेत्यर्थः । ' पादा रश्म्यङ्घ्रितुर्यांशाः ' इत्यमरः । नतु चरणेन । निरवयवत्वात् । एतेन तत्र भूमत्वं ध्वन्यते । विवृतं चैवमेव ज्योतिश्चरणाभिधानात् ' इत्यधिकरणे भाष्ये त्रिभुवनं त्रैकालिकं दृश्यमपीत्यर्थः । नतु त्रैलोक्यम् । मितं परिमितमिति यावत् । यथोषरधरण्यवच्छिन्नसूर्यालोकैकदेशपरिमितमेव मृगजलं तद्वदविद्यावच्छिन्नचैतन्यैकदेशपरिमितमेव निखिलमपि द्वैतजालमस्तीत्याकूतम् । विष्णुना तु द्वाभ्यां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न भूतेष्वासङ्गः क्वचन न गवा वा विहरणं
न भूत्या संसर्गो न परिचितता भोगिभिरपि ॥
तदप्याम्नायान्तास्त्रिपुरदहनात्केवलदृशा
तुरीयं निर्द्वन्द्वं शिवमतितरां वर्णयति तम् ॥ ११२॥

चरणाभ्यां मायिकाभ्यामपि वार्तमानिकब्रह्माण्डात्मकमेव त्रैलोक्यं व्याप्य ... तस्मात्प्रकृते पूर्वोक्तरीत्या निर्गुणब्रह्मरूप आचार्ये व्यतिरेकः स्फुट एवेति भावः ॥ ... ग्रेऽपि ज्ञेयम् । अत एव । विशुद्धं मायागुणत्वानापन्नम् । नतु तद्गुणीभूतम् । ... यत्सत्त्वं यस्य परब्रह्मस्वरूपस्य श्रीशंकरभगवत्पादस्य यत्सत्त्वमबाधितं ... स्थितीति । पाठक्रमादर्थक्रमो बलीयानिति न्यायेन जन्यजगज्जन्मस्थितिभङ्गे... नतु केवलस्थितावेव गुणरूपसत्त्ववत् । अनुगतमधिष्ठानत्वेन रज्ज्वादिवद्भुजगादि... तमिति यावत् । नतु परिणतत्वेनानुवृत्तमिति ततोऽस्य व्यतिरेकः । तथात्वादेव ... वेदो विष्णोरपि वास्तविकस्वरूपत्वेनैव वर्णयतीत्याह—दशेत्याद्युत्तरार्धेन । ... क्तिभ्यां विनिर्मुक्तम् । नतु बाल्याद्यवस्थापन्नमतस्यादिदशसंख्याकाकारधारिण... एव । निजेति । निजमहिमनि स्वभूमस्वरूप एव निर्वेदेन यावद्दृश्यतिरस्कारेण रमणं ... कस्यवस्थायाम् 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति' ... क्रीडनं यस्येत्यर्थः । नतु वैकुण्ठादिषु लक्ष्म्यादिभिः सहानुरागेण क्रीडनमिति ... यत एतादृशम् । ततो हेतोः । तं श्रीशंकरभगवत्पादम् । निगमो वेदः । तज्जन्य... सर्वद्वैतबाधावधित्वेन श्रुत्यादि च प्रसिद्धम् । एतादृशम् । विष्णोः श्रीरमणस्य ... पद्यते प्राप्यत इति पदं विष्णुसंबन्धि सर्वोत्कटं मुमुक्षुप्राप्यं स्थानमद्वैतब्रह्मात्म... मेवेत्यर्थः । एतादृशमाख्याति कथयतीत्यन्वयः । तथा च श्रुतिः 'तद्विष्णोः परमं ... पश्यन्ति सूरयः' इति । अलंकारोऽत्र पूर्वोक्त एव । काव्यलिङ्गमपि ॥ ११...

तथा शिवपदप्रवृत्तिमपि तस्मिन्दर्शयति—नेति । प्रसिद्धशिवस्य भूते... समन्तात्सङ्गोऽस्य तु क्वचन कस्मिंश्चिद्देशे काले वा भूतेषु प्राणिष्वाकाशादिषु ... आसक्तिर्नास्ति प्रसिद्धशिवस्य गवा वृषेण विहरणमस्य तु क्वापि गवेन्द्रिये... नास्ति तस्य भूत्या भस्मना संसर्गः संबन्धः प्रसिद्धोऽस्य तु भूत्यैश्वर्येण संसर्गो ... तस्य भोगिभिः सर्पैः परिचितता प्रसिद्धाऽस्य तु विषयसंभोगवद्भिः परिचितता ... यद्यप्येवं वैलक्षण्यं तथाऽपि शिवं शान्तमद्वैतं चतुर्थं मन्यन्त इति वेदान्ता... विशुद्धस्य ब्रह्मणो दर्शनेन परमार्थदृष्ट्या वा त्रयाणां स्थूलसूक्ष्मकारणानाम्...

१ क. ख. °त्या संस° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न धर्मः सौवर्णो न पुरुषफलेषु प्रवणता
न चैवाहोरात्रस्फुरदरियुतः पार्थिवरथः ॥
असाहाय्येनैवं सति विततपुर्यष्टकजये
कथं तं न ब्रूयान्निगमनिकुरम्बं परशिवम् ॥ ११३ ॥

---

दहनान्निर्द्वंद्वं सुखदुःखादिद्वंद्वशून्यं चतुर्थसंज्ञं शिवं सम्यक्कं शंकरं वर्णयतीत्यर्थः ॥ १२ ॥
[ एवं रुद्राद्व्यतिरेकमपि तत्र व्यनक्ति—तदप्येवमपि । त्रिपुरदहनात्पुरत्रये 'क्रीडति यस्तु जीवः' इति श्रुतेः स्थूलसूक्ष्मकारणाख्यजाग्रदाद्यवस्थानुभूतदेहादिनगराणां यद्दहनं—

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'

इति स्मृतेस्तत्त्वसाक्षात्कारेण मिथ्यात्वनिश्चयरूपदाहादिति यावत् । पक्षे तृतीयनेत्राग्निमात्रेण त्रिपुरासुरदाहो न कृतः किंतु सामग्र्यन्तरेणापीत्यनुपदमेव वक्ष्यते । तं श्रीभगवत्पादाचार्यम् । निर्द्वन्द्वं द्वैतशून्यम् । तुरीयं विश्वतैजसाद्यपेक्षया चतुर्थम् । अतितरां शिवं परशिवं वर्णयति कथयतीति संबन्धः । व्यतिरेक एवालंकारः ] ॥ ११२ ॥

यः प्रसिद्धः शिवो धनुरादिसहकृतस्त्रिपुरं विजितवांस्तं यदि निगमसमूहः प्रतिपादयति तर्हि सहायं विनैव पुर्यष्टकविजयकर्तारं श्रीशंकरं कथं न ब्रूयादित्याह—नेति । प्रसिद्धशिवस्य तु सौवर्णः सुवर्णगिरिमयो धर्मो धनुः ।

'धर्मोऽस्त्री पुण्य आचारे ना धनुर्यमसोमयोः'

इति मेदिनी । अस्य तु ब्राह्मणादिशोभनवर्णसंबन्धिधर्मो नास्ति तस्य तु पुरुषो विष्णुः स एव फलं फलकं यस्यैतादृश इषुर्बाणस्तत्प्रवणता तदासक्तताऽस्य तु पुरुषाणां फलेष्वैहिकामुष्मिकेषु प्रवणता नास्ति तस्य त्वहोरात्रे स्फुरन्तावरी चन्द्रसूर्यौ ताभ्यां चक्ररूपेण स्थिताभ्यां युक्तः पृथिवीमयो रथोऽस्य त्वहोरात्रं स्फुरन्तोऽहंकारादिलक्षणा अरयस्तैर्युतः पार्थिवो देहलक्षणो रथो न चैवास्ति तथाचैवंप्रकारेण सहायवर्जितेन येन विस्तृतं यत्पुर्यष्टकं तस्य प्राणपञ्चककर्मेन्द्रियपञ्चकज्ञानेन्द्रियपञ्चकान्तःकरणचतुष्टयाविद्याकामकर्मवासनालक्षणस्य जये सति तं श्रीशंकराख्यं परशिवं वेदसमुदायः कथं न प्रतिपादयेदित्यर्थः ॥ ११३ ॥
[ ननु का वा रुद्रस्यापरसामग्री त्रिपुरदहन इत्याशङ्क्य तां व्यक्तीकुर्वंस्ततो व्यतिरेकं प्रकृते व्यनक्ति—नेति । धर्मः संध्यावन्दनाग्निहोत्रादिरूपः पुण्यापूर्वनिचयो न । तथा चाऽऽम्नायते 'न पुण्यपापे मम नास्ति नाशः' इति ] [ पुरुषेति । जीवोपभोग्यसुखदुःखलक्षणफलेष्वित्यर्थः । प्रवणताऽनुकूलताऽपि न 'न सुखं न मानावमानौ' इति परमहंसोपनिषच्छ्रुतेः । पार्थिवेति ।

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखासारदुरन्तदुष्कृतघनां दुःसंसृतिप्रावृषं
दुर्वारामिह दारुणां परिहरन्दूरादुदाराशयः ॥
उच्चण्डप्रतिपक्षपण्डितयशोनालीकनालाङ्कुर-
ग्रासो हंसकुलावतंसपदमाक्रमन्मानसे क्रीडति ॥

इति श्रुतेः पृथ्वीविकारप्रधानीभूतदेहरयोऽपीति यावत् । 'न जन्मदेहेन्द्रिय...' इति श्रुतेः । रूपकविशेषोऽलंकारः ] ॥ १३ ॥

अथ तस्य परमहंसत्वं बहुधा वर्णयति—दुःखान्येवाऽऽसारो वेगवृष्टिर्यस्यां दुष्कृतानि पापान्येव मेघा यस्यां दुःखासारा चासौ दुरन्तदुष्कृतघना च ... दुर्वारां दारुणां दुःसंसृतिलक्षणां प्रावृषं वर्षर्तुं दूरादेव परिहरन्परित्यजन्हंसकुलावतं... न्दमाक्रमतां हृदि मानससरोवस्थानीये क्रीडतीति संबन्धः । शुद्धे स्वहृदीति वा । ... नष्टि—उदाराशयः पुनश्चोच्चण्डा ये प्रतिपक्षपण्डितास्तेषां यश एव नालीकस्य... नालानां दण्डानामङ्कुरो ग्रासो यस्य सः ।

'नालीकः शरशल्याङ्गेष्वब्जखण्डे नपुंसकम् ।
नालो नालं पद्मदण्डे'

इति मेदिनी । शार्दूलविक्रीडितं वृत्तम् ॥११४॥ दुःसंसृतीति । दुष्टा दे... जीवन्मुक्तानामाप्रारब्धपरिसमाप्तिमासमानद्वैतसंततिविलक्षणाज्ञानकालिकजन्ममरण... परम्परा सैव प्रावृट्तामिति यावत् । अत एव । दुर्वारां ज्ञानं विनाऽनिरस्याम् । ... दारुणां भयंकराम् । दूरादेव परिहरन्परित्यजन्सन्नित्यर्थः । हंसाः प्रावृषि मानसं... गच्छन्तीति कुवलयानन्दे—

'यस्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तारितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते'

इति कविसमये प्रसिद्धमेव । उदारेति । उदारः शरणागतमुमुक्षुभ्यो ब्रह्म... नवदान्य आशयोऽन्तःकरणं यस्य तथा स श्रीशंकराचार्य इत्यर्थः । रूपकमलंकारः ...



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षीरं ब्रह्म जगच्च नीरमुभयं तद्योगमभ्यागतं
दुर्भेदं त्वितरेतरं चिरतरं सम्यग्विभक्तीकृतम् ॥
येनाशेषविशेषदोषलहरीमासेदुषीं शेमुषीं
सोऽयं शीलवतां पुनाति परमो हंसो द्विजात्यग्रणीः॥११५॥
नीरक्षीरनयेन तथ्यवितथे संपिण्डिते पण्डितै-
र्दुर्बोधे सकलैर्विवेचयति यः श्रीशंकराख्यो मुनिः ॥
हंसोऽयं परमोऽस्तु ये पुनरिहाशक्ताः समस्ताः स्थिता
जृम्भान्निम्बफलाशनैकरसिकोन्काकानमून्मन्महे॥ ११६ ॥

---

क्षीरनीरयोर्ब्रह्मजगतोर्विवेचकत्वादप्ययं परमहंस इत्याह—क्षीरं दुग्धं परमानन्दघनं ब्रह्म जगत्पुनर्नीरमानन्दवर्जितं दुःखात्मकं तदुभयं योगं परस्परतादात्म्यं प्राप्तं पुनश्चेतरेतरं भेत्तुं विलक्षणीकर्तुं दुर्घटं येन सम्यग्विभक्तीकृतं सोऽयं द्विजातीनां द्विजानामग्रणीः परमहंसः श्रीशंकरोऽशेषा ये विशेषेण दोषा उत्कृष्टदोषा रागद्वेषादयस्तेषां लहरीमासेदुषीमा समन्तात्सेवितवतीं शेमुषीं शीलवतां बुद्धिं पुनाति पक्षे द्विजातयः पक्षिणः ॥ ११५ ॥ [ आसेदुषीमा समन्तात्सेवितवतीम् । एतादृशीम् । शीलवताम् ।

' अपि चेत्स दुराचारो भजते मामनन्यभाक् '

इत्यादिस्मरणात्सुशीलानां पुंसाम् । शेमुषीं बुद्धिम् । ' धीः प्रज्ञा शेमुषी मतिः ' इत्यमरः । रूपकादिरलंकारः ] ॥ ११५ ॥

श्रीशंकरस्य परमहंसत्वं प्रकारान्तरेण प्रतिपादयति—नीरक्षीरनयेन जलदुग्धे यथा संमिश्रिते तद्रीत्या तथ्यं ब्रह्म वितथं मिथ्याभूतज्ञानादि ते सम्यक्पिण्डिते तादात्म्यं प्राप्ते समस्तैः पण्डितैरितरपक्षिस्थानीयैरिदं तथ्यमिदं वितथमिति बोद्धुं बोधयितुं च दुर्घटे यः श्रीशंकराख्यो मुनिर्विवेचयति विविच्य स्थापयति सोऽयं विवेचकत्वात्परमो हंसोऽस्तु ये पुनरिह विवेचनेऽशक्ताः सर्वे स्थितास्ताञ्जृम्भाच्छ्लेष्मजनितरोगविशेषस्थानीयरागादेर्हेतो-र्निम्बफलस्थानीयविषयसंभोगैकरसिकास्तानमून्काकान्मन्महे जानीमः ॥११६॥ [ नीरेति । नीरक्षीरदृष्टान्तेन । तथ्येति । तथ्यं ब्रह्म वितथं मिथ्याभूतमविद्यादिदृश्यम् । संपिण्डिते अन्योन्याध्यासेनैकीभूते । जृम्भात् ' जृम्भस्तु त्रिषु जृम्भणम् ' इत्यभिधानान्मुखविकासा-दनन्तरमित्यर्थः । निम्बेति । निम्बफलसदृशमतुलतिक्तं यद्विषयसुखं तस्य यदशनमास्वा-दनं तन्मात्ररसिकाञ्जन्माऽऽरभ्यापि विषयसुखैकलम्पटानित्यर्थः । डिण्डिमकारस्तु जृम्भा-च्छ्लेष्मजनितरोगविशेषस्थानीयं रागादेर्हेतोरिति व्याचष्टे ] ॥ ११६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टिं यः प्रगुणी करोति तमसा बाह्येन मन्दीकृतां
नालीकप्रियतां प्रयाति भजते मित्रत्वमव्याहतम्॥
विश्वस्योपकृतेर्विलुम्पति सुहृच्चक्रस्य चाऽऽर्तिं घनां
हंसः सोऽयमभिव्यनक्ति महतां जिज्ञास्यमर्थं मुहुः॥

हंसभावमधिगत्य सुधीन्द्रे
तं समर्चति च संसृतिमुक्त्यै ॥
संचचाल कथयन्निव मेघ-
श्चञ्चलाचपलतां विषयेषु ॥ ११८ ॥

---

प्रकारान्तरेणापि हंसत्वमाह—दृष्टिमिति । हंसः सूर्यो बाह्येन तमसा म[न्दीकृतां] दृष्टिं प्रगुणी करोति प्रकृष्टां तमोनिवारणेनापावृतां करोत्ययं त्वबाह्येनाऽऽन्तरेणाऽज्ञा[नेन] वाऽज्ञानलक्षणेन तमसा मन्दीकृतामात्मदृष्टिं प्रगुणी करोति प्रकृष्टगुणयुक्तां यथा[...] नयोग्यां करोति स तु कमलप्रियतां प्रयात्ययं स्वलीकभूतविषयादिप्रियतां न प्र[याति] उपकाराय जगतो मित्रत्वमव्याहतं भजते तथाऽयमप्युपकाराय सर्वस्याव्याहत[ं] भजते स सुहृदश्चक्रस्य चक्रवाकस्य घनीभूतां रात्रिप्रयुक्तां प्रियाविरहप्रयु[क्तां] विलुम्पति नाशयति तथाऽयमपि सुहृदां समूहस्य घनीभूतां संसृतिलक्षणामार्ति[ं] स ज्ञातुमिष्टं घटपटादिरूपमर्थं मुहुरभिव्यनक्ति प्रकाशयति तथा सोऽयमपि मह[तां] चेतसां मुमुक्षूणां जिज्ञास्यं परमार्थभूतं ब्रह्मैक्यलक्षणमर्थं मुहुरभिव्यनक्ति । [...] [नालीकेति । नालीकप्रियतां मिथ्याभूतविषयप्रियत्वं प्रयातीत्यर्थः । [...] कार[ः]च्छो नालीकः सत्यः स चासौ प्रियः ' तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयो[ऽन्य]स्मात्सर्वस्मादन्तरतरं यदयमात्मा ' इति श्रुतेर्निरुपचरितप्रीतिविषय आत्मा. तत्त्वमित्य[...]

' नालीकः शरशल्यास्त्रेष्वब्जखण्डे नपुंसकम् '

इति मेदिन्याः पद्मपूगप्रियत्वमिति यावत् । श्लेषोऽलंकारः ] ॥ ११७ ॥

सुधीन्द्रे श्रीशंकरे हंसभावं यतित्वमधिगत्य संसृतिमुक्त्यर्थं तं हंसं परमात्मा[नं समर्च]ति सति विषयेषु विद्युच्चपलतां कथयन्निव मेघः संचचाल । स्वागता वृत्तम् ॥ ११८ ॥
श्रीशंकराचार्यमुपवर्ण्य तदा संप्राप्तं प्रावृट्कालमप्यभिवर्णयति - सुधीन्द्रे सुधियः[...] मुमुक्षवस्तेषु इन्द्राः ' तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते ' इत्यैतरेयश्रुतेः परमात्मान[...] स्तस्मिंस्तथा तस्मिन्नद्वैतविद्याप्रतिष्ठापके श्रीमच्छंकरभगवत्पाद इत्यर्थः । हंसेति[...]

---

१ क. °भपि परोप° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एष नः स्पृशति निष्ठुरपादै-
स्तत्तु तिष्ठतु वितीर्णमवन्यै ॥
अस्मदीयमपि पुष्पमनैषी-
दित्यरोधि नलिनीपतिरब्दैः ॥ १९ ॥
वारिवाहनिवहे क्षणलक्ष्य-
श्रीररोचत किलाचिररोचिः ॥
अन्तरङ्गगतबोधकलेव
व्यापृतस्य विदुषो विषयेषु ॥ २० ॥

' हंसः स्यान्मानसौकसि । निर्लोमनृपविष्ण्वर्कपरमात्मनि मत्सरे ' इति मेदिन्याः परमात्मानमित्यर्थः । समर्चयति. संप्रज्ञातादिसमाधिना पूजयति. सतीत्यर्थः । विषयेषु शब्दादिषु । चञ्चलेति ।

' तडित्सौदामनी विद्युच्चञ्चला चपला अपि '

इत्यमराद्विद्युद्भुत्क्षणमात्रविनश्वरत्वमिति यावत् । कथयन्निव संचचाल सम्यक्प्रादुरभूदित्यन्वयः । उत्प्रेक्षालंकारः ] ॥ ११८ ॥

मेघकर्तृकादित्यरोधनस्य हेतुमुत्प्रेक्षते—एष सूर्यो नोऽस्मान्मेघान्निष्ठुरपादैः परुषकिरणैः स्पृशति तत्स्पर्शनं तु तिष्ठतु परंतु भूम्यै वितीर्णं दत्तमस्मदीयपुष्पं मेघपुष्पमप्यम्ब्वप्यनैषीदुपनीतवानिति विचार्य कमलिनीपतिरब्दैररोधि । कमलिनीपतिरित्यनेनास्मद्भार्यादुःखदातृत्वविरोधनेन तद्भार्यायाः कमलिन्या दुःखं प्रदेयमिति ध्वनितम् । स्वागता वृत्तम् ॥ १९ ॥ [ एष सूर्यः । निष्ठुरेति । उष्णरश्मिभिः । पक्षे दुःसहचरणैः । स्पृशाति यत् । तत्तु तिष्ठतु । तत्क्षान्तमेवास्माभिरित्यर्थः । तथाऽपि । अवन्यै वसुमत्यै पत्न्यै । वितीर्णं दत्तम् ] [ अस्मदीयमपि न त्वेतदीयम् । एतादृशं पुष्पं ' मेघपुष्पं घनरसः ' इत्यमराज्जलमित्यर्थः । पक्षे विलासकुसुमम् । अनैषीच्छोषणतो. नीतवानिति हेतोः । अब्दैर्जलदैः ] [ अत्र नलिनीपतिपदेनानेनास्मत्पत्न्याः पृथ्व्या अस्मद्दत्तपुष्पहरणेन दुःखमुत्पादितं ततोऽस्माभिरप्येतदाच्छादनेनैतत्पत्न्याः पद्मिन्या अपि प्रत्येकं दुःखमुत्पाद्यत इति द्योत्यते । अप्रस्तुतप्रशंसालंकारः ॥ ११९ ॥

किंच मेघनिचये क्षणमात्रं लक्ष्या श्रीर्यस्याः साऽचिररोचिः क्षणप्रभा विद्युदरोचत यथा विषयेषु व्यापृतस्य विदुषोऽन्तःकरणगता ज्ञानकला शोभते तद्वत् ॥ २० ॥ [ विषयेष्विष्टशब्दादिषु व्यापृतस्य विदुषः पण्डितस्य । अन्तरङ्गेति । अन्तःकरणगतज्ञानकलेवेत्यर्थः । सा यथा स्वोदयकाले कचित्कचिन्निमेषमात्रमेव शोभते न तूत्तरक्षणे

१ क. व्यावृत° । २ क. °रं भू° । ३ ग. °दीयं पु° । ४ क. व्यावृत° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंनु विष्णुपदसंश्रयतोऽब्दा
ब्रह्मतामुपदिशन्ति सुहृद्भ्यः ॥
यन्निशम्य निखिलाः स्वनमेषां
बिभ्रति स्म किल निर्भरमोदान् ॥ २१ ॥

देवराजमपि मां न यजन्ति
ज्ञानगर्वभरिता यतयोऽमी ॥
इत्यमर्षवशगेन पयोद-
स्यन्दनेन धनुराविरकारि ॥ २२ ॥

आववुः कुटजकन्दलबाणा-
स्फीतरेणुकलिता वनवात्याः ॥
सत्त्वमध्यमतमोगुणमिश्रा
मायिका इव जगत्सु विलासाः ॥ २३ ॥

---

मेघवृन्दे विद्युदपि स्वोदयकाले क्षणमात्रमेव क्वचिदशोभतेति भावः । उपमालंकारः ॥

मेघा विष्णुपदसंश्रयात्सुहृद्भ्यः किं ब्रह्मतामुपदिशन्ति । नुर्वितर्के । यदस्मादेषां स्वनं नादं श्रुत्वा निखिलाः सर्वे निर्भरमोदान्बिभ्रति स्म किलेति प्रसिद्धम् ॥ [ विष्णिवति । आकाशाश्रयणात् । ' वियद्विष्णुपदम् ' इत्यमरः पक्षे ... पारमार्थिकमेवाद्वैतचिन्मात्ररूपम् । तथा चाऽऽहुः श्रीमत्सर्वज्ञात्ममुनीश्वरचरणाः ... रकारम्भ एव—

' अनृतजडविरोधिरूपमन्त-
त्रयमलबन्धनदुःखिताविरुद्धम् ।
अतिनिकटमविक्रियं मुरारेः
परमपदं प्रणयादभिष्टवीमि '

इति । उत्प्रेक्षालंकारः ] ॥ २१ ॥

ज्ञानगर्वेण भरिता अतिशयिता अमी यतयो देवराजमपि मां न यजन्तीति ... पयोदो जलद एव स्यन्दनो रथो यस्य तेन देवराजेनेदं धनुराविष्कृतम् । [ धनुर्मेघाद्यवच्छेदेन दृश्यमानं कार्मुकम् । गम्योत्प्रेक्षालंकारः ] ॥ २२ ॥

' कुटजो गिरिमल्लिका '
' कुटजः शक्रो वत्सको गिरिमल्लिका ' इत्यमरः

---

१ ख ग 'श्रयणात्सु°' । २ ख. नूविव° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घभ्रमुस्तिमिरसच्छविगात्रा-
श्चित्रकार्मुकभृतः स्वरघोषाः ॥
ध्यानयज्ञमथनाय यतीनां
विद्युदुज्ज्वलदृशो घनदैत्याः ॥ २४ ॥
उत्ससर्जुरसकृज्जलधारा
वारिदा गगनधाम पिधाय ॥
शंकरो हृदयमात्मनि कृत्वा
संजहार सकलेन्द्रियवृत्तीः ॥ २९ ॥

---

कन्दलं नवाङ्कुरः—

' कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे '

इति विश्वप्रकाशः । बाणा नीलझिण्टी । ' नीली झिण्टी द्वयोर्बाणा ' इत्यमरः । तथाच कुटजानां नवाङ्कुरैर्बाणानां विशालरेणुभिश्च कलिता व्याप्ता वनवास्या वनसंबन्धिवायुसमूहाः सत्त्वरजस्तमोगुणैर्मिश्रिता जगत्सु मायिका विलासाः परिणामा इवाऽऽववुः प्रचलिताः ॥ २३ ॥ [ मध्यम रजः । तदत्र वायसमुदाये विमलत्वात्सत्त्वस्य कुटजादिरेण्वोस्तु रक्तासितवर्णत्वाद्रजस्तमसोश्च सादृश्यं बोध्यम् । उपमालंकारः ] ॥ २३ ॥

तिमिरेण तमसा समाना छविः कान्तिर्यस्य तथाभूतं गात्रं शरीरं येषां ते चित्रानिन्द्रचापलक्षणान्कार्मुकान्धनूंषि बिभ्रतीति तथा खरो निष्ठुरो गर्जनलक्षणो घोषो येषां ते विद्युल्लक्षणान्युज्ज्वलानि दृशो नेत्राणि येषां ते मेघलक्षणा दैत्या यतीनां ध्यानलक्षणस्य यज्ञस्य मथनाय बभ्रुः ॥ २४ ॥ [ विद्युल्लक्षणभास्वरनेत्राः । पक्षे तद्वद्भास्वरनेत्रा इत्यर्थः । रूपकादिरलंकारः ॥ १२४ ॥

एवंभूता वारिदा आकाशधामाऽऽवृत्य जलधारा मुहुरुत्ससर्जुः सम्यक्चक्रुः । तस्मिन्काले श्रीशंकरः किं कृतवानित्यपेक्षायामाह—श्रीशंकरोऽन्तःकरणमात्मनि कृत्वा समस्तेन्द्रियवृत्तीः सम्यगुपसंहृतवान् ॥ २९ ॥ [ गगनेति । आकाशगतं सूर्यादितेजः पिधाय संछाद्य जलधाराः । असकृद्भूयः । उत्ससर्जुरुत्कटं रचयामासुः सम्यक्चक्रुरित्यर्थः । शंकर इत्यादि स्पष्टार्थम् ।

' वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ '

इत्यादिवद्विपरीततुल्ययोगितालंकार इति प्रतिभाति ] ॥ २९ ॥

---

१ क. °धारां वा° । २ क. ग. घ. °करोऽन्तः° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शनैः सांत्वालापैः सनयमुपनीतोपनिषदा
चिरायत्तं त्यक्त्वा सहजमभिमानं दृढतरम्।
समेत्य प्रेयांसं सपदि परहंसं पुनरसा-
वधीरा संस्प्रष्टुं क्व नु सपदि तद्धीर्लयमगात् ॥ २६ ॥

---

एवं निरुद्धान्तःकरणादेस्तस्य बुद्धिर्लयमवापेत्याह—नयेऽर्थासमूत्रैः सहितं यथा [...]थोपनिषदां शनैः सांत्वालापैरत्यर्थमधुराभाषणैरुपनीता समीपं प्रापिता चिरकाल[...] स्वीकृतं सहजमनादिसिद्धं दृढतरमभिमानं त्यक्त्वा तत्क्षणमेव तं श्रुत्यादिप्रसिद्धं [...] स्पदं परहंसं परमात्मानं प्राप्य पुनरसौ तस्य बुद्धिः संस्प्रष्टुमधीरा क्वचिदपि [...] लयमगात्। यथा काचिन्मानिनी समीपस्थानां सखीनां युक्तिसहितं यथा भवेत्[...] लापैरनुनयवाक्यैः कान्तसमीपं नीता चिरायाऽऽत्तं स्वाभाविकं दृढतरमभिमानं विहा[य] समुत्कृष्टं तं प्रेयांसं कान्तं प्राप्य पुनरसौ संस्प्रष्टुमधीरा कस्मिंश्चिदङ्गे सपदि [...] तथेत्यर्थः। अत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसामान्यबलादप्रस्तुतवृत्तान्तस्य [...]स्फुरणात्समासोक्तिरलंकारः।

'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्'

इत्युक्तेः। शिखरिणी वृत्तम् ॥ २६ ॥ [ एवमुक्तं वर्षाकालव्यापि[...] रादिव्यापारानौचित्यायातं श्रीमच्छंकराचार्यस्थासंप्रज्ञातसमाधिं संवर्णयति—[...] सृभिः शिखरिणीभिः। सनयं नयशब्दितन्यासमूत्रोक्तयुक्तिसहितं यथा स्यात्[...] एतेनोपनिषद्वाक्येष्वसंभावनादिसंभावितमकलङ्को गावभोषः सूचितः। त्यक्त्वा वि[...] त्वाभ्यामनादृत्येत्यर्थः। तमुपनिषदुपदिष्टम्। एतादृशम्। प्रेयांसम्। 'तदेतत्प्रे[...] स्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा' इति श्रुतेः प्रत्यगेक[...] पचारितप्रेमास्पदमिति यावत्। [ पुनस्तदुत्तरम्। असावुक्तबुद्धिः संस्प्रष्टुं [...] पादनेऽपि फलव्याप्यभावाभिप्रायक एव समित्युपसर्गः। अधीराऽसमर्था सती [...] कनु क्वचिदपि सत्त्वाकारपरिणतेति निर्वचनीयेऽन्तःकरणाख्यस्वोपादान इत्यर्थः। [...] लीनाऽभूदित्यन्वयः। अत्र तद्धीपदे सप्तमीतत्पुरुषोर्हौ श्लेषः। तत्पक्षे यथा। [...] माणे स्वप्रेयस्येव धीर्बुद्धिर्यस्याः सा तथा सीतादिमहापतिव्रतेत्यर्थः। सनयं [...] यथा स्यात्तथा। एतेनोपदेशेऽनादरणीयत्वं सखीषु च तच्चातुर्यविधुरत्वं व्युदस्त[...] उप समीपे निषीदन्त्यखण्डमुपविशन्तीति तथा तासां स्वरहःसहचरीणामित्यर्थः। [...] मन्दम्। सान्त्वालापैरत्यर्थमधुरभूरिभाषणैरिति यावत्। [ चिरेति। दीर्घकाल[...] तमपि। एतादृशं सहजं यौवनारम्भेण सहैव रूपादिगर्वत्वेनाऽऽविर्भूतमित्यर्थः [...] ह्रासमेव एव। दृढतरं विनोक्तोपदेशं प्रशमनानर्हः। एतादृशमभिमानं [...]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न सूर्यो नैवेन्दुः स्फुरति न च तारातातिरियं
कुतो विद्युल्लेखा कियदिह कृशानोर्विलसितम् ॥
न विघ्नो रोदस्यौ न च समयमस्मिन्नजलदे
चिदाकाशे सान्द्रस्वमुखरसवर्षण्यविरतम् ॥ २७ ॥

---

स्वोत्कर्षप्रयुक्तकान्तन्यूनत्वसंपादनमिति यावत् । तदुक्तं मदीये साहित्यसारे—

'रूपादिना निजोत्कर्षाद्गर्वोऽन्यस्यावहेलनम् ।
यत्सौन्दर्यानुसंधानान्न ते गोवर्धन व्यथा'

इति । 'गर्वोऽभिमानोऽहंकारः' इत्यमरः । त्यक्त्वा तं पूर्वपरिचितम् । अत एव । प्रेयांसम् । स्वानन्दप्रीतिविषयीभूतमित्यर्थः । एतादृशम् । परेति । परः सर्वोत्कृष्टश्चासौ हंसः पूर्वोक्तमेदिन्याः श्रीरामादिलक्षणो नृपश्चेति तथा तं निरुक्तरूपं स्वकान्तमिति यावत् । एत्य प्राप्य पुनस्तदूर्ध्वमसौ निरुक्तसीतादिमानवती । संस्प्रष्टुं लज्जातिशयात्स्वयमेव गाढमालिङ्गितुमित्यर्थः । अधीरा सती सपदि तत्कालम् । स्वयमगादन्तःपुरकोणादौ लीलया निलीनाऽऽसीदिति संबन्धः । एतेन नायिकायां चातुर्यातिशयो व्यज्यते । तद्गीपदे निरुक्तसमासानाश्रयणे तु डिण्डिमाद्गना समासोक्तिरलंकृतिः । तदुक्तम्—

'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः'

इति ] ॥ १२६ ॥

यत्र सूर्यादीनामपि स्फुरणं न संभवति तत्र बुद्धिस्फुरणस्य का प्रत्याशेत्याशयेनाऽऽह—नेति । कृशानुरग्नी रोदस्यौ द्यावाभूम्यौ । अविरतं सततं घनीभूतस्वसुखरसविग्रहे चिदाकाशे सूर्यादयो न स्फुरन्तीत्यर्थः । तथाच श्रुतिः—

'न यत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः'

इत्याद्या ॥ २७ ॥ [ अस्मिन् 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेरात्मस्वस्वप्रकाशत्वात्स्वयं नित्यापरोक्ष इति यावत् । एतादृशेऽजलदे डलयोः सावर्ण्याज्जडं दृश्यं ददात्येतादृशं यन्मूलाज्ञानं तद्धीन इत्यर्थः । ईदृगे चिदाकाशे । केवलं सूर्याद्येव न स्फुरतीति न किंतु वयं द्यावापृथिव्यौ तथा समयशब्दितं कालमपि निमेषादिलक्षणं न विद्म इति योजना । काव्यार्थापत्तिरलंकारः ।

'कैमुत्येनार्थसंपत्तिः काव्यार्थापत्तिरिष्यते ।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्'

इति वचनात् ] ॥ २७ ॥

---

१ घ. 'वा पृथिव्यौ । अ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमादेयं हेयं किमिति सहजानन्दजलधा-
वतिस्वच्छे तुच्छीकृतसकलमाये परशिवे ॥
तदेतस्मिन्नेव स्वमहिमनि विस्मापनपदे
स्वतः सत्ये नित्ये रहसि परमे सोऽकृत कृती ॥ २८ ॥

प्राप विष्णुपदभागपि मेघः
प्रावृडागमनतो मलिनत्वम् ॥
विद्युदुज्ज्वलरुचाऽनुसृतश्च
कोऽध्यवन्यपि भजेन्न विरागम् ॥ १२९ ॥

---

किंच सहजानन्दसमुद्रेऽतिस्वच्छेऽत एव तुच्छीकृता सकला सकार्या माया ए नश्च स्वमहिमनि विस्मापनपदे स्वतः सत्ये नतु कार्यापेक्षया मृदादिवत्सत्ये परमे ह न्तगुह्ये तदेतस्मिन्नेव प्रत्यगभिन्ने परशिवे स कृती श्रीशंकरः किमादेयं हेयं च नित्यमकृत्नैवमनुसंधानं सदैव कृतवान् ॥ २८ ॥ [ किमादेयमिति । स श्रीशं कृती । सहजेति । अत एव । अतीति । अत एव । तुच्छीकृतेति । अ परेति । अत एव । स्वेति । स्वप्रभे । अत एव । विस्मापनेति । आ अत एव । स्वत इति । अत एव । नित्ये । एतादृशे । एतस्मिन्नात्मत्वादपरो रहसि द्वैतशून्यत्वान्निरुपमनिर्जने स्थाने । इहेदानीं किं तद्धेयं किंवाऽऽदेयमि व्युत्थानेऽनुसंदध इत्यन्वयः ] ॥ २८ ॥

पुनर्वर्षर्तुं वर्णयति—विष्णुपदभागपि विद्युदुज्ज्वलकान्त्याऽनुसृतश्च मेघः प्रावृ मलिनत्वं प्रापातोऽध्यवन्यपि भूमावपि विरागं को न भजेदपि तु सर्वोऽपि वैराग्य स्वागता वृत्तम् ॥ २९ ॥ [ मेघो विष्णुपदभागपि 'वियद्विष्णुपदम्' इत्यम भागपि । पक्षे विष्णुचरणभजनशीलोऽपीत्यर्थः । प्रावृडिति । पक्षे प्रकर्षेणाऽऽस मसुखं वर्षतीति तथा यावत्स्त्रीगुणविशिष्टरमणीकर्तृकस्वसमीपागमनेनेत्यर्थः । मलि नीलरूपोऽभूदित्यन्वयः । पक्ष उर्वश्यादिसमागमेन पुरूरवःप्रभृतिवद्विवेकवैधुर्य तदेवं समासोक्तिसिद्धमर्थमर्थान्तरन्यासेनापि समर्थयति—विद्युदित्याद्युत्तरार्धेन । रुज्ज्वला रुक्कान्तिर्यस्याः सा तथा तया प्रावृषेति यावत् । पक्षे विद्युद्वदुज्ज्वला दी न्तिर्यस्यास्तयोत्करमण्येत्यर्थः । अभिसृतश्चेत् ।

'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका'

इत्यमरादभिसारिकीभूयोपगतश्चेदित्यर्थः । एतादृशः कः पुरुषः । न्विति * अवन्यपि वनमवलम्ब्यत्वेनास्यास्तीति वनी वानप्रस्थस्तथा न भवतीत्यवनी

---

* एतेनेतन्मते कोऽध्यवन्यपीत्यत्र को न्ववन्यपीति पाठः ।

१ ख. ग. घ. °चाभिसृ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आशये कलुषिते सलिलानां
मानसोत्कहृदयाः कलहंसाः ॥
कोऽन्यथा भवति जीवनलिप्सु-
र्नाऽऽश्रये भजति मानसचिन्ताम् ॥ १३० ॥
अभ्रवर्त्मनि परिभ्रममिच्छ-
ञ्शुभ्रदीधितिरदभ्रपयोदे ॥
न प्रकाशनमवाप कलावा-
न्कश्चकास्ति मलिनाम्बरवासी ॥ १३१ ॥

---

सन्निति यावत् । अपिना तस्य कामप्रक्षुब्धेन्द्रियतृप्तिकारणीभूतधर्मपत्नीसत्त्वेऽपि यदोक्तसुन्दरीकृताभिसारेण तत्पारतन्त्र्यावश्यंभावस्तदा तदितरेषां त्वसौ कैमुत्यसिद्ध एवेति सूच्यते। विरागं विशिष्टं रागं विरिव—

'नगौको वाजिविकिरविविष्किरपतत्रयः'

इत्यमरात्कपोताख्यपक्षीव रागस्तम् । कपोतो ह्यतिकामुक इति—

'सिंहो बली द्विरदमस्तकमांसभोजी
संवत्सरेण कुरुते रतिमेकवारम् ।
पारावतः खलु शिलाकणमात्रभोजी
कामे रतः प्रतिदिनं वद कोऽत्र हेतुः'

इति काव्यादौ प्रसिद्धमेव । न भजेदपि सर्वोऽपि पुरुषः प्रायेणोक्तसामग्र्या विलक्षणानुरागं भजेदेवेति योजना । तस्माच्चातुर्मास्यमेकत्रवासिभिः संन्यासिभिः सावधानैरेव भाव्यमिति भावः । अभिसृतश्च कोऽप्ययवन्यपीति डिण्डिमकारोक्तः पा:स्त्वध्यवन्यपि भूमावपीति व्याख्यातोऽप्यर्थपरिपोषाभावादुपेक्षित एव सकलदेशकालावच्छिन्नपुंमात्रसंग्राहकेण किंशब्देनैव तदर्थसिद्धेरिति दिक् ] ॥ १२९ ॥

सलिलानां जलानामाशये कलुषिते सति मानससरोवरं प्रत्युत्कमुत्कण्ठितं हृदयं येषां तथाभूताः कलहंसा अभवन् । आश्रयेऽन्यथा भवति सति को जीवनलिप्सुर्मानसचिन्तां न भजति किंतु सर्वोऽपि भजत्येव ॥ १३० ॥ [ कलेति । अव्यक्तमधुरध्वनिविशिष्टहंसाः । 'कादम्बः कलहंसः स्यात्' इत्यमरात्कादंबाख्यहंसविशेषा इत्यर्थः ] [ को जीवनलिप्सुरुपजीवनेच्छुः पक्षे जलेच्छुः । 'जीवनं भुवनं वनम्' इत्यमरः । मानसेति । मानसेऽन्तःकरणे चिन्ता ताम् । पक्षे मानसं प्रति गमनचिन्ता तामिति शाकपार्थिवादिवद्विग्रहः ] ॥ १३० ॥

अनल्पा जलदा यस्मिंस्तथाभूते व्योममार्गे परिभ्रममिच्छञ्शुभ्रांशुश्चन्द्रः कलावान्षोडशकलापूर्णो यतो मलिनाकाशवासी तस्मात्प्रकाशनं न प्राप्तवान् । शुभ्रकान्तिः सकल...



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चातकावलिरनल्पपिपासा
प्राप तृप्तिमुदकस्य चिराय ॥
प्राप्नुयादमृतमप्यभिवाञ्छ-
न्कालतो बत घनाश्रयकारी ॥ १३२ ॥

इत्युदीर्णजलवाहविनीले
स्फीतवातपरिधूततमाले ॥
प्राणभृत्प्रचरणप्रतिकूले
नीडनीलघनशालिनि काले ॥ १३३ ॥

अग्रहा शतसंभृतशोभे
सुग्रहाक्षतुरगः स महात्मा ॥
अध्युवास तटमिन्दुभवायाः
सुध्युपास्यचरणं गुरुमर्चन् ॥ १३४ ॥

---

संपन्नोऽपि मलिनवसनश्चेत्कः प्रकाशो न कोऽपीत्यर्थः ॥ १३१ ॥ [ मलिन
अधीतत्वश्चेषु शूद्रादिषु मध्ये वसतीति तथा । पक्षे मलिनं मेघैरावृतत्वान्निर्मल
माकाशं चेति तथा तत्र वसतीति तादृगेतादृशः ] ॥ १३१ ॥

अनल्पा पिपासा जलपानेच्छा यस्याः सा चातकानां पङ्क्तिश्चिरं जलस्य तृप्ति
दृढमाश्रयं करोतीति तथाऽमृतमप्यभिवाञ्छन्कालतःप्राप्नुयाद्बत प्रसिद्धम् ॥
[ घनेति । दृढाश्रयकर्ता । पक्षे मेघावलम्बकृत् । अमृतमपि पीयूषमपि यद्वा
पक्षे 'पयः कीलालममृतम्' इत्यमराज्जलमपीत्यर्थः । कालतः कालेन प्राप्नु
अमृतमपीत्यार्थिकम् । तस्माद्दृढाश्रय एव कार्य इति तात्पर्यम् ] ॥ १३२ ॥

इत्येवंप्रकारेणोच्चैः पयोदैर्विशेषेण नीले स्फीतेन विशालेन वायुना परिकम्पि
वृक्षविशेषा यस्मिन्प्राणिनां विचरणे प्रतिकूले निबिडनीलघनैर्युक्ते वर्षाकालेऽग्रहा
णग्रामाणां शतेन संभृता शोभा यस्मिंस्तथाभूते वर्षाकाले सुधीभिरुपास्यौ
तथाभूतं गुरुं सम्यक्पूजयन्सुखेन ग्रहो विषयलक्षणमार्गेभ्यः स्तम्भनं येषां
सुलक्षणा अश्वा यस्य स निगृहीतसर्वकरणो महात्माऽक्षुद्रस्वभाव इन्दु
नद्यास्तटमध्युवास निवासं कृतवानितिद्वयोरर्थः ॥ ३३ ॥ ३४ ॥ [
हलयोः सावर्ण्यान्नीलादिन्द्रनीलमणेरपि ये नीलाः श्यामा अतितरा
घना मेघास्तैः शालते राजत इति तथेत्यर्थः ] [ इन्दुभवायाः
रेवायास्तटं प्रति । सुग्रहेति । सुखेनानायासेन ग्रहो निरोधो येषां तादृश
न्द्रियाण्येव तुरगा अश्वा यस्य स तथा । 'इन्द्रियाणि हयानाहुः' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रस्तमर्त्यगणमस्तमिताशं
हस्तिहस्तपृथुलोदकधाराः ॥
मुञ्चति स्म समुदञ्चितविद्यु-
त्पञ्जरात्रमहिशत्रुरजस्रम् ॥ ३५ ॥
तीरभूरुहततीरपकर्ष-
न्नग्रहारनिकरैः सह पूरः ॥
आययावधिकघोषमनल्पः
कल्पवार्धिलहरीव तटिन्याः ॥ ३६ ॥
घोषवारिझरभीरुनराणां
घोषमेष कलुषं स निशम्य ॥
देशिकं ध्रुवसमाधिविधानं
वीक्ष्य च क्षणमभूदविवक्षुः ॥ ३७ ॥

---

यहृगः । महात्मा महानद्वैतब्रह्माकारतयाऽपरिच्छिन्न इवाऽऽत्माऽन्तःकरणं यस्य स तथा ब्रह्मवित्तम इति यावत् ] ॥ ३३ ॥ ३४ ॥

त्रस्तमर्त्यगणमस्तमिताशं च यथा स्यात्तथाऽहिशत्रुर्वृत्रारिरिन्द्रः समुदञ्चिता समुल्लसन्ती विद्युद्यस्मिंस्तत्पञ्जरात्रमजस्रं हस्तिशुण्डावत्पृथुला विशाला जलधारा मुञ्चतिस्म ॥ ३५ ॥ [ अहीति । 'प्राचीनबर्हिरहिहा पूतनापाट्पुलोमजित्' इत्यभिधानादिन्द्र इति यावत् ] ॥ ३५ ॥

अथानन्तरं तीरभूरुहाणां ततीरग्रहारसमूहैः सह तत्सहितास्तीरस्थवृक्षपङ्क्तीराकर्षंस्तटिन्या नद्या अनल्पः पूरो जलप्रवाहः प्रलयसमुद्रप्रवाहवदधिकं नादमाययौ प्राप ॥३६॥

स एष श्रीशंकरो घोषसहितजलझरेभ्यो भीरूणां नराणां कलुषं घोषं श्रुत्वोपदेष्टारं श्रीगोविन्दनाथं ध्रुवं निश्चलं समाधेर्विधानं यस्य ध्रुवस्य समाधेरिति वा । तथाभूतं वीक्ष्य च क्षणमात्रं कथनेच्छारहितस्तूष्णीमभूत् ॥ ३७ ॥ [ घोषेति । 'घोष आभीरपल्ली स्यात्' इत्यमराद्घोषास्तीरवर्त्याभीरपल्ल्यस्तथा वारिझरोऽवासरेवापूरस्तथा भीरवो 'विशेषास्त्वङ्गना भीरुः' इत्यमरात्कामिन्यस्तथा नराश्च तेषाम् । घोषं शब्दम् । कलुषं करुणाव्याकुलहृदयं यथा स्यात्तथा निशम्य श्रुत्वा ] ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सोऽभिमन्त्र्य करकं त्वरमाण-
स्तत्प्रवाहपुरतः प्रणिधाय ॥
कृत्स्नमत्र समवेशयदम्भः
कुम्भसंभव इव स्वकरेऽब्धिम् ॥ ३८ ॥
तं निशम्य निखिलैरपि लोकै-
रुत्थितोऽस्य गुरुरुक्तमुदन्तम् ॥
योगसिद्धिमचिरादयमापे-
त्यभ्यपद्यततरां परितोषम् ॥ ३९ ॥
छात्रमुख्यममुमाह कियद्भि-
र्वासरैर्गतघने गगने सः ॥
पश्य सौम्य शरदा विमलं खं
विद्ययेव विशदं परतत्त्वम् ॥ १४० ॥

---

पश्चात्स श्रीशंकरस्त्वरमाणः करकं कुम्भमभिमन्त्र्य स चासौ प्रवाहश्च तत्पुर इति वा तस्याग्रे प्रस्थाप्यात्र करके सर्वं जलं प्रावेशयत् । अगस्त्यो यथा समुद्रं आवेशयत्तथेत्यर्थः ॥ ३८ ॥ [ सोऽभिमन्त्र्येति । स श्रीशंकरभगवत्पादः मन्त्र्य पूर्वोक्तक्षणमात्रतूष्णींभावेन विचार्य श्रीमद्गोविन्दभगवत्पूज्यपादास्त्वगुरोः निष्ठत्वेन तं प्रत्युक्तोपप्लवप्रशमनप्रार्थनानवसरात्तत्सांनिध्ये नैजैश्वर्यप्रकाशने ... स्वयमेव तत्कार्यं न वेति संशये बह्वनुग्रहस्य न्याय्यत्वात्स्वयमपि निरुक्तोपद्रवप्रशमनमेवेति निर्णीयेति यावत् । त्वरमाणः सन् ] [ एतेनोक्तकारुण्याद्भ्रमसः सूचितः ... ऌंकारः ] ॥ १३८ ॥

तमुदन्तं वृत्तान्तं निखिलैरपि लोकैरुक्तं समाधितो व्युत्थितोऽस्य श्रीशंकरस्य ... श्रुत्वाऽचिराच्छीघ्रमेवायं योगसिद्धिमवापेति परितोषमभ्यपद्यततरामतिशयेन प्रीतिमानित्यर्थः ॥ ३९ ॥

कियद्भिर्दिवसैर्गतघने गगने सति शिष्याग्र्यममुं श्रीशंकरं स गुरुः ... तदाह—हे सौम्य[1] प्रियदर्शन शरत्कालेन विमलं गगनं पश्य तत्र ... ब्रह्मविद्यया विशदमनवच्छिन्नं ब्रह्मतामैक्यलक्षणं तत्त्वं तद्वत् ॥ १४० ॥ [ ... कारः ] ॥ १४० ॥ ]

---

१ ग. सोम्य । २ ग. सोम्य ।

वारिदा यतिवराश्च सुपाथो-
धारया सदुपदेशगिरा च ॥
ओपधीरनुचरांश्च कृतार्थी-
कृत्य संप्रति हि यान्ति यथेच्छम् ॥ ४१ ॥
शीतदीधितिरसौ जलमुग्भि-
र्मुक्तपद्धतिरतिस्फुटकान्तिः ॥
भाति तत्त्वविदुषामिव बोधो
मायिकावरणनिर्गमशुभ्रः ॥ ४२ ॥
वारिवाहनिवहे प्रतियाते
भान्ति भानि शुचिभानि शुभानि ॥
मत्सरादिविगमे सति मैत्री-
पूर्वका इव गुणाः परिशुद्धाः ॥ ४३ ॥
मत्स्यकच्छपमयी धृतचक्रा
गर्भवर्तिभुवना नलिनाढ्या ॥
श्रीयुताऽद्य तटिनी परहंसैः
सेव्यते मधुरिपोरिव मूर्तिः ॥ ४४ ॥

---

जलदाः सुजलस्य धारयौषधीः कृतार्थीकृत्य यतिवराश्च सदुपदेशवाचा पुनरनुचरांश्च कृतार्थीकृत्य संप्रति यथेच्छं गच्छन्ति ॥ ४१ ॥ [ सुपाथ इति । 'कबन्धमुदकं पाथः' इत्यमराद्विपुलजलधारयेत्यर्थः । ओपधीरिति । 'ओषध्यः फलपाकान्ताः' इत्यमराद्व्रीह्यादीनित्यर्थः । तुल्ययोगितालंकारः ] ॥ ४१ ॥

असौ शीतदीधितिश्चन्द्रो जलमुग्भिर्मेघैस्त्यक्त आकाशमार्गो यस्य सोऽतिस्फुटकान्तिर्भाति मायिकस्याऽऽवरणस्य निर्गमेन शुभ्रः शुद्धस्तत्त्वविदां बोधो यथा प्रकाशते तद्वत् ॥ ४२ ॥ [ मुक्तेति । अत एव । स्फुटेति । शुभ्रः शुद्धः ] [ उपमालंकारः ] ॥ ४२ ॥

वारिवाहानां मेघानां निवहे समूहे प्रतियाते सति शुचिभानि शुद्धप्रभाणि शुभानि भानि नक्षत्राणि भान्ति । यथा रागद्वेषादिविगमे सति मैत्रीपूर्वका गुणाः करुणामुदितादयः परिशुद्धाः प्रकाशन्ते तद्वत् ॥ ४३ ॥ [ उपमालंकारः ] ॥ ४३ ॥

मत्स्यकच्छपमयी पुनश्च धृतं चक्रं सुदर्शनाख्यं यया गर्भवर्तीनि चतुर्दश भुवनानि यस्या नलिनैः कमलैराढ्या लक्ष्म्या संयुता मधुरिपोर्विष्णोर्मूर्तिर्यथा परहंसैः परमहंसपरिव्राजकैर्यतिभिः सेव्यते तद्वत् । अद्य मत्स्यादिप्रचुरा धृतानि चक्राणि पुटभेदा यया गर्भवर्तीनि

---

१ ख. ग. °गुर्मी म° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नीरदाः सुचिरसंभृतमेते
जीवनं द्विजगणाय वितीर्य ॥
त्यक्तविद्युदबलाः परिशुद्धाः
प्रव्रजन्ति घनवीथिगृहेभ्यः ॥ ४५ ॥
चन्द्रिकाभसितचर्चितगात्र-
श्चन्द्रमण्डलकमण्डलुशोभी ॥
बन्धुजीवकुसुमोत्करशाटी-
संवृतो यतिरिवायमनेहाः ॥ ४६ ॥
हंससंगतिलसद्विरजस्कं
क्षोभवर्जितमपह्नुतपङ्कम् ॥
वारि सारसमतीव गभीरं
तावकं मन इव प्रतिभाति ॥ ४७ ॥

---

भुवनानि जलानि यस्याः कमलैरादया शोभायुक्ता तां नीयं नदी परहंसैः ... परमहंसैरिति वा ॥ ४४ ॥ [ धृतानि । 'चक्राणि पुटभेदाः स्युः' इत्यम... पुटाकारवर्तुलजलच्छिद्रेत्यर्थः ] [ उपमादिरलंकारः ] ॥ ४४ ॥

एते जलदाः सुचिरसंभृतं जीवनं जलं द्विजानां ब्राह्मणादीनां पक्षिणां च गण... दत्त्वा त्यक्ता विद्युल्लक्षणाऽबलाऽङ्गना यैः परिशुद्धा आ समन्ताच्छुभ्रा भवन्तः ... गृहेभ्यः प्रव्रजन्ति प्रयान्ति । पक्षे नीरदा निर्गतदन्ता जरां गताः एते चिरसंचितं जीवनं धनधान्यादि ब्राह्मणगणाय दत्त्वा त्यक्ता विद्युदिवातिचञ्चलाऽ... परिशुद्धान्तःकरणा घनीभूता वीथयो येषु तेभ्यो गृहेभ्यः प्रव्रजन्ति संन्यस्य... त्यर्थः ॥ ४१ ॥ [ रूपकादिरलंकारः ] ॥ ४९ ॥

भस्मलिप्तगात्रः कमण्डलुशोभी कषायवस्त्रसंवृतो यथा यतिस्तद्वदयमनेहाः ... न्द्रज्योत्स्नालक्षणेन भस्मना चर्चितं लिप्तं गात्रं शरीरं यस्य चन्द्रमण्डललक्षणेन ... शोभाऽस्यास्तीति तथा बन्धूकपुष्पसमूहलक्षणया शाट्या संवृतः प्रतिभातीत्यर्थः । [ चन्द्रिकेति । चन्द्रिकैव भसितं 'भूतिर्भसितभस्मनी' इत्यमराद्भस्म... भसितं तेन चर्चितं लिप्तं गात्रं शरीरं यस्य स तथेत्यर्थः ] [ रूपकादिरलंकारः ]

वारि सारसं सरःसंबन्धि जलं तावकं त्वदीयं मन इव प्रतिभाति हंस... ङ्गेन विलसच्च तद्विगतपांसुकं च पक्षे परमहंसानां सङ्गेन विलसच्च तद्विषय...

---

१ क. ख. घ. 'भूव हृत्य°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शारदाम्बुधरजालपरीतं
भ्राजते गगनमुज्ज्वलभानु ॥
लिप्तचन्दनरजः समुदञ्च-
त्कौस्तुभं मुररिपोरिव वक्षः ॥ ४८ ॥
पङ्कजानि समुदूढहरीणि
प्रोद्गतानि विकचानि कनन्ति ॥
सौम्य योगकलयेव विफुल्ला-
न्युन्मुखानि हृदयानि मुनीनाम् ॥ ४९ ॥
रेणुभस्मकलितैर्दलशाटी-
संवृतैः कुसुमलिड्जपमालैः ॥
वृन्तकुड्मलकमण्डलुयुक्ते-
र्धार्यते क्षितिरुहैर्यतितौल्यम् ॥ १५० ॥

---

निरस्तकर्दमं पक्षे निरस्तपापमलं शुद्धमिति यावत् । अन्यत्समानम् ॥ ४७ ॥ [ सारसं सरःसंबन्धि वारि जलम् । धत । हंसानां राजहंसानां रङ्गेन विलसति शोभत इति तथा । पक्षे हंसस्य परमहंसस्य । मम रङ्गेनेत्यादि प्राग्वत् । उपमादिरलंकारः ] ॥ ४७ ॥

शरत्कालीनानां जलधराणां जालैः लिप्तं मेघावरणविनिर्मुक्तत्वादुज्ज्वलो भानुर्यस्मिंस्तथाभूतं व्योम शोभते । तत्र दृष्टान्तः—लिप्तानि चन्दनरजांसि यस्मिन्समुदञ्चन्संस्फुरन्कौस्तुभाख्यो मणिर्यस्मिंस्तथाविधं मुररिपोः श्रीविष्णोर्वक्ष इवेत्यर्थः ॥ ४८ ॥ [ उक्ताम्बुधरजालस्य चन्दनरजःसाम्यं शौक्ल्यादेव । एवमुज्ज्वलभानोः कौस्तुभेन च साम्यं तु भास्वरत्वादेव । स्फुटमेवान्यत् । उपमादिरलंकारः ] ॥ ४८ ॥

हे सौम्य योगकलयोर्ध्वमुखानि प्रफुल्लानि सम्यगूढ आरूढो हरिर्विष्णुर्येषु तानि प्रकर्षेणोद्गतान्यूर्ध्वतां प्राप्तानि मुनीनां हृदयानि यथा कनन्ति प्रकाशन्ते तथा प्रोद्गतानि प्रकर्षाणि विकासं प्राप्तानि सम्यगूढा हरयः सूर्यांशवो येषु तानि पङ्कजानि कनन्तीत्यर्थः ॥ ४९ ॥ [ उपमादिरलंकारः ] ॥ १४९ ॥

रेणुलक्षणेन भस्मना शोभितैः पत्रलक्षणया शाट्या संवृतैः कुसुमलिहो भ्रमरास्तल्लक्षणा जपमाला येषां वृन्ते प्रसवबन्धे कुड्मलानि कलिकास्तल्लक्षणकमण्डलुयुक्तैः क्षितिरुहैर्वृक्षैर्यतिसाम्यं धार्यते ॥ १५० ॥ [ रेणिवति । रेणुरेव भस्म तेन कलिता व्याप्तास्तैरित्यर्थः । पक्षे रेणुरिव भस्मेत्यादि सर्वत्र रूपकादिरलंकारः ] ॥ ५० ॥

---

१ ग. घ. सोम्य । २ क. ख. घ. °धैः ॥ ४८ ॥ यो° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धारणादिभिरपि श्रवणाद्यै-
र्वार्षिकाणि दिवसान्यपनीय ॥
पादपङ्करजसाऽद्य पुनन्तः
संचरन्ति हि जगन्ति महान्तः ॥ ५१ ॥
तद्भवान्व्रजतु वेदकदम्बा-
दुद्भवां भवदवाम्बुदमालाम् ॥
तत्त्वपद्धतिमभिज्ञ विवेक्तुं
सत्वरं हरपुरीमविविक्ताम् ॥ ५२ ॥
अत्र कृष्णमुनिना कथितं मे
पुत्र तच्छृणु पुरा तुहिनाद्रौ ॥
वृत्रशत्रुमुखदेवतजुष्टं
सत्रमात्रिमुनिकर्तृकमास ॥ ५३ ॥

---

धारणाध्यानसमाधिभिः श्रवणमनननिदिध्यासनैश्च वार्षिकाणि दिवसान्यपनी पङ्करजसा जगन्ति पुनन्तो महान्तः संचरन्ति ॥ ५१ ॥ [ एवं दशश्लोक संक्षिप्य विवक्षितं वक्तुमुपक्रममाणः पूर्वरङ्गमाह—धारणादिभिरपीति। ध्यानादिः। वार्षिकाणि वर्षाकाले भवानि।

' घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ' इत्यमरः ] ॥ १५१ ॥

यस्मादेवं तत्तस्माद्भवान्वेदसमूहादुद्भूतां जन्ममरणलक्षणसंसारात्मकस्य दवस्य मालां तत्त्वपद्धतिमविविक्तां विवेक्तुमियं तत्त्वपद्धतिरियं नेति विवेचनं कर्तुं शीघ्रं काशीं गच्छतु ॥ ५२ ॥ [ तद्भवानिति। भो अभिज्ञ शंकर। यस्मा संप्रदायस्तत्तस्मात् ] ॥ ५२ ॥

अथ शारीरकसूत्रभाष्यकरणाय प्रेरयिष्यन्वृत्तं वृत्तान्तमावेदयति—अत्रावि वेचने कृष्णमुनिना वेदव्यासेन यन्मे कथितं हे पुत्र तच्छृणु। पूर्वं हिमाद्रौ रिन्द्रप्रभृतिभिर्देवैर्जुष्टमत्रिमुनिकर्तृकं सत्रमास बभूव ॥ १५३ ॥ [ हे पुत्र नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि ' इति श्रुतेः शिष्यस्यैव प्रायेण मुख्यपुत्रत्वाद्युक्तमेवेदम् ] [ कथं कथितमित्यत्राऽऽह—पुरेत्यादिविशेषे सत्रेऽनेककर्तृकत्वमेव—

' नैमिषे निमिषक्षेत्रे ऋषयः शौनकादयः।
सत्रं स्वर्गाय लोकाय सहस्रसममासत '

इति पुराणे प्रसिद्धमथापि नक्षत्रसत्रादावेककर्तृकत्वस्यापि शास्त्रादावुपलम्भे प्रायाद्वा युक्तमेवेदमित्यभिप्रायः ] ॥ ५३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसदि श्रुतिशिरोर्थमुदारं
शंसति स्म स पराशरसूनुः ।
इत्यपृच्छमहमत्रभवन्तं
सत्यवाचमभियुक्ततमं तम् ॥ ५४ ॥

आर्य वेदनिकरः प्रविभक्तो
भारतं कृतमकारि पुराणम् ॥
योगशास्त्रमपि सम्यगभापि
ब्रह्मसूत्रमपि सूत्रितमासीत् ॥ ५५ ॥

अत्र केचिदिह विप्रतिपन्नाः
कल्पयन्ति हि यथायथमर्थान् ॥
अन्यथाग्रहणनिग्रहदक्षं
भाष्यमस्य भगवन्करणीयम् ॥ ५६ ॥

---

तत्र सभायां स पराशरसूनुः श्रुतिशिरसामर्थमुदारं शंसति स्म । तमभियुक्ततमं सत्यवाचमत्रभवन्तं पूज्यं श्रीव्यासमिति वक्ष्यमाणमहमपृच्छं पृष्टवान् ॥ ९४ ॥ [ श्रुतीति । वेदान्तार्थम् । अद्वैतब्रह्मात्मैक्यमिति यावत् । उदारं विस्पष्टं यथा स्यात्तथेत्यर्थः ] [ सत्येति ।

' योगिनो द्विविधाः प्रोक्ता युक्तयुञ्जानभेदतः ।
युक्तस्य सर्वदाभानं चिन्तासहकृतोऽपरः '

इति वचनात्पूर्वविशेषणोक्तयोगीन्द्रत्वर्थत्वेनैव सत्यभाषित्वसिद्धेर्ब्रह्मवादिनमित्यर्थः ] [ सत्यवाचमुपवक्ति विनेयमिति पाठे तु यतोऽसौ विनेयं शिष्यं प्रति सत्यवाचमुपवक्ति नतु प्रतारयत्यतोऽत्रभवन्तं पूज्यं तमहमित्यपृच्छमित्यन्वयः ] ॥ ९४ ॥

यत्पृष्टं तदाह—हे आर्य वेदनिकरो वेदनिचयः प्रकर्षेण विभक्तो विलक्षणीकृतस्त्वयेति शेषः । एवमग्रेऽपि ॥ ९९ ॥ [ भो आर्य परमपूज्य बादरायण । त्वयेति शेषः ] ॥ ९९ ॥

अत्र ब्रह्मसूत्र इहास्मिँल्लोके केचिद्विप्रतिपन्ना विप्रतिपत्तिं प्राप्ताः स्वमतानुसारेण यथायोग्यमर्थान्कल्पयन्ति । तस्माद्धे भगवन्नन्यथार्थग्रहणनिग्रहे दक्षमस्य ब्रह्मसूत्रस्य भाष्यं त्वया करणीयम् ॥ ९६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मद्वचः स च निशम्य सभायां
विद्वदग्रेसर वाचमवोचत् ॥
एवमेव दिविषद्भिरुदीर्णः
पार्वतीपतिसदस्ययमर्थः ॥ ५७ ॥
वत्स तं शृणु समस्तविदेको
मत्समस्तव भविष्यति शिष्यः ॥
कुम्भ एव सरितः सकलं यः
संहरिष्यति महोल्बणमम्भः ॥ ५८ ॥
दुर्मतानि निरसिष्यति सोऽयं
शर्मदायि च करिष्यति भाष्यम् ॥
कीर्तयिष्यति यशस्तव लोकः
कार्तिकेन्दुकरकौतुकि येन ॥ ५९ ॥
इत्युदीर्य मुनिराट्स वनान्ते
पत्युराप सुगिरिं गिरिजायाः ॥
तन्मुखाच्छ्रुतमशेषमिदानीं
सन्मुनिप्रिय मया त्वयि दृष्टम् ॥ १६० ॥

मम वचनं स च पराशरसूनुः श्रुत्वा सभायां हे विद्वदग्रेसर वाचमुक्तवान्। यति—दिविषद्भिर्देवैरयं त्वदुक्तोऽर्थः शिवस्य सभायामुक्तः ॥ ५७ ॥ [ पण्डितपुरोगा वाचा भागुरिमतेन हलन्तानां टाब्विधानाद्वाणी यथा स्यात्तथाऽग्रे तथा च न पौनरुक्त्यम् ] ॥ ५७ ॥

तस्माद्धे वत्से तमर्थं त्वं शृणु समस्तवित्सर्वज्ञः ॥ ५८ ॥

सुखप्रदं भाष्यं करिष्यति येन शिष्येण तत्कर्तृकेण भाष्येण वा कार्तिकचन्द्र- तुकमस्यास्तीति तव यशो लोकः कीर्तयिष्यति ॥ ५९ ॥ [ येन शिष्येण द्वारा ॥ ५९ ॥

इत्येवंप्रकारेण स मुनिराड्वेदव्यासो वनमध्य उक्त्वा पार्वत्याः पत्युः शि- कैलासं प्राप तस्य व्यासस्य मुखाच्छ्रुतं सर्वं मया हे सन्मुनिप्रिय त्वयि दृष्टं [ उपसंहरति—इतीति । वनान्त उक्तवनमध्ये । सह्यादिपाषाणमयगिरिषु सर्गः । तेषामपि दक्षिणकैलासादित्वेन शिवावासत्वादित्याशयः । हे सन्मुनि- व्यासादिमुनीनामिष्ट शंकर ] ॥ ६० ॥

१ क 'प्रचर । क. २ 'प्रचर । ३ क. ख. ग. °दव त्वं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स त्वमुत्तमपुमानसि कश्चि-
त्तत्त्वावित्प्रवर नान्यसमानः ॥
तद्यतस्व निरवद्यनिबन्धैः
सद्य एव जगदुद्धरणाय ॥ ६१ ॥
गच्छ वत्स नगरं शशिमौलेः
स्वच्छदेवतटिनीकमनीयम् ॥
तावता परमनुग्रहमाद्या
देवता तव करिष्यति तस्मिन् ॥ ६२ ॥
एवमेनमनुशास्य दयालुः
पावयन्निजदृशा विससर्ज ॥
भावतः स्वचरणाम्बुजसेवा-
मेव शश्वदभिकामयमानम् ॥ ६३ ॥
पङ्कजप्रतिभटं पदयुग्मं
शंकरोऽस्य निरगादसहिष्णुः ॥
तद्वियोगमभिवन्द्य कथंचि-
त्तद्विलोकनमयन्हृदयाब्जे ॥ ६४ ॥

---

हे तत्त्वविच्छ्रेष्ठ तत्तस्मान्निर्दुष्टग्रन्थैर्यतस्व ॥ ६१ ॥ [ अथ प्रकृतकर्तव्यं कथयति— स त्वं कश्चिद्वाङ्मनसगम्यः । उत्तमः पुमान्स उत्तमः पुरुषः

' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः '

इति श्रुत्या प्रसिद्धः परशिव इत्यर्थः ] ॥ ६१ ॥

शशिमौलेश्चन्द्रशेखरस्य नगरं स्वच्छरूपया देवनद्या गङ्गया कमनीयं सुन्दरं तावता गमनमात्रेणैव तस्मिन्नगर आद्या शिवाख्या देवता तव परमनुग्रहं करिष्यति ॥ ६२ ॥

एवमेनं श्रीशंकरं दयालुरनुशासनं कृत्वा दृशा कृपादृष्ट्या पवित्रीकुर्वन्भावाद्भक्त्यतिशयेन स्वचरणाम्बुजसेवामेव सदैवाभिकामयमानं विससर्ज ॥ ६३ ॥ [ विससर्ज काशीं प्रति प्रेषयामासेत्यर्थः ] ; ननु किं भक्तिहीनत्वाद्विश्वमुक्तिप्रदो विश्वेश्वर एव स्वय्यनुग्रहं करिष्यतीति धियाऽसाधनेन विसृष्टो नेत्याशयेन तं विशिनष्टि—भावत इत्याद्युत्तरार्धेन । शश्वदपि निरन्तरमपीत्यर्थः । एवं च न समः सपुनरुक्तत्वदोषोऽपि ] ॥ ६३ ॥

अस्य श्रीगोविन्दनाथस्य गुरोः पङ्कजप्रतिभटं पदद्वंद्वमभिवन्द्य तस्य पदयुग्मस्य वियोगमसहिष्णुरपि तस्य विलोकनं हृदयाब्जेऽयन्प्राप्नुवन्कथंचिन्निरगात् ॥ ६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप तापसवरः स हि काशीं
नीपकाननपरीतसमीपाम् ॥
आपगानिकटहाटकचञ्च-
द्यूपपङ्क्तिसमुदञ्चितशोभाम् ॥ ६५ ॥
संददर्श स भगीरथतप्ता-
मन्दतीव्रतपसः फलभूताम् ॥
योगिराडुचिततीरनिकुञ्जां
भोगिभूषणजटातटभूषाम् ॥ ६६ ॥
विष्णुपादनखराज्जननाद्वा
शंभुमौलिशशिसंगमनाद्वा ॥
या हिमाद्रिशिखरात्पतनाद्वा
स्फाटिकोपमजला प्रतिभाति ॥ ६७ ॥
गायतीव कलषट्पदनादै-
र्नृत्यतीव पवनोच्चलिताब्जैः ॥
मुञ्चतीव हसितं सितफेनैः
श्लिष्यतीव चपलोर्मिकरैर्या ॥ ६८ ॥

---

स हि तापसश्रेष्ठः श्रीशंकरः काशीं प्राप । तां विशिनष्टि—नीपानां कदम्ब[illegible] व्याप्तं समीपं यस्या आपगाया नद्या निकटानां सुवर्णेन चञ्चतां यूपानां [illegible] पङ्क्तिभिः समुदञ्चिता शोभा यस्या सा ताम् ॥ ६५ ॥

एवं काशीमुपवर्ण्य गङ्गां वर्णयति—स योगिराड्भगीरथेन तप्तस्यामन्दतीव्र[illegible] तीक्ष्णस्य तपसः फलभूतामुचितास्तीरे निकुञ्जा यस्याः सर्पभूषणस्य शिवस्य [illegible] भूषामलंकृतिं गङ्गां संददर्श ॥ ६६ ॥

स्फाटिकमणिसदृशजलां गङ्गां त्रिधोत्प्रेक्षते—विष्णोश्चरणनखाज्जननाद्वा । [illegible] गमः । हिमाद्रिर्हिमाचलः ॥ ६७ ॥ [ 'नखोऽस्त्री नखरोऽस्त्रियाम्' [illegible] स्फाटिकेति । स्फाटिकोपलवत्स्फाटिकपाषाणवज्जलं यस्याः सा तथेत्यर्थः ] [illegible]

अव्यक्ताक्षरैर्मधुरैर्भ्रमरनादैर्गायतीव वायुनोर्ध्वंचलितैः कमलैर्नृत्यतीव [illegible] मुञ्चतीव चपलोर्मिलक्षणहस्तैरालिङ्गनं कुर्वतीव ॥ ६८ ॥ [ गङ्गायां कमल[illegible]
'स्वर्गापगाहेममृणालिनीनां नाला मृणालाग्रभुजो भजामः'
इत्यादिनैषधादौ दृष्टत्वात्कविसमयत्वादेवाविरुद्धम् ] ॥ ६८ ॥

---

१ घ. काननेन ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्यामला क्वचिदपाङ्गमयूखै-
श्चित्रिता क्वचन भूषणभाभिः ॥
पाटला कुचतटीगलितैर्या
कुङ्कुमैः क्वचन दिव्यवधूनाम् ॥ ६९ ॥

सोऽवगाह्य सलिलं सुरसिन्धो-
रुत्ततार शितिकण्ठजटाभ्यः ॥
जाह्नवीसलिलवेगहृतस्त-
द्योगपुण्यपरिपूर्ण इवेन्दुः ॥ १७० ॥

स्वर्णदीजलकणाहितशोभा
मूर्तिरस्य सुतरां विललास ॥
चन्द्रपादगलदम्बुकणाङ्का
पुत्रिका शशिशिलारचितेव ॥ ७१ ॥

विश्वेशश्चरणयुगं प्रणम्य भक्त्या
हर्याद्यैस्त्रिदशवरैः समर्चितस्य ॥
सोऽनैषीत्प्रयतमना जगत्पवित्रे
क्षेत्रेऽसाविह समयं कियन्तमार्यः ॥ ५५६ ॥

---

दिव्यवधूनां कटाक्षकिरणैः क्वचिदतिश्यामा तासां भूषणदीप्तिभिः क्वचन चित्रिता । विचित्रभूषणभानां विचित्रत्वात् । तासां स्तनतटीभ्यो गलितैः कुङ्कुमैः क्वचित्पाटला श्वेतरक्तैवंभूता या तां संददर्शेति पूर्वेणान्वयः ॥ ६९ ॥

स श्रीशंकरः सुरनद्या गङ्गाया जलमवगाह्य शितिकण्ठस्य शिवस्य जटाभ्यो जाह्नवीसलिलवेगेन हृतस्तस्या जाह्नव्याः संयोगेन पुण्येन परिपूर्णश्चन्द्र इवोत्ततारोत्प्लुतः॥ १७० ॥

स्वःसिन्धोर्जलकणैराहिता शोभा यस्याः साऽस्य शंकरस्य मूर्तिः सुतरां शुशुभे । तत्र दृष्टान्तः—चन्द्रकिरणैर्गलतां जलकणानामङ्काश्चिह्नानि यस्याः सा चन्द्रकान्तशिलारचिता प्रतिमा यथा तद्वत् ॥ ७१ ॥ पुत्रिका पुत्तलिकेवेत्यर्थः ] ॥ ७१ ॥

विश्वमीष्ट इति विश्वेट्तस्य विश्वनियन्तुर्विष्ण्वादिदेववरैः संपूजितस्य चरणद्वयमभक्त्या प्रणम्य प्रयतमनाः सोऽसावार्यः कियन्तं कालं जगत्पवित्रेऽस्मिन्क्षेत्रेऽनैषीन्नीतवानित्यर्थः । प्रहर्षिणी वृत्तम् ॥ ७२ ॥

---

१ ख. ग. घ °कृतो ग°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीमाधवीये तत्सुखाश्रमनिवासगः ॥
संक्षेपशंकरजये सर्गोऽयं पञ्चमोऽभवत् ॥ ५ ॥

---

## अथ षष्ठः सर्गः ।

अथाऽऽगमद्ब्राह्मणसूनुरादरा-
दधीतवेदो दलयन्स्वभासा ॥
तेजांसि कश्चित्सरसीरुहाक्षो
दिदृक्षमाणः किल देशिकेन्द्रम् ॥ १ ॥

आगत्य देशिकपदाम्बुजयोरपप्त-
त्संसारवारिधिमनुत्तरमुत्तितीर्षुः ॥
वैराग्यवानकृतदारपरिग्रहश्च
कारुण्यनावमधिरुह्य दृढां दुरापाम् ॥ २ ॥

---

[ इति श्रीति । तदिति । तस्य श्रीशंकराचार्यस्य यः सुखाश्रमनिवासो [illegible] सुखप्रदतुरीयाश्रमाख्यसंन्यासस्तं गच्छति प्रतिपादयतीति तथा ॥ ७२ ॥ इत्यद्वै[illegible] उपलक्ष्म्यां पञ्चमसर्गोल्लासः । ]

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकु[illegible]
सूनुधनपतिसूरिकृते शंकरविजयडिण्डिमे पञ्चमः सर्गः ॥ ५ ॥

## अथ षष्ठसर्गस्य टीका ।

एवं सपरिकरं जीवन्मुक्तिसुखप्रापकं श्रीशंकरकर्तृकं चतुर्थाश्रमनिवासमुक्त्वा तत्कर्तृकां ब्रह्मविद्याप्रतिष्ठितिं सपरिकरां वर्णयितुमुपक्रमतेऽथेत्यादिना । अथ कार्य[illegible] यन्तरं कश्चित्कमलेक्षणो ब्राह्मणसुतोऽधीतवेदो देशिकेन्द्रं दिदृक्षमाणः स्वभासा [illegible] दलयन्नादरादागमदिति योजना । उपजातिवृत्तम् ॥ १ ॥ [ कश्चिदज्ञात[illegible] सरसीति । पद्मवत्प्रसन्ननयन इति यावत् । एतेनोक्तविवेकादिशमादिसं[illegible] सूचिता । अत एव दिदृक्षमाणोऽद्वैतब्रह्मात्मैक्यापारोक्ष्यमात्रेच्छुरित्यर्थः ] ॥ १ ॥

दृढां दुष्प्रापां गुरुकारुण्यनावमधिरुह्य दुरुत्तरं संसारसमुद्रमुत्तितीर्षुर्वैराग्यवा[illegible] स्त्रीपरिग्रहो येन स आगत्य श्रीशंकरस्योपदेष्टुश्चरणकमलयोरपप्तत्पतितवान् । [illegible] वृत्तम् ॥ २ ॥ [ स इत्यार्थिकम् । यतो वैराग्यवानतः । अकृतेति । [illegible] अनुत्तरमुत्तरणमुत्तरो न विद्यतेऽद्वैतविद्यां विनोत्तरो यस्य तमित्यर्थः । अपप्तदिति । एतेन दण्डवत्साष्टाङ्गप्रणामो ध्वन्यते ] ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्थाप्य तं गुरुरुवाच गुरुर्द्विजानां
कस्त्वं क्व धाम कुत आगत आत्तधैर्यः ॥
बालोऽप्यबालधिषणः प्रतिभासि मे त्व-
मेकोऽप्यनेक इव नैकशरीरभावः ॥ ३ ॥
पृष्टो बभाण गुरुमुत्तरमुत्तरज्ञो
विप्रो गुरो मम गृहं बुध चोलदेशे ॥
यत्राऽऽपगा वहति तत्र कवेरकन्या
यस्याः पयो हरिपदाम्बुजभक्तिमूलम् ॥ ४ ॥
अटाट्यमानो महतो दिदृक्षुः
क्रमादिमं देशमुपागतोऽस्मि ॥
बिभेमि मज्जन्भववारिराशौ
तत्पारगं मां कृपया विधेहि ॥ ५ ॥

---

तं ब्राह्मणकुमारमुत्थाप्य द्विजानां गुरुर्देशिक उवाच—त्वं को ब्राह्मणो वा क्षत्रियादिर्वा धाम गृहं त्वदीयं केदानीं त्वं कस्माद्देशादागतो यत आत्तं गृहीतं धैर्यं येन सोऽतो बालोऽप्यबालबुद्धिस्त्वं मे प्रतिभासि पुनश्चैकोऽप्यनेक इवै प्रतिभासि । निर्भयत्वात् । पुनश्च न विद्यत एकस्मिन्नपि शरीरेऽहंभावो यस्य सः । पाठान्तरे तु न विद्यत एकस्य शरीरस्यापि भानं यस्येति व्याख्येयम् ॥ ३ ॥ [ कुतो हेतोरिहाऽऽगतोऽसीति संबन्धः । नैकेति । न विद्यत एकः केवलः शरीरे भावोऽहंभावो यस्य स तथा । उपागमनक्षण एव केवलं मत्पादयोरेव दण्डवत्पतितत्वात्तथात्वमित्यर्थः । अत एव । एकोऽपि वस्तुतोऽद्वैतोऽपि व्यवहारत एकव्यक्तिकोऽपि । अनेक इव सर्वात्मक इव त्वं मे प्रतिभासीत्यनुकृष्य योज्यम् । एवं च प्रश्न एवोपदेशोऽपीति व्यज्यते । उत्प्रेक्षालंकारः ] ॥ ३ ॥

एवं पृष्ट उत्तरज्ञो गुरुं प्रैति जगाद हे गुरोऽहं विप्र इति प्रथमप्रश्नस्योत्तरम् । द्वितीयस्योत्तरमाह हे बुध यस्या जलं हरिपदाम्बुजभक्तेः कारणं सा कावेरी नदी यत्र चलति तस्मिंश्चोलाख्ये देशे मम गृहमस्तीत्यर्थः । सर्वज्ञस्य तव न किंचिदप्यविदितमिति संबोधनाशयः ॥ ४ ॥ [ कवेरकन्या कवेरनाम्नो महर्षेः पर्वतस्य वा कन्या ] ॥ ४ ॥

तृतीयप्रश्नस्योत्तरमाह—महतो दर्शनेच्छुरटाट्यमानो भृशमटमानः । 'सूचिसूत्रिमूत्र्यटचर्यशूर्णोतिभ्यो यङ्वाच्यः' इति यङ् । क्रमादिमं देशमुपागतोऽस्मि । एवं पृष्टमावेद्य स्वप्रयोजनमावेदयति—संसारसमुद्रे मज्जन्बिभेमि तस्मात्कृपया संसारसमुद्रा-

---

१ ख. °रवमेकोऽ° । २ ख. °व मे प्र° । ३ ख. घ. °प्रत्युत्तरं ज° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपाङ्गैरुत्तुङ्गैरमृतझरमङ्गैः परगुरो
शुचा दूनं दीनं कलय दयया मामविमृशन् ॥
गुणं वा दोषं वा मम किमपि संचिन्तयसि चे-
त्तदा कैव श्लाघा निरवधिकृपानीरधिरिति ॥ ६ ॥

स्यात्ते दीनदयालुताकृतयशोराशिस्त्रिलोकीगुरो
तूर्णं चेद्दयसे ममाद्य न तथा कारुण्यतः श्रीमति ॥
वर्षन्भूरि मरुस्थलीषु जलभृत्सद्भिर्यथा पूज्यते
नैवं वर्षशतं पयोनिधिजले वर्षन्नपि स्तूयते ॥ ७ ॥

त्वत्सारस्वतसारसारससुधाकूपारसत्सारस-
स्रोतःसंभृतसंततोज्ज्वलजलक्रीडा मतिर्मे मुने ॥
चञ्चत्पञ्चशरादिवञ्चनहतं न्यञ्चं प्रपञ्चं हित-
ज्ञानाकिंचनमा विरिञ्चमखिलं चाऽऽलोचयन्त्यञ्ज...

---

त्पारगं मां विधेहि । उपजातिवृत्तम् ॥ ५ ॥ [ महतस्त्रिविधपरिच्छेदशून्यस्य
दिदृक्षुर्दर्शनेच्छुस्तत्साक्षात्कारापेक्षोऽहम् ] ॥ ५ ॥

हे परगुरो मम गुणं वा दोषं वाऽविचारयन्नत्युच्चैः कटाक्षलक्षणैरमृतझरभङ्गैः
हृतरङ्गैर्दयया शोकेन खिन्नमत एव दीनं मां कलयावलोकय । गुणदोषविचारे
गुणं वा दोषं वा किमपि मम चिन्तयसि चेत्तदा श्रीशंकरो निरवधिकृपासमुद्र
श्लाघा न काऽपीत्यर्थः । शिखरिणी वृत्तम् ॥ ६ ॥

एतदेव द्रढयन्सदृष्टान्तमाह—हे त्रिलोकीगुरो शीघ्रं गुणदोषविचारं विनैव
दयां करोषि चेत्तर्हि ते दीनदयालुतासंपादितयशोराशिर्यथा स्यात्तथा श्रीमति
स्यात् । तवादीनदयालुता कृतयशोराशिर्न स्यादिति वा कृतयशोराशिस्त्व...
अस्मिन्पक्ष उभयत्रादीनदयालुतेत्येव च्छेदः । यतो मरुस्थलीषु भूरि वर्षन्
सद्भिर्यथा पूज्यते समुद्रजले वर्षशतं वर्षन्नपि तथा न स्तूयत इत्यर्थः । शार्दू...
वृत्तम् ॥ ७ ॥

त्वदीयसरस्वत्याः सार एव सारससुधाकूपारश्चन्द्रसंबन्ध्यमृतसमुद्रस्तस्य ...
तोभिः सल्लक्षणानां सारसानां पक्षिणां कमलानां वा स्रोतोभिः प्रवाहैः संभृतं
संश्रितं वा संततमुज्ज्वलं जलं तस्मिन्क्रीडा यस्यास्तथाभूता सती मे मतिर्हे ...
रन्यः पञ्चशरः—

---

१ क. °रमगु° । २ क. ग. °तु । यतो । ३ ख. घ. °यत्र द°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सौरं धाम सुधामरीचिनगरं पौरंदरं मन्दिरं
कौबेरं शिबिरं हुताशनपुरं सामीरसद्मोत्तरम् ॥
वैधं चाऽऽवसथं त्वदीयफणितिश्रद्धासमिद्धात्मनः
शुद्धाद्वैतविदो न दोग्धि विरतिश्रीघातुकं कौतुकम् ॥ ९ ॥
न भौमा रामाद्याः सुषमविषवल्लीफलसमाः
समारम्भन्ते नः किमपि कुतुकं जातु विषयाः ॥
न गण्यं नः पुण्यं रुचिरतररम्भाकुचतटी-
परीरम्भारम्भोज्ज्वलमपि च पौरंदरपदम् ॥ १० ॥

---

'उन्मादनस्तापनश्च शोषणः स्तोमनस्तथा ।
संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः '

इत्युक्तपञ्चसायकः काम आदिर्येषां क्रोधादीनां तत्कर्तृकेन वञ्चनेन हृतमत एव त्यद्यं नीचं पुनश्च स्वहितज्ञानेऽकिंचनमशक्तमाब्रह्मलोकं सर्वं प्रपञ्चमालोकयन्त्यम्बतु विचरतु ।

' सारसः पक्षिभेदेन्द्वोः सारसं सरसीरुहे '

इति विश्वप्रकाशः ॥ ८ ॥ [ आविरिञ्चम् । ब्रह्मलोकान्तमखिलमपि प्रपञ्चम् । आलोचयन्ती मननेनावलोकयन्त्यम्बतु विचरस्वित्यर्थः । श्रीमद्भागाप्ताद्वैतसाक्षात्कारजन्यजीवन्मुक्तिसुखात्मरत्यादिरत्नमन्दिरे मन्मतिर्विहरत्वविरतमित्याकूतम् ] ॥ ८ ॥

सूरस्य सूर्यस्य धाम सुधाकिरणस्य चन्द्रस्य नगरं पुरंदरस्येन्द्रस्य मन्दिरं कुबेरस्य शिबिरं हुताशनस्याग्नेः पुरं समीरस्य वायोः सद्म विधेर्ब्रह्मणश्च सर्वोत्तरमावसथं गृहं त्वदीयायां फणितावुक्तौ या श्रद्धा तया समिद्ध आत्मा यस्य तस्य शुद्धाद्वैतविदो या वैराग्यलक्षणा श्रीस्तस्या घातुकं नाशकं कौतुकं न दोग्धि न प्रपूरयतीति प्रत्येकं क्रियान्वयः॥९॥

भौमा भूमौ भवा रामाद्या वनिताद्या विषयाः सुषमा शोभना या विषवल्ली तस्याः फलेन तुल्याः सुन्दरं यद्विषवल्ल्याः फलं तेनेति वा नोऽस्माकं किमपि कौतुकं जातु कदाऽपि न समारभन्ते नापि पुण्यं सुन्दरतरा या रम्भाख्याऽप्सरास्तस्याः कुचतट्याः परिरम्भस्याऽऽलिङ्गनस्याऽऽरम्भेणोज्ज्वलं पुरंदरस्य देवेन्द्रस्य पुरमपि नोऽस्माकं गणनीयम् । शिखरिणी वृत्तम् ॥ १० ॥ [ भौमा भूमौ भवा एतादृशा रामाद्या रमयतीति रामा यावत्स्त्रीगुणविशिष्टा तरुणी साऽऽद्या मुख्या येषां स्रक्चन्दनादीनां ते तथा । अत एवोक्तम्—

---

१ 'यस्येदं धा' । २ ख. ग. घ. 'रमर' । ३ । ख. घ. भवाः पातालजा वा रा° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चञ्चद्वैरिञ्चं पदमपि भवेदादरपदं
वचो भव्यं नव्यं यदकृत कृती शंकरगुरुः ॥
चकोरालीचञ्चूपुटदलितपूर्णेन्दुविगल-
त्सुधाधाराकारं तदिह वयमीहेमहि मुहुः ॥ ११ ॥

'यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत्'

इति । एतादृशा विषयाः । सुषमेति । एतेन परिणामेऽनर्थकारित्वं द्योत्यते। ... भास्त्वैहिकविषयासक्तिस्तेषां स्त्र्यादीनां जरादिदूषितत्वात्तारत्रिकेषु तदभावात्... स्यादेवेत्यत आह—न गण्यमित्याद्युत्तरार्धेन । तथा नोऽस्माकम् । पुण्यं ... साध्यम् । रुचिरतरेति । अतिशयेन रुचिरा रम्यैतादृशी या रम्भा तस्याः ... स्तनस्थली तस्या यः परीरम्भ आलिङ्गनं तस्य य आरम्भ उपक्रमस्तेनोज्ज्वलं ... त्यर्थः । अत्र रम्भायाः सुन्दरतरत्वाव्यतिरेकेऽपि रुचिरतरेति विशेषणं तदीयत्व... संभावितरोपादिव्युदासार्थमेवेति भावः । अत एवोक्तं भर्तृहरिणा—

'नामृतं न विषं किंचिदेका मुग्धा नितम्बिनी ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी'

इति । एवं चात्राऽऽलिङ्गनारम्भे तत्कर्तृकत्वं द्योत्यते । अत एव तेन ... रस्याप्युज्ज्वलत्वलक्षणरम्यत्वमपीति व्यज्यते । तदुक्तं मदीये भागीरथीकथाभिवर्णने—

'धान्यानां मृदुलपदाः सुवर्णरूपाः
सद्वृत्ताः सरसगुणाः प्रसादशीलाः ।
नानालंकृतिविलसद्ध्वनिप्रचारा-
श्चुम्बन्ति स्वरसत आस्यमाज्यवाचः'

इति । एतादृशमपि पौरंदरपदमैन्द्रस्थानमपि न गण्यं नैव मान्यमस्तीति ... हेतुस्तु पुण्यमिति विशेषणपदेनैव सूचितः । पुण्यसाध्यत्वेन तस्य तत्तत्... रूपमेव तदित्याशयः । अत एवाऽऽम्नायते 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति । रूपकादयोऽलंकाराः ॥ १० ॥

तर्हि ब्रह्मपदं भवतामादरपदं स्यान्नेत्याह—नेति । अनेनेहामुत्र... दर्शितः । अथ श्रवणौत्सुक्यं दर्शयति—कृती शंकरगुरुर्यद्भव्यं कल्याणं नवीनं वचनमकृत तद्विरहातुरचकोरपङ्क्तीनां चञ्चूपुटैर्दलितात्पूर्णचन्द्राद्गलि...

१ क. ख. ग. घ. 'रिञ्च्यं प' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्यावाभूमिशिवंकरैर्नवयशःप्रस्तावसौवस्तिकैः
पूर्वाखर्वतपःपचेलिमफलैः सर्वाधिमुष्टिंधयैः ॥
दीनाढ्यंकरणैर्भवाय नितरां वैरायमाणैरलं-
कर्मीणं प्रसितं त्वदीयभजनैः स्यान्मामकीनं मनः ॥ १२ ॥
संसारबन्धामयदुःखशान्त्यै
स एव नस्त्वं भगवानुपास्यः ॥
भिषक्तमं त्वा भिषजां शृणोमी-
त्युक्तस्य योऽभूदुदितावतारः ॥ १३ ॥

धाराया आकार इवाऽऽकारो यस्य तत्पुनः पुनर्वयमीहेमहीच्छामः ॥ ११ ॥ [ वैरिञ्चं विरिञ्चस्य ब्रह्मण इदम् । वचोऽद्वैतात्मबोधकं वाक्यम् ] [ चकोरालीति । चकोराल्या- श्चकोरपङ्क्तेर्यानि चञ्चूपुटानि तैर्दलितः कलङ्कच्छलेन मध्ये छिद्रदर्शनात्खण्डित एतादृशो यः पूर्णेन्दुः पूर्णचन्द्रस्तस्माद्विगलन्ती विशेषेण स्रवन्ती या सुधाधाराऽमृतधारा तद्वदाकारो यस्य तत्तथेत्यर्थः । इहास्मिन्नेव देहे । यद्वा चकोरेत्याद्याकारान्तं क्रियाविशेषणमेव । तेन तद्वचसि निरुपमत्वं तदास्वादने सरसत्वं स्वस्मिंश्चकोरवत्तदेकनिष्ठत्वं च सूच्यते । उपमाद- योऽलंकाराः ] ॥ ११ ॥

द्यावाभूम्योः शिवं सुखं कुर्वन्तीति तथा तैर्नवीनस्यासाधारणस्य यशसः प्रस्तावस्य प्रसङ्गस्य सौवस्तिकैः स्वस्तिवाचकैः स्वस्तीत्याहेत्यर्थे ' तदाहेति माशब्दादिभ्यष्ठग्वाच्यः ' इत्यनेन ठक्प्रत्ययः । पूर्वस्य पूर्वार्जितस्यानल्पतपसः पक्वफलैः सर्वेषामाधीनां मुष्टिंधयैः साराकर्षकैः सर्वे च त आधयश्चेति वा दीनानामाढ्यंकरणैर्भवाय संसाराय नित्यं वैराय- माणैर्वैरं कुर्वद्भिः । शब्दवैरेत्यादिना करोत्यर्थे क्यङ् । त्वदीयभजनैरलंकर्मीणं कर्मक्षमम् । ' कर्मक्षमोऽलंकर्मीणः ' इत्यमरः । मदीयं मनः प्रसितं स्यात्तथाभूतेषु त्वदीयभजनेषु तत्परं स्यादिति प्रार्थना ' प्रसितोत्सुकाभ्यां तृतीया च ' इति तृतीया ' तत्परे प्रसितासक्तौ ' इत्यमरः । कः प्रसितो नाम यस्तत्र नित्यं प्रतिबद्धः कुत एतत् । सुनोतिरयं बध्नात्यर्थे वर्तत इति महाभाष्यम् । अनेन गुरुशुश्रूषाकरणौत्सुक्यं स्वस्य दर्शितम् । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥ [ दीनेति । दीनानामनन्यगतिकानामस्मदादीनामाढ्यंकरणानि संपत्सा- धनानि तैरित्यर्थः ] ॥ १२ ॥

ननु तर्हि यः कश्चिदेव गुरुस्तयो स्वाभीष्टसिद्धये संसेव्य इति चेत्तत्राऽऽह—' भिष- क्तमं त्वा भिषजां शृणोमि ' इति श्रुत्युक्तस्य सदाशिवस्य य उदित उक्तोऽवतारोऽभूदु- दयं प्राप्तोऽवतार उदितावतार इति वा स एव त्वं वैद्यानां मध्ये सद्वैद्यस्यावतारभूतो भग- वान्नोऽस्माकं संसारबन्धलक्षणरोगदुःखशान्त्यर्थमुपास्य इत्यर्थः । उपजातिवृत्तम् ॥ १३ ॥

१ ग. °याऽभी° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्तवन्तं कृपया महात्मा
व्यदीपयत्संन्यसनं यथावत् ॥
प्राहुर्महान्तः प्रथमं विनेयं
तं देशिकेन्द्रस्य सनन्दनाख्यम् ॥ १४ ॥
संसारघोरजलधेस्तरणाय शश्व-
त्सांयात्रिकीभवनमर्दयमानमेनम् ॥
हन्तोत्तमाश्रमतरीमधिरोप्य पारं
निन्ये निपातितकृपारसकेनिपातः ॥ १५ ॥

[ भो भगवञ्शंकराहमित्यार्थिकम् । त्वा त्वाम् । भिषजां वैद्यानां मध्ये । भि
ररोगापहारकत्वाद्वैद्यनाथत्वेन जगत्प्रसिद्धत्वात् ' भेषजं भवरोगिणाम् ' इत्
त्वाच्च सकलवैद्यराजाधिराजमिति यावत् । शृणोमि ब्रह्मवादिवदनादाकर्णयामीत
शब्दः श्रुतिसमाप्त्यर्थः । निरुक्तानुपूर्वीविशिष्टया श्रुत्येत्यर्थः । इयं श्रुतिः
तायां द्वितीयाष्टके ' उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि
रुद्रसूक्ते समाम्नायते । विस्तरस्तु तद्भाष्य एव ज्ञेयः । अनुपयोगान्नेह
दिक् । उपलक्षणमिदं श्रुत्यन्तरस्यापि । तथाच तैत्तिरीयाः समामनन्ति ।
दधिवक्ता प्रथमो दैव्यो भिषक् ' इति । उक्तस्य प्रतिपादितस्य परमेश्वरस्य
उदितेति । उदितः प्रकाशं प्राप्तश्चासाववतारश्चेति तथा । एतेनाद्वैतवि
त्वेन मूलाज्ञानतमःशामकत्वं व्यज्यते । अभूदभवत्स एव त्वं न उपास्योऽ
न्वयः । रूपकमलंकारः ] ॥ १३ ॥

इत्युक्तवन्तं ब्राह्मणसूनुं महात्मा श्रीशंकराचार्यः करुणया विधिवत्संन्यासं
सनन्दनसंज्ञं देशिकेन्द्रस्याऽऽद्यं शिष्यं महान्तः प्राहुः ॥ १४ ॥ [ संन्यासं
स्यम् । सनन्दनाख्यं सनन्दन इति योगपट्टशालिनम् । ' अरुणः समभूत
इति तृतीयसर्गोक्तेरयमरुणावतार इति ज्ञेयम् ] ॥ १४ ॥

तेदभीष्टं सम्यक्साधितवानित्याह—संसारलक्षणस्य घोरसमुद्रस्य तरणाय
त्रिकीभवनमर्दयमानं पोतवणिक्त्वं भवेति याचमानमेनं सनन्दनं हन्त तदा
तरीं संन्यासाश्रमलक्षणां नौकामधिरोप्य पारं नीतवान्यतो नितरां शिष्येषु
कृपाया रस एव केनिपातो नौकादण्डो यस्य ।

' नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः '

इत्यमरः । निपातितः कृपारस एव केनिपातो येनेति वा ॥ १५
रेति । संसार एव घोरजलधिर्मृगजलादिसमुद्रवत्तत्त्वसाक्षात्कारमन्तरा

१ क. तदि॰ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येऽप्यन्येऽमुं सेवितुं देवतांशा
यातास्तेऽपि प्राय एवं विरक्ताः ॥
क्षेत्रे तस्मिन्नेव शिष्यत्वमस्य
प्रापुः स्पष्टं लोकरीत्याऽपि गन्तुम् ॥ १६ ॥
व्याख्या मौनमनुत्तराः परिदलच्छङ्काकलङ्काङ्कुरा-
श्छात्रा विश्वपवित्रचित्रचरितास्ते वामदेवादयः ॥
तस्यैतस्य विनीतलोकततिमुद्धर्तुं धरित्रीतलं
प्राप्तस्याद्य विनेयतामुपगता धन्याः किलान्यादृशाः ॥१७॥

---

स्याद्गहनतराम्बुनिधिस्तस्येत्यर्थः ] [ पारं संसारघोरजलधेरद्वैतब्रह्मरूपमोक्षलक्षणं परतीर-मित्यर्थः । रूपकादिरलंकारः ] ॥ १९ ॥

एवं प्रथमविनेयवृत्तान्तं विस्तरेणाभिधायेतरेषां संक्षेपेण तमाह—येऽप्यन्ये चित्सुखा-नन्दगिर्यादयो देवतांशा अमुं श्रीशंकरं सेवितुं यातास्तेऽपि सनन्दनवत्प्रायो विरक्तास्तस्मि-न्नविमुक्तक्षेत्र एव वटमूलस्थमहादेवशिष्या अपि लोकरीत्याऽपि स्पष्टं शंकराचार्यशिष्या इति प्रसिद्धिं प्राप्तुमस्य शिष्यत्वमापुः । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' ॥१६॥ [ अस्य श्रीमच्छंकराचार्यस्य । शिष्यत्वं शिष्यपरम्पराद्वारैव न तु साक्षात् । अन्यथाऽन्यपदेन डिण्डिमकृद्व्याख्यातचित्सुखानन्दगिर्योर्ग्रन्थालंकारे पूज्यपादज्ञानोत्तमशिष्य-चित्सुखेत्यादेः शुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानेत्यादेश्च लेखस्य विरुद्धत्वा-पत्तेः ] ॥ १६ ॥

एतदेव स्फुटयति—व्याख्येति । मौनमेव व्याख्या शिष्याश्च शुकवामदेवादयो विश्वस्य पवित्रं च तच्चित्रं च तच्चरितं येषां तेऽनुत्तरा उत्तररहिता यतः परिदलन्तो विनाशं गच्छन्तः शङ्काकलङ्कनामङ्कुरा येभ्यस्ते ।

' चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः '

इत्युक्तत्वात्त एव यस्य शिवस्य शिष्यास्तस्यैतस्य श्रीशंकरस्य विनीतलोकपङ्क्तिमुद्धर्तु-मस्मिन्मर्त्यलोके प्राप्तस्येदानीं शिष्यतां प्राप्ता धन्याः किल यतोऽन्यादृशाः सर्वतो विलक्षणाः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥ [ ते ' शुको मुक्तो वामदेवो मुक्तः ' इति श्रुतिप्रसिद्धा वामदेवादयः सन्तीति शेषः ] [ विभावनालंकारः । तदुक्तम्—

' विभावना विनाऽपि स्यात्कारणात्कार्यजन्म चेत् ।
अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ' इति ] ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेषः साधुभिरेव तोषयति नॄञ्शब्दैः पुमर्थार्थिनो
वाल्मीकिः कविराज एष वितथैरर्थैर्मुहुः कल्पितैः।
व्याचष्टे किल दीर्घसूत्रसरणिर्वाचं चिरादर्थदां
व्यासः शंकरदेशिकस्तु कुरुते सद्यः कृतार्थान्नृ्ह्नो।

चक्रितुल्यमहिमानमुपास्यां-
चक्रिरे तमविमुक्तनिवासाः ॥
वक्रसृत्यनुसृतामपि साध्वीं
चक्रुरात्मधिषणां तदुपास्त्या ॥ १९ ॥

---

शेषादिभ्यस्तस्याऽऽधिक्यं वर्णयति—शेषो नागः साधुभिः शब्दैर्... नरांस्तोषयति नतु पुमर्थप्रदानेन सद्यः कृतार्थान्कुरुते तथैव कविराजो वाल्मीकि... रयथार्थैर्मुहुः कल्पितैरर्थैरेव नॄंस्तोषयति तथा दीर्घा सूत्राणां सरणिर्यस्य ... चिरादतिविलम्बेनार्थं च ददातीति तां वाचं व्याचष्टे शंकरश्चासौ देशिकस्तु ... कृतार्थान्कुरुते ॥ १८ ॥ [ नॄन्पुमर्थार्थिनः पुरुषार्थेच्छून्मनुष्यानित्यर्थः । ... स्यार्थिकम् । वितथैरयथार्थैः । तत्र हेतुः—मुहुः कल्पितैरुत्प्रेक्षादिलक्षणैः ... दीर्घेति । दीर्घा चतुरध्यायात्मकत्वाद्दुरवगाहार्थकत्वाच्च विस्तृता सूत्राणां ... यस्य स तथेत्यर्थः । एतादृशः शब्दार्थमात्रचमत्कर्तृशेषादिविलक्षणोऽपि ... चिरान्मननादिसहकृतश्रवणानन्तरमेव । अर्थदां ब्रह्मात्मैक्यपुमर्थदात्रीम् । ... यद्यपि व्याचष्टे तथाऽपि । शंकरदेशिकस्तु श्रीशंकराचार्याख्यसद्गुरुस्तु । ... श्चर्थे पुमर्थार्थिनो नॄन्सद्यः स्मरणमात्रेणैव । कृतार्थान्कुरुत इत्यन्वयः । ... त्वात्स एव सेव्य इत्याशयः ] ॥ १८ ॥

विष्णुतुल्यमहिमानं तं श्रीशंकरमविमुक्ते शिवेन कदाऽप्यनिर्मुक्ते निवासो ... चक्रुः । तदुपासनायाः फलं च लेभुरित्याह वक्रमार्गमनुसृतामपि स्वीयां बुद्धिं ... सनया साध्वीं कृतवन्तः । स्वागता वृत्तम् ॥ १९ ॥ [ अविमुक्तो ... इत्यादौ वीत्युपसर्गस्य नाशार्थकत्वस्यापि दर्शनाद्विगतेव जीवस्य ... नित्यमुक्तत्वेऽप्यनाद्यविद्यावृतस्वरूपत्वान्निरस्तेव मुक्तिर्येषां प्रशस्ता ... इत्यादिवदर्शआद्यच् । तादृशा मरणोत्तरं न भवन्ति यत्र तदविमुक्तं तत्र ... ते तथा काशीस्था लोका इत्यर्थः । लुप्तोपमालंकारः ] ॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चण्डभानुरिव भानुमण्डलैः
पारिजात इव पुष्पजाततः ॥
वृत्रशत्रुरिव नेत्रवारिजै-
श्छात्रपङ्क्तिभिरलं ललास सः ॥ २० ॥
एकदा खलु वियत्त्रिपुरद्वि-
ड्भाललोचनहुताशनभानोः ॥
विस्फुलिङ्गपदवीं दधतीषु
प्रज्वलत्तपनकान्तशिलासु ॥ २१ ॥
दर्शयत्युरुमरीचिसरस्व-
त्पूरसृज्यपरमायिनि भानौ ॥
साधुनैकमणिकुट्टिममूर्छ-
द्रश्मिजालकशिखावलपिच्छम् ॥ २२ ॥

---

भानुमण्डलैः किरणमण्डलैर्यथा चण्डभानुः सूर्यः शोभते यथा च पुष्पैर्निचयैः पारिजातो यथाच नेत्रवारिजैः सहस्रसंख्याकमलैर्वृत्रशत्रुरिन्द्रस्तद्वच्छिष्यपङ्क्तिभिः श्रीशंकरोऽलमत्यर्थं ललास बभासे रथोद्धता वृत्तम् ॥ २० ॥ [ पुष्पेति । 'जातं व्यक्तौघजन्मसु' इति मेदिन्याः पुष्पसंघेनेत्यर्थः । उपमालंकारः ] ॥ २० ॥

अथेदानीं शिवसंगमं वर्णयितुं प्रस्तौति—एकस्मिन्काले प्रज्वलत्सूर्यकान्तशिलासु वियत्त्रिपुरद्विपो महादेवस्य भालनेत्रभूतो यो हुताशनो वह्निस्तस्य भानोः किरणस्य विस्फुलिङ्गपदवीं दधतीषु सतीष्वित्यादिसप्तम्यन्तानां शंकरो जाह्नवीमभिययावितिव्यवहितेनान्वयः स्वागता वृत्तम् ॥ २१ ॥ [ वियदिति । वियदेवाऽऽकाश एव—

'पृथिवी सलिलं तेजो वायुराकाशमेव च ।
सूर्याचन्द्रमसौ सोमयाजी चेत्यष्ट मूर्तयः'

इति तस्य तदष्टमूर्त्यन्तर्गतत्वात्त्रिपुरद्विट्शिवस्तस्य भाललोचनहुताशनो भालनेत्राग्निर्यो भानुः सूर्यस्तस्येत्यर्थः । रूपकमलंकारः ] ॥ २१ ॥

उरुभिर्मरीचिभिः सरस्वत्पूरस्य समुद्रपूरस्य सृजि स्रष्टरि पुनश्च समीचीनानेकमणिभिः कुट्टिमो निबद्धभूमिः । 'कुट्टिमोऽस्त्री निबद्धा भूः' इति हलायुधः । तस्मिन्मूर्छता व्याप्तेन रश्मिजालकेन शिखावलस्य मयूरस्य पिच्छं दर्शयति भानावपरमायिन्यपरस्मिन्नैन्द्रजालिके सति ॥ २२ ॥ [ उरुमरीचीति । एतादृश्यत एव । अपरेति । लौकिकैन्द्रजालिकविलक्षणैन्द्रजालिक इत्यर्थः । पिच्छं बर्हम् । रूपकमलंकारः ] ॥ २२ ॥

---

१ क. ख. घ. 'जातितः'। २ क. ख. घ. 'ष्पजातितः पा'। ३ ग. 'स्य ललाटे°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पङ्कजावलिविलीनमराले
पुष्करान्तरभिगत्वरमीने ॥
शाखिकोटरशयालुशकुन्ते
शैलकन्दरशरण्यमयूरे ॥ २३ ॥

शंकरो दिवसमध्यमभागे
पङ्कजोत्पलपरागकषायाम् ॥
जाह्नवीमभिययौ सह शिष्यै-
राह्निकं विधिवदेष विधित्सुः ॥ २४ ॥

सोऽन्त्यजं पथि निरीक्ष्य चतुर्भि-
र्भीषणैः श्वभिरनुद्रुतमारात् ॥
गच्छ दूरमिति तं निजगाद
प्रत्युवाच च स शंकरमेनम् ॥ २५ ॥

---

पङ्कजावलिषु विलीनेषु मरालेषु हंसेषु सत्सु पुष्करान्तर्जलमध्यमभिगत्वरे
मीने मत्स्ये सति शाखिनां वृक्षाणां छिद्रेषु शयालुषु सम्यङ्निद्रां कुर्वत्सु
पर्वतानां कंदरा शरण्या यस्य तथाभूते मयूरे सति । दिवसमध्यमभागस्य
पणानि ॥ २३ ॥ [ पङ्कजेति । पङ्कजावलौ पद्मपङ्क्तौ विलीनाः संनिविष्टा
यस्मिन्स तथेत्यर्थः । एतादृशे । तथा । पुष्करेति । पुष्करस्य 'पुष्करं
इत्यमराज्जलस्यान्तरभ्यन्तरप्रदेशे गत्वरा गमनशीला मत्स्या . यस्मिन्
एतादृशे । तथा । शाखेति । शाखिनां वृक्षाणां यानि कोटराणि तत्र
शीलाः शकुन्ताः पक्षिणो यस्मिन्स तथेत्यर्थः । एतादृशे । तथा । शैलेति
पर्वतस्य यः कन्दरः 'दरी तु कन्दरो वा स्त्री' इत्यमराद्दरीविशेषः शरण्यो
तादृशो मयूरो यस्मिन्स तथेत्यर्थः ] ॥ २३ ॥

दिनस्य मध्यमभागे विधिवदाह्निकं विधातुमिच्छुः शिष्यैः सह शंकरः
परागेण कषायवर्णां जाह्नवीमभिययौ ॥ २४ ॥ [ शंकर इति । एतादृशे
मभागे मध्याह्न इत्यर्थः । एष पूर्वप्रकृतः शंकरः श्रीशंकराचार्यः ] ॥ २४ ॥

स श्रीशंकरश्चतुर्भिर्भीषणैः श्वभिरनुवृत्तमन्त्यजं चाण्डालं मार्गमध्ये समीपे
गच्छेति तमन्त्यजं स्पष्टमुक्तवान्स चान्त्यज एनं शंकरं प्रत्युवाच ॥ २५ ॥

---

१ क. ख. घ. °ति ॥ २३ ॥ दिनं° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वितीयमनवद्यमसङ्गं
सत्यबोधसुखरूपमखण्डम् ॥
आमनन्ति शतशो निगमान्ता-
स्तत्र भेदकलना तव चित्रम् ॥ २६ ॥
दण्डमण्डितकरा धृतकुण्डाः
पाटलामवसनाः पटुवाचः ॥
ज्ञानगन्धरहिता गृहसंस्था-
न्वञ्चयन्ति किल केचन वेषैः ॥ २७ ॥
गच्छ दूरमिति देहमुताहो
देहिनं परिजिहीर्षसि विद्वन् ॥
भिद्यतेऽन्नमयतोऽन्नमयं किं
साक्षिणश्च यतिपुङ्गव साक्षी ॥ २८ ॥

---

यदुवाच तदाह—अद्वितीयमिति । तत्र दूरं गच्छेत्युक्तिरसंगता भेदाभावादित्याशयेनाऽऽह । 'एकमेवाद्वितीयम्' 'एष आत्माऽपहतपाप्मा' 'निरवद्यं निरञ्जनम्' । 'असङ्गो ह्ययं पुरुषः' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दम्' इत्यादिशतशो वेदान्ता अद्वितीयादिरूपमात्मानमामनन्ति तस्मिन्नात्मनि तव वेदान्तित्वेन प्रसिद्धस्य भेदकल्पनाऽस्तीत्यहो अत्याश्चर्यमित्यर्थः ॥ २६ ॥ [ अद्वितीयं त्रिविधपरिच्छेदशून्यम् । अनवद्यं निर्दोषम् । तथाऽसङ्गम् । द्वश्यसङ्गशून्यम् । सत्येत्यादि । सच्चिदानन्दस्वरूपमित्यर्थः । तथाऽखण्डं भेदविहीनम् । एतादृशं ब्रह्म । आमनन्ति पठन्तीत्यर्थः ] ॥ २६ ॥

तथाच भेदकलनावांस्त्वमप्येवंविधयतिपङ्क्तौ निविष्टोऽसीति द्योतयन्नाह—दण्डेनं मण्डिता अलंकृता हस्ता येषां ते धृतकमण्डलवः पाटलाऽऽभा येषां तथाभूतानि वस्त्राणि येषां पटवो वाचो येषां ते ज्ञानलेशेनापि विरहिताः किल केचन यतिवेषैर्गृहसंस्थान्वञ्चयन्ति ॥ २७ ॥ [ केचनेत्युक्त्या यद्यपि भवान्न तथा परंतु निरुक्तभेदभावनमहिम्ना तथैव भासीति सूच्यते ॥ २७ ] ॥

गच्छ दूरमिति शरीरं परित्यक्तुमिच्छस्युताऽऽत्मानमिति विकल्प्य दूषयति—गच्छ दूरमिति । विदुषस्तव नैतदुचितमिति ध्वनयन्संबोधयति—हे विद्वन्निति । तत्राऽऽद्यं प्रत्याह—अन्नमयादन्नमयं किं भिद्यते नैव भिद्यत इत्यर्थः । द्वितीयं प्रत्याह—साक्षिणश्च साक्षी नहि भिद्यते त्वमेतज्ज्ञातुं योग्योऽसीत्याशयेनाऽऽह—हे यतिपुंगवेति ॥ २८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणश्वपचभेदविचारः
प्रत्यगात्मनि कथं तव युक्तः ॥
बिम्बितेऽम्बरमणौ सुरनद्या-
मन्तरं किमपि नास्ति सुरायाम् ॥ २९ ॥
शुचिर्द्विजोऽहं श्वपच व्रजेति
मिथ्याग्रहस्ते मुनिवर्य कोऽयम् ॥
सन्तं शरीरेष्वशरीरमेक-
मुपेक्ष्य पूर्णं पुरुषं पुराणम् ॥ ३० ॥
अचिन्त्यमव्यक्तमनन्तमाद्यं
विस्मृत्य रूपं विमलं विमोहात् ॥
कलेवरेऽस्मिन्करिकर्णलोला-
कृतिन्यहंता कथमाविरास्ते ॥ ३१ ॥

---

प्रत्यगात्मनि भेदं दृष्टान्तेनापि निराचष्टे—ब्राह्मणश्वपचभेदविचारो देहेन्द्रि- नेकेभ्यो जडेभ्यश्च प्रातिलोम्येनाञ्चतीति प्रत्यक्स चासावात्मा च तस्मिंस्तवाद्वैतः युक्तो न कथमपीत्यर्थः । यथा गङ्गायां मदिरायां च प्रतिबिम्बितेऽम्बरमणौ किमपि नास्ति तद्वदित्यर्थः ॥ २९ ॥ [ नन्वहं ब्राह्मणस्त्वं तु चाण्डाल इति एव भेदः कथं युक्तिमात्रेणापह्नूयत इत्यत्राऽऽह—ब्राह्मणेति । देहभेद प्रागेव ध्वनितत्वादित्यभिसंधायाऽऽह—प्रत्यगिति । कथं तर्हि 'चैत्रो स्वर्गमाप्नोति मैत्रो ज्ञानेन मोक्षम्' इत्यादिव्यवहारव्यवस्थेत्याशङ्क्य प्रतिबिम्ब- चष्टे—बिम्बित इत्याद्युत्तरार्धेन ] ॥ २९ ॥

नन्वात्मनो भेदशून्यत्वेऽप्यतिपवित्रस्य ब्राह्मणशरीरस्यातिपापिष्ठस्यान्त्यज कथमभेद इति चेत्तत्राऽऽह—शुचिर्द्विजोऽहं हे श्वपच त्वं दूरं गच्छेति शरीरे कमशरीरं कालत्रये शरीसंबन्धविनिर्मुक्तमत एव पुराणं पुराऽप्यभिनवं पूर्णं पुरुषं सन्तमुपेक्ष्यायं मिथ्याभूत आग्रहस्तव को नायं तवोचितो यतो मुनिश्रेष्ठ शयवानाह—हे मुनिवर्येति । उपजातिवृत्तम् ॥ ३० ॥ [ शरीरेषु सन्तं तम् । अथाप्यशरीरम् । यतः—एकमद्वितीयम् । एतादृशं पूर्णं व्याप्तम् ] ॥

स्वस्वरूपं विस्मृत्य क्षणभङ्गुरे देहेऽहंताऽतीवानुचितेति बोधयन्नाह— मतः केनापि करणेन न व्यज्यत इत्यव्यक्तमत एवानन्तमत एवाऽऽद्यं

---

१ ख. ग. घ. °कृत्येक° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्यामवाप्यापि विमुक्तिपद्यां
जागर्ति तुच्छा जनसंग्रहेच्छा ।
अहो महान्तोऽपि महेन्द्रजाले
मज्जन्ति मायाविवरस्य तस्य ॥ ३२ ॥
इत्युदीर्य वचनं विरतेऽस्मि-
न्सत्यवाक्कृदनु विप्रतिपन्नः ।
अत्युदारचरितोऽन्त्यजमेनं
प्रत्युवाच स च विस्मितचेताः ॥ ३३ ॥
सत्यमेव भवता यदिदानीं
प्रत्यवादि तनुभृत्प्रवरैतत् ।
अन्त्यजोऽयमिति संप्रति बुद्धिं
संत्यजामि वचसाऽऽत्मविदस्ते ॥ ३४ ॥

---

मलशून्यं स्वस्वरूपं मोहादविवेकाद्विस्मृत्य गजकर्णवच्चञ्चलाकारेऽस्मिन्ननुभूयमाने कलेवरेऽहंभावः कथमाविरास्ते प्रकटी भवति विवेकिनां केनापि प्रकारेणास्याऽऽविर्भावो न युक्त इत्यर्थः ॥ ३१ ॥ [ अचिन्त्यमिति । चिन्तनानर्हम् । तत्र हेतुः—अव्यक्तं केनापि करणेन व्यञ्जनानर्हम् । तत्र हेतुः—अनन्तम् । तत्र हेतुः—आद्यम् । सर्वाधिष्ठानत्वादित्यर्थः । एतादृशम् । अत एव—विमलं दृश्यमलशून्यमिति यावत् । एतादृशं रूपं स्वस्वरूपं विमोहाद्विस्मृत्य शुकनलिकान्यायेनाननुसंधाय ] ॥ ३१ ॥

ननु यद्यप्येवं तथाऽपि लोकसंग्रहेच्छयेदं मयोक्तमिति चेत्तत्राऽऽह—विमुक्तिपद्यां विमुक्तिमार्गभूतां विद्यां प्राप्यापि तुच्छा जनसंग्रहेच्छा किं जागर्ति । अहो अत्याश्चर्यम् । मायाविनां वरस्य श्रेष्ठस्य तस्य परमात्मनो महतीन्द्रजाले भवदादयो महान्तोऽपि मज्जन्तीत्यर्थः ॥ ३२ ॥

एवमन्त्यजवचनमुदाहृत्य शंकरवाक्यमुदाहर्तुमाह—इति वचनमुक्त्वाऽस्मिन्नन्त्यजे विरामं गते सति ततः पश्चाद्विप्रतिपन्नोऽयमन्त्यजो भवति न भवतीति विप्रतिपन्नः सत्यवचनोऽत्युदारचरितो विस्मितचित्तः स च श्रीशंकर एनमन्त्यजं प्रत्युवाच । स्वागता वृत्तम् ॥ ३३ ॥ [ सत्येति । तत्राऽपि । अतीति । तथाऽपि । विस्मितेति । एतादृशः । स च श्रीमदाचार्योऽपि ] [ सत्यवाक्पदेनोक्तसंदेहवशाद्वक्ष्यमाणप्रत्युत्तरे संभ्रमान्मिथ्यावादो व्युदस्यते । अतीति । धीरत्वं ध्वन्यते ] ॥ ३३ ॥

यदुवाच तदाह—सत्यमिति—न त्वमन्त्यजः किंतु देहभृत्प्रवर इति सूचनाय संबोधनम् ॥ ३४ ॥ [ एवं—

---

१ ख. ग. °नास्या आवि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानते श्रुतिशिरांस्यपि सर्वे
मन्वते च विजितेन्द्रियवर्गाः ॥
युञ्जते हृदयमात्मनि नित्यं
कुर्वते न धिषणामपभेदाम् ॥ ३५ ॥

---

' कदाचिच्छंकराचार्यः काशीं प्रति पुरीं ययौ '

इत्यादिमनीषापञ्चकप्रसङ्गसंगतिसूचकप्रसिद्धाभियुक्तोक्तनदुक्तमिलितश्लोक-प्रपञ्चयाथ किमुवाचेत्याकाङ्क्षितं पूरयितुं—

' जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते '

इत्याद्याचार्योक्तमनीषापञ्चकमप्यर्थतः संक्षिपति—सत्यमेवेत्यादि पद्याभ्यां ] यदिदानीं प्रत्यवाद्युक्तमेतत्सत्यमेवेति संबन्धः । तत्र हेतुं वदंस्तत्फलमाह— इत्याद्युत्तरार्धेन । आत्मविद् इति हेतुगर्भं विशेषणम् । एतादृशात्ते वचसाऽधुना बुद्धिं संप्रति संत्यजामीति योजना ] ॥ ३४ ॥

भेदशून्यबुद्धेरतिदुर्लभत्वान्न कोऽप्युपालम्भनीय इत्याशयेनाऽऽह—सर्वेऽनेके वा रांसि श्रवणेन जानन्ति तथाऽनेके विजितेन्द्रियवर्गास्तानि मन्वते च मननं कुर्वन्ति न्तःकरणमात्मनि नित्यं युञ्जते निदिध्यासनं कुर्वन्ति तथाऽपि प्रतिबन्धकसद्भावात् बुद्धिं केऽपि न कुर्वन्तीत्यर्थः ॥ ३५ ॥ [ अयं भावः—पूर्वपद्ये सत्यमेवेत्य इति च पदैर्निरुक्ताद्वैतप्रतिपादनानुपपत्त्या स्वमप्यात्मविदेवासीति तु निर्विवादं यद्यपि विद्वद्विविदिषुसाधारणैकदण्ड्यादिपारमहंस्यरूपसंन्यासलिङ्गमात्रेणास्माकं त्वन्निर्णयाभावेऽपि वर्णाश्रमधर्मपरिपालनार्थं चाण्डालरूपधरं त्वां दृष्ट्वा दूरं गच्छेति श्रमाकर्ण्य भवता किमियमद्वैते ब्रह्मणि भेदबुद्धिरित्याद्याक्षेपः कृतः स त्वयोक्तः तथाऽपि निरुक्तरीत्या निर्णीतात्मानुभवस्य तव परमसद्वाक्यश्रवणोत्तरमुक्तो नैव जिका भेदबुद्धिस्त्वद्वचसैव सुतरामनुचितेत्यभिसंधायात्र सर्वपदं प्रयुक्तम् । तस्मात्तु

' यत्रोभयोः समो दोषः परिहारोऽपि वा भवेत् ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थे विपश्चिता '

इति न्यायाद्व्यवहारे भेदबुद्धिविरहस्यासंभवे विद्वदविद्वत्साधारण्येनैव सर्वोऽपि स्ववर्णाश्रमधर्ममात्रं लोकसंग्रहार्थं परिपालयति मय्येवोक्ताक्षेपः परमेश्वरत्वादेव रामिति ] ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाति यस्य तु जगद्दृढबुद्धेः
सर्वमप्यनिशमात्मतयैव ॥
स द्विजोऽस्तु भवतु श्वपचो वा
वन्दनीय इति मे दृढनिष्ठा ॥ ३६ ॥
या चितिः स्फुरति विष्णुमुखे सा
पुत्तिकावधिषु सैव सदाऽहम् ॥
नैव दृश्यमिति यस्य मनीषा
पुल्कसो भवतु वा स गुरुर्मे ॥ ३७ ॥
यत्र यत्र च भवेदिह बोध-
स्तत्तदर्थसमवेक्षणकाले ॥
बोधमात्रमवशिष्टमहं त-
द्यस्य धीरिति गुरुः स नरो मे ॥ ३८ ॥

---

ननु तिष्ठत्वन्येषां वार्ता तव बुद्धिरपभेदाऽस्ति न वेत्याशङ्क्याहमपभेदबुद्धिरित्युत्तरमनुचितं मन्यमानः ' नमो वयं ब्रह्मिष्ठाय कुर्मः ' इति याज्ञवल्क्योक्तिमनुसृत्य व्याजेन समाधत्ते—यस्य तु दृढबुद्धेः सर्वमपि जगत्सदैवाऽऽत्माव्यतिरिक्तं स ब्राह्मणोऽस्तु श्वपचो वा भवतु वन्दनीय इति मम दृढा निष्ठा ॥ ३६ ॥ [ दार्ढ्यमत्रासंभावनादिसंस्काराभावः ] ॥ ३६ ॥

न केवलं वन्दनीय एव किंत्वेवंविधः सम्यग्ज्ञानवान्साक्षान्मम गुरुरेवेत्याह—विष्णुशिवादौ या चितिश्चेतनं स्फुरति सैव पुत्तिका पतङ्गिका तदवधिषु जन्तुषु स्फुरति सैव कालत्रयेऽप्यहं दृश्यं तु नैवास्तीति यस्य मनीषा स चाण्डालो वा भवतु तथाऽपि मम गुरुः ॥ ३७ ॥ विष्णुमुखे विष्णुशिवादीश्वरलीलाविग्रहे या चितिर्ज्ञप्तिः स्फुरति भासते सैव पुत्तिकावधिषु ' पतङ्गिका पुत्तिका स्यात् ' इत्यमरात्पताङ्गिकाख्यातिसूक्ष्मजन्त्वन्तेषु सर्वेष्वपि जीवेष्वधिष्ठानत्वेनास्तीत्यर्थः । तथाऽहमपि सदा सैवास्मि । प्रतीयमाननामरूपात्मकं दृश्यं तु ' नेह नानाऽस्ति किंचन ' इत्यादिश्रुत्यादिबाधितत्वात्कालत्रयेऽपि नैवास्तीति यस्य मनीषा बुद्धिरस्ति स तु पुल्कसश्चाण्डालोऽपि वा भवतु तथाऽपि मे मम तु गुरुरेव ग्राह्यगुण एव कुररादिवदित्यन्वयः ] ॥ ३७ ॥

किं बहुना तत्त्ववित्सर्वोऽपि मम गुरुरित्याह—अस्मिँल्लोके तत्तद्विषयानुभवकाले यत्र यत्र विषये ज्ञानं भवेत्तत्सर्वं मिथ्याभूतं सर्वोपाधिबाधेनावशिष्टं ज्ञानमात्रमहमेव न मत्तः किमपि व्यतिरिक्तमस्तीति यस्य बुद्धिः स यः कश्चिदपि नरो मम गुरुः । एतेन गच्छ दूरमिति मया देहजिहीर्षया नोक्तं नाप्यात्मजिहीर्षयाऽपि तूभयतादात्म्याध्यासजिहीर्षया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाषमाण इति तेन कलावा-
नेष नैक्षत तमन्त्यजमग्रे ॥
धूर्जटिं तु समुदैक्षत मौलि-
स्फूर्जदैन्दवकलं सह वेदैः ॥ ३९ ॥
भयेन भक्त्या विनयेन धृत्या
युक्तः स हर्षेण च विस्मयेन ॥
तुष्टाव शिष्टानुमतः स्तवैस्तं
दृष्ट्वा दृशोर्गोचरमष्टमूर्तिम् ॥ ४० ॥

स च तव नास्ति चेत्तर्हि त्वमपि मम गुरुरेवेत्याक्षेपोऽपि परिहृतो वेदितव्यः
[ यत्र यत्रेति ।

'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'

इति श्रुतेः सकलमप्याकाशादिद्वैतजालमधिष्ठानीभूतसद्रूपभानपूर्वकमेव भा...
प्रारब्धपरिसमाप्त्यन्तं तत्तदर्थस्य घटादेः सम्यगधिष्ठानाद्विवेचनपूर्वकं ...
तस्य यः कालः क्षणस्तत्र यद्बोधमात्रमवशिष्टं बाधावधिभूतं भवति तद्ब्रह्म...
प्रमा यस्य स नरो जीवो मे गुरुस्तीति योजना ] ॥ ३८ ॥

एवं[1] निर्व्यलीकं भाषमाणस्त्यक्तान्त्यजविग्रहं प्रकटितस्वस्वरूपं महादेवं ...
इत्येवंप्रकारेण तेन सह भाषमाण एष श्रीशंकरस्तमन्त्यजमग्रे न ददर्श किंतु ...
स्फुरन्ती चन्द्रकला यस्य तं चतुर्भिर्वेदैः सहितं धूर्जटिं महादेवं संदृष्टवान् । ...
रादन्यस्य शिवस्याभावात्कथमेवमुच्यत इति चेत्तत्राऽऽह—कलावान्ज्ञानकला...
स्यावतारिपुरुषेण सह व्यासस्य विष्णुनेव संवादादिकं संभवत्येवेति भाव ॥ ...
तारीभूतस्यास्यावतारिणा सह वस्तुतो भेदाभावेऽप्यवच्छेदकोपाधिभेदाद्भिन्न...
निरीक्षणादिवत्प्रतिबिम्बस्य बिम्बायत्तचेष्टादित्वाच्च विष्ण्वादिना सह व्यासादेः...
समुचितमेवेति भावः ] ॥ ३९ ॥

दृष्ट्वा यथाभूतो यत्कृतवांस्तदाह—तं दृष्ट्वा भयेन भक्त्या विनयेन ...
विस्मयेन च युक्तः शिष्टानुगतः श्रीशंकरो नेत्रयोर्विषयमष्टौ भूम्याद्या ...
महादेवं स्तवैस्तुष्टाव । उपजातिवृत्तम् ॥ ४० ॥ भयेनेत्यादि । ...
दद्वैतबोधस्वभावान्मनुष्यशरीरौचित्याद्विचारपरिपाकात्सुप्रसन्नोक्तव्याक्ति...
श्वचतुष्टयविशिष्टश्वपचव्यक्तिविलोपनपूर्वकोक्तव्यक्तिसाक्षात्काराच्च यथा...
तभयभक्तिविनयधृतिहर्षविस्मयैर्युक्तः सन्नित्यर्थः । दृष्ट्वा दृशोर्गोचर...
डिण्डिमाहतोऽपि पौनरुक्त्यापादकत्वादुपेक्ष्य एव । किंतु दृशोर्गोचर...

1 ख. घ. 'वंभूतं नि°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दासस्तेऽहं देहदृष्ट्याऽस्मि शंभो
जातस्तेंऽशो जीवदृष्ट्या त्रिदृष्टे ॥
सर्वस्याऽऽत्मन्नात्मदृष्ट्या त्वमेवे-
त्येवं मे धीर्निश्चिता सर्वशास्त्रैः ॥ ४१ ॥
यदालोकादन्तर्बहिरपि च लोको वितिमिरो
न मञ्जूषा यस्य त्रिजगति न शाणो न च खनिः ॥
यतन्ते चैकान्तं रहसि यतयो यत्प्रणयिनो
नमस्तस्मै स्वस्मै निखिलनिगमोत्तंसमणये ॥ ४२ ॥

र्यक्तिकमष्टमूर्तिं श्रीशिवम्। शिष्टेति। शिष्टादीनां वसिष्ठादीनां वेदार्थधुरंधरीभूतानाम- नुमताः संमता ये स्तवास्तैर्द्वारीभूतैरित्यर्थः। *दृष्ट्याऽद्वैतात्मानुसंधानसंतत्येति यावत्। ष्टाव संतोषयामासेत्यर्थः ]॥ ४० ॥

देहदृष्ट्या तव दासोऽहमस्मि यतः शं सुखं भवत्यस्मादिति शंभुस्त्वमेव स्वामित्वगु- णयुक्त इति सूचयन्नाह—शंभो इति। जीवदृष्ट्याऽहं तवांशो जातः। ननु कथं निरवयवस्य ममांशस्त्वमिति चेद्यथा सर्वेन्द्रियशून्यस्यापि तव सूर्यचन्द्रवह्निलक्षणत्रिनेत्र- ग्रहवत्त्वं तथा मायया तवांशस्यापि संभवादित्याशयेन संबोधयति—त्रिदृष्ट इति। शुद्धात्मदृष्ट्या तु त्वमेव त्वदनन्य एवाहम्। तत्त्वमस्यादिश्रुतेः। तत्र योग्यं संबोधनं सर्वस्याऽऽत्मन्नितीत्येवंप्रकारेण सर्वशास्त्रैर्मे बुद्धिर्निश्चयं प्राप्ता। शालिनी वृत्तम् ॥ ४१ ॥ उक्तं हि—

'देहबुद्ध्या तु दासोऽहं जीवबुद्ध्या त्वदंशकः।
चितिबुद्ध्या त्वमेवाहमिति मे निश्चिता मतिः' इति ]॥ ४१ ॥

प्रसिद्धशिरोभूषणमणितो व्यतिरेकं दर्शयन्स्वाभिन्नं शिवं नमस्करोति—यदिति। प्रसिद्धस्य तादृशमणेरालोकाद्बहिरेव लोको वितिमिरो मञ्जूषा पेटा शाणो निकषः खनिश्च यतिमिरप्रार्थना प्रसिद्धस्य मणेः प्रसिद्धा। अत एतस्मादत्युत्कृष्टाय तस्मै त्वंपदलक्ष्याय निखिलनिगमशिरोभूषणमणये स्वस्मै त्वंपदलक्ष्याभिन्नाय नमः प्रह्वीभा- वोऽस्तु यस्य प्रकाशादन्तर्बहिरपि च लोको वितिमिरः। 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः। त्रिजगति यस्य मञ्जूषा नास्ति नापि शाणो नापि खनिर्यत्प्रणयिनो यस्मिन्प्रीतिमन्तश्च यतयो रहस्येकान्ते भृशं यतन्ते तस्मा इत्यर्थः। शिखरिणी वृत्तम्

* एतेन मूले दृष्ट्वेत्येतस्य स्थाने दृष्ट्येति पदं योग्यमिति ज्ञायते।

१ ग. पेटिका।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहो शास्त्रं शास्त्रात्किमिह यदि न श्रीगुरुकृपा
चिता सा किं कुर्यान्ननु यदि न बोधस्य विभवः।
किमालम्बश्चासौ न यदि परतत्त्वं मम तथा
नमः स्वस्मै तस्मै यदवधिरिहाऽऽश्चर्यधिषणा ॥

---

॥ ४१ ॥ [ यदालोकादिति । यस्य वक्ष्यमाणचिन्मणेरालोकः प्रकाशः ... श्रुतिवदत्राप्यभेदे सत्यप्यौपचारिक्येव षष्ठी ] ॥ ४१ ॥

गुरुकृपया शास्त्राल्लभ्यस्य तत्त्वज्ञानस्याऽऽलम्बनमखण्डैकरसं स्वतत्त्वं ... अहो शास्त्रं परमतत्त्वबोधकत्वाद्धन्यतमं यद्यप्येवंविधं शास्त्रं तथाऽपि यदि श्रीगुरु... ह्लोके शिष्ये वा न स्यात्तर्हि शास्त्रात्किं न किमपीत्यर्थः । चिता संचिता संपादिता ... कृपा किं कुर्यात्किं फलं दास्यति यदि तत्त्वज्ञानस्य विशेषेणोद्भवो नास्ति ... साऽपि निष्फलैवेत्यर्थः । तथाऽसौ बोधश्च किमालम्ब आलम्बनशून्य एव ... तत्त्वं न स्यात्तस्मात्तत्त्वज्ञानालम्बनभूताय परतत्त्वाय स्वाभिन्नाय तस्मै ... तथेत्यस्य तस्मादित्यर्थो वा । इह जगत्याश्चर्यबुद्धिर्यत्पर्यन्ता यस्मात्पर ... षयो नास्तीत्यर्थः । ॥ ४२ ॥ [ अहो इत्याश्चर्ये । तत्त्वमस्यादिशास्त्रमहो ... वेत्यर्थः । तथाचाऽऽहुः सदाचारप्रकरणे श्रीमदाचार्यचरणा एव—

'शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः ।
प्रसुप्तः पुरुषो यद्वच्छब्देनैवावबुध्यते '

इति । विस्तरस्तु ' आश्चर्यवत्पश्यति कश्चिदेनम् ' इत्यादिपद्ये गीताभाष्ये ... मेवावगन्तव्यः । एवं शास्त्रस्यैव किं तर्हि सर्वोत्कृष्टत्वम् । नेत्याह—शास्त्रा... [ . अधीतशास्त्राणामपि नारदादीनां सनत्कुमारादिगुरुप्रसादात्प्राक्शास्त्रात् ... किमपि फलमस्तीत्यन्वयः । तत्रापि पूर्ववदस्वरसं सूचयति—चितेत्यादिद्वितीयपादेन ... श्रीगुरुकृपा चिता संपादिताऽपि यदि ननु निश्चितं बोधस्यापरोक्षाद्वैतज्ञानस्य ... विभवो विशेषेणाप्रतिबद्धत्वेन भव आविर्भावो न चेत्तर्हि किं कुर्यान्न किमपी... दिति योजना । तथा हि—छान्दोग्येऽष्टमाध्याये प्रसिद्धमेतत्—इन्द्रविरोचनयोः ... कश्यपपुत्रत्वेन स्वप्रपौत्रयोरुभयोरात्मप्रतिपादकवाक्यश्रावणलक्षणा ब्रह्मणा गुरु... कृतैव तथाऽपि विरोचनो देहात्मवाद्येवाभूदिति । तस्मात्साऽपि विनोक्तबोधं निष्फ... लैवेति भावः । तत्राप्युक्तरीतिकमस्वरसं प्रागवदभिधत्ते—किमित्यादितुरीयपादेन ... रसः शान्तानुप्राणितः । एकावल्यलंकारः ] ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युदारवचनैर्भगवन्तं
संस्तुवन्तमथ च प्रणमन्तम् ॥
बाष्पपूर्णनयनं मुनिवर्यं
शंकरं सबहुमानमुवाच ॥ ४४ ॥
अस्मदादिपदवीमभजस्त्वं
शोधिता तव तपोधननिष्ठा ॥
बादरायण इव त्वमपि स्याः
सद्वरेण्य मदनुग्रहपात्रम् ॥ ४५ ॥
संविभज्य सकलश्रुतिजालं
ब्रह्मसूत्रमकरोदनुशिष्टः ॥
यत्र काणभुजसांख्यपुरोगा-
ण्युद्धृतानि कुमतानि समूलम् ॥ ४६ ॥
तत्र मूढमतयः कलिदोपा-
द्बित्रवेदवचनोद्दलितानि ॥
भाष्यकाण्यरचयन्बहुबुद्धै-
र्दूष्यतामुपगतानि च कांश्चित् ॥ ४७ ॥

एवं स्तुवन्तं श्रीशंकरं प्रति[1] श्रीमहादेवो यदुक्तवांस्तद्दर्शयितुमाह—इतीति । स्वागता वृत्तम् ॥ ४४ ॥ [ बाष्पपदेनात्र सात्त्विकभावः सूचितः ] ॥ ४४ ॥

यदुवाच तदाह—अस्मदादीति । अभजः प्राप्तवानसि हे सतां मध्ये श्रेष्ठ व्यास इव त्वमपि मदनुग्रहपात्रं स्या इत्याशीर्वादः ॥ ४५ ॥ [ यतस्तव निष्ठा प्रज्ञापरकाष्ठा । शोधिताऽन्विष्टा । मयोक्तलील्येति शेष आर्थिकं वा । अतस्त्वम् । अस्मदादीति । अभजः प्राप्तवानसीत्यन्वयः ] ॥ ४५ ॥

सूत्रभाष्यरचने नियोक्तुमुपक्रमते । अनुशिष्टः सम्यक्शिक्षितोऽनु पश्चाच्छिष्टा यस्मादिति वा स सर्वशिष्टाग्रणीर्वेदव्यासो वेदकदम्बं सम्यग्विभज्य ब्रह्माखण्डैकरसं सूच्यते यत्र तत्तथा । 'अथातो ब्रह्मजिज्ञासा' 'जन्माद्यस्य यतः' 'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्' इत्येवमादिरूपमकरोच्छिष्टोऽनु पश्चादकरोदिति वा । यत्र ब्रह्मसूत्रे काणादसांख्यपातञ्जलप्रभृतीनि कुमतानि समूलमून्मूलितानि तत्रेतिपरेणान्वयः ॥ ४६ ॥ [ संविभज्य किल कर्मादिपरत्वेन सम्यगुपक्रमादिषोढालिङ्गानुगृहीततात्पर्यनिर्णयपूर्वकं विभागं पूर्वोत्तरकाण्डयोः कृत्वैवेत्यर्थः ] ॥ ४६ ॥

तत्र ब्रह्मसूत्रे मूढमतयः कलिदोषाद्द्वाभ्यां[2] त्रिभिर्वा वेदवचनैरुद्दलितान्युपकृतानि

१ क. 'ति म' । २ क ख. 'नि न' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्भवान्विदितवेदशिखार्थ-
स्तानि दुर्मतिमतानि निरस्य ॥
सूत्रभाष्यमधुना विदधातुं
श्रुत्युपोद्बलितयुक्त्यभियुक्तम् ॥ ४८ ॥
एतदेव विबुधैरपि सेन्द्रै-
रर्चनीयमनवद्यमुदारम् ॥
तावकं कमलयोनिसभाया-
मप्यवाप्स्यति वरां वरिवस्याम् ॥ ४९ ॥
भास्कराभिनवगुप्तपुरोगा-
न्नीलकण्ठगुरुमण्डनमुख्यान् ॥
पण्डितानथ विजित्य जगत्यां
ख्यापयाद्वयमते परतत्त्वम् ॥ ५० ॥

---

भाष्यकाणि कुत्सितभाष्याण्यरचयन्कृतवन्तः कैश्चिद्बहु बुद्धं ज्ञातं यैस्तैर्दुर्मतानि ॥ ४७ ॥

तत्तस्माद्विदितो वेदान्तानामर्थो येन तथाभूतो भवांस्तानि कुबुद्धीनां मतानि सूत्रभाष्यं विदधातु । विधौ लोट् । भाष्यलक्षणं तु–

' सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः '

इति । सागरादिवर्णनस्य भाष्यत्वव्यावृत्तये सूत्रमित्युक्तं वार्तिकस्य तद्व्यावृत्तये सूत्रानुकारिभिरिति वृत्तेस्तत्त्वव्यावृत्त्यर्थमुक्तं स्वपदानीति । इतरभाष्येभ्य उत्कर्षाय विशिनष्टि । समग्रश्रुतिभिरुद्बलिताभिर्युक्तिभिरासमन्ताद्युक्तम् ॥ ४८ ॥

ननु मया क्रियमाणं भाष्यमपि केषांचिदनादरास्पदं स्याच्चेत्तर्हि किमर्थं कर्तव्यं चेत्तत्राऽऽह—एतदेव तावकं भाष्यमिन्द्रसहितैर्देवैरप्यर्चनीयं भविष्यत्यपि किमन्यैरर्चनीयं भविष्यतीति किमु वक्तव्यं यतो निर्दोषमुदारं च न केवलं सेन्द्रैर्देवैरर्चनीयं भविष्यत्यपि तु चतुर्मुखसमायामपि श्रेष्ठां पूजां प्राप्स्यतीत्यर्थः ॥ ४९ ॥
[ काव्यार्थापत्तिरलंकारः ] ॥ ४९ ॥

किंच भास्करो भेदाभेदवाद्यभिनवगुप्तः शाक्तो नीलकण्ठो भेदवादी प्रभाकरो मण्डनमिश्रो भाट्टमतानुयाय्येतदादीन्पण्डितानथ भाष्यकरणानन्तरं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोहसंतमसवासरनाथा-
स्तत्र तत्र विनिवेश्य विनेयान् ॥
पालनाय परतत्त्वसरण्या-
मामुपेष्यसि ततः कृतकृत्यः ॥ ५१ ॥

एवमेनमनुगृह्य कृपावा-
नागमैः सह शिवोऽन्तरधत्त ॥
विस्मितेन मनसा सह शिष्यैः
शंकरोऽपि सुरसिन्धुमयासीत् ॥ ५२ ॥

संनिवृत्य विधिमाह्निकमीशं
ध्यायतो गुरुमथाखिलभाष्यम् ॥
कर्तुमुद्यतमभूद्गुणसिन्धो-
र्मानसं निखिललोकहिताय ॥ ५३ ॥

कर्तृत्वशक्तिमधिगम्य स विश्वनाथा-
त्काशीपुरान्निरगमत्स्वविकासभाजः ।
प्रीतः सरोजमुकुलादिव चञ्चरीक-
निर्बन्धतः सुखमवाप यथा द्विजेन्द्रः ॥ ५४ ॥

---

पृथिव्यामद्वयमते परतत्त्वं स्थापयाद्वयबुद्ध इति संबोधनं परतत्त्वं परब्रह्मतत्त्वमिति वा ॥ ५० ॥

किंच मोहलक्षणसंतमसभानून्शिष्यांस्तस्मिंस्तस्मिन्देशे परतत्त्वसरण्याः पालनाय संस्थाप्य तदनन्तरं कृतमवतारकृत्यं येन स मामुपेष्यसि ॥ ५१ ॥ [ मोहेति । मोहोऽज्ञानमेव संतमसं. ' विष्वक्संतमसम् ' इत्यमरादतिप्रसृततिमिरमित्यर्थः ॥ ५१ ॥

एवमेनं श्रीशंकरमनुगृह्य कृपावान्शिवो वेदैः सहान्तर्धानमगात् । शंकरोऽपि विस्मय-युक्तेन मनसा शिष्यैः सह स्वर्णदीं गङ्गां प्रत्यगच्छत् ॥ ५२ ॥

आह्निकविधिं संनिवृत्य गुरुमीशं महादेवं ध्यायतो गुणसमुद्रस्य श्रीशंकरस्य मानसं सर्वलोकहिताय सम्यगुद्यैतमुद्युक्तमभूत् ॥ ५३ ॥ [ अखिलभाष्यं सूत्रभाष्यादिषोडशभाष्यनिकुरम्बम् । निखिलेति । सर्वजनजीवन्मुक्त्याद्यर्थम् ] ॥ ५३ ॥

स विश्वनाथात्कर्तृत्वशक्तिं प्राप्य प्रीतः सन्विकासमानः काशीपुरान्निरगमत् । चञ्चरीकनिर्बन्धतो गन्धलुब्धभ्रमरनिर्बन्धनरूपात्सरोजमुकुलादिवेति पूर्णोपमा यथा पक्षिणामिन्द्रो हंसो निर्गत्य सुखमाप्नोति तथाऽयं ब्राह्मणेन्द्रः सुखं प्राप । प्रत्यवयव-

---

१ ख. °त्त्वं परं यथार्थं स्था° । २ क. ग. °नं वा । ३ ख. घ. °द्यमयुक्त° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वैतदर्शनविदां भुवि सार्वभौमो
यात्येष इत्युडुपबिम्बसितातपत्रम् ॥
अस्ताचले वहति चारु पुरःप्रकाश-
व्याजेन चामरमधादिव दिक्सुकान्ता ॥ ५५ ॥

शान्तां दिशं देवनृणां विहाय
नान्या दिगस्मै समरोचताद्धा ॥
तत्रत्यतीर्थानि निषेवमाणो
गन्तुं मनोऽधाद्बदरीं क्रमात्सः ॥ ५६ ॥

तेनान्ववर्ति महता क्वचिदुष्णशालि
शीतं क्वचित्क्वचिदृजु क्वचिदप्यरालम्
उत्कण्टकं क्वचिदकण्टकवत्क्वचिच्च
तद्वर्त्म मूर्खजनचित्तमिवाव्यवस्थम् ॥ ५७ ॥

---

मुपमावाचकोपादानादनेकेवेयमुपमा । वसन्ततिलका वृत्तम् ॥ ५४ ॥ द्विजेन्द्रो [illegible] ब्राह्मणश्रेष्ठश्चर्चरीकनिर्बन्धतः सुगन्धलुब्धमधुकरनिर्बन्धनरूपात्सरोजमुकुलादिव । [illegible] समाजो मरणोत्तरं जीवो द्वैतप्रपञ्चाविकासं यत्र नानुभवति तादृशात्कार[illegible] गमत् ] ॥ ५४ ॥

भुव्यद्वैतशास्त्रविदां सार्वभौमो यश्चक्रवर्त्येष श्रीशंकरो गच्छतीत्यतश्चन्द्र[illegible] श्वेतच्छत्रमस्ताचले वहति सति पुरःप्रकाशव्याजेन दिक्सुकान्ता दिग्लक्षणा [illegible] चामरं व्यधादिव पाठान्तरे मुखेन दिग्व्यधादिति व्याख्येयम् ॥ ५५ ॥ [ [illegible] दिशः प्राच्या मुखीभूतश्चासाविनः सूर्यश्चेति तथोदयार्क इत्यर्थः । चारु रम्यं यथा [illegible] पुरोऽग्रे प्रकाशव्याजेनाऽऽलोकच्छलेन । चामरमधादिव चामरमेव किं कृतवा[illegible] अत्र रूपकलुप्तोपमाकैतवापह्नुतिपरिकरोत्प्रेक्षा अलंकाराः ] ॥ ५५ ॥

देवनराणां शान्तामुत्तरां दिशं विहायान्या दिगस्मै साक्षान्न समरोचत । [illegible] उत्सृजत्येषा वै देवमनुष्याणां 'शान्ता दिक्' इति श्रुतेः । तस्मात्तत्रत्यतीर्थानि [illegible] क्रमाद्बदरीं गन्तुं स मनोऽधात् । इन्द्रवज्रा वृत्तम् ॥ ५६ ॥

क्वचिदुष्णशालि क्वचिच्छीतं क्वचिदृजु क्वचित्कुटिलम् ।
'अरालं कुटिले सर्जरसे समददन्तिनि'

---

* दिक्सुकान्तेत्यत्र दिङ्मुखेन इति पाठानुसारेणेदम् ।

---

१ क. ख. घ. °नेकैवे° । २ घ. °स्मकश्चे° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मानमक्रियमपव्ययमीक्षिताऽपि
पान्थैः समं विचलितः पथि लोकरीत्या ॥
आदत्फलानि मधुराण्यपिबत्पयांसि
प्रायादुपाविशदशेत तथोदतिष्ठत् ॥ ५८ ॥

तेन व्यनीयत तदा पदवी दवीय-
स्यासादिता च बदरी वनपुण्यभूमिः ॥
गौरीगुरुस्रवदमन्दझरीपरीता
खेलत्सुरीयुतदरी परिभाति यस्याम् ॥ ५९ ॥

स द्वादशे वयसि तत्र समाधिनिष्ठै-
र्ब्रह्मर्षिभिः श्रुतिशिरो बहुधा विचार्य ॥
षड्भिश्च सप्तभिरथो नवभिश्च खिन्नै-
र्भव्यं गभीरमधुरं फणति स्म भाष्यम् ॥ ६० ॥

---

इति मेदिनी। क्वचिदूर्ध्वमुखकण्टकयुक्तं क्वचिच्च कण्टकविनिर्मुक्तं मूर्खजनचित्तवद्व्यवस्था-र्जितं वर्त्म पन्थास्तेन महताऽन्ववर्त्यनुसृतम्। वसन्ततिलका वृत्तम् ॥ ५७ ॥ [उदिति। ऊर्ध्वमुखाः कण्टका यत्र पक्ष उत्कटाः कण्टका इव दुःखदत्वात्कण्टकाः कामक्रोधादयोऽ-न्तःशत्रवो यत्र तत्तथेत्यर्थः। पूर्णोपमालंकारः] ॥ ५७ ॥

अक्रियमव्ययमात्मानमीक्षिताऽपि पान्थैः सह विचलितः सन्मार्गे लोकरीत्या मधुराणि फलान्यादत्। भक्षणार्थस्याद्धातोर्लङि 'अदः सर्वेषाम्' इत्यपृक्तसार्वधातुकस्याडागमे रूपम्। मधुराणि जलान्यपिबत्। प्रायाद्गमनं कृतवानुपाविशदुपविष्टवानशेत शयनं कृतवां-स्तथोदतिष्ठदुत्थानं कृतवानित्यर्थः ॥ ५८ ॥

दवीयसी पदवी तेन व्यनीयत सुदूरं वर्त्मातिक्रान्तवान्वनपुण्यभूमिर्बदर्यासादिता च गौरीगुरोर्हिमालयात्स्रवन्तीभिरमन्दझरीभिर्व्याप्ता यस्यां बदर्यां खेलन्तीभिः सुराङ्गनाभिर्युक्ता दरी परिभाति ॥ ५९ ॥ [बदरीति। बदरीप्रधानं यद्वनं तल्लक्षणा या पुण्यभूमिः व्यासाश्रमत्वादिनाऽतिपवित्रपृथ्वीत्यर्थः] ॥ ५९ ॥

स श्रीशंकरो द्वादशे वयसि तत्र बदर्यां समाधिनिष्ठैः षड्भिः

'क्षुत्पिपासे जरामृत्यू शोकमोहौ षडूर्मयः'

इत्युक्तषडूर्मिभिस्तथा त्वक्चर्ममांसास्थिमेदोमज्जारेतोभिः सप्तधातुभिः पञ्चज्ञानेन्द्रियाणि चत्वार्यन्तःकरणानीति नवभिश्च ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकमन्तःकरणचतु-ष्टयं सगुणभूतपञ्चकं प्रकृत्यष्टकं वाऽविद्या कामः कर्मवासना चेति नवभिरिति वा द्वारैर्वा

---

१ ख. ग. दुस्थितिं कृ°। २ क. कर्मोपास°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करतलकलिताद्वयात्मतत्त्वं
क्षपितदुरन्तचिरन्तनप्रमोहम् ॥
उपचितमुदितोदितैर्गुणौघै-
रुपनिषदामयमुज्जहार भाष्यम् ॥ ६१ ॥

ततो महाभारतसारभूताः
स व्याकरोद्भागवतीश्च गीताः ॥
सनत्सुजातीयमसत्सुदूरं
ततो नृसिंहस्य च तापनीयम् ॥ ६२ ॥

नवभिर्ये खिन्नास्तैर्ब्रह्मर्षिभिर्वेदान्तं बहुधा विचार्य भव्यं शुभं गम्भीरं च तन्मु… फणति स्म षड्भिश्च सप्तभिरथो नवभिश्च खिन्नै र्भव्यं योग्यमिति वा ।

'भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु'

इति मेदिनी ॥ ६० ॥ [ षड्भिश्चार्वाकार्हतसौत्रान्तिकवैनाशिकवैभाषिक… षड्भिर्नास्तिकषड्दर्शनीकारैः । तथा सप्तभिः । गौतमकणादकापिलपतञ्जलि… कषष्ठदर्शनीकारैस्तथा सांख्यैकदेशिशाक्तादिमीमांसकैकदेशिभास्करादिभ्यां … ख्याकैरित्यर्थः । अथो नवभिर्जीवेश्वरभेदेश्वरजगद्भेदजीवपरस्परभेदजगत्पारस्परिक… दाविद्याकामकर्मवासनाख्यनवपदार्थैरिति यावत् । खिन्नैः खण्डितत्वात्खेदं … भव्यमतिरमणीयमिति यावत् । एतादृशम् । तत्रापि । गभीरेति । … हार्यं मधुरं शब्दतः परममञ्जुलं रमणीयतममिति यावत् । एतादृशं भा… त्यर्थः । भणति स्म रचयामासेति संबन्धः ] ॥ ६० ॥

उपनिषदामपि भाष्यं कृतवानित्याह—करतले कलितं प्रकाशितमात्मतत्त्वं… दुरन्तश्चिरन्तनोऽनादिभूतो मोहो येनेदं प्राप्तैरुक्तगुणौघैरुपचितं युक्तम् । … दुःखानि निश्चयेन निपादयति' विसारयति शिथिलयति परं च ब्रह्म प्र… गमयति सर्वानर्थमूलभूतामविद्यामत्यन्तमवसादयत्युन्मूलयतीत्युपनिषद्ब्रह्मवि… कानामीशकेनकठप्रश्नमुण्डकमाण्डूक्यतैत्तिरीयैतरेयच्छान्दोग्यबृहदारण्याख्या… भाष्यमुज्जहार कृतवान् । पुष्पिताग्रा वृत्तम् ॥ ६१ ॥ [ गुणौघैरुपक्रमादिता… विचारयुक्तिविशेषसंघैरित्यर्थः ] [ भाष्यं केनोपनिषदि पदवाक्यभेदेन भाष्य… द्वाभेदभिन्नमित्यर्थः ] ॥ ६१ ॥

ततस्तदनन्तरं महाभारतस्य निखिलवेदार्थप्रकाशकस्य सारभूता… व्याख्यातवांस्ततो भारतस्यसनत्सुजातीयमसतां सुदूरमलभ्यं ततश्च … करोत् । उपजातिवृत्तम् ॥ ६२ ॥ [ अथ गीताभाष्यविष्णुसहस्र…

१ प. °ति खि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रन्थानसंख्यांस्तदनूपदेश-
सहस्रिकादीन्व्यदधात्सुधीड्यः ॥
श्रुत्वाऽर्थविध्यानविवेकपाशा-
न्मुक्ता विरक्ता यतयो भवन्ति ॥ ६३ ॥
श्रीशंकराचार्यरवावुदेत्य
प्रकाशमाने कुमतिप्रणीताः ॥
व्याख्यान्धकाराः प्रलयं समीयु-
र्दुर्वादिचन्द्रप्रभयाऽवियुक्ताः ॥ ६४ ॥
अथ व्रतीन्दुर्विधिवद्विनेया-
नध्यापयामास स नैजभाष्यम् ॥
तर्कैः परेषां तरुणैर्विवस्व-
न्मरीचिभिः सिन्धुवदप्रशोष्यम् ॥ ६५ ॥

---

करोदिति श्लेषेणाऽऽह—तत इत्युपजात्यर्धेन ] [ भागवतीर्भगवत्संबन्धिनीः । जन्यजन-कभावेन भगवद्गीताः । सहस्रनामपक्षे प्रतिपाद्यप्रतिपादकभावसंबन्धेनैव तथात्वं बोध्यम् । पक्षे गीता भीष्मादिभिर्भक्तैर्गानकर्मीकृता 'विश्वं विष्णुः' इत्याद्या आख्या इत्यर्थः । एतत्समुच्चायक एव चकारः । अवशिष्टार्धेन सनत्सुजातभाष्यं नृसिंहपूर्वतापनीयभाष्यमप्य-करोदित्याह—[ सनत्सुजातीयमिति ] [ असदिति । असतामनधिकारिणां सुदूरमतिदुर्लभार्थकमित्यर्थः ] ॥ ६२ ॥

तदनु ततः पश्चादुपदेशसहस्रिकादीनसंख्यातान्ग्रन्थान्सुधीभिः स्तुत्यः परमार्थज्ञः श्रीशं-करो व्यदधात् । यान्ग्रन्थाञ्श्रुत्वा विरक्ता यतयोऽविवेकपाशान्मुक्ता भवन्ति ॥ ६३ ॥

श्रीशंकराचार्यसूर्ये उदयं प्राप्य प्रकाशमाने सति दुर्वादिचन्द्रप्रभयाऽवियुक्ताः सहिताः कुबुद्धिभिः प्रणीता व्याख्यान्धकाराः सम्यग्लयं प्रापुः ॥ ६४ ॥ दुर्वादीति । दुर्वाद्येव भेदवाद्येव कलङ्कित्वदोषाकरत्वादिसाधर्म्याच्चन्द्रस्तस्य या प्रभा तयेति यावत् । अवियुक्ताः सन्त इत्यर्थः । एवं च न केवलं भेदवादिनां ग्रन्था एव नष्टाः किंतु कीर्तिरपीत्याकूतम् । प्रलयं ध्वंसम् । समीयुः पुनरुन्मज्जनाभावपूर्वकमेव विनाशं प्रापुरित्यन्वयः ] [ रूपकादिरलं-कारः ] ॥ ६४ ॥

अथानन्तरं परेषां वादिनां तर्कैस्तरुणैः सूर्यकिरणैः समुद्रवच्छोषयितुमशक्यं स्वीयं भाष्यं स व्रतीन्दुर्विधिवच्छिष्यानध्यापयामास ॥ ६५ ॥ [ व्रतिनामहिंसादिव्रतशालिनां परमहं-सानामिन्दुरिव शान्त्यानन्दजनकत्वाच्चन्द्र इत्यर्थः ] [ रूपकमुपमा चालंकारः ] ॥ ६५ ॥

---

१ घ. स्वीयभा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजशिष्यहृदब्जभास्वतो
गुरुवर्यस्य सनन्दनादयः ॥
शमपूर्वगुणैरशुश्रुव-
न्कतिचिच्छिष्यगणेषु मुख्यताम् ॥ ६६ ॥

स नितरामितराश्रवतो लस-
न्नियममद्भुतमाप्य सनन्दनः ॥
श्रुतनिजश्रुतिकोऽप्यभवत्पुनः
पिपठिषुर्गहनार्थविवित्सया ॥ ६७ ॥

अद्वंद्वभक्तिममुमात्मपदारविन्द-
द्वंद्वे नितान्तदयमानमना मुनीन्द्रः ॥
आम्नायशेखररहस्यनिधानकोश-
मात्मीयकोशमखिलं त्रिरपाठयत्तम् ॥ ६८ ॥

---

निजशिष्यहृदयकमलभानोर्गुरुवर्यस्य शिष्यगणेषु मुख्यतां केचित्सनन्दनादयः गुणैरशुश्रुवन्नभ्यस्तवन्तः । वियोगिनी वृत्तम् ॥ ६६ ॥ [ शमेति । शमादि निवृत्तिधर्मैरित्यर्थः ] ॥ ६६ ॥

स सनन्दन इतराश्रवत इतरेभ्य आश्रवेभ्यो वचनस्थितेभ्यः शिष्येभ्यः ।

‘ आश्रवोऽङ्गीकृतौ क्लेशेनान्यवद्वचनस्थिते ’

इति मेदिनी । नितरां लसन्सम्श्रुता निजश्रुतिः स्ववेदो येन स तथाविधोऽपि विज्ञानेच्छयाऽद्भुतं नियमं प्राप्य पुनः पठनेच्छुरभवत् । इतराश्रवतोऽद्भुतं माप्येति वा । द्रुतविलम्बितं वृत्तम् ॥ ६७ ॥ [ श्रुतेति । आकर्णितस्ववेदोऽपीति यावत् । गहनेति । स्वशाखानुक्तत्वेन गूढार्थजिज्ञासयेत्यर्थः । अद्भुतम् । ‘ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ’ इति पातञ्जलसूत्रोक्तपञ्चविधनियमानां मध्येऽन्तिमस्येश्वरप्रणिधानस्यैवाऽऽरादुपकारकत्वात्प्राधान्येन शान्यायेन तन्मात्रान्तर्भावाच्च स्वाभिन्नत्वेनेश्वरध्यानरूपमित्यर्थः ] [ निदिध्यासनध्यानकालेतरकालावच्छेदेन भूयः पठनेच्छुरिति यावत् । अभवदिति संबन्धः ]

आत्मपदारविन्दयुगलेऽद्वंद्वा रागद्वेषादिद्वंद्वविनिर्मुक्ता भक्तिर्यस्य तम् नितान्तमत्यन्तं दयमानं दयां कुर्वाणं मनो यस्य स मुनीन्द्रो वेदान्तरहस्यापनं तस्य कोशं पात्रमात्मीयग्रन्थं सर्वं त्रिरपाठयत्त्रिवारं पाठितवान् । वसन्ततिलका वृत्तम् ॥ ६८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईर्ष्याभराकुलहृदामितराश्रवाणां
प्रख्यापयन्ननुपमामदसीयभक्तिम् ॥
अभ्रापगापरतटस्थममुं कदाचि-
दाकारयन्निगमशेखरदेशिकेन्द्रः ॥ ६९ ॥
संतारिकाऽनवधिसंसृतिसागरस्य
किं तारयेन्न सरितं गुरुपादभक्तिः ॥
इत्यञ्जसा प्रविशतः सलिलं द्युसिन्धुः
पद्मान्युदञ्चयति तस्य पदे पदे स्म ॥ ७० ॥
पाथोरुहेषु विनिवेश्य पदं क्रमेण
प्राप्तोपकण्ठममुमप्रतिमानभक्तिम् ॥
आनन्दविस्मयनिरन्तनिरन्तरोऽसा-
वाश्लिष्य पद्मपदनामपदं व्यतानीत् ॥ ७१ ॥
तं पाठयन्तमनवद्यतमात्मविद्यां
ये तु स्थिताः सदसि तत्त्वविदां सगर्वाः ॥
आचिक्षिपुः कुमतपाशुपताभिमानाः
केचिद्विवेकविटपोग्रदवायमानाः ॥ ७२ ॥

---

ईर्ष्याभरेणाऽऽकुलं हृदयं येषामितराश्रवाणां सतां मध्ये वाऽनुपमाममुष्य सनन्दनस्य भक्तिं प्रख्यापयन्नभ्रापगाऽऽकाशनदी गङ्गा ।

'अभ्रं मेघे च गगने धातुभेदे च काञ्चने'

इति मेदिनी । तस्याः परतटस्थममुं सनन्दनं कदाचिद्वेदान्तदेशिकेन्द्र आहूतवान् ॥६९॥ [ अथान्येषामन्तेवासिनां तद्विषयकेर्ष्यां प्रशमयितुं कदाचिद्गङ्गायाः परतीरस्थं तमाचार्यः स्वनिकटागमनार्थमाकारयामासेत्याह—ईर्ष्येत्यादि ] ॥ ६९ ॥

अनवधिसंसारसागरस्य संतारिका गुरुचरणभक्तिर्नदीं किं न संतारयेदपि तु तारयेदे-वेति विचार्य शीघ्रमेव जलं प्रविशतस्तस्य गुरुभक्तस्य पदे पदे गङ्गा पद्मान्युदञ्चयति स्मोज्जृम्भयामास ॥ ७० ॥

जलरुहेषु क्रमेण पदं विनिवेश्य प्राप्तसमीपं तममुमनुपमभक्तिमानन्दविस्मयाभ्यां निर-न्तनिरन्तरोऽत्यन्तं परिपूर्णोऽसावालिङ्ग्य पद्मपादेतिनामपदं व्यतानीद्विस्तारितवान् ॥ ७१ ॥

अनवद्यतमामात्मविद्यां पाठयन्तं तं श्रीशंकरं तत्त्वविदां सदसि ये तु केचित्सगर्वाः कुमते पाशुपतेऽभिमानो येषां विवेकलक्षणस्य वृक्षस्याग्रे दावाग्निवदाचरन्तः स्थितास्ते चिक्षिपुराक्षेपान्कृतवन्तस्तथाहि कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः, पशुप-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्विकल्पनमनल्पमनीषः
श्रुत्युदाहरणतः स निरस्य ॥
ईषदस्तमितगर्वभराणा-
मागमानपि ममन्थ परेषाम् ॥ ७३ ॥

तिनेश्वरेण मोक्षायोपदिष्टास्तत्र कार्यं महदादि कारणं प्रधानं योगः समाधिर्विधिस्त्रिषवण-स्नानादिर्दुःखान्तो मोक्षः प्रधानमुपादानकारणं पशुपतिरीश्वरो निमित्तकारणम् । 'स ईक्षांचक्रे स प्राणमसृजत' इत्यादिश्रुतिष्वीक्षापूर्वककर्तृत्वश्रवणात् । ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम् । अनेककारकपूर्वविकायाश्च क्रियायाः फलसिद्धि-र्लोके दृष्टा स च न्याय आदिकर्तर्यपि संक्रामयितुं युक्तः । किंच यथेश्वराणां राजवैवस्-तादीनां निमित्तकारणत्वमेव केवलं प्रतीयते तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव । किंच सावयवमचेतनमशुद्धमिदं जगत्तन्नानेवंलक्षणब्रह्मोपादानकं संभवति रुचकादीनां मृद्विकारत्व-दर्शनात् । अपिच यदि दुःखमोहाद्यात्मकं कार्यं ब्रह्मोपादानकं स्यात्तर्हि प्रलये स्वोपा-दानेन ब्रह्मणाऽविभागमापद्यमानं कारणमात्मीयेन दोषेण दूषयेदतोऽसमञ्जसमिदं जगतो ब्रह्मोपादानकत्वकल्पनम् । तस्मात्कारणश्रुतयः पशुपतेरीश्वरस्य निमित्तकारणत्वबोधिका इत्यवश्यमास्थेयमिति । वसन्ततिलका वृत्तम् ॥ ७२ ॥

नैतत्सारं ब्रह्मणो भिन्ननिमित्तोपादानत्वस्वीकारे प्रतिज्ञादृष्टान्तयोरनुपरोधात् । प्रतिज्ञा तावत् 'उत तमादेशमप्राक्ष्यः' 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञा-तम्' इति । यदि ब्रह्मोपादानं न स्यात्तर्हीयं प्रतिज्ञोपरुध्येत कार्यव्यतिरिक्तनिमित्तका-रणविज्ञानेन तत्कार्यज्ञानादर्शनात् । दृष्टान्तोऽपि यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्युपादानगोचर एवाऽऽ-म्नायते निमित्तत्वं त्वधिष्ठात्रन्तराभावादधिगन्तव्यम् । प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधा-रणात् । अन्यथा प्रतिज्ञादृष्टान्तोपरोधस्य स्पष्टत्वात् । किंच 'सोऽकामयत बहु स्यां प्रजायेय' इति । तदैक्षत बहु स्यां प्रजायेय' इति च श्रुत्या परमात्मन एव कर्तृत्वं प्रकृ-तित्वं च निश्चीयते । अत्यन्तसादृश्यं तूपादानोपादेययोर्नापेक्षितं गोमयवृश्चिकयोर्देहके-शयोश्च तददर्शनात् । नापि कार्यस्य ब्रह्मदूषकता घटादिविकाराणां कारणेनाविभागमाप-न्नानां दूषकत्वादर्शनात् । किंच कार्यस्य कारणानन्यत्वं न प्रलय एवापि तु स्थिति-कालेषु 'आत्मैवेदं सर्वं ब्रह्मैव सर्वम्' इत्यादिश्रुतेः । कार्यस्य कारणानन्यत्वेऽपि यथा मरीच्युदकेनोषरदेशः कदाऽपि न संस्पृश्यते तथा परमात्माऽपीत्येवं श्रुतीनामुदा-हरणतस्तेषां विकल्पनमनल्पबुद्धिः स श्रीशंकरो निरस्य किंचिच्छान्तगर्वातिशयानां परेषां पाशुपतानामागमानपि मथितवान् । तथाहि । पशुपतेरीश्वरस्य प्रधानपुरुषयोः

१ क. ख. °नलक्षणं वाने° । २ क. ख. °था सोम्ये° । ३ ख. ग. घ. °त्वेऽपि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वितीयनिरता सति भेदे
मुक्तिरीशसमतैव कथं स्यात् ॥
ध्यानजा किमिति सा न विनश्ये-
द्भावकार्यमखिलं हि न नित्यम् ॥ ७४ ॥
किंच संक्रमणमीशगुणाना-
मिष्यते पशुषु मोक्षदशायाम् ॥
तन्न साध्ववयवैर्विधुराणां
संक्रमो न घटते हि गुणानाम् ॥ ७५ ॥
पद्मगन्ध इव गन्धवहेऽस्मि-
न्नात्मनीश्वरगुणोऽस्त्विति चेन्न ॥
तत्र गन्धसमवायि नभस्व-
त्संयुतं दिशति गन्धधियं यत् ॥ ७६ ॥

रधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते हीनमध्यमोत्तमभावेन प्राणिभेदान्भवतः पशुपते रागद्वेषादिप्रसङ्गात् । प्रधानपुरुषाभ्यां संबन्धानुपपत्तेश्च । न तावत्संयोगलक्षणः संबन्धः संभवति । त्रयाणामपि सर्वगतत्वान्निरवयवत्वाच्च । नापि समवायः । आश्रयाश्रितभावानिरूपणात् । नाप्यन्यः कार्यगम्यः कश्चित्संबन्धः शक्यते कल्पयितुम् । कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात् । स्वागता वृत्तम् ॥ ७३ ॥

एवमादिरूपं तदागममन्थनप्रकारं ममन्थेत्यनेन सूचयित्वा तदभिमतमुक्तेर्मन्थनप्रकारं[1] दर्शयति—अद्वितीये निरता पर्यवसन्ना भवत्संमतेशसमानता लक्षणा या मुक्तिः सैव भेदे सति भेदे सत्ये सति कथं स्यात्सत्यस्य तस्य निवृत्त्ययोगान्न केनापि प्रकारेणेत्यर्थः । ननु पशुपतिध्यानाद्भविष्यतीति चेत्तत्राऽऽह—ध्यानाज्जाता सा मुक्तिः कुतो हेतोर्न विनश्येत्तस्या विनाशाभावे हेतुर्नास्तीत्यर्थः । हि यस्माद्भावत्वे सति यत्कार्यं तत्सर्वमपि नित्यं न भवति । प्रध्वंसे व्यभिचारवारणाय भावेति ॥ ७४ ॥

किंच मोक्षावस्थायां पशुषु जीवेषु पशुपतेरीशस्य गुणानां संक्रमणं यदिष्यते तन्न साधु हि यस्मादवयवैर्वर्जितानां गुणानां संक्रमो न घटते ॥ ७५ ॥ [ एवं पाशुपतसंमते साध्यसाधने निरस्याधुना तत्संमतमुक्तिरूपसाध्ये तदुक्तेश्वरनिष्ठसर्वज्ञत्वादिगुणानां पशुषु जीवेषु संक्रमरूपमवान्तरविशेषं दूषयति—किंचेति । तत्र हेतुं व्युत्पादयति । अवयवैरित्यादिशेषेण । इदं हेतुगर्भं विशेषणम् । गुणाः संक्रमशून्या निरवयवत्वादाकाशादिवदिति प्रयोगोऽत्रोन्नेयः । हिरवधारणे । नैव घटत इत्यर्थः ] ॥ ७५ ॥

ननु गन्धवहे वायौ यथा निरवयवस्य पद्मगन्धस्य संक्रमस्तथाऽस्मिञ्जीवे पशुपति-

[1] क. ख. 'मंथन'। [2] क. ख. 'रेग भवेदिस'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंचैकदेशेन समाश्रयन्ते
कात्स्न्येंन वा शंभुगुणा विमुक्तान् ॥
पूर्वे तु पूर्वोदितदोपसङ्ग-
स्त्वन्तेऽज्ञतादिः परमेश्वरे स्यात् ॥ ७७ ॥
इत्थं तर्कैः कुलिशकठिनैः पण्डितंमन्यमाना
भिद्यत्स्वार्थाः स्मयमरमदं तत्यजुस्तान्त्रिकास्ते ॥
पक्षाघातैरिव रयमरैस्ताड्यमानाः फणासु
क्ष्वेडज्वालां खगकुलपतेः पन्नगाः साभिमानाः ॥७८ ॥

---

गुणानां संक्रमोऽस्त्विति शङ्कते । पद्मगन्ध इति । गन्धसमवायि कमलं सूक्ष्मावयवा-त्मना वायुसंयुक्तं सत्तत्र वायौ गन्धधियं यस्माद्दिशति तस्मान्नैवमित्याह—नेति॥७६॥ [ तत्रेति । यद्यस्मात्तत्र निरुक्तोदाहरणे । गन्धसमवायि समवायसंबन्धेन गन्धवत्पद्मप-रागद्रव्यमेवेत्यर्थः । गन्धधियं पद्मगन्धबुद्धिं दिशति प्रकाशयति तस्मादेव हेतोर्न गुणत्व-हेतोः पद्मगन्धे गुणे साध्याभाववद्वृत्तित्वलक्षणो व्यभिचार इत्याकूतम् ] ॥ ७६ ॥

किंच पशुपतिगुणा एकदेशेन विमुक्तान्समाश्रयन्ते किंवा कात्स्न्येंन । आद्यपक्षे तु पूर्वोक्तदोषस्य निरवयवगुणानामेकदेशेन संक्रमायोगस्य प्रसक्तिः । द्वितीये परमेश्वरेऽज्ञ-तादिः स्यात् । इन्द्रवज्रा वृत्तम् ॥ ७७ ॥ [ ननु भवत्वेवं तार्किकादिरीत्या व्यभिचारवा-रणमथापि लोके पलादिमानतुलितकस्तूर्याः परिमलस्य पटशतसंक्रमेऽपि कालान्तरेऽपि सुर-क्षितायाः प्रायो गुञ्जामात्रमपि मानह्रासादर्शनान्न सूक्ष्मरजःसंक्रमस्तत्र किंतु गन्धसंक्रम एव । तथा च पुनरपि व्यभिचारतादवस्थ्यमेवेति ब्रुवाणं पाशुपतं प्रति तुष्यतु दुर्जन इति न्यायेन यथाकथंचिन्निरवयवानामपि गुणानामन्यत्र संक्रममङ्गीकृत्यापि निराकर्तुं विकल्प्य पृच्छति । किंचेतीन्द्रवज्रया ] [ पूर्वोदितेत्ययमाशयः । वस्तुवृत्तविचारे निरुक्तकस्तूर्युदा-हरणेऽपि सूक्ष्मतमत्रसरेणुसंक्रमेऽपि न तत्परिमाणह्रासः । अत एव पटशतेऽपि नैकट्यता-रतम्येन परिमलतारतम्योपलम्भः । एवं च नोक्तव्यभिचारावसर इति निरवयवानां गुणा-नामन्यत्रासंक्रमणं प्रागुक्तो दोपस्तदवस्थ एवेति ] ॥ ७७ ॥

इत्थं वज्रवत्कठिनैस्तर्कैर्भिद्यन्भेदं गच्छन्स्वाभिमतोऽर्थो येषां ते पण्डितंमन्यमानास्तान्त्रिकाः पाशुपताः स्मयस्यातिशयेन यो मदस्तं तत्यजुः । खगकुलपतेर्गरुत्मतो रयस्य वेगस्याति-शयो येषु तैः पक्षाघातैः फणासु ताड्यमानाः साभिमानाः सर्पा यथा क्ष्वेडज्वालां वि-ज्वालां त्यजन्ति तद्वत् ' क्ष्वेडस्तु गरलं विषम् ' इत्यमरः । मन्दाक्रान्ता वृत्तम् ॥ ७८ ॥

---

१ क. ख. ग. °यन्ति कि° । २ क. 'रेऽज्ञानादिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याख्याजृम्भितपाटवात्फणिपतेर्मन्दाक्षमुद्दीपय-
न्संख्यालङ्घितशिष्यहृद्वनरुहेष्वादित्यतामुद्वहन् ॥
उद्वेलस्वयशः सुमेः स भगवत्पादो जगद्भूपय-
न्कुर्वन्वादिमृगेषु निर्भरमभाच्छार्दूलविक्रीडितम् ॥ ७९ ॥

वेदान्तकान्तारकृतप्रचारः
सुतीक्ष्णसद्युक्तिनखाग्रदंष्ट्रः ॥
भयंकरो वादिमतंगजानां
महर्षिकण्ठीरव उल्ललास ॥ ८० ॥

अमानुषं तस्य यतीश्वरस्य
विलोक्य बालस्य सतः प्रभावम् ॥
अत्यन्तमाश्चर्ययुतान्तरङ्गाः
काशीपुरस्था जगदुस्तदेत्थम् ॥ ८१ ॥

---

व्याख्यायां जृम्भितमुल्लसितं यत्पाटवं कुशलता तस्मात्फणिपतेः शेषस्य मन्दाक्षं लज्जामुद्दीपयन् । संख्यामतिक्रान्तानामसंख्यातानां शिष्याणां हृज्जलरुहेषु भानुतामुद्वहन् । उद्वेलस्वयशःसुमैरुल्लङ्घितसप्ताब्धितटस्वयशोलक्षणपुष्पैर्जगद्भूपयन्वादिमृगेषु निर्भरं दृढं शार्दूलविक्रीडितं कुर्वन्स भगवत्पादोऽभादद्युतत् । अत्र श्रीशंकरवर्णनपरेण शार्दूलविक्रीडितपदेनैतच्छन्दोनामसूचनान्मुद्रालंकारः ।

'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः

इत्युक्तेः । शार्दूलविक्रीडितं वृत्तम् ॥ ७९ ॥ व्याख्यायां ब्रह्मसूत्रादिविवृतौ जृम्भितं विकसितं यत्पाटवं कौशलं तस्मादित्यर्थः । फणिपतेर्महाभाष्यकर्तुः शेषस्यापीति यावत् ] [ निर्भरमत्यन्तं यथा स्यात्तथा । अभाच्छुशुभ इति योजना । अत्र शान्तानुप्राणितः पाण्डित्यवीरो रसः । धीरोदात्तो नायकः । काव्यलिङ्गादिर्मुद्रा चालंकारः ] ॥ ७९ ॥

श्रीशंकरं सिंहरूपेण वर्णयति—वेदान्तलक्षणे वने कृतः प्रचारो येन सुतीक्ष्णानि सद्युक्तय एव नखाग्राणि दंष्ट्राश्च यस्य वादिलक्षणानां गजानां भयंकर एवंविधो महर्षिलक्षणः सिंह उल्लासोच्चकारो । उपजातिवृत्तम् ॥ ८० ॥ [ वेदान्तेति । 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः । तेन वेदान्तानां दुरवगाहत्वं ध्वन्यते । रूपकमलंकारः ] ॥ ८० ॥

तस्य यतीश्वरस्य बालस्य सतः प्रभावं विलोक्याऽऽश्चर्ययुक्तमन्तरङ्गं मनो येषां ते काशीपुरस्थास्तस्मिन्काल इत्यमूचुः ॥ ८१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्मान्मुहुर्द्योतितसर्वतन्त्रा-
त्पराभवं पीडितपुण्डरीकाः ॥
प्रपेदिरे भास्करगुप्तमिश्र-
मुरारिविद्येन्द्रगुरुप्रधानाः ॥ ८२ ॥

अस्याऽऽत्मनिष्ठातिशयेन तुष्टः
प्रादुर्भवन्कामरिपुः पुरस्तात् ॥
प्रचोदयामास किल प्रणेतुं
वेदान्तशारीरकसूत्रभाष्यम् ॥ ८३ ॥

कुदृष्टितिमिरस्फुरत्कुमतपङ्कमग्नां पुरा
पराशरभुवा चिराद्बुधमुदे बुधेनोद्धृताम् ॥
अहो बत जरद्गवीमनघभाष्यसूक्तामृते-
रपङ्कयति शंकरः प्रणतशंकरः सादरम् ॥ ८४ ॥

मुहुः पुनः पुनर्द्योतितानि सर्वशास्त्राणि येन तथाभूतादस्माच्छ्रीशंकरात्पीडितं हृत्कमलं येषां ते भास्करप्रमुखाः पराभवं प्रपेदिरे प्रापन्नन्तः ॥ ८२ ॥ [ भास्करेति । भास्करो भेदाभेदवादी गुप्तोऽभिनवगुप्तपादाख्यः शाक्तो मिश्रमुरारिर्मुरारिमिश्रो विद्येन्द्रो भारतीपूर्वः प्रागुक्तो मण्डनमिश्रो गुरुः प्रभाकर एते प्रधाना मुख्या येषां प्रागुक्तनीलकण्ठाख्यपाशुपतादिभेदवादिनां ते तथेत्यर्थः ] ॥ ८२ ॥

किंचास्याऽऽत्मनिष्ठया तुष्टः कामरिपुर्महादेवः पुरस्तात्प्रादुर्भवन्वेदान्तानां शारीरकसूत्राणां च भाष्यं प्रणेतुं प्रचोदयामास ॥ ८३ ॥

कुदृष्टीनां तिमिरस्फुरत्कुमतान्येव पङ्कस्तस्मिन्मग्नां पुरा पराशरसूनुना बुधेन वेदव्यासेन बुधानां मुदे चिरादुद्धृतां जरद्गवीं चिरंतनां श्रुतिलक्षणां गाम् । अहो बतेति निपातावत्याश्चर्यार्थकावत्यन्तहर्षार्थकौ वा । निरवद्यभाष्यसूक्तलक्षणैरमृतैः सादरं यथा स्यात्तथाऽपङ्कयत्युक्तपङ्कविनिर्मुक्तां करोतीत्यर्थः । पृथ्वीवृत्तम् ॥ ८४ ॥ [ कुदृष्टीति । कुत्सिता दुष्टा दृष्टिर्भेदवादप्रवणा बुद्धिर्येषां ते तथा तेषां यत्तिमिरमज्ञानरूपं ध्वान्तं तेन स्फुरन्ति भासमानानि यानि कुमतानि सांख्यतार्किकमीमांसकादिसकलद्वैतवादिदुर्मतानि स एव पङ्कः कर्दमस्तत्र मग्नां पक्षे कुदृष्टिर्मान्द्यादिदृग्दोषशाली गोपस्तेन कृष्णवर्णत्वसाम्यात्तिमिरबुद्ध्या यः कुत्सितो मतो मिथ्याज्ञानेन निर्णीतः पङ्कः कर्दमस्तस्मिन्मग्नामिति यावत् ] [ जरद्गवीं जरत्यनादिसिद्धा पक्षे अतिवृद्धा तादृशी या गौर्वेदवाणी पक्षे धेनुस्तामिति यावत् ] [ अनघेति । एतेन भाष्ये वेदसमत्वं सूक्तरूपकेणामृतरूपकेण चाजरामरत्वापादकत्वं च सूचितम् । सादरं सप्रेम ]

१ °मिथ्या मु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रैलोक्यं ससुखं क्रियाफलपयो भुङ्क्ते यथाऽऽविष्कृतं
यस्या वृद्धतरे महीसुरगृहे वासः प्रवृद्धाध्वरे ॥
तां पङ्कप्रसृते कुतर्ककुहरे घोरैः खरैः पातितां
निष्पङ्कामकरोत्स भाष्यजलधेः प्रक्षाल्य सूक्तामृतैः ॥ ८५ ॥
मिथ्या वक्तीति कैश्चित्परुषमुपनिपद्दूरमुत्सारिताऽभू-
दन्यैरस्मिन्नियोज्यं परिचरितुमसावर्हतीति प्रणुन्ना ॥
अर्थाभासं दधानैर्मृदुभिरिव परैर्वञ्चिता चोरितार्थै-
र्विन्दत्यानन्दमेषा सुचिरमशरणा शंकरार्यं प्रपन्ना ॥ ८६ ॥

---

[ अत्राद्भुत एव शान्तानुप्राणितो रसः । धीरोदात्तो नायकः । श्लेषः परिकरः काव्यलिङ्गं रूपकं परिकराङ्कुरः सर्वैर्मिलित्वा तिलतण्डुलवत्संसृष्टिश्चालंकारः ] ॥ ८४ ॥

यदा श्रुतिलक्षणया गवा प्रकटितं क्रियाफललक्षणं पयो दुग्धं ससुखं त्रिलोकीस्थो जनो भुङ्क्ते यस्याश्च गोर्वृद्धतरेऽतिप्राचीने प्रवृद्धा अध्वरा यागा यस्मिंस्तथाभूते प्रयागसंज्ञके भूसुरस्य प्रजापतिसंज्ञस्य ब्राह्मणस्य गृहे वास एवंभूतां तां गां घोरैर्भीमैः खरैस्तीक्ष्णैर्दुर्जनैः पङ्केन प्रसृते व्याप्ते कुतर्कलक्षणे छिद्रे पातितां स भाष्यकारो भाष्यसमुद्रस्य सूक्तामृतैः प्रक्षाल्य निष्पङ्कामकरोत् । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥ [ क्रियेति । क्रियाफलरूपं कर्मफलाख्यं पयः क्षीरम् । ससुखं सुखसहितं यथा स्यात्तथा । दुःखोपभोगेऽपि तन्निरासाभिव्यक्तसुखसाहित्यसत्त्वाद्युक्तमेवेदं क्रियाविशेषणम् ] पङ्केति । पङ्केन 'अस्त्री पङ्कं पुमान्पाप्मा' इत्यमरात्पापेन प्रसृतं विस्तृतं तस्मिन् । पक्षे पङ्कः कर्दमस्तेन व्याप्त इत्यर्थः ] [ घोरैर्भयंकरैः खरैस्तीक्ष्णैरेतादृशैः सकलभेदवादिभिरित्यर्थः । पक्षे पशुभिः ] रसालंकारादिकं तु पूर्वपद्योक्तमेव ] ॥ ८५ ॥

कैश्चिद्वेदबाह्यैरुपनिषन्मिथ्या वक्तीति दूरमुत्सारिताऽभूत् । अन्यैर्भाट्टप्राभाकरैरस्मिन्वेदे कर्मणि वा यो नियोज्यस्तं परिचरितुमसावुपनिषदर्हतीति प्रणुन्ना प्रकर्षेण पीडिता । अर्थो न भवति किंत्वर्थवदाभासत इत्यर्थाभासस्तस्य त्वमसि तस्मात्त्वमसि तस्मै त्वमसीत्येवमादिरूपस्तं दधानैश्चोरितो लोपितस्तदभिन्नस्त्वमसीत्येवमादिरूपो वास्तवोऽर्थो यैर्मृदुभिरिवातिपरुषैरेव कोमलाभासैरपरैर्नैय्यायिकादिभिर्वञ्चिता सुचिरमशरणा सतीदानीं शंकरार्यं प्रपन्नैषोपनिषदानन्दं विन्दति प्राप्नोति । स्रग्धरा वृत्तम् ॥ ८६ ॥ [ मिथ्येति । कैश्चिन्माध्यमिकादिवेदबाह्यैः परुषं यथा स्यात्तथा ] अस्मिँल्लोके वेदे कर्मणि वा । नियोज्यं नियोक्तुं योग्यं जीवं परिचरितुं स्तोतुम् ] [ प्रपन्ना शरणागता सत्यानन्दमद्वैतात्मसुखं विन्दति प्राप्नोतीति योजना । पद्म उप समीपे निषीदति शरणापेक्षयोपविशतीति तथा काचिद्भीतभीरुरित्यर्थः ।

---



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हन्तुं बौद्धोऽन्वधावत्तदनु कथमपि स्वात्मलाभः कणादा-
ज्जातः कौमारिलार्यैर्निजपदगमने दर्शितं मार्गमात्रम् ॥
सांख्यैर्दुःखं विनीतं परमथ रचिता प्राणधृत्यर्हताऽन्यै-
रित्थं खिन्नं पुमांसं व्यधित करुणया शंकरार्यः परेशम् ॥ ८७ ॥
ग्रस्तं भूतैर्न देवं कतिचन ददृशुः के च दृष्ट्वाऽप्यधीराः
केचिद्भूतैर्वियुक्तं व्यधुरथ कृतिनः केऽपि सर्वैर्विमुक्तम् ॥
किंत्वेतेषामसत्त्वं न विदधुरजहन्नैव भीतिं ततोऽसौ
तेषामुच्छिद्य सत्तामभयमकृत तं शंकरः शंकरांशः ॥ ८८ ॥

---

नियोज्यं दासम् । चोरितेति । अत एव । अर्थेति । वास्तविकं तद्धनमपहृत्य कूटत्वं प्रकटयद्भिरित्यर्थः । श्लेषपरिकरादिरलंकारः । रसादिकं तूक्तमेव ] ॥ ८६ ॥

बौद्धः शून्यवादी हन्तुमन्वधावत्ततः पश्चाद्यथाकथंचित्कणादात्स्वात्मलाभो जातः कौमारिलापरसंज्ञैर्भट्टपादैरार्यैर्निजपदगमने मार्गमात्रं प्रदर्शितं सांख्यैः परं केवलं दुःखं विनीतिमपनीतमथान्यैः पातञ्जलैः प्राणधृत्या प्राणनिरोधेनार्हता तस्य पूज्यता रचितेत्थमत्यन्तं खेदं प्राप्तं पुरुषमात्मानं करुणया शंकरार्यः परेशमकृत ॥ ८७ ॥ [ बौद्धः पुमांसमात्मानं हन्तुमेव शून्यवादित्वेन विनाशयितुमेव ] [ कणादात्सकाशात्स्वात्मलाभो जातः । तैर्हि बुद्ध्यादिभावनान्तनवविशेषगुणसंख्यादिविभागान्तपञ्चसामान्यगुणविशिष्टविभ्वात्माङ्गीकारात्संपन्न इत्यर्थः ] [ कौमारिलार्यैः कुमारिला एव कौमारिलास्ते च त आर्याश्चेति तथा कुमारिलभट्टाचार्याः प्राक्षडाननावतारत्वेन वर्णिता एव तैरित्यर्थः ] [ मार्गमात्रं कर्मानुष्ठानेन चित्तशुद्धिद्वारा परमेश्वरप्राप्तिर्भवतीति वर्त्मैव दर्शितं कथितं न तु परपदमपीत्यर्थः ] [ सांख्यैः कपिलैः ] [ प्राणेति । प्राणस्य प्राणवायोर्धृतिः कुम्भकादिना धारणं तयाऽर्हता तस्य पूज्यता ] [ श्लेषादिरलंकारः ] ॥ ८७ ॥

भूतैः पृथिव्यादिभिर्ग्रस्तं देवमात्मानं कतिचन न ददृशुः केचिच्चार्वाका न ददृशुः केचिच्च योगाचारादयो दृष्ट्वाऽप्यधीराः क्षणिकविज्ञानमात्मेति तैः स्वीकृतत्वात् । केचित्तार्किका मीमांसकाश्च भूतैर्वियुक्तं व्यधुः । अथ कृतिनः सांख्याः सर्वैर्भूतैस्तद्गुणैश्च विनिर्मुक्तं व्यधुः किंत्वेतेषामसत्त्वं न विदधुस्ततस्तस्मादसावात्मा भीतिं भयं न त्यक्तवान्शंकरस्तु तेषां सत्तामुच्छिद्य तमात्मानमभयमकृत । यतः शंकरस्य ब्रह्माद्यधीशस्य महादेवस्यांशो ज्ञानकलावतारः ॥ ८८ ॥ [ ग्रस्तमिति । कतिचन शून्यवादिनो माध्यमिकाः । भूतैः पञ्चमहाभूतैः । पक्षे पिशाचैः । ग्रस्तं तादात्म्याध्यासेन वशीकृतम् । एतादृशं देवं स्वप्रकाशात्मानमपि । पक्षे राजानम् ] [ केचिन्मीमांसकास्तार्किकाश्च । भूतैः पृथ्व्यादिभिः । पक्षे पिशाचैः ] [ अथ केऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चार्वाकैर्निह्नुतः प्राग्बलिभिरथ मृषा रूपमापाद्य गुप्तः
काणादैर्हा नियोज्यो व्यरचि बलवताऽऽकृष्य कौमारिलेन ॥
सांख्यैराकृष्य हृत्वा मलमपि रचितो यः प्रधानैकतन्त्रः
कृष्ट्वा सर्वेश्वरं तं व्यतनुत पुरुषं शंकरः शंकरांशः ॥ ८९ ॥
वाचः कल्पलताः प्रसूनसुमनःसंदोहसंदोहना
भाष्ये भूष्यतमे समीक्षितवतां श्रेयस्करे शांकरे ॥
भाष्यामासगिरो दुरन्वयगिराऽऽश्लिष्टा विसृष्टा गुणै-
रिष्टाः स्युः कथमम्बुजासनवधूदौर्भाग्यगर्भीकृताः॥ ९० ॥

---

कृतिनः कुशलाः सांख्याः सर्वैर्भूतैस्तद्धर्मैश्च विमुक्तम्। व्यधुरित्यनुषङ्गः। किं त्वेतेषां भूतादीनां पृथ्व्यादीनाम्। पक्षे पिशाचादीनाम्] [श्लेषादयोऽलंकाराः]॥ ८८॥]

प्राक्पुरा चार्वाकैर्निह्नुतोऽपलपितोऽथानन्तरं बलिभिः काणादैर्मृषा मिथ्याभूतं कर्तृत्वादिविशिष्टं ज्ञानादिगुणकं रूपमापाद्य गुप्तो रक्षितः। हेति खेदे। कौमारिलेन बलवता तेभ्यो भूतेभ्य आकृष्य पृथक्कृत्य 'स्वर्गकामो यजेत' इत्यादिविधौ दास इव नियोज्यो व्यरचि विरचितस्ततोऽप्याकृष्य सांख्यैर्मलं हृत्वाऽपि यः प्रधानैकतन्त्रो रचितस्तं पुरुषं शंकरः परेशं व्यतनुताकृत ॥ ८९ ॥ चार्वाकैर्देहात्मवादिभिर्निह्नुतोऽपलापितः]। तं कृष्ट्वा ततः समाकृष्य शंकरांशः शिवज्ञानकलावतारः। शंकरः श्रीशंकराचार्यः। सर्वेति। सर्वनियन्तृत्वोपलक्षितम्। पुरुषं द्वैताधिष्ठानीभूतं ब्रह्मैव व्यतनुत विशेषेण दृश्योच्छेदलक्षणेन त्रिविधपरिच्छेदशून्यमेव विस्तारयामासेति संबन्धः। पक्षे पुरुषः कश्चिदनन्यः सुन्दरतरो नरः। प्रधानेति। प्रधानं स्यान्महामात्रे प्रकृतौ च' इति मेदिन्युक्तेर्महामात्रशब्दितहस्तिपकैकाधीन इत्यर्थः।

'मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः।
महामात्राः प्रधानानि'

इत्यमरादमात्यैकपराधीन इति वाऽर्थः। रसादिकं तु प्राग्वदेव। श्लेषादिरलंकारः] ॥ ८९ ॥

भूष्यतमे श्रेयस्करे शांकरे भाष्ये या वाचस्ताः प्रसूनसुमनसां फलपुष्पाणां संदोहस्य समुदायस्य संदोहनं याभ्यस्तथाभूताः कल्पलतास्तत्तुल्यास्ता गिरः समीक्षितवतां पुरुषाणामन्यदीयभाष्याभासवाचो दुरन्वयगिराऽऽलिङ्गिता गुणैस्त्यक्ता अम्बुजासनस्य चतुर्मुखस्य वध्वाः सरस्वत्या दौर्भाग्येन गर्भीकृताः कथमिष्टाः स्युरित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ९० ॥ [वाच इति। यतः शांकरेऽतः श्रेयस्करे यतः श्रेयस्करेऽतो भूष्यतमेऽति-

---

१ क. 'तन्त्रो हृष्ट्व'। २ ख. 'ष्टा गमैरुज्झिता इष्टाः। ३ क. 'नुत। ८९। भ'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कामं कामकिरातकार्मुकलतापर्यायनिर्यातया
नाराचच्छटया विपाटितमनोधैर्यैर्धिया कल्पितान् ॥
आचार्याननवर्यनिर्यदभिदासिद्धान्तशुद्धान्तरो
धीरो नानुसरीसरीति विरसान्ग्रन्थानवन्धापहान् ॥९१॥
सुधास्पन्दाहंताविजयिभगवत्पादरचना
समस्कन्धान्ग्रन्थान्रचयति निबद्धा यदि तदा ॥
विशङ्कां भङ्गानां मृडमुकुटशृङ्गाटसरितः
कृतौ तुल्या कुल्या नियतमुपशल्याद्दृतगतिः ॥ ९२ ॥

---

पूज्ये ] [ यतो दुरन्वयगिरा दुष्टान्वयशालिन्या वाण्या आश्लिष्टा इति छेदः । आश्लि-ङ्गिता इत्यर्थः । अतो गुणैः प्रसादादिवाणीसामान्यगुणैः ] [ प्रतीपविशेषादिरलं-कारः ] ॥ ९० ॥

कामं यथेष्टं कामकिरातस्य धनुर्लतातः पर्यायेण क्रमेणापर्यायेणैकदैव वा निर्यातया निःसृतया नाराचाख्येषूणां छटया समूहेन विपाटितं मनोधैर्यं येषां तैर्धिया स्वबुद्ध्या कल्पितान्विरसानवन्धापहान्वन्धनाशासमर्थान्ग्रन्थानाचार्याननवर्यान्निर्यता निर्गतेनाभिदासिद्धा-न्तेन शुद्धाऽन्तःकरणो धीरो नानुसरीसरीत्यनुसरणं नैव करोति ॥ ९१ ॥ [धिया स्वबुद्धयु-त्प्रेक्षयैव । एतेन तन्नासांप्रदायिकत्वं ध्वन्यते ] [ परिकरादिरलंकारः । ] ॥ ९१ ॥

किंच सुधास्पन्दस्यामृतप्रवाहस्याहंताया विजयिनी या भगवत्पादरचना तत्सम-स्कन्धान्समपर्यायांस्तुल्यप्रकारान्ग्रन्थान्निबद्धा ग्रन्थकर्ता यदि रचयति तदा 'ग्रामान्त-मुपशल्यं स्यात्' इत्यमरान्नियतमुपशल्ये ग्रामान्त आहृता गतिर्यस्याः सा कुल्याऽल्पा कृत्रिमा सरिन्मृडस्य शिवस्य मुकुटमेव शृङ्गाटश्चतुष्पथस्तस्य सरितो गङ्गाया भङ्गानां तरङ्गाणां कृतौ करणे तुल्या इति विशङ्कामपि रचयति ॥ ९२ ॥ [ सुधेति । सुधाया अमृतस्य यः स्पन्दः प्रवाहः 'स्पदि किंचिच्चलने' इति स्मरणात् । तस्य याऽहंता शुद्ध-त्वमधुरत्वाद्याधिक्याहंकृतिस्तस्या जयिनी पराजयकर्त्र्येतादृशी या भगवत्पादरचना श्रीम-च्छंकराचार्यविरचितग्रन्थपद्धतिस्तया समस्तुल्यस्कन्धः—

'स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः'

इति मेदिन्याः पदसमूहो येषां ते तथा तानित्यर्थः । एतेन यथाकथंचिच्छब्दसंघट्ट-साम्येऽप्यमृतावदाततत्वादिमाध्यधर्मवैधुर्यमन्यदीयग्रन्थेषु ध्वन्यते ] [ यथा गङ्गातरङ्गस्य कुल्यायाः कालत्रयेऽपि नैव सामर्थ्यं तथा श्रीमद्भगवत्पादविरचितभाष्यादिसदृशग्रन्थकरणे नीचकोटिनिविष्टकर्तॄणां नैव पाटवमिति भावः । अत्र मिथ्याध्यवसितिरलंकारः । तदुक्तम्—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यया दीनाधीना घनकनकधारा समरचि
प्रतीतिं नीताऽसौ शिवयुवतिसौन्दर्यलहरी ॥
भुजंगो रौद्रोऽपि श्रुतभयहृदाधायि सुगुरो-
र्गिरां धारा सेयं कलयति कवेः कस्य न मुदम् ॥ ९३ ॥

---

'किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ।
मिथ्याध्यवसितिर्वश्येद्वेश्यां खाब्जस्रजं वहन्'

इति तथाचेह श्रीमद्भाष्यकारग्रन्थसदृशग्रन्थरचनं मिथ्यैवेत्येतस्यार्थस्य सिद्ध्यर्थं मिथ्याभूतस्य कुल्यायाः सुरसरित्तरङ्गविरचने साम्यस्य कल्पनाल्लक्षणसमन्वयः । परिकरालंकारस्तु स्फुट एव ] ॥ ९२ ॥

यया गिरां धारयाऽऽमलात्मकनकधारा दीनाधीना समरचि सम्यग्रचिता यया च शिवयुवतिसौन्दर्यलहरी प्रतीतिं नीता प्रकटिता रौद्रोऽपि भुजंगः सर्पः श्रुतेन भयहृदाधायि कृतः प्रसिद्धं च शंकरनामाङ्कितप्राकृतमन्त्रस्य सर्पविषहारित्वं सेयं सुगुरोः श्रीशंकरस्य गिरां धारा कस्य कवेर्मुदं न कलयति किंतु सर्वस्यापि मुदं प्रयच्छतीत्यर्थः ॥ ९३ ॥ [ शिवेति । गौरीस्तुतिरूपा 'शिवः शक्त्या युक्तः' इत्यादिः ] [ रौद्रो रुद्रस्य शिवस्यायं रौद्रः । एतादृशः । भुजंगो भुजंगप्रयाताख्यप्रसिद्धवृत्तविशेषघटितः शिवभुजंग इति लोके प्रसिद्धः स्तोत्रविशेष इति यावत् । यद्वा

'न भूमिर्न तोयं न तेजो न वायुः'

इत्यादिभुजंगप्रयातवृत्तघटिता मधुसूदनसरस्वतीकृतसिद्धान्तबिन्द्वाख्यटीकामूलीभूता द्वशश्लोक्येव तथा । तस्या एव श्रुतमात्रेणाधिकारिभयहारित्वाच्छिन्नपदघटितत्वाच्च । सोऽपि श्रुतेति । श्रुतेन श्रवणमात्रेणैवाधिकारिणां भयं हरतीति तथा । एतादृशोऽप्यत्यद्भुतोऽप्याधायि रचित इत्यर्थः । ननु प्रकृता हि काशीपुरस्थजनानामेव बदरिकाश्रमस्थश्रीशंकराचार्यविरचितसूत्रभाष्यादिकीर्तिश्रवणेन तद्वाग्वैभवविस्मयवर्णनोक्तिः सौन्दर्यलहरीस्तोत्रं तु तेन वक्ष्यमाणद्वादशसर्गे मूकाम्बादर्शनोत्तरं कृतमिति मूल एव सप्रपञ्चं सूचयिष्यति । तथा च शिवभुजंगस्य काश्यामेव शिवदर्शनोत्तरं कृतत्वसंभवेन तेषां तत्प्रसिद्धावप्युक्तशक्तिस्तोत्रस्याप्यकृतत्वात्तत्कालावच्छेदेन कथं तेषामसर्वज्ञानां भविष्यतस्तस्य ज्ञानमिति चेद्वादम् । तेषां तत्कालावच्छेदेनानुत्पन्नस्य तस्य ज्ञानाभावेऽपि माधवाचार्यस्य प्रकृतग्रन्थकर्तुसज्ज्ञानसत्त्वात्तद्वचांस्यनुवदतोऽस्य श्रीमद्भाष्यकारपादारविन्दभक्तिरसाविष्टचेतस्त्वेन निरुक्तानुवादित्वाननुसंधानादेव तथोक्तिर्बोध्या । तदनुसंधानाभावस्त्वस्य कवेः प्रकृते 'रतिर्देवादिविषया' 'व्यभिचारी तथाञ्जितः' । 'भावः प्रोक्तः' इत्यादिकाव्यप्रकाशकारिकोक्तभावध्वनित्वपरिपोषकत्वाद्गुण एवेति दिक् ] ॥ ९३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गिरां धारा कल्पद्रुमकुसुमधारा परगुरो-
स्तदर्थाली चिन्तामणिकिरणवेण्या गुणनिका ॥
अभङ्गव्यङ्ग्यौघः सुरसुरभिदुग्धोर्मिसदृभू-
र्दिवं भव्यैः काव्यैः सृजति विदुषां शंकरगुरुः ॥ ९४ ॥
वाचा मोचाफलाभाः श्रमशमनविधौ ते समर्थास्तदर्था
व्यङ्ग्यं भङ्ग्यन्तरं तत्खलु किमपि सुधामाधुरीसाधुरीतिः ॥
मन्ये धन्यानि गाढं प्रशमिकुलपतेः काव्यगव्यानि भव्या-
न्येकश्लोकोऽपि येषु प्रथितकविजनानन्दसंदोहकन्दः ॥ ९५ ॥

---

परगुरोः श्रीशंकरस्य गिरां धारा कल्पवृक्षकुसुमानां धारा तस्या धाराया अर्थपङ्क्ति-श्चिन्तामणिलक्षणाङ्गनायाः किरणलक्षणाया वेण्याः केशबन्धस्य गुणनिका नृत्यरूपा ।

'भवेद्गुणनिकानृत्ये शून्याङ्के पाठनिश्चितौ'

इति विश्वप्रकाशः । अभङ्गो यो व्यङ्ग्यानां व्यञ्जनावृत्त्या गम्यानामोघः समुदायोऽभ-ङ्गानां व्यङ्ग्यानामोघो वा । सुरसुरभिदुग्धोर्मिसदृभूर्दैवकामधेनुदुग्धतरङ्गसदृशोऽतो विदुषां शंकरगुरुर्भव्यैः काव्यैर्दिवं सृजति ॥ ९४ ॥ [ परेति । श्रीशंकराचार्यस्य ] कल्पद्रु-मेति । सुरशाखिसुमनःसरणिरितियावत् । अस्तीत्यार्थिकं सर्वत्र । रूपककाव्यलिङ्गादयोऽ-लंकाराः ] ॥ ९४ ॥

येषु वाचा वाचो मोचाफलाभाः कदलीफलतुल्या येषु च ते तासां वाचामर्थाः श्रमश-मनविधौ समर्था येषु च किमप्यनिर्वाच्यं भङ्ग्यन्तरं विवक्षितरूपादपि चारुतररूपान्तरा-स्पदं तत्प्रसिद्धं व्यङ्ग्यं येषु च सुधावन्माधुरीसाधुरीतिस्तानि काव्यलक्षणानि भव्यानि गव्यानि गोदुग्धानि गाढमत्यन्तं धन्यानि मन्ये येषु काव्येष्वेकः श्लोकोऽपि कविजनाना-मानन्दसमूहस्य कन्दो मूलम् । स्रग्धरा वृत्तम् ॥ ९५ ॥ [ मोचेति । 'रम्भा मोचां-शुमत्फला' इत्यमरात्कदलीफलसदृशबहिःसुवर्णत्वपूर्वकान्तःसुरसा इत्यर्थः । साध्विति । साध्वी रम्या चासौ रीतिश्चेति तथा । रीतिसामान्यलक्षणं तद्भेदाश्चोक्ता मदीये साहित्य-सारे गुणरत्ने—

'तत्तद्रसार्हपदसंघटनारीतिरीरिता ।
वैदर्भी च तथा गौडी पाञ्चाली चेति तत्क्रमात्'

इति । तत्क्रमान्माधुर्यादिव्यञ्जकगुणक्रमेणेत्यर्थ इति सरसामोदाख्यतट्टीका । विस्तरस्तु तयोरेव द्रष्टव्यः । सुधेति । सुधेव माधुरी यस्याः सा तथाऽस्तीत्यर्थः ] प्रशमीति । प्रकृष्टः फलीभूतः शमः—

---

१ घ. 'भङ्गश्चासौ व्यङ्ग्या' । २ घ. 'दायश्चाभ' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाग्गुम्फैः कुरुविन्दकन्दलनिभैरानन्दकन्दैः सता-
मर्थौघैररविन्दवृन्दकुहरस्यन्दन्मरन्दोज्ज्वलैः ॥
व्यङ्ग्यैः कल्पतरुप्रफुल्लसुमनःसौरभ्यगर्भीकृतै-
र्धत्ते कस्य मुदं न शंकरगुरोर्भव्यार्थकाव्यावलिः ॥ ९६ ॥

'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति'

इति भगवद्वचनादद्वैतात्मतत्त्वसाक्षात्कारोत्तरक्षणजन्यसकलद्वयोच्छेदलक्षणो मोक्षो येषा ते तथा तेषां श्रीमत्पद्मपादाचार्याद्यनन्तजीवन्मुक्तानां यानि कुलानि भारत्यादिसंप्रदायियूथानि तेषां पतिर्नियन्ता तस्य श्रीभगवत्पादस्येत्यर्थः। लुप्तोपमारूपककाव्यलिङ्गपरिकरादयोऽलंकाराः ] ॥ ९९ ॥

शंकरगुरोर्भव्योऽर्थो येषां तेषां काव्यानामावलिः पङ्क्तिर्वाचां गुम्फैरर्थौघैर्व्यङ्ग्यैश्च कस्य मुदं न ददाति। वाग्गुम्फान्विशिनष्टि—कुरुविन्दो मुस्तकः।

'कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्'

इत्यमरः। तस्य कन्दलनिभैर्नवाङ्कुरतुल्यैः सतामानन्दस्य कन्दैर्मूलैः। अथार्थौघान्विशिनष्टि—अरविन्दवृन्दस्य कमलसमुदायस्य च्छिद्रेभ्यः स्यन्दन्मरन्दः स्रवन्मकरन्दस्तद्वदुज्ज्वलैः। अथ व्यङ्ग्यान्विशिनष्टि—कल्पवृक्षस्य प्रफुल्लसुमनसः सुगन्धैर्गर्भीकृतैः ॥ ९६ ॥ [ भव्येति। भव्यानां सुन्दरपुरुषाणामेवार्था धर्मादिपुरुषार्था येभ्यस्तान्येताद्दशान्यधिकार्यवच्छेदेन पुमर्थजनकानि यानि काव्यानि तेषामावलिः पङ्क्तिरिति यावत्। नन्वेवं धर्मादिपुमर्थकामुकैकोपकारकत्वेऽपि तत्र निष्कामानादरणीयत्वमेव स्यादित्याशङ्क्य तच्छब्दादीन्विशिनष्टि आनन्देत्यादिना। सतां ब्रह्मनिष्ठानाम् ] [ ननु किमेतावता शब्दालंकारैकपोष्कल्येऽप्यर्थादिवैचित्र्याभावे

'तारतारतरैरेतैरुत्तरोत्तरतो रुतैः।
रतार्ता तित्तिरी रौति तीरे तीरे तरौ तरौ'

इत्यादिवत्क्षणिकश्रवणानन्देन निरुक्तजगदानन्दकन्दत्वमित्यत आह—अर्थौघैः प्रतिपाद्यवक्र्यादिपदार्थसार्थैरित्यर्थः तथा। व्यङ्ग्यैर्व्यञ्जनावृत्तिगम्यै रसालंकारादिभिरपीति यावत्। वाग्गुम्फादींस्त्रीनपि क्रमाद्विशिनष्टि कुरुविन्देत्यादिना।

'कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्।
हिङ्गुले पद्मरागे च मुकुरेऽपि समीरिते'

इति मेदिन्याः पद्मरागाङ्कुरसदृशैरित्यर्थः। न च पद्मरागाणां स्वप्रकाशपाषाण-

१ ग. °द्दपानि विशि°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्ताद्दृग्यतिशेखरोद्धृतनिपद्भाष्यं निशम्येर्ष्यया
केचिद्गङ्गानदीतटस्थविदुषामक्षाङ्घ्रिपक्षश्रिताः ॥
मौर्ख्यात्खण्डयितुं प्रयत्नमनुमानैकेक्षणा विक्षमा-
श्चक्रुर्भाव्यविचार्य चित्रकिरणं चित्राः पतङ्गा इव ॥९७॥

निघर्षणच्छेदनतापनाद्यै-
र्यथा सुवर्णं परभागमेति ॥
विवादिभिः साधु विमथ्यमानं
तथा मुनेर्भाष्यमदीपि भूयः ॥ ९८ ॥

---

विशेषत्वादङ्कुरशालित्वासंभव इति वाच्यम् । तत्किरणानामेव सूक्ष्मत्वमृदुत्वादिनाऽङ्कुरस्थानीयत्वात् । एतेनोक्तकाव्यशब्दसरण्यां व्याकरणादिदोषशून्यत्वेन विमलत्वं माधुर्यादिगुणव्यञ्जकसुकोमलवर्णघटितत्वं च सूच्यते । अरविन्देति । एतेन यावदर्थदोषशून्यत्वे सति यावत्तद्गुणवत्त्वमर्थेषु ध्वन्यते । कल्पेति । एतेन तत्र सकलकामपूरकत्वं व्यज्यते ] ॥ ९६ ॥

यतिशेखरेणोद्धृतमुपनिषद्भाष्यं तत्ताहक्तथाभूतप्रभावं निशम्य गङ्गातटस्थविदुषां मध्ये केचिद्गौतमपक्षं श्रिता भेदवादिनोऽनुमानमेकं प्रधानमीक्षणं ज्ञानसाधनं येषां ते विक्षमाः क्षमाविनिर्मुक्ताः असमर्था वेर्ष्यया मात्सर्येण भविष्यमविचार्य खण्डयितुं प्रयत्नं चक्रुश्चित्रकिरणं चित्रभानुमग्निं चित्राः पतङ्गा एव । शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥ [ यतीति । परमहंसोत्तंसीभूतश्रीमद्भगवत्पादैरुद्धृतमित्यर्थः । एतेन तत्र क्षीरनीरवत्संकरीभूतपूर्वोत्तरकाण्डविवेचकत्वं व्यज्यते । निषदिति । सत्यभामादिपदे भामेत्यादिप्रयोगश्रीमद्विवक्षैकदेशे नामग्रहणन्यायादुपेत्युपसर्गाग्रहेऽपि क्षत्यभावादुपनिषदुपलक्षितब्रह्मसूत्रादिप्रागुक्तषोडशभाष्यजातमित्यर्थः । अक्षेति । अक्षपादाभिधगौतमसिद्धान्तमिति यावत् । श्रिता आश्रिताः केचिन्नैयायिका इत्यर्थः ] चित्राकिरणं ' सूर्यवह्नी चित्रभानू ' इत्यमरादग्निरूपमित्यर्थः । खण्डयितुं प्रयत्नं कृतवन्तः सन्त इति शेषः । चित्रा विविधाः पतङ्गा इव शलभा इव विक्षमा असमर्था एव बभूवुरिति योजना ] ॥ ९७ ॥

तैर्दूष्यमाणं तदीयं भाष्यं न दुष्टतामगात्प्रत्युतातिशयेन रराजेति सदृष्टान्तमाह निघर्षणादिभिर्यथा सुवर्णं परमुत्कृष्टं भागं भाग्यं प्राप्नोति तथा विवादिभिरतिशयेन मथ्यमानं मुनेर्भाष्यमत्यन्तमद्युतत् । उपेन्द्रवज्रा वृत्तम् ॥ ९८ ॥ [ साधु सयुक्तिकं यथा स्यात्तथा ] ॥ ९८ ॥

---

१ ख. घ. द्दृङ्मुनिशे' । २ ग. °पक्षं श्रि' । ३ घ. °पक्षाश्रि° । ४ क. ग. 'श्च ईर्ष्ये' । ५ क. तरीर्ष्यया° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स माध्यचन्द्रो मुनिदुग्धसिन्धो-
रुत्थाय दास्यन्नमृतं बुधेभ्यः ॥
विधूय गोभिः कुमतान्धकारा-
नतर्पयद्विप्रमनश्चकोरान् ॥ ९९ ॥
अनादिवाक्सागरमन्थनोत्था
सेव्या बुधैर्धिक्कृतदुःसपत्नैः ॥
विश्राणयन्ती विजरामरत्वं
विदिद्युते माध्यसुधा यतीन्दोः ॥ १०० ॥
सतां हृदब्जानि विकासयन्ती
तमांसि गाढानि विदारयन्ती ॥
प्रत्यर्थ्युलूकान्प्रविलापयन्ती
माध्यप्रभाऽभाद्यतिवर्यभानोः ॥ १०१ ॥

---

स माध्यलक्षणश्चन्द्रो मुनिलक्षणात्क्षीरसमुद्रादुत्थाय पण्डितलक्षणेभ्यो देवेभ्यो मोक्षलक्षणममृतं दास्यन्वाग्लक्षणैः किरणैः कुमतलक्षणानन्धकारान्प्रकम्प्य दूरीकृत्य विप्राणां मुमुक्षुब्राह्मणानां मनोलक्षणांश्चकोरानतर्पयत् । उपेन्द्रवज्रा वृत्तम् ॥ ९९ ॥ [ अमृतं कैवल्यम् । पक्षे पीयूषम् । बुधेभ्यः पण्डितेभ्यः पक्षे नामैकदेशे नामग्रहणाद्विबुधशब्दितदेवेभ्य इत्यर्थः । गोभिर्वाग्भिः पक्षे किरणैः ।

' गौः स्वर्गपशुवाग्वज्रदिङ्नेत्रघृणिभूजले '

इत्यमरः ] ॥ ९९ ॥

इदानीं माध्यं सुधारूपेण वर्णयति—यतिलक्षणस्य चन्द्रस्य माध्यलक्षणा सुधाऽनादिभूतवेदवाग्लक्षणात्समुद्रादुत्थिता धिक्कृता दुष्टशत्रवः कामक्रोधादय आन्तरा बाह्याश्च वादिनो यैस्तैः पण्डितलक्षणैर्देवैः सेव्या पुनश्च जरामरणरहितत्वं संपादयन्ती विदिद्युतेऽतिशयेन बभासे ॥ १०० ॥ [ अनादीति । ' अनादिर्वाग्वाचा विरूपनित्यया ' इति श्रुतेः

' अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा '

इति स्मृतेश्च वेदवाणी सैव सागर इत्यादि ] ॥ १०० ॥

इदानीं माध्यं भानुप्रभारूपेण वर्णयति—सतां हृल्लक्षणानि कमलानि विकासयन्ती गाढानि बाह्यप्रभाभिर्विदारयितुमशक्यान्यज्ञानलक्षणानि तमांसि विदारयन्ती प्रतिवादिलक्षणानुलूकान्प्रकर्षेण विलापयन्ती यतिश्रेष्ठलक्षणस्य सूर्यस्य माध्यलक्षणा प्रभाऽभा-

---

१ क. ख. ग. °ध्यं प्र° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यायमन्दरविमन्थनजाता
भाष्यनूतनसुधा श्रुतिसिन्धोः ॥
केवलश्रवणतो विबुधेभ्य-
श्चित्रमत्र वितरत्यमृतत्वम् ॥ १०२ ॥
पादादासीत्पद्मनाभस्य गङ्गा
शंभोर्वक्त्राच्छांकरी भाष्यसूक्तिः ॥
आद्या लोकान्दृश्यते मज्जयन्ती-
त्यन्या मग्नानुद्धरत्येष भेदः ॥ १०३ ॥
व्यासो दर्शयति स्म सूत्रकलितन्यायौघरत्नावली-
रर्थालाभवशान्न कैरपि बुधैरेता गृहीताश्चिरम् ॥
अर्थाप्त्या सुलभाभिराभिरधुना ते मण्डिताः पण्डिता
व्यासश्चाऽऽप कृतार्थतां यतिपतेरौदार्यमाश्चर्यकृत् ॥१०४॥

---

दधुतत् ॥ १०१ ॥ [ तमांस्यज्ञानानि । तथा चाऽऽथर्वणिकाः समामनन्ति 'माया च तमोरूपानुभूतेः' इति ] ॥ १०१ ॥

प्रसिद्धसुधाया भाष्यसुधायां व्यतिरेकं दर्शयति—व्यासोक्तन्यायलक्षणेन मन्दराचलेन विशेषेण मन्थनाच्छ्रुतिलक्षणात्समुद्राज्जाता भाष्यनूतनसुधा श्रवणमात्राद्विबुधेभ्यः पण्डितेभ्योऽत्र जीवद्दशायां चित्रं प्रसिद्धामृतविलक्षणममृतत्वं मोक्षरूपं वितरति प्रयच्छति सा तु नैवंविधा । स्वागता वृत्तम् ॥ १०२ ॥

इदानीं गङ्गातो भाष्यसूक्तेर्व्यतिरेकं दर्शयति—गङ्गा पद्मनाभस्य विष्णोः पादादासीत् । भाष्यसूक्तिस्तु शंभोर्मुखादासीदित्येको व्यतिरेक आद्या गङ्गा लोकान्मज्जयन्ती दृश्यतेऽन्या भाष्यसूक्तिः संसारसागरे मग्नानुद्धरतीत्येष द्वितीयो व्यतिरेकः । शालिनी वृत्तम् ॥१०३॥ [ शांकरी शं मोक्षाख्यं निरतिशयं कल्याणं ज्ञानद्वाराऽधिकारिणां करोतीति तथा ब्रह्मसूत्रदशोपनिषदादि तस्येयं शांकरीत्यर्थः । एवंच न शंभोरित्यनेन सहास्य पौनरुक्त्यम् ] ॥ १०३ ॥

सूत्रैः कलिता न्यायसमूहरत्नानामावलीर्माला व्यासो दर्शयति स्म । यथा शिल्पिभिर्ग्रन्थनं कृत्वा प्रदर्शिता रत्नमालास्तद्योग्यधनालाभात्केऽपि न गृह्णन्ति तथाऽर्थालाभवशादेता मालाश्चिरकालं कैरपि पण्डितैर्न गृहीता इदानीं तु यतिपतेः सकाशादर्थप्राप्त्या सुलभाभिराभिर्यथोक्तमालाभिस्ते पण्डिता अलंकृता व्यासश्चापि कृतार्थतां प्रापातो यतिपतेः श्रीशंकरस्यौदार्यमाश्चर्यकृत् । शार्दूलविक्रीडितं वृत्तम् ॥ १०४ ॥

---

१ ग. घ. 'पि बुधैर्न'। २ ग. घ. 'ता अधुना अर्थ'। ३ क. ख. 'भिर्माला'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्वज्जालतपःफलं श्रुतिवधूधम्मिल्लमल्लीस्रजं
सद्वैयासिकसूत्रमुग्धमधुरागण्यातिपुण्योदयम् ॥
वाग्देवीचिरभोग्यभाग्यविभवप्राग्भारकोशालयं
भाष्यं ते निपिबन्ति हन्त न पुनर्येषां भवे संभवः ॥ १०५ ॥
मन्थानाद्रिधुरंधरा श्रुतिसुधासिन्धोर्यतिक्ष्मापते-
र्ग्रन्थानां फणितिः परावरविदामानन्दसंधायिनी ॥
इन्धानैः कुमतान्धकारपटलैरन्धीभवच्चक्षुषां
पन्थानं स्फुटयन्त्यकाण्डकमभात्तर्कार्कविद्योतितैः ॥ १०६ ॥

---

[ सूत्रेति । सूत्रेषु ' अथातो ब्रह्मजिज्ञासा ' इत्यादिषु कलिताः संगुम्फिता ये न्यायौघा युक्तिव्रातास्तल्लक्षणा या रत्नावलयस्ता इत्यर्थः । पक्षे सूत्राणि क्षौमतन्तवस्तेषु कलिताः संगुम्फिता या न्यायौघा इव तर्कसंघा इव रत्नावलयस्ता इत्यर्थः । अर्थाप्त्या निरुक्तपुम-र्थाप्त्या । पक्षे वित्तप्राप्त्या ] [ अद्भुतो रसः । समासोक्तिलुप्तोपमारूपकश्लेषादयोऽ-लंकाराः ] ॥ १०४ ॥

विदुषां समूहस्य तपसः फलं श्रुतिलक्षणाया वध्वा धम्मिल्लस्य केशबन्धस्य मालतीस्रजं सद्वैयासिकसूत्रलक्षणसुन्दरमधुराख्यनगर्या अगणनीयस्यातिपुण्यस्योदयभूतं वाग्देव्या यानि चिरभोग्यभाग्यानि तेषां विभवातिशयभूतार्थसंघातस्याऽऽलयं भाष्यं ते नितरां पिबन्ति । ते क इत्यपेक्षायामाह—येषां संसारे पुनर्जन्म नास्ति । हन्तेति हर्षे । ' मुग्धस्तु सुन्दरे मूढे '

'मधुरा शतपुण्यायां मिश्रेयानगरीभिदोः ।
'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके ।
'जातीकोशेऽर्थसंघाते '

इति मेदिनी ॥ १०५ ॥ [ सदबाधितम् । एतादृशम् । तथा । वैयासिकेति । वैयासिकसूत्रमेव मुग्धमधुरं सुन्दरस्वाद्यं तस्यागण्यान्यसंख्यानि यान्यतिपुण्यानि तेषामुदय-रूपम् । रूपकादयोऽलंकाराः ] ॥ १०५ ॥

श्रुतिलक्षणस्य सुधासिन्धोः क्षीरसमुद्रस्य मन्थानाद्रेर्धुरं धरतीति तथाभूतौ तत्सदृशा यतिराजस्य ग्रन्थानां सूक्तिः परे ब्रह्मादयोऽवरे यस्मात्तं परमात्मानं विदन्तीति तथा कार्य-कारणविदो वा स्थूलसूक्ष्मविदो वा तत्त्वंपदार्थविदो वा तेषामानन्दाधायिनी । इन्धानैर्दीप्ति कुर्वद्भिस्तर्कलक्षणार्कप्रकाशैः कुमतान्धकारसमूहैरन्धीभवच्चक्षुषां मार्गं स्फोरयन्त्यकाण्डकम-भात्तु रहस्यकाण्डकमकुत्सितं यथा स्यात्तथाऽभादिति वा । ' कुत्सिते रहसि स्तम्बे

---

१ ख. घ. 'भवस्याति' । २ क. 'त्रि । क' । ३ क. ग. 'ता य' । ४ क. स्फुरयन्ती ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आ सीतानाथनेतुः स्थलकृतसलिलद्वैतमुद्रात्समुद्रा-
दा रुद्राकर्षणाद्रागवनतशिखराद्भोगसान्द्रान्नगेन्द्रात् ॥
आ च प्राचीनभूभीधरमुकुटतटादा तटात्पश्चिमाद्रे-
रद्वैताद्यापवर्गा जयति यतिधरापोद्धृता ब्रह्मविद्या ॥ ६६३॥

इति श्रीमाधवीये तद्ब्रह्मविद्याप्रतिष्ठितिः ॥
संक्षेपशंकरजये षष्ठः सर्ग उपारमत् ॥ ६ ॥

---

## अथ सप्तमः सर्गः ।

स जातु शारीरकसूत्रभाष्य-
मध्यापयन्नभ्रसरित्समीपे ॥
शिष्यालिशङ्काः शमयन्नुवास
यावन्नभोमध्यमितो विवस्वान् ॥ १ ॥

---

काण्डम् ' इति विश्वप्रकाशः ॥ १०६ ॥ [ अकाण्डकं प्रकटं यथा स्यात्तथा ]॥१०६॥

सीतानाथस्य नेता रामेश्वरस्तस्य समुद्रात्स्थलकृतं सेतुबन्धनेन यत्सलिलं तेन द्वैतमुद्रा यत्र तत्पर्यन्तं पुनश्च रुद्रेण त्रिपुरसंहारसमये यदाकर्षणं तस्माद्रागझटित्यवनतानि नम्री-भूतानि शृङ्गाणि यस्य भोगैः सान्द्राद्घनीभूतान्नगेन्द्रात्सुमेरोस्तत्पर्यन्तं तथोदयाचलमुकुट-तटपर्यन्तं तथाऽस्ताचलाद्रेस्तटपर्यन्तमद्वैतो द्वैतशून्य आद्योऽकार्यभूतोऽपवर्गो यस्याः सा यतिभूमिपेन यतिराजेनोद्धृता ब्रह्मविद्या जयति सर्वोत्कर्षेण वर्तते । स्रग्धरा वृत्तम् । ॥ १०७ ॥ [ स्थलेति । स्थलकृतं सेतुबन्धनेन यत्सलिलं तेन द्वैतमुद्राजलभेदरचना यत्र तत्पर्यन्तमित्यर्थः ] [ भोगेति । भोगैर्देवादिविलासैः सान्द्रो निबिडस्तस्मात् । नगेन्द्रान्मेरोस्तत्पर्यन्तम् ] ॥ ६६३ ॥

[इति श्रीति । तदिति । भाष्यकारकृतब्रह्मविद्याप्रतिष्ठितिर्यत्र स तथेत्यर्थः॥१०८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकु-
मारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजयडिण्डिमे षष्ठः सर्गः ॥ ६ ॥

अथ सप्तमसर्गस्य टीका ।

एवं सपरिकरां ब्रह्मविद्याप्रतिष्ठितिमुपवर्ण्य व्यासदर्शनादिकं वर्णयितुमनुक्रमते—स इति । स श्रीशंकरः कदाचित्स्वनदी गङ्गा तत्समीपे शारीरकसूत्रभाष्यं पाठय-

---

१ क. °तिधरेणोद्धृ° । २ ख. °तस्य मु° । ३ ग. °चिदभ्रन° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रान्तेष्वथाधीत्य शनैर्विनेये-
ष्वाचार्य उत्तिष्ठति यावदेषः ॥
तावद्द्विजः कश्चन वृद्धरूपः
कस्त्वं किमध्यापयसीत्यपृच्छत् ॥ २ ॥
शिष्यास्तमूचुर्भगवानसौ नो
गुरुः समस्तोपनिषत्स्वतन्त्रः
अनेन दूरीकृतभेदवाद-
मकारि शारीरकसूत्रभाष्यम् ॥ ३ ॥
स चाब्रवीद्भाष्यकृतं भवन्त-
मेते वदन्त्यद्भुतमेतदास्ताम् ॥
अथैकमुच्चारय पारमर्षं
यतेऽर्थतस्त्वं यदि वेत्थ सूत्रम् ॥ ४ ॥

---

शिष्यपङ्क्तिशङ्काः शमयन्नुवास यावत्कालं सूर्य आकाशस्य मध्यमितः प्राप्तः । उपजातिवृत्तम् ॥ १ ॥ [ शारीरकेति । शीर्यते प्रतिक्षणं नश्यतीति शरीरं स्थूलादिदेहस्तत्र भवस्तादात्म्याध्यासेन संजात इवेति शारीरो जीवस्तस्य कं दृश्योच्छेदपूर्वकमद्वैतब्रह्मात्मैक्यलक्षणमोक्षसुखं श्रवणादिजन्यज्ञानद्वारा येन तत्तथा तच्च तत्सूत्रम् ' अथातो ब्रह्मजिज्ञासा ' इत्यादि ' अनावृत्तिः शब्दादनावृत्तिः शब्दात् ' इत्यन्तं ब्रह्मसूत्रं तत्स्वकृतं भाष्यं तदित्यर्थः ] ॥ १ ॥

शनैरधीत्य श्रान्तेषु शिष्येषु सत्सु यावदेष आचार्यः शनैरुत्तिष्ठति तावद्वृद्धरूपः कश्चन ब्राह्मणस्त्वं कः किं पाठयसीति पृष्टवान् । इन्द्रवज्रा वृत्तम् ॥ २ ॥

तं वृद्धरूपं ब्राह्मणं शिष्याः प्रश्नद्वयस्योत्तरमूचुः । तत्र प्रथमप्रश्नोत्तरं भगवानिति । द्वितीयस्योत्तरमाहुः । अनेन दूरीकृतो भेदवादो यत्र तच्छारीरकसूत्रभाष्यमकारि कृतं तदेव पाठयतीत्यर्थः । उपजाति वृत्तम् ॥ ३ ॥ [अत्र भगवानित्यनेनेश्वरावतारत्वं व्यज्यते । तेन जीवकोटिनिविष्टसामान्यगुरुव्यावृत्तिर्द्योत्यते । अत एव । समस्तेति । निखिलोपनिषदामपि निरर्गलतात्पर्यानुभववानित्यर्थः । न तु श्रोत्रियब्रह्मनिष्ठगुरुवत्स्वशाखोपनिषन्मात्रतात्पर्यज्ञ इति यावत् । अत एवानेनेत्यादि ] ॥ ३ ॥

एवं शिष्योक्तं निशम्य स च ब्राह्मणो भाष्यकारमभाषत । एते त्वां भाष्यकारं वदन्त्येतदद्भुतमास्तां तिष्ठतु हे यते यदि त्वं परमर्षिणा वेदव्यासेन प्रोक्तं सूत्रमर्थतो जानासि तर्ह्येकमपि तत्सूत्रमुच्चारय तदर्थव्याख्यानायैकस्य सूत्रस्योच्चारणं कुर्वित्यर्थः ॥ ४ ॥ [ हे यते संन्यासिंस्त्वं यदि पारमार्षं परमर्षिणा बादरायणेन प्रणीतं तथा । एतादृशं सूत्रं ब्रह्मसूत्रं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमब्रवीद्भाष्यकृदग्र्यवाचं
सूत्रार्थविद्भ्योऽस्तु नमो गुरुभ्यः ॥
सूत्रज्ञताहंकृतिरस्ति नो मे
तथाऽपि यत्पृच्छसि तद्ब्रवीमि ॥ ५ ॥
पप्रच्छ सोऽध्यायमथाधिकृत्य
तृतीयमारम्भगतं यतीशम् ॥
तदन्तरेत्यादिकमस्ति सूत्रं
ब्रूह्येतदर्थं यदि वेत्थ किंचित् ॥ ६ ॥
स प्राह जीवः करणावसादे
संवेष्टितो गच्छति भूतसूक्ष्मैः ॥
ताण्डिश्रुतौ गौतमजैवलीय-
प्रश्नोत्तराभ्यां प्रथितोऽयमर्थः ॥ ७ ॥

---

यदि समग्रमर्थतो वेत्थ ज्ञातवानसि तर्हि तन्मध्य एकमपि सूत्रमित्यार्थिम्। अर्थत उच्चार्य व्याख्यानपूर्वकमुपपादयेति भाष्यकृतं प्रत्येवाब्रवीदित्यन्वयः ]॥ ४ ॥

एवमुक्तो भाष्यकारस्तं ब्राह्मणं श्रेष्ठां वाचमुवाच। सूत्रार्थविद्भ्यो गुरुभ्यो नमोऽस्तु सूत्रज्ञताभिमानो यद्यपि मम नास्ति तथाऽपि यत्पृच्छसि तद्ब्रवीमि ॥ ५ ॥ [ अग्र्यवा- चमग्र्या पूज्या वाक्प्रश्नवाणी यस्य तम्। अद्वैतात्मस्मारकत्वादुक्तप्रश्नवाचोऽग्र्यत्वं बोध्यम्। एतादृशम्। तं प्रागुक्तवृद्धब्राह्मणं प्रति। इत्यब्रवीदुवाचेत्यर्थः। ' इतीति किं तदेवाऽऽह—सूत्रेत्यादित्रिपाद्या ]॥ ५ ॥

अथ भाष्यकारोक्तेरनन्तरं स ब्राह्मणो यतीशं पप्रच्छ। यत्पृष्टवांस्तदाह—तृतीयम- ध्यायमधिकृत्य तृतीयाध्याय आरम्भगतम्। ' तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्न- निरूपणाभ्याम्, इति सूत्रमस्त्येतस्यार्थं यदि त्वं किंचिज्जानासि तर्हि ब्रूहि ॥ ६ ॥

एवं पृष्टः स भाष्यकार उक्तसूत्रस्यार्थं प्रोक्तवान्। जीवः करणानामिन्द्रियाणामवसादे मरणसमये देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तः संवेष्टितो रंहति गच्छ- तीत्यवगन्तव्यम्। कुतः। प्रश्ननिरूपणाभ्यां ताण्डिश्रुतौ गौतमजैवलीयप्रश्नप्रति- वचनाभ्याम्। प्रश्नस्तावद्वेत्थ यथा ' पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' इति। प्रतिवचनं च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वेति तु पञ्चम्यामाहुतावापः* पुरुषवचसो भवन्तीति। तस्मा-

---

* अप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानम्।

१ क. ग. त्वं जाना°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्तमर्थं निशमय्य तेन
स वावदूकः शतधा विकल्प्य ॥
अखण्डयत्पण्डितकुञ्जराणां
मध्ये महाविस्मयमादधानः ॥ ८ ॥
अनूद्य सर्वं फणितं तदीयं
सहस्रधा तीर्थंकरश्चखण्ड ॥
तयोः सुराचार्यफणीन्द्रवाचो
र्दिनाष्टकं वाक्कलहो जजृम्भे ॥ ९ ॥

---

द्भ्यां प्रश्नप्रतिवचनाभ्यामयमर्थः प्रथितः ॥ ७ ॥ [ जीवः करणावसादे करणानीन्द्रियाण्यवसीदन्ति खेदपूर्वकं लीयन्ते यस्मिन्स तथा तस्मिन्मरणकाल इत्यर्थः। तदन्तरप्रतिपत्तिशब्दितदेहान्तरप्राप्त्यवसर इति यावत्। भूतेति। अन्यदेहबीजीभूतैर्भूतसूक्ष्मैः श्रोत्रादीन्द्रियादिवदज्ञानलीनैः शब्दादितन्मात्रैरिति यावत्। सूक्ष्माणि भूतानीति भूतसूक्ष्माणि तैरिति मयूरव्यंसकादिवत्समासो बोध्यः। संवेष्टितो गच्छति रंहति पदोदितदेहान्तरगमनमातनोतीत्यर्थः ]॥ ७ ॥

इत्येवं प्रकारेण तेनोक्तं सूत्रार्थं श्रुत्वा स वावदूकोऽतिवक्ता ब्राह्मणः शतधा विकल्प्य पण्डितकुञ्जराणां मध्ये विस्मयमादधानोऽखण्डयत्खण्डितवान्। तथाहि। व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद्वृत्तिलाभस्तत्र भवति। यद्वा केवलस्यैवाऽऽत्मनो वृत्तिलाभस्तत्र भवतीन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थान उत्पद्यन्ते। यद्वा मन एव केवलं भोगस्थानमभि प्रतिष्ठते। यद्वा जीव एवोत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक एव वृक्षाद्वृक्षान्तरम्। किंच देहान्तरप्रतिपत्तौ करणानां जीवेन सह गमनं श्रुतिविरुद्धम्। तथाच श्रुतिः—

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम्'

इत्याद्या। अपि च प्रथमेऽग्नावपां श्रवणाभावात्पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति निर्धारयितुं न शक्यते। अत्र हि द्युलोकप्रमुखाः पञ्चाग्नयः श्रद्धादीनां पञ्चानामाहुतीनामाधारत्वेनाधीतास्तत्र प्रथमेऽग्नौ श्रुतां श्रद्धां परित्यज्याश्रुतानामपां परिकल्पनं साहसमात्रम्। श्रद्धायाः प्रत्ययविशेषत्वप्रसिद्धेः। किंचास्त्वपां श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारप्रतिपत्तिस्तथाऽपि तत्परिष्वक्तस्य जीवस्य गमनं तु न वाच्यं तद्गमनस्याश्रुतत्वादित्येवमादिना शतधा विकल्प्य खण्डितवानित्यर्थः ॥ ८ ॥

---

१ क. °वोरसृज र।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदीयं भाषितं सर्वमनूद्य शास्त्रकारः श्रीशंकरः सहस्रधा चखण्ड । न तावत्सांख्यबौद्धवैशेषिकदिगम्बराणां कल्पनाऽऽदर्तव्या । उदाहृतश्रुतिविरोधात् । न चाप्शब्दश्रवणसामर्थ्यात्प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति वाच्यम् । तासां भूयस्त्वापेक्षयाऽप्शब्दप्रयोगाविरोधात् । न हि केवलानामपां देहारम्भकत्वं संभवति । त्रिवृत्करणश्रुतेः । त्रयाणामपि तेजोबन्नानां देहे कार्योपलब्ध्या तस्य त्रयात्मकत्वाच्च । ननु पार्थिवो धातुर्भूयिष्ठो देहेपूपलक्ष्यत इति चेन्नैष दोषः । इतरापेक्षयाऽपां बाहुल्यसंभवात् । तस्मादप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानं युक्तम् । किंच प्राणानां देहान्तरप्रतिपत्तौ गतिः श्राव्यते । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभ्यः । सा च प्राणानां गतिराश्रयमन्तरेण न संभवतीत्यतः प्राणगतिप्रयुक्तानां तदाश्रयाणामपामपि भूतान्तरोपसृष्टानां गतिरर्थादवगम्यते । न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा जीवतोऽदर्शनात् । वागादीनामग्न्यादिगतिश्रुतिस्तु गौणी । लोमसु केशेषु चादर्शनात् 'ओषधीर्लोमानि वनस्पतीन्केशाः' इति हि तत्र तत्राऽऽम्नायते । न च तेषामुत्प्लुत्य तेषु गमनं संभवति । न च जीवस्य प्राणोपाधिप्रत्याख्यानेन गमनमवकल्पते । नापि प्राणैर्विना देहान्तर उपभोग उपपद्यते । तस्माद्वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाल उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन्गच्छन्तीत्युपचर्यते । यत्तु प्रथमेऽग्नावित्यादि तदपि न दोषावहं यतस्तत्रापि प्रथमेऽग्नौ ता एवाऽऽपः श्रद्धाशब्देनाभिप्रेयन्ते । एवं हि सत्यादिमध्यावसानसंक्षदनाकुलमेतदेकं वाक्यमुपपद्यतेऽन्यथा पुनः पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनयोर्होम्यद्रव्यं श्रद्धां नामावतारयेत्ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यात् । न च श्रद्धाख्यः प्रत्ययो मानसो जीवस्य वा धर्मः सन्धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनि । तस्मादाप एव श्रद्धाशब्देनोपादेयाः । श्रद्धा वा आप इति वैदिकप्रयोगदर्शनादपि श्रद्धाशब्दस्याप्सूपपत्तिः । गच्छन्तीनामपां बीजरूपतया सूक्ष्मत्वगुणयोगेन माणवके सिंहशब्द इव तासु श्रद्धाशब्दो कोपपन्नः । श्रद्धापूर्वककर्मसमवायाच्चाप्सु श्रद्धाशब्द उपपद्यते पुरुषेषु मञ्चशब्द इव । 'आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणः' इति श्रुतेः । श्रद्धाहेतुत्वाच्च तासु श्रद्धाशब्दोपपत्तिः । यद्यप्यत्र जीवानां श्रवणं नास्ति तथाऽपि य इष्टापूर्तादिकारिणः पितृयाणेन गन्तारः श्रुतास्त एवेहापि प्रतीयन्त इत्याद्यनेकप्रकारेण खण्डितवान् । बृहस्पतिशेषनागतुल्यवाचोस्तयोर्वाक्कलहो दिनाष्टकं जजृम्भे । उपेन्द्रवज्रा वृत्तम् ॥ ९ ॥

---

१ क. ख. घ. प्रव°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं वदन्तौ यतिराड्द्विजेन्द्रौ-
विलोक्य पार्श्वस्थितपद्मपादः॥
आचार्यमाहेति महीसुरोऽयं
व्यासो हि वेदान्तरहस्यवेत्ता॥ १०॥
त्वं शंकरः शंकर एव साक्षा-
द्व्यासस्तु नारायण एव नूनम्॥
तयोर्विवादे सततं प्रसक्ते
किं किंकरोऽहं करवाणि सद्यः॥ ११॥
इतीदमाकर्ण्य वचो विचित्रं
स भाष्यकृत्सूत्रकृतं दिदृक्षुः॥
कृताञ्जलिस्तं प्रयतः प्रणम्य
बभाण वाणीं नवपद्यरूपाम्॥ १२॥
भवांस्तडिच्चारुजटाकिरीट-
प्रवर्षुकाम्भोधरकान्तिकान्तः॥
शुभ्रोपवीती धृतकृष्णचर्मा
कृष्णो हि साक्षात्कलिदोपहन्ता॥ १३॥

---

एवं प्रकारेण वदन्तौ यतिराड्द्विजेन्द्रौ विलोक्य पार्श्वे स्थितः पद्मपाद आचार्यमितीदमाहायं ब्राह्मणो वेदान्तरहस्यवेत्ता व्यासः। हिरवधारणे। उपजातिवृत्तम्॥ १०॥

तथाच युवयोः शिवविष्ण्वोर्विवादे प्रवृत्ते किंकरेण मया किमनुष्ठेयमित्याह—त्वमिति॥ ११॥

इतीदं विचित्रं पद्मपादवचो निशम्य स भाष्यकारः सूत्रकारं दिदृक्षुः प्रयतः सावधानः कृताञ्जलिस्तं प्रणम्य नवपद्यरूपां स्तुतिवृत्तरूपां वाणीं जगाद। उपेन्द्रवज्रा वृत्तम्॥ १२॥ [दिदृक्षुर्द्रष्टुमिच्छुः]॥ १२॥

यदुवाच तदाह—भवान्विद्युद्वच्चारुजटाकिरीटेन प्रवर्षुकाम्भोधरकान्तिरिव या कान्तिस्तया कान्तः शुभ्रमुपवीतं यस्य धृतं कृष्णचर्म येन स कलिदोपहन्ता कृष्णद्वैपायनो व्यास एव साक्षान्न त्वन्यः कश्चन ब्राह्मण इत्यर्थः। उपजातिवृत्तम्॥ १३॥ [तडिदिति। एतेनामृतवर्षकत्वं सूच्यते। लुप्तोपमालंकारः]॥ १३॥

---

१ क. °रस्य का°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माक्त्कसूत्रप्रतिपाद्यतादृ-
क्परापरार्थप्रतिपादकं सत् ॥
अद्वैतभाष्यं तव संमतं चे-
त्सोढ़ा ममाऽऽगः पुरतो भवाऽऽशु ॥ १४ ॥

एवं वदन्नयमथैक्षत कृष्णमारा-
च्चामीकरव्रततिचारुजटाकलापम् ॥
विद्युल्लतावलयवेष्टितवारिदाभं
चिन्मुद्रया प्रकटयन्तमभीष्टमर्थम् ॥ १५ ॥

गाढोपगूढमनुरागजुषा रजन्या
गर्हापदं विदधतं शरदिन्दुबिम्बम् ॥
तापिच्छरीतितनुकान्तिझरीपरीतं
कान्तेन्दुकान्तघटितं करकं दधानम् ॥ १६ ॥

---

भवदीयसूत्रे प्रतिपाद्यस्य तादृशस्य निर्विशेषसविशेषार्थस्यै कार्यकारणात्मकस्य वाऽर्थ[illegible] प्रतिपादकमद्वैतभाष्यं तव सत्समीचीनं संमतं चेत्तर्हि ममापराधं क्षमित्वा शीघ्रं भव[illegible] प्रत्यक्षो भव। पाठान्तरे भावत्कमूत्रं प्रतिपाद्य तत्तादृक्परापरार्थप्रतिपादकमित्यर्थः॥ १४॥ [ भावत्केति । भो बादरायण । भवत इदं भावत्कं त्वदीयमेतादृशं यत्सूत्रं ब्रह्मसू[illegible] मित्यर्थः । प्रतिपाद्योपपाद्य । परापरेति । परः पारमार्थिकोऽद्वैतब्रह्मात्मरूपः । [illegible] मिथ्याभूतो यावद्दृश्यरूपश्च योऽर्थः पदार्थस्तस्य तयोर्वा सत्यत्वमिथ्यात्वाभ्यां क्रमात्[illegible] पादकं सदित्यर्थः । एतादृशमद्वैतभाष्यम् । तव यदि तादृग्लोकोत्तरत्वेन संमतं [illegible] चेत्तर्हि त्वं ममाऽऽगः खण्डनादिलक्षणमपराधम् । सोढ़ा । आशु शीघ्रम् । पुरतोऽग्र[illegible] 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । भव प्रत्यक्षीकृतनिजवास्तवस्वरूपो भवेत्यर्थः[illegible] लुप्तोपमालंकारः ] ॥ १४ ॥

एवं वदन्सन्नथानन्तरमयं श्रीशंकरः कृष्णमाराद्दूरादवलोकितवान् । तं विशिनष्टि[illegible] चामीकरव्रततयः सुवर्णमय्यो लतास्तद्वत्सुन्दराणां जटानां कलापो यस्य विद्युल्लक्षण[illegible] येन वेष्टितेन मेघेन तुल्यं चिन्मुद्रया ज्ञानमुद्रयाऽभीष्टमर्थं प्रकटयन्तम् । वसन्ततिल[illegible] वृत्तम् ॥ १५ ॥

पुनस्तमेव पञ्चभिर्विशिनष्टि—अनुरागजुषा रजन्याऽत्यन्तमालिङ्गितं शरच्चन्द्र[illegible] निन्दास्पदं कुर्वन्तं यतस्तापिच्छस्तमालस्तत्तुल्यस्वशरीरकान्तिझरीभिर्व्याप्तं कान्तो द[illegible] कान्तमणिस्तेन निर्मितं करकं कमण्डलुं दधानम् ॥ १६ ॥

---

१ क. सूत्रं प्र°। २ क. °स्य प्र°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सप्ताधिकाच्छदरविंशतिमौक्तिकाढ्यां
सत्यस्य मूर्तिमिव बिभ्रतमक्षमालाम् ॥
तत्ताहृशस्वपतिवंशविवर्धनात्प्रा-
क्तारावलीमुपगतामिव चानुनेतुम् ॥ १७ ॥
शार्दूलचर्मोद्वहनेन भूते-
रुद्धूलनेनापि जटाछटाभिः ॥
रुद्राक्षमालावलयेन शंभो-
रर्धासनाध्यासनसख्यपात्रम् ॥ १८ ॥
अद्वैतविद्यासृणितीक्ष्णधारा-
वशीकृताहंकृतिकुञ्जरेन्द्रम् ॥
स्वशास्त्रशङ्कोज्ज्वलसूत्रदाम-
नियन्त्रिताकृत्रिमगोसहस्रम् ॥ १९ ॥
तत्ताहृगत्युज्ज्वलकीर्तिशालि-
शिष्यालिसंशोभितपार्श्वभागम् ॥
कटाक्षवीक्षामृतवर्षधारा-
निवारिताशेषजनानुतापम् ॥ २० ॥

सप्ताधिकैरच्छदरैः स्वच्छच्छिद्रैर्विंशतिसंख्याकैर्मौक्तिकैराढ्यामक्षमालां सत्यस्य मूर्तिमिव बिभ्रतं तत्ताहशस्य स्वपतिवंशस्य चन्द्रवंशस्य वर्धनात्प्रागुपगतां तारावलीमश्विन्यादिनक्षत्र-पङ्क्तिं भवत्पतिवंशं वर्धयिष्यामीत्यनुनयं कर्तुमिवेत्युत्प्रेक्षाद्वयम् ॥ १७ ॥ [ सप्ताधि-केति। सप्ताधिकैरच्छदरैः 'दरोऽस्त्री साध्वसे गर्ते' इति मेदिन्याः सुन्दरसूक्ष्मच्छिद्रै-र्विंशतिसंख्याकैर्मौक्तिकैराढ्या संपन्ना तामित्यर्थः ][ आननेन्दुं मुखचन्द्रम्। उपगतां तारावलीमिव स्थितामित्यर्थः। अनुनेतुमिति पाठे व्यासमित्यार्थिकमेव। भगवता बादरायणे-नैव हि सत्यवत्याज्ञया चन्द्रवंशवर्धनमकारीति महाभारते प्रसिद्धमेव ] ॥ १७ ॥

शार्दूलचर्मोद्वहनादिना शंभोरर्धासनाध्यासनस्य सख्यस्य पात्रम्। इन्द्रवज्रा वृत्तम् ॥ १८ ॥

अद्वैतविद्यालक्षणस्याङ्कुशस्य तीक्ष्णया धारया वशीकृतोऽहंकारलक्षणो गजेन्द्रो येन तं स्वशास्त्रमद्वैतशास्त्रं तल्लक्षणे शङ्कौ स्थाणावुज्ज्वलसूत्रलक्षणदामभिर्नियन्त्रितमकृत्रिमाणां श्रुतिलक्षणगवां सहस्रं येन तम्। उपजातिवृत्तम् ॥ १९ ॥

तत्ताहशामत्युज्ज्वलकीर्तिशालिनां शिष्याणां पङ्क्तिभिः संशोभितः पार्श्वभागो यस्य

१ क. °टालताभिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विलोक्य वाचंयमसार्वभौमं
स शंकरोऽशङ्कितदर्शनं तम् ॥
गुरुं गुरूणामपि हृष्टचेताः
प्रत्युद्ययौ शिष्यगणैः समेतः ॥ २१ ॥

अत्यादराच्छात्रगणैः सहासौ
प्रत्युद्गतस्तच्चरणौ प्रणम्य ॥
यत्यग्रगामी विनयी प्रह्वेष्यन्नि-
त्यब्रवीत्सत्यवतीसुतं सः ॥ २२ ॥

द्वैपायन स्वागतमस्तु तुभ्यं
दृष्ट्वा भवन्तं चरिता मयाऽर्थाः ॥
युक्तं तदेतत्त्वयि सर्वकालं
परोपकारव्रतदीक्षितत्वात् ॥ २३ ॥

---

तं कटाक्षेणाभिवीक्षालक्षणयाऽमृतधारया निवारितोऽशेषजनानामाध्यात्मिकादिरूपोऽनुतापो येन तं सर्वो जनानुतापो येनेति वा ॥ २० ॥

वाचंयमानां नियन्त्रितसर्वेन्द्रियाणां मुनीनां राजानमशङ्कितमसंभावितं दर्शनं यस्य तं गुरूणामपि गुरुं विलोक्य प्रहृष्टचेताः स शंकरः शिष्यगणैः संयुक्तः प्रत्युद्ययौ ॥ २१ ॥ [ प्रत्युद्ययावभिमुखं जगामेत्यर्थः ] ॥ २१ ॥

अत्यादराच्छिष्यगणैः सह प्रत्युद्गतोऽसौ शंकरस्तस्य व्यासस्य चरणौ प्रणम्य यत्यग्रगामी विनययुक्तः प्रह्वेष्यन्सन्स श्रीशंकरः सत्यवतीपुत्रमितीदमुवाच । इन्द्रवज्रा वृत्तम् ॥ २२ ॥ [ यद्यपि नैष्ठिकब्रह्मचारिणं व्यासं प्रति संन्यासिनो भाष्यकारस्य प्रणत्यनौचित्यमेव तथाऽपि ' मुनीनामप्यहं व्यासः ' इति

' को वाऽन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् '

इति च स्मृतेर्विष्ण्ववतारत्वेनेश्वरधिया तदौचित्यमेवेति भावः ] ॥ २२ ॥

यदुवाच तदाह—हे द्वैपायन स्वागतं तुभ्यमस्तु । भवन्तं दृष्ट्वा मया सर्वे पुमर्थांश्चरितास्तदेतदस्मदादेः सर्वार्थसंपादकत्वं त्वयि युक्तम् । तत्र हेतुमाह—सर्वेषु कालेषु परोपकारव्रतदीक्षितत्वात् । उपजातिवृत्तम् ॥२३॥ [ चरिताः कृताः संपादिता इति यावत् ] ॥ २३ ॥

---

१ क हृष्ट इत्य° । २ क. ह्वः स श्री° । ३ ख. ग. घ. 'दादिस' । ४ ग. 'दनं त°'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुने पुराणानि दशाष्ट साक्षा-
च्छ्रुत्यर्थगर्भाणि सुदुष्कराणि ॥
कृतानि पद्यद्वयमत्र कर्तुं
को नाम शक्नोति सुसंगतार्थम् ॥ २४ ॥
वेदार्णवं व्यतियुतं व्यदधाश्चतुर्धा
शाखाप्रभेदनवशादपि तान्विभक्तान् ॥
मन्दाः कलौ क्षितिसुरा जनितार एते
वेदान्ग्रहीतुमलसा इति चिन्तयित्वा ॥ २५ ॥
एष्यद्विजानासि भवन्तमर्थं
गतं च सर्वं न न वेत्सि यत्तत् ॥
नो चेत्कथं भूतभवद्भविष्य-
त्कथाप्रबन्धानरचयेरजानन् ॥ २६ ॥

---

परोपकारव्रतिना त्वया कृतस्य लेशोऽप्यन्येन कर्तुमशक्य इत्याशयेनाऽऽह—हे मुने।

'ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम्।
नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम्।
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम्।
वाराहं मात्स्यकौर्म्यं च ब्रह्माण्डाख्यमिति त्रिषट्।

इत्युक्तान्यष्टादश पुराणानि साक्षाच्छ्रुत्यर्थगर्भाण्यन्यैः सुदुष्कराणि त्वया कृतान्यत्रा-स्मिँल्लोके सुसंगतार्थं श्लोकद्वयमपि कर्तुं कः शक्नोति। उपजातिवृत्तम् ॥ २४ ॥

किंच व्यतियुतं व्यामिश्रितं वेदसमुद्रमृग्यजुःसामाथर्वणलक्षणैश्चतुर्भिः प्रकारैर्युक्तं त्वं व्यदधाः कृतवानसि कलौ मन्दप्रज्ञा एते ब्राह्मणा वेदान्ग्रहीतुमलसा जनितार उत्पत्स्यन्त इति चिन्तयित्वा शाखाप्रभेदनवशादपि तान्वेदान्विभक्तान्व्यधा विहितवानसि। वसन्ततिलका वृत्तम् ॥ २५ ॥

एष्यद्भविष्यद्विजानासि तथा भवन्तं वर्तमानं गतमतीतं च सर्वं जानासि यत्त्वं न वेत्सि न जानासि तन्नास्त्येव नो चेद्यदि नैव जानासि तर्ह्यजानन्भूतभवद्भविष्यत्कथाप्रबन्धान्कथं रचयेः कथं रचितवानसि। आख्यानकी वृत्तम् ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आभासयन्नन्तरमङ्गमान्ध्यं
स्थूलं च सूक्ष्मं बहिरन्तरं च ॥
अपानुदन्मारतशीतरश्मि-
रभूदपूर्वो भगवत्पयोधेः ॥ २७ ॥
वेदाः षडङ्गं निखिलं च शास्त्रं
महान्महाभारतवारिराशिः ॥
त्वत्तः पुराणानि च संबभूवुः
सर्वं त्वदीयं खलु वाङ्मयाख्यम् ॥ २८ ॥
द्वीपे क्वचित्समुदयन्नृतमेव धाम
शाखासहस्रसचिवः शुकसेव्यमानः ॥
उल्लासयत्यहह यस्तिलको मुनीना-
मुच्चैःफलानि सुदृशां निजपादभाजाम् ॥ २९ ॥

अन्तरमङ्गं सर्वान्तरमात्मानमष्टमूर्तिशिवावयवं तच्छरीरं वाऽऽभासयन् । स्थूलं कार्यं सूक्ष्मं कारणं बहिर्जगन्मिथ्यात्वाज्ञानमन्तरं प्रत्यगभिन्नपरमात्माज्ञानमान्ध्यं तमोऽपानुदन्मारतलक्षणोऽपूर्वश्चन्द्रो भगवत्पयोधेस्त्वत्तः क्षीरसमुद्रादभूत् । प्रसिद्धचन्द्रस्तु बाह्यं शिवशरीरं तच्छिरोलक्षणावयवं वा प्रकाशयन्स्थूलं बाह्यं तमो नाशयति । यद्वा बहिः स्थूलं कार्यरूपमन्तरं सूक्ष्मं कारणरूपमथवा स्थूलमर्थाज्ञानं सूक्ष्मं धर्माज्ञानं बहिः कामाज्ञानमन्तरं मोक्षाज्ञानमित्यर्थः । उपजातिवृत्तम् ॥ २७ ॥ २८ ॥

[वेदा इति । षडङ्गं षण्णां शिक्षाद्यङ्गानां समाहारः षडङ्गम् । वेदानां व्यासतः संभवस्तु यद्यपि साक्षान्नैव तथाऽपि तद्विभक्तृत्वेनैव बोध्यः । षडङ्गस्य तु पाणिन्यादितत्तन्मुनिप्रणीतत्वेऽपि व्यासेनाऽऽहृत्याध्यापितत्वादिनैव तथात्वं ध्येयम् । एवमेव निखिलशास्त्रेऽपि बोध्यम् । वारिराशिरूपकेणैव महाभारते वैपुल्ये शाब्दिके महत्पदकर्मधारयेणाऽऽर्थिके च सिद्धे महानिति विशेषणं तु श्रीमद्भगवद्गीतादिशास्त्रवत्त्वेन परमपूज्यत्वार्थमेवेति भावः । एवं सर्वमित्यत्राप्यङ्गादिन्याय एव ज्ञेयः ]॥ २८ ॥

द्वैपायननिरुक्तिं वृक्षरूपकेणाऽऽह—ऋतमेव धाम सत्यस्वप्रकाशरूपं परब्रह्मैव क्वचिद्द्वीपे समुदयन्वेदशाखानां सहस्रं सचिवो यस्य शुकेन सेव्यमानः कल्पवृक्षरूपी यो मुनीनां तिलकः सुदृशां स्वीयचरणभाजामुच्चैः फलान्युत्कृष्टानि मोक्षादिरूपाणि फलान्युल्लासयति । अहहेत्यत्याश्चर्येऽतिप्रसिद्धौ वा । स त्वम् । तदृतं धामैवेति वा । वसु इन्द्रवज्रा वृत्तम् ॥ २९ ॥ [ यः क्वचिद्द्वीपे समुदयन्सम्यगाविर्भवन्नित्युभयत्रापि ।

१ घ. °यन्शाखासहस्रस्थानीयं वेद° । २ ध. यस्यैकतः शुकपक्षिस्थानीयेन शु° । ३ घ. रूपो यो । ४ ग. °नां स्वच ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धत्से सदाऽऽर्तिशमनाय हृदा गिरीशं
गोपायसेऽधिवदनं च चिरंतनीर्गाः ॥
दूरी करोषि नरकं च दयार्द्रदृष्ट्या
कस्ते गुणान्गदितुमद्भुतकृष्ण शक्तः ॥ ३० ॥
यमामनन्ति श्रुतयः पदार्थं
न सन्नं चासन्न बहिर्न चान्तः ॥
स सच्चिदानन्दघनः परात्मा
नारायणस्त्वं पुरुषः पुराणः ॥ ३१ ॥

---

नाद्वीप एव व्यासस्य पराशरात्सत्यवत्यां जन्मप्रसिद्धेः । शाखेति । वेदशाखाः । वृक्षपक्षे शुकः कीरः । निजेति । पक्षे स्वमूलावलम्बिनां सुहृदां पण्डितानां पक्षे दीनानाम् । उच्चैः फलान्युल्लासयति । अहहेति हर्षे । स त्वम् । ऋतमबाधितमद्वैतब्रह्मरूपं धामैव कल्पद्रुमत्वेन धर्मादिसकलपुमर्थदत्वेन गृहमेवासीति संबन्धः ] ॥ २९ ॥

हेऽद्भुतकृष्ण ते गुणान्वक्तुं कः शक्तो न कोऽपि समर्थः । अद्भुतत्वमाह—सर्वेषां[1] सतामार्तिशमनाय गिरीशं महादेवं सदैव[2] वा हृदा धत्से स तु गोपादीनामेवाऽऽर्तिशान्तये गोवर्धनसंज्ञं पर्वतं सप्तदिनं हस्तेन धृतवान् । पुनश्च चिरंतनीर्गाः श्रुतीरधिवदनं मुखे पालयसि स तु प्रसिद्धा नवीना गा वने पालितवान् । पुनश्च दयार्द्रदृष्ट्यैव नरकं दूरी करोषि स तु युद्धे नरकासुरं दूरीकृतवानतस्त्वमद्भुतकृष्णत्वमित्यर्थः । वसन्ततिलका वृत्तम् ॥ ३० ॥

[ त्वं हि सतां साधूनामार्तिशमनाय । गिरीशमपि गिरेः कैलासस्याऽऽलयत्वेन मेरोर्धनुष्ट्वेन वेशः स्वामी शिवस्तमपीत्यर्थः । तत्रापि हृदा मनसाऽपि धत्से धारयसीति यावत् । सदा निरन्तरमिति वा छेदः । प्रसिद्धकृष्णस्तु गोपादीनामेवाऽऽर्तिशमनाय सप्तदिनमेव हस्तेनैव गोवर्धनपर्वतमेव दधारेति ततो व्यतिरेकः ] ॥ ३० ॥

किं बहुना सर्वश्रुतिप्रतिपाद्यः परमात्मा त्वमेवेत्याह—यमिति । 'नासदासीन्नो सदासीत्' । 'अनन्तरमबाह्यम्' । 'सत्यं ज्ञानमनन्तं ब्रह्म' । 'विज्ञानमानन्दं ब्रह्म' 'प्रज्ञानघनः' इत्यादिश्रुतयो यं तत्त्वंपदयोर्लक्ष्यार्थमामनन्ति स[3] कार्यकारणादिविलक्षणः सच्चिदानन्दघनः पुराणः पुरुषः परमात्मा नारायणस्त्वमेव नरशब्देन स्थावरजङ्गमात्मकं शरीरजातमुच्यते । तत्र नित्यसंनिहिताश्चिदाभासा जीवा नारा इति निरुच्यन्ते तेषामयनमाश्रयोऽधिष्ठानं नराणां जीवानां समूहस्तेषामिदं भोग्यजातं च नारं तस्य जडाजडप्रपञ्चस्य चाधिष्ठानं नारायणः पूर्णत्वात्पुरुषोऽभिवृद्ध्यादिविकारशून्यत्वेन निर्विकारत्वात्पुराणः । यद्वा यं तत्त्वंपदयोर्वाच्यार्थं लक्ष्यार्थं चाऽऽमनन्तीत्यर्थः । तत्र परमात्मेत्यन्तं लक्ष्यार्थप्रति-

---

१ क. 'सताऽस°'। २ क. ग. 'र्वेषामा°' ३ क. ग. 'व ह'। ४ क. स कार'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति स्तुतस्तेन यथाविधान-
मासेदिवान्विष्टरमात्मनिष्ठः ॥
द्वैपायनः प्रश्रयनम्रपूर्व-
कायं यतीशानमिदं बभाषे ॥ ३२ ॥

त्वमस्मदादेः पदवीं गतोऽमू-
रखण्डपाण्डित्यमबोधयं ते ॥
शुकर्षिवत्प्रीतिकरोऽसि विद्व-
न्पुरेव शिष्यैः सह मा भ्रमीस्त्वम् ॥ ३३ ॥

कृतं त्वया भाष्यमितीन्दुमौलेः
संभोकणेसिद्धमुखान्निशम्य ॥
हृदा प्रहृष्टेन दिदृक्षया ते
दृगध्वनीनः प्रशमिन्नभूवम् ॥ ३४ ॥

इत्थं मुनीन्द्रवचनश्रवणोत्थहर्षं
रोमाञ्चपूरमिषतो बहिरुत्प्लवन्तम् ॥
बिभ्रत्तमभ्ररुचिमाख्यददभ्रशक्तिं
श्रीशंकरः शुकमतार्णवपूर्णचन्द्रः ॥ ३५ ॥

---

पादनं नारायणः सर्वान्तर्यामी ' तत्पदवाच्यार्थः । पुरि शयनात्पुरुषस्त्वंपदवाच्यः । पुरान-
त्वमनादित्वमुभयोर्विशेषणम् । उपजातिवृत्तम् ॥ ३१ ॥

इत्येवंप्रकारेण तेन श्रीशंकरेण स्तुत आत्मनिष्ठो द्वैपायनो वेदव्यासो यथावि[illegible]
नमासन आसेदिवानुपविष्टवान् । ' भाषायां सदवसश्रुवः ' इति क्वसुः । प्रश्रयेण न[illegible]
पूर्वकायोऽग्रभागो यस्य तं यतीशमिदं वक्ष्यमाणमुवाच ॥ ३२ ॥

यदुवाच तदाह—अस्मदादेः पदवीं त्वं गतोऽमूः पूर्वमेव प्राप्तः तेऽखण्डपाण्डित्यम[illegible]
धयं ज्ञातवानस्मि स्वपुत्रवत्प्रीतिकरोऽसि यतो विद्वंस्तस्मादयं वादायाऽऽगत इति शि[illegible]
सह त्वं पूर्वं यथा भ्रमं प्राप्तस्तथा मा भ्रमीर्भ्रमं मा गाः । उपेन्द्रवज्रा वृत्तम् ॥ ३३ ॥
त्वया भाष्यं कृतमिति शिवस्य संबन्धी सभोंकणेसंज्ञः सिद्धस्तस्य मुखाच्छ्रुत्वा प्रहृष्टेन हृ[illegible]
तव दर्शनेच्छया हे प्रशमिंस्ते नेत्रपथचरोऽहं जातोऽस्मि ॥ ३४ ॥

एवंभूतस्य मुनीन्द्रस्य वेदव्यासस्य वचनस्य श्रवणादुत्थितं रोमाञ्चपूरव्याजेन बहिरुत्प्लु[illegible]
गच्छन्तं हर्षं धारयञ्शुकाचार्यमतलक्षणसमुद्रप्रवर्धने पूर्णचन्द्रः श्रीशंकरो नवमेघकान्तिम[illegible]
त्पशक्तिं तं श्रीव्यासमाख्यत्प्रोक्तवान् । वसन्ततिलका वृत्तम् ॥ ३५ ॥

---

१ ग. 'भोंकरोसि' । घ. 'भागणे°' । २ क. ख. 'नीन्दुव' । ३ ग. मीति त' । ४ ग.
'भोंकरोसि' । घ. 'भोंगणे' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमन्तुपैलप्रथमा मुनीन्द्रा
महानुभावा ननु यस्य शिष्याः ॥
तृणाल्लघीयानपि तत्र कोऽहं
तथाऽपि कारुण्यमदर्शि दीने ॥ ३६ ॥
सोऽहं समस्तार्थविवेचकस्य
कृत्वा भवत्सूत्रसहस्ररश्मेः ॥
भाष्यप्रदीपेन महर्षिमान्य
नीराजनं धृष्टतया न लज्जे ॥ ३७ ॥
अकारि यत्साहसमात्मबुद्ध्या
भवत्प्रशिष्यव्यपदेशभाजा ॥
विचार्य तत्सूक्तिदुरुक्तिजाल-
मर्हः समीकर्तुमिदं कृपालुः ॥ ३८ ॥
इत्थं निगद्योपरतस्य हस्ता-
द्धस्तद्वयेनाऽऽदरतः स भाष्यम् ॥
आदाय सर्वत्र निरैक्षतासौ
प्रसादगाम्भीर्यगुणाभिरामम् ॥ ३९ ॥

---

तद्वाक्यमुदाहरति त्रिभिः । सुमन्तुपैलवैशंपायनाद्या मुनीन्द्रा महाननुभावः प्रभावो येषां ते । ननु यस्य ते शिष्यास्तस्मिंस्त्वयि तृणादप्यतिशयेन लघुभूतोऽहं को यद्यप्येवं तथाऽपि दीने मयि कारुण्यं दर्शितवानसि । उपेन्द्रवज्रा वृत्तम् ॥ ३६ ॥

सोऽहं लघीयानपि तव कारुण्यपात्रतां गतः सर्वेषामुपनिषद्गतानामर्थानां विवेचकस्याऽयमभिमतोऽर्थोऽयं नेति विविच्य प्रदर्शकस्य भवदीयसूत्रलक्षणस्य सहस्रकिरणस्य सूर्यस्य भाष्यलक्षणेन प्रदीपेन नीराजनमारार्तिकं कृत्वा हे महर्षिमान्य धार्ष्ट्येन न लज्जे । इन्द्रवज्रा वृत्तम् ॥ ३७ ॥

यद्यप्येवं तथाऽपि भक्त्या कृतं प्रदीपेन नीराजनं यथा सविता स्वी करोति तथा भवत्पुत्रेण स्वीकर्तव्यान्मत्कृतं भाष्यं त्वं शोधयितुमर्हसीत्याशयेनाऽऽह—भवत्प्रशिष्यव्यपदेशपात्रेण मया यत्साहसं स्वबुद्ध्या कृतं तद्विचार्य सूक्तिदुरुक्तिजालमिदं समं कर्तुं कृपालुस्त्वं योग्योऽसि । उपजातिवृत्तम् ॥ ३८ ॥

इत्यमुक्त्वोपरतस्य तूष्णीं स्थितस्य श्रीशंकरस्य हस्तात्स वेदव्यास आदरेण हस्तद्वयेन भाष्यमादायासौ व्यासः प्रसादगाम्भीर्यगुणैरभिरामं सर्वत्र सम्यग्विचारपूर्वकं दृष्टवान् ॥ ३९ ॥

---

१ क. ख. घ. हस्ते हस्त° । २ ख. घ. तव । ३ ख. °षद्गुक्ताना° । ४ ग. तमात्मसात्कु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत्रानुकारिमृदुवाक्यनिवेदितार्थं
स्वीयैः पदैः सह निराकृतपूर्वपक्षम् ॥
सिद्धान्तयुक्तिविनिवेशिततत्स्वरूपम्
दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥ ४० ॥

न साहसं तात भवानकार्षी-
द्यत्सूत्रभाष्यं गुरुणा विनीतः ॥
विचार्यतां सूक्तदुरुक्तमत्रे-
त्येतन्महत्साहसमित्यवैमि ॥ ४१ ॥

मीमांसकानामपि मुख्यभूतो
वेत्थाखिलव्याकरणानि विद्वन् ॥
विनिःसरेत्ते वदनाद्यतीन्दो
गोविन्दशिष्यस्य कथं दुरुक्तम् ॥ ४२ ॥

न प्राकृतस्त्वं सकलार्थदर्शी
महानुभावः पुरुषोऽसि कश्चित् ॥
यो ब्रह्मचर्याद्विषयान्निवार्य
पर्यव्रजः सूर्य इवान्धकारान् ॥ ४३ ॥

---

पुनस्तद्विशिनष्टि—सूत्रानुसारिभिर्मृदुवाक्यैर्निवेदितोऽर्थो येन स्वीयैः पदैर्निराकृताः पूर्वपक्षा यत्र सिद्धान्तयुक्तिभिर्विनिवेशितं तस्य सिद्धान्तस्य स्वरूपं यत्र तथाभूतं भाष्यं स वेदव्यासो दृष्ट्वाऽभिनन्द्य परितोषवशादवोचदुक्तवान् । वसन्ततिलका वृत्त ॥ ४० ॥ सूत्रानुकारीति । उक्तं ह्येवमेव भाष्यलक्षणं पाराशरपुराणे—

'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः ।
स्ववाक्यानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ' इति ] ॥ ४० ॥

गुरुणा विनीतो भवान्यत्सूत्रभाष्यमकृत तत्साहसं न कृतवान् । सूक्तदुरुक्तम विचार्यतामित्येतन्महत्साहसमित्यवैमि जानामि । उपजातिवृत्तम् ॥ ४१ ॥

तत्र हेतुमाह—मीमांसकानामपीति । वेत्थ जानासि । उपजातिवृत्तम् ॥ ४२ ॥

किंच न प्राकृतस्त्वं किंतु सर्वार्थदर्शी कश्चिन्महानुभावः पुरुषोऽसि । तत्र हेतु माह—य इति । पर्यव्रजः संन्यासं कृतवान् । अनायासेन विषयनिवारणे दृष्टान्त यथा सूर्योऽन्धकारान्निवार्य गच्छति तद्वत् ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बह्वर्थगर्भाणि लघूनि यानि
निगूढभावानि च मत्कृतानि ॥
त्वामेवमित्थं विरहय्य नास्ति
यस्तानि सम्यग्विवरीतुमीष्टे ॥ ४४ ॥
निसर्गदुर्ज्ञानतमानि को वा
सूत्राण्यलं वेदितुमर्थतः सन् ॥
क्लेशस्तु तावान्विवरीतुरेषां
यावान्प्रणेतुर्विबुधा वदन्ति ॥ ४५ ॥
भावं मदीयमवबुध्य यथावदेवं
भाष्यं प्रणेतुमनलं भगवानपीशः ॥
सांख्यादिनाऽन्यथयितं श्रुतिमूर्धवर्त्मो-
द्धर्तुं कथं पराशिवांशसृते प्रभुः स्यात् ॥ ४६ ॥

---

मत्सूत्रभाष्यकरणादपि त्वं प्राकृतो न भवसीत्याशयेनाऽऽह—बहवोऽर्था गर्भे येषां निगूढो भावो येषां पुनश्च लघूनि मत्कृतानि यानि सूत्राणि तानि त्वां विहायैवंप्रकारेण सम्यग्यो विवरीतु विवरणं कर्तुं समर्थः स नास्ति ॥ ४४ ॥ [ बह्वर्थेति । सूत्राणीति शेषः । अत एव पाराशरपुराणेऽपि सूत्रलक्षणमित्थमेव कथितम् ।

' अल्पाक्षरमसंदिग्धं न्यायवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रकृतो विदुः ' इति ] ॥ ४४ ॥

किंच सूत्रकृत्परिश्रमतुल्य एवैषां व्याख्यातुः परिश्रम इति देवाः पण्डिताश्च वदन्तीत्याह—निसर्गात्स्वभावादेवातिशयेन दुर्ज्ञानानि सूत्राणि यथाभूतार्थतो ज्ञातुं को वाऽलं न कोऽपि समर्थो हे सन्यत एषां सूत्राणां प्रणेतुर्यावान्क्लेशस्तावानेवैषां विवरणकर्तुः क्लेश इति विशेषज्ञा देवाश्च वदन्ति ॥ ४५ ॥

एवं यथा त्वया मदीयो भावो बुद्धस्तथा तं यथावद्विज्ञायैश्वर्ययुक्तोऽपि कर्तुमकर्तुमन्यथा कर्तुं समर्थोऽपि कश्चिद्भाष्यं प्रणेतुमनलं समर्थो न भवति यथावदेवं भाष्यमिति वा यत एवमतः पराशिवांशं विना सांख्यादिना विपरीततां प्रापितं वेदान्तमार्गमुद्धर्तुं कथं प्रभुः समर्थः स्यादित्यर्थः । वसन्ततिलका वृत्तम् ॥ ४६ ॥ [ सांख्यादिनेति । आदिना मीमांसकतार्किकादिः । अन्यथयितं विपरीततां प्रापितम् ] ॥ ४६ ॥

---

१ क. 'दिना विलुलितं भु' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोषानुषङ्गकलयाऽपि सुदूरमुक्तो
धत्सेऽधिमानसमहो सकलाः कलाश्च ॥
सर्वात्मना गिरिजयोपहितस्वरूपः
शक्यो न वर्णयितुमद्भुतशंकरस्त्वम् ॥ ४७ ॥

व्याख्याप्यसंख्यैः कविभिः कुरेत-
द्व्याख्यास्यते कैश्चिदितः परं च ॥
भवानिवास्मद्धृदयं किमेते
सर्वज्ञ विज्ञातुमलं निगूढम् ॥ ४८ ॥

व्याख्याहि भूयो निगमान्तविद्यां
विभेदवादान्विदुषो विजित्य ॥
ग्रन्थान्भुवि ख्यापय सानुबन्धा-
नहं गमिष्यामि यथाभिलापम् ॥ ४९ ॥

---

यत्तु धत्स इत्याद्युक्तं तत्राऽऽह—अद्भुतशंकरस्त्वं वर्णयितुं न शक्यः । अद्भुतत्वं दर्शयति । रोषस्य संबन्धलेशेनापि रहितः स तु रोषानुषङ्गेण मुक्तो न भवत्येवंभूतोऽप्यधिमानसं मनसि सकला अपि कला धत्से स तु शिरस्येकामेव शशिकलां बिभर्ति पुनश्च सर्वात्मना सर्वात्मभावेन गिरिजया वेदान्तवाचि जातया ब्रह्मविद्यालक्षणया पार्वत्या वाचि जयेन वा युक्तं स्वरूपं यस्य स त्वर्धशरीरेण पार्वत्या युक्तस्वरूप इत्यर्थः ॥ ४७ ॥

यदुक्तं लज्जासंपादकं कर्म कृत्वाऽपि धृष्टतयाऽहं न लज्ज इति तत्राऽऽह—पूर्वमेतन्मदीयं सूत्रजातमसंख्यातैः कविभिर्व्याख्यातमितः परं च कैश्चित्कविभिरेतद्व्याख्यास्यते परंतु भवानिव निगूढमस्मदभिप्रायं विज्ञातुं किमेते व्याख्यातारोऽलं समर्था नैव शक्ताः सर्वज्ञस्य तवैव तद्विज्ञाने शक्तिर्न त्वन्यस्याल्पज्ञस्येत्याशयवानाह—हे सर्वज्ञेति । उपजातिर्वृत्तम् ॥ ४८ ॥

एवं सूत्रभाष्यं स्तुत्वा श्रुतिभाष्यकरणादौ प्रेरयन्स्वगमनमामन्त्रयाति । व्याख्याहीति । वेदान्तविद्यामुपनिषदं विभेदवादान्पण्डितान्विजित्य विषयसंबन्धप्रयोजनाधिकार्याख्यानुबन्धयुक्तान्ग्रन्थानाख्यापय । आख्यानकी वृत्तम् ॥ ४९ ॥

---

१ क. 'त्या यु' । २ ग. 'वैत' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्तवन्तं तमसाववोच-
स्कृतानि भाष्याण्यपि पाठितानि ।
ध्वस्तानि सम्यक्कुमतानि धैर्या-
दितः परं किं करणीयमस्ति ॥ ५० ॥
मुहूर्तमात्रं मणिकर्णिकायां
विधेहि सद्वत्सल संनिधानम् ॥
चिराद्यतेऽहं परमायुषोऽन्ते
त्यजामि यावद्वपुरद्य हेयम् ॥ ५१ ॥
इतीदमाकर्ण्य वचो विचिन्त्य
सशंकरं प्राह कुरुष्व मैवम् ॥
अनिर्जिताः सन्ति वसुंधरायां
त्वया बुधाः केचिदुदारविद्याः ॥ ५२ ॥
जयाय तेषां कति हायनानि
वस्तव्यमेव स्थिरधीस्त्वयाऽपि ॥
नो चेन्मुमुक्षा भुवि दुर्लभा स्या-
त्स्थितिर्यथा मातृधुतस्य बाल्ये ॥ ५३ ॥

---

इत्युक्तवन्तं तं श्रीव्यासमसौ श्रीशंकरोऽवोचदवदत् । त्वदाज्ञा मया पूर्वमेव संपादितेति दर्शयति—निगमान्तभाष्याणि कृतानि पाठितानि च पुनश्च कुमतानि धैर्यात्सम्यङ्नाशितानि तस्मादितः परं किंचिदपि कर्तव्यं नास्ति ॥ ५० ॥

यत एवमतो हे सद्वत्सल घटिकाद्वयं मणिकर्णिकायां सामीप्यं विधेह्येतदर्थमहं चिराद्यत्नं करोमि परमायुषस्तव समीपेऽद्य यावद्धेयं वपुः शरीरं त्यजामि तावदित्यर्थः । हेपरमाऽऽयुषोऽन्ते समासाविति वा । उपेन्द्रवज्रावृत्तम् ॥ ५१ ॥ ५२ ॥ [ आयुषोऽन्ते षोडशवर्षात्मकायुःसमाप्तिक्षणे । परमत्यन्तं हेयं त्याज्यम् । एतादृशं वपुः शरीरम् ॥ ५१ ॥ [ ततः किमुक्तं व्यासेनेत्यत्राऽऽह—इतीदमित्यादि पञ्चभिः । स वेदव्यासः । इति प्रोक्तप्रकारम् । इदं प्रकृतम् । वचो वाक्यम् । आकर्ण्य श्रुत्वा । अथ विचिन्त्य विचार्य । त्वमेवं मा कुरुष्वेति शंकरं भाष्यकारं प्राहेत्यन्वयः । तत्र हेतुः । अनिर्जिता इत्याद्युत्तरार्धेन । त्वयानिर्जिता इति संबन्धः । सन्तु किं तैः क्षुद्रैस्तत्राऽऽह—उदारेति । अतस्तदुपेक्षाऽनुचितैवेति भावः ॥ ५२ ॥

तेषामुदारविद्यानां जयाय हे स्थिरधीर्यद्यपि तत्पराभवहेतुभूता ग्रन्थास्त्वया रचितास्तथाऽपि कति वर्षाणि त्वयाऽपि वस्तव्यमेव । विपक्षे दोषमाह—नो चेदिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसन्नगम्भीरभवत्प्रणीत-
प्रबन्धसंदर्भभवः प्रहर्षः ॥
प्रोत्साहयत्यात्मविदामृषीणां
वरेण्य विश्राणयितुं वरं ते ॥ ५४ ॥
अष्टौ वयांसि विधिना तव वत्स वृत्ता-
न्यन्यानि चाष्ट भवता सुधियाऽर्जितानि ॥
भूयोऽपि षोडश भवन्तु भवाज्ञया ते
भूयाच्च भाष्यमिदमारविचन्द्रतारम् ॥ ५५ ॥
त्वमायुषाऽनेन विरोधिवादि-
गर्वाङ्कुरोन्मूलनजागरूकैः ॥
वाक्यैः कुरुष्वोज्झितभेदबुद्धी-
नद्वैतविद्यापरिपन्थिनोऽन्यान् ॥ ५६ ॥
इतीरयन्तं प्रति वाचमूचे
स शंकरः पावितसर्वलोकः ॥
त्वत्सूत्रसंबन्धवशान्मदीयं
भाष्यं प्रचारं भुवि यातु विद्वन् ॥ ५७ ॥

---

यथा बाल्ये मातृरहितस्य स्थितिर्दुर्लभा तद्वन्मातृवद्रक्षकेण त्वया रहिता मोक्षेच्छा दुर्लभा स्यात् । उपजातिवृत्तम् ॥ ५३ ॥

आयुषः समाप्तिं विचार्य वरदानायाऽऽह—हे आत्मविदामृषीणां वरेण्य प्रसन्नगम्भीराणां भवत्प्रणीतानां प्रबन्धानां संदर्भैर्भवो जन्म यस्य स प्रहर्षस्तुभ्यं वरं प्रदातुं मां प्रोत्साहयति ॥ ५४ ॥

वयांसि वर्षाणि भवस्य शिवस्याऽऽज्ञया । वरान्तरं ददाति । च पुनरिदं भाष्यमारविचन्द्रतारं भूयाद्यावत्सूर्यादिस्थितिस्तावद्भवत्वित्यर्थः वसन्ततिलका वृत्तम् ॥ ५५ ॥ [ सुधियार्जितानि । विवेकेन समुपागतागस्त्यादिमुनीनां वन्दनविन्यासं संपाद्य संपादितानीत्यर्थः ] ॥ ५५ ॥

ननु षोडशवर्षपरिमितेनाऽऽयुषा मया किं कर्तव्यमित्याकाङ्क्षायामाह—त्वमनेनाऽऽयुषाऽन्यानद्वैतविद्यापरिपन्थिनः स्ववाक्यैस्त्यक्तभेदमतीन्कुरुष्व । वाक्यानि विशिनष्टि—विरोधिवादिनां गर्वस्य समूलोच्छेदने जागरूकैः सावधानैः । उपजाति वृत्तम् ॥ ५६ ॥

इत्थेवं कथनं कुर्वन्तं वेदव्यासं प्रति पवित्रितलोकः स शंकरो वाचमुवाच यथा

---

१ क. ग. 'संप'। २ क. 'शंकरः प्रवचनम्'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीरयित्वा चरणौ ववन्दे
यतिर्मुनेः सर्वविदो महात्मा ॥
प्रदाय संभाव्य वरं मुनीशो
द्वैपायनः सोऽन्तरधाद्यतात्मा ॥ ५८ ॥

इत्थं निगद्य ऋषिवृष्णि तिरोहितेऽस्मि-
न्नन्तर्विवेकनिधिरप्यथ विव्यथे सः ॥
हृत्तापहारिनिरुपाधिकृपारसानां
तत्तादृशां कथमहो विरहो विषह्यः ॥ ५९ ॥

तत्पादपद्मे निजचित्तपद्मं
पश्यन्कथंचिद्विरहं विषह्य ॥
यतिक्षितीशोऽपि गुरोर्नियोगा-
न्मनो दधे दिग्विजये मनीषी ॥ ६० ॥

भाष्यस्य वार्तिकमथैष कुमारिलेन
भट्टेन कारयितुमादरवान्मुनीन्द्रः ॥
वन्ध्यायमानदरविन्ध्यमहीधरेण
वाचंयमेन चरितां हरितं प्रतस्थे ॥ ६१ ॥

मदीयं भाष्यं प्रचारं गन्तुं योग्यं न भवति तथाऽपि त्वत्सूत्रसंबन्धवशाद्धे विद्वन्भुवि प्रचारं गच्छतु स्वलाघवोक्तिरियम् ॥ ५७ ॥

संभाव्य वरमवश्यंभाविवरं संपूज्य वरं प्रदायेति वा ॥ ५८ ॥

इत्थं संभाष्यास्मिन्नृषिश्रेष्ठे वेदव्यासेऽन्तर्धानं गतेऽथानन्तरमन्तर्विवेकनिधिरपि स श्रीशंकरो विव्यथे व्यथां प्राप । तत्र हेतुः । हृत्तापस्य हारी निरुपाधिकृपारसो येषां तत्तादृशां व्यासप्रभृतीनां विरहः कथमहो विषह्यः कथमपि विषह्यो न भवतीत्यर्थः । वसन्ततिलका वृत्तम् ॥ ५९ ॥ ऋषीति । ऋषीणामखिलमन्त्रद्रष्टॄणां वृषा 'वासवो वृत्रहा वृषा' इत्यमरान्निखिलब्रह्मर्षिस्वामिनीत्यर्थः ] ॥ ५९ ॥

तर्हि कथं तद्विरहं विषह्य दिग्विजये मनो दध इत्याकाङ्क्षायामाह—तदिति । गुरोर्वेदव्यासस्य नियोगादनुशासनात् । उपजातिवृत्तम् ॥ ६० ॥ [ दिगिति । विषयसप्तमीयम् । मनो दधे संकल्पं चकारेत्यन्वयः ] ॥ ६० ॥

अथ दिग्विजये मनसः स्थापनानन्तरं कुमारिलेन भट्टेन भाष्यस्य वार्तिकमादरात्कारयितुमेष मुनीन्द्रो वन्ध्यावदाचरन्तो निष्फला दरा गर्ता यस्मिंस्तथाभूतो विन्ध्याख्यो येन तेन वाचंयमेनागस्त्येन मुनिना चारितां दक्षिणां हरितं दिशं प्रतस्थे प्रस्थानं

१ क. °शां प्रति प्र°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः स वेदान्तरहस्यवेत्ता
भेत्ताऽमतानां तरसा मतानाम् ॥
प्रयागमागात्प्रथमं जिगीषुः
कुमारिलं साधितकर्मजालम् ॥ ६२ ॥

आमज्जतां किल तनूमसितां सितां च
कर्तुं कलिन्दसुतया कलितानुपङ्गाम् ॥
अह्नाय जह्नुतनयामथ निह्नुताघां
मध्येप्रयागमगमन्मुनिरर्थमार्गम् ॥ ६३ ॥

गङ्गाप्रवाहैरुपरुद्धवेगा
कलिन्दकन्या स्तिमितप्रवाहा ॥
अपूर्वसख्यागतलज्जयेव
यत्राधिकं भाति विचित्रपाथाः ॥ ६४ ॥

---

कृतवान् । वसन्ततिलका वृत्तम् ॥ ६१ ॥ [ वन्ध्येति । 'दरोऽस्त्री साध्वसे गर्ते' इति मेदिन्या वन्ध्यवदाचरति तथाभूतं दरं द्वैतलक्षणं भयं यस्य तादृशो विन्ध्यमहीधरो विन्ध्याचलो येन स तथा तेन स्वोपदेशप्रभावेणासंप्रज्ञातसमाधिस्थत्वाद्विफलीभूतद्वैतलक्षणभीरुत्वीकृतविन्ध्याचलेनेत्यर्थः ] ॥ ६१ ॥

ततः प्रस्थानानन्तरं वेदान्तरहस्यवेत्ताऽमतानामनभिमतानां मतानां प्रसह्य झटिति भेदनकर्ता स श्रीशंकरः साधितकर्मकाण्डं कुमारिलं प्रथमं जेतुमिच्छुः प्रयागं तीर्थराजमगच्छत्प्रथमं प्रयागमिति वा संबन्धः । उपजातिवृत्तम् ॥ ६२ ॥

अथानन्तरमामज्जतां पुंसां तनूं शरीरमसितां कृष्णां विष्णुसरूपां सितां श्वेतां शिवसरूपां च कर्तुं कलिन्दाख्यगिरिपुत्र्या कालिन्द्या यमुनया संपादितोऽनुषङ्गः संबन्धो यया निह्नुतानि नाशितान्यघानि यया तां जाह्नवीमह्नायाञ्जसाऽर्थानां चतुर्विधपुरुषार्थानां मार्गं मध्येप्रयागं तथाभूते प्रयागस्य मध्येऽगमत् । 'पारे मध्ये षष्ठ्या वा' इति समास एदन्तत्वनिपातनं च । वसन्ततिलक वृत्तम् ॥ ६३ ॥

गङ्गाप्रवाहैरुपरुद्धो वेगो यस्याः सा विचित्रजला कलिन्दकन्या यमुना यत्र प्रयागमध्येऽपूर्वसख्या आगता या लज्जा तया स्तिमितोऽचञ्चलः प्रवृत्तिः स्रोतो यस्यास्तथाभूतेवाधिकं भाति ।

'प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणि'

इति मेदिनी । उपजातिवृत्तम् ॥ ६४ ॥

---

१ क. °गं म° । क. मध्यमग° । ३ ख. 'ध्ये तथाभू°ां गङ्गां भाति मुनिरग° । ४ क. ख. घ. 'त्रिर्यस्या° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्तेवसद्भिरमलच्छविसंप्रदाय-
मध्येतुमाश्रितजलां कुहचिन्मरालैः ॥
चक्रद्वयेन रजनीसहवाससौख्य-
संशीलनाय किल संवलितां परत्र ॥ ६५ ॥

यत्राऽऽप्लुता दिव्यशरीरभाज
आचन्द्रतारं दिवि भोगजातम् ॥
संभुञ्जते व्याधिकथानभिज्ञाः
प्राहेममर्थं श्रुतिरेव साक्षात् ॥ ६६ ॥

अज्ञातसंभवतिरोधिकथाऽपि वाणी
यस्याः सितासिततयैव गृणाति रूपम् ॥
भागीरथीं यमुनया परिचर्यमाणा-
मेतां विगाह्य मुदितो मुनिरित्यभाणीत् ॥ ६७ ॥

---

कुहचित्कचिदमलकान्तिलक्षणं संप्रदायमध्येतुं समीपे वसद्भिः शिष्यैर्मरालैर्हंसैराश्रितं जलं यस्यास्तां परत्रान्यत्र नलिनीसहवासलक्षणसौख्यसंशीलनाय चक्रद्वयेन संव्याप्तां भागीरथीं विगाह्येति व्यवहितेनान्वयः।

'रजनी नलिनीरात्रिहरिद्राजतुकासु च'

इति मेदिनी। वसन्ततिलका वृत्तम् ॥ ६५ ॥ [ चक्रेत्यादि। चक्रवाकमिथुनेन। रजनीति। रात्रिसंयोगसुखसंपादनार्थमित्यर्थः ] [ यमुनायाः कृष्णवर्णत्वेन तत्र चक्रवाकमिथुनस्य रात्रिसंमेलनसुखानुभवसंपादनहेतुकावस्थानोत्प्रेक्षणमुचितमेवेति भावः ] ॥ ६५ ॥

तामेव वर्णयति— यत्र यस्यां यमुनया संगतायां गङ्गायामाप्लुता दिव्यशरीरभाजः पुनश्च व्याधिकथानभिज्ञाः सन्तो दिवि भवं भोगसमुदायं सम्यग्भुञ्जते। नन्वत्र किं प्रमाणमिति चेत्तत्राऽऽह—इममर्थं साक्षाच्छ्रुतिरेव प्राह—तथाच श्रुतिः—'सितासिते सरिते यत्र संगते तत्राऽऽप्लुतासो दिवमुत्पतन्ति' इत्याद्या। इन्द्रवज्रा वृत्तम् ॥ ६६ ॥

किंच वाणी श्रुतिरप्यज्ञाता संभवस्य जन्मनस्तिरोधेस्तिरोधानस्य च कथा यया सा यस्या यमुनया संगताया गङ्गायाः सितासिततयैव रूपं वर्णयति—तथाभूतामेतां यमुनया परिचर्यमाणां भागीरथीं विगाह्य मुदितो मुनिः श्रीशंकर इति वक्ष्यमाणमभाणीदुक्तवान्। वसन्ततिलका वृत्तम् ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धापगे पुरविरोधिजटोपरोध-
क्रुद्धा कुतः शतमदःसदृशान्विधत्से ॥
बद्धा न किंनु भवितासि जटाभिरेषा-
मद्धा जडप्रकृतयो न विन्दति माविं ॥ ६८ ॥
सन्मार्गवर्तनपराऽपि सुरापगे त्वम-
स्थीनि नित्यमशुचीनि किमाददासि ॥
अज्ञातमम्ब हृदयं तव सज्जनानां
प्रायः प्रसाधनकृते कृतमज्जनानाम् ॥ ६९ ॥

---

हे सिद्धापगे त्रिपुरविरोधिनः शिवस्य जटाभिरुपरोधेन क्रुद्धा शतममुष्य शिवस्य सदृशान्कुतः किमर्थं विधत्से एषां त्वया रचितानां शिवानां जटाभिः किंतु न बद्धा भवितासि किं बद्धा न भविष्यासि किंतु भविष्यस्येवैवमाक्षिप्य स्वयमेव प्रतिक्षिपति जडप्रकृतयो भाविं न जानन्ति । अत्र निन्दया स्तुतेरवगमाव्द्याजस्तुतिः ।

' उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः '

इत्युक्तेः ॥ ६८ ॥ [ अद इति । अमुना शिवेन सदृशास्त्वयि स्नानादिना मरणोत्तरं हरसारूप्यलाभेन तत्तुल्यस्तानिति यावत् ] [ डलयोः सावर्ण्यात्साक्षाज्जडप्रकृतिं प्रकृते स्फुटमेव ] ॥ ६८ ॥

हे सुरापगे सन्मार्गवर्तनपराऽपि त्वं नित्यमपवित्राण्यस्थीनि किमर्थमाददासीत्याक्षेपं स्वयमेव समाधत्ते हे देवि तव हृदयमाज्ञातं तवाभिप्रायो बुद्धस्तव जले कृतं मज्जनं यैस्तेषां सज्जनाना प्रायः प्रसाधनकृते शिवरूपाणां तेषामलंकारार्थमाददासीत्यर्थः । छिद्रहिताकारार्थकत्वात्परस्मैपदप्रयोगो न दोषावहः । ' आङो दोऽनास्यविहरणे ' इति छिद्रहणाभावात् । तथाच लोकोपकाराय यथोक्ता तव प्रवृत्तिरित्यर्थः ॥ ६९ ॥ [ आ इति स्मृतेर्निपातः । तदुक्तम्—

' ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ' इति ।

एवं च किं स्मृतमित्यपेक्षायां तदाह ज्ञातमित्यादिना ] ॥ ६९ ॥

---

१ क. °नां न° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वापानुषङ्गजडतामरिताञ्जनौघा-
न्स्वापानुषङ्गजडताविधुरान्विधत्से ॥
दूरीभवद्विषयरागहृदोऽपि तूर्णं
धूर्तावतंसयसि देवि क एष मार्गः ॥ ७० ॥

इति स्तुवंस्तापसराट्त्रिवेणीं
शाट्या समाच्छाद्य कटिं कूपीटे ॥
दोर्दण्डयुग्मोद्धृतवेणुदण्डोऽ-
घमर्षणस्नानमना बभूव ॥ ७१ ॥

सस्नौ प्रयागे सह शिष्यसंघैः
स्वयं कृतार्थो जनसंग्रहार्थी ॥
अस्मारि माताऽपि च सा पुपोष
दधार या दुःखमसोढ भूरि ॥ ७२ ॥

---

स्वापानुषङ्गेण निद्रानुषङ्गेण या जडता तया व्याप्ताञ्जनौघान्निद्रानुषङ्गजडताविधुरान्दे-
वान्विधत्से दूरीभवद्विषयरागो यस्मात्तथाभूतं हृद्येषां तान्धूर्तावतंसयसि धूर्तशिरोमणीन्करोषि
तथाचैष को वा मार्गः । अत्र दूरीभवद्विषयरागहृदो धूर्तो धत्तूरपुष्पं तदवतंसः शिवस्तद्रू-
पान्करोषीति श्लेषेण स्तुतिः ।

'धूर्तं तु खण्डलवणे धत्तूरे ना विटे त्रिषु'

इति मेदिनी । इन्द्रवज्रा वृत्तम् ॥ ७० ॥ [स्वापेति । हे देवि गङ्गे त्वम् ।
स्वस्या अपां जलानां योऽनुषङ्गः संसर्गस्तेन या जडता जाड्यं तेन भरितास्तानित्यर्थः ।
स्वापेति । निद्रासंसर्गशून्यानित्यर्थः । अस्वप्नशब्दितदेवान्करोषीत्यन्वयः ] ॥ ७० ॥

इत्येवं त्रिवेणीं स्तुवन्संस्तापसराट् शाट्या कटिं सम्यगाच्छाद्य भुजदण्डयुग्मेनोर्ध्वं धृतो
वेणुदण्डो येन स कूपीटे जले । 'कूपीटमुदरे तोये' इति मेदिनी । अघमर्षणस्नाने मनो
यस्य तथाभूतो बभूव । उपजातिवृत्तम् ॥ ७१ ॥

या पुपोष गर्भे दधार दुःखं च भूर्यसोढ सा माताऽप्यस्मारि स्मृता । आख्यानकी
वृत्तम् ॥ ७२ ॥

---

१ क. 'या भरिताभि°' । २ क. 'रानेव विध' । ३ क. 'पां तांस्तु मुग्धादिमुण्डनेन धूर्तां°' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुष्ठितिं द्रागवसाय्य वातैः
कह्लारशीतैरुपसेव्यमानः ॥
तीरे विशश्राम तमालशालि-
न्यत्रान्तरेऽश्रूयत लोकवार्ता ॥ ७३ ॥

गिरेरवप्लुत्य गतिः सतां यः
प्रामाण्यमाम्नायगिरामवादीत् ॥
यस्य प्रसादात्रिदिवौकसोऽपि
प्रपेदिरे प्राक्तनयज्ञभागान् ॥ ७४ ॥

सोऽयं गुरोरुन्मथनप्रसक्तं
महत्तरं दोषमपाकरिष्णुः ॥
अशेषवेदार्थविदास्तिकत्वा-
त्तुषानलं प्राविशदेष धीरः ॥ ७५ ॥

अयं ह्यधीताखिलवेदमन्त्रः
कूलंकपालोडितसर्वतन्त्रः ॥
नितान्तदूरीकृतदुष्टतन्त्र-
स्त्रैलोक्यविभ्रामितकीर्तियन्त्रः ॥ ७६ ॥

---

द्राग्झटित्यनुष्ठितिमनुष्ठानमवसाय्य समाप्य कह्लारशीतैर्वातैरुपसेव्यमानस्तमालशालिनि तीरे विश्रामं कृतवान्। अत्रान्तरे लोकवार्ताऽश्रूयत । उपजातिवृत्तम् ॥ ७३ ॥

तामेव दर्शयति—गिरेरिति । यः सतां गतिः पर्वतादवप्लुत्य वेदगिरां प्रामाण्यमवादीत् ॥ ७४ ॥

सोऽयं भट्टपादो गुरोरुन्मथनात्प्रसक्तं प्राप्तं महत्तरं दोषमपाकरिष्णुः सर्ववेदार्थज्ञ एष धीर आस्तिकत्वात्तुषाग्निं प्राविशत् ॥ ७५ ॥

अयं भट्टपादो हि प्रसिद्धमधीताखिलवेदमन्त्रः पुनश्च कूलंकपा नदी तद्वदालोडितान्यवगाहितानि सर्वशास्त्राणि सर्वसिद्धान्ता वा येन स नितान्तं दूरीकृतानि दुष्टतन्त्राणि येन स एव विभ्रामितं कीर्तिलक्षणं यन्त्रं येन सः । उपजातिवृत्तम् ॥ ७६ ॥ [ नितान्तेति । अत्यन्तानिरस्तदुष्टसिद्धान्त इति यावत् । दुष्टत्वं हि वेदविरुद्धत्वमेवात्र ] ॥ ७६ ॥

---

१ क. अनुष्ठितं । २ क. 'ष्ठितम' । ३ ख ग. घ. 'ष्ठानं स' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्वेति तां सत्वरमेष गच्छ-
न्व्यालोकयत्तं तुषराशिसंस्थम् ॥
प्रभाकराद्यैः प्रथितप्रभावै-
रुपस्थितं साश्रुमुखैर्विनेयैः ॥ ७७ ॥

धूमायमानेन तुषानलेन
संदह्यमानेऽपि वपुष्यशेषे ॥
संदृश्यमानेन मुखेन बाष्प-
परीतपद्मश्रियमादधानम् ॥ ७८ ॥

दूरे विधूताघमपाङ्गभङ्ग्या
तं देशिकं दृष्टिपथावतीर्णम् ॥
ददर्श भट्टो ज्वलदग्निकल्पो
जुगोप यो वेदपथं जितारिः ॥ ७९ ॥

अदृष्टपूर्वं श्रुतपूर्ववृत्तं
दृष्ट्वाऽतिमोदं स जगाम भट्टः ॥
अचीकरच्छिष्यगणैः सपर्या-
मुपाददे तामपि देशिकेन्द्रः ॥ ८० ॥

---

इति तां लोकवार्तां श्रुत्वा तं भट्टपादं व्यालोकयद्दृष्टवान्। उपजातिवृत्तम् ॥ ७७ ॥ [विनेयैः शिष्यैः। आद्यपदेन मण्डनमिश्रेतरमुरारिमिश्रपार्थसारथिमिश्राद्य एव ग्राह्याः। तस्य तु तदानीं स्वनगर एवावस्थितिरित्यग्र एव वक्ष्यति] ॥ ७७ ॥

तं विशिनष्टि—धूमायमानेन तुषाग्निनाऽशेषे वपुषि संदह्यमानेऽपि संदृश्यमानेन मुखेनोष्मव्याप्तकमलस्य श्रियमादधानं 'बाष्पमूष्माश्रुकशिपौ' इति मेदिनी ॥ ७८ ॥ [बाष्पेति। बाष्पं हि हेमन्तादौ प्रातःकालिकजलाशये समुत्थितधूमलेखासदृशं वस्तु प्रसिद्धमेव। तत्परीतकमलशोभामित्यर्थः। एतादृशं तं कुमारिलभट्टपादं व्यालोकयदिति पूर्वेणान्वयः] ॥ ७८ ॥

कटाक्षभङ्ग्या दूरे विधूतान्यघानि येन तं दृष्टिमार्गेऽवतीर्णं देशिकं श्रीशंकरं ज्वलदग्निसदृशो भट्टपादो ददर्श यो जितारिर्वेदमार्गं जुगोप ॥ ७९ ॥

अदृष्टपूर्वं श्रुतपूर्वं वृत्तं चरितं यस्य तं श्रीशंकरं दृष्ट्वा भट्टोऽतिहर्षं जगाम ततश्च शिष्यगणैः पूजां कृतवांस्तां सपर्यामनपेक्षितामपि देशिकेन्द्रः स्वीकृतवान् ॥ ८० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपात्तभिक्षः परितुष्टचित्तः
प्रदर्शयामास स भाष्यमस्मै ॥
सर्वो निबन्धो ह्यमलोऽपि लोके
शिष्टेक्षितः संचरणं प्रयाति ॥ ८१ ॥

दृष्ट्वा भाष्यं हृष्टचेताः कुमारः
प्रोचे वाचं शंकरं देशिकेन्द्रम् ॥
लोके स्वल्पो मत्सरग्रामशाली
सर्वज्ञानो नाल्पभावस्य पात्रम् ॥८२ ॥

अष्टौ सहस्राणि विभान्ति विद्व-
न्सद्वार्तिकानां प्रथमेऽत्र भाष्ये ॥
अहं यदि स्यामगृहीतदीक्षो
ध्रुवं विधास्ये सुनिबन्धमस्य ॥ ८३ ॥

भवादृशां दर्शनमेव लोके
विशेषतोऽस्मिन्समये दुरापम् ॥
पुरार्जितैः पुण्यचयैः कथंचि-
त्त्वमद्य मे दृष्टिपथं गतोऽमूः ॥ ८४ ॥

---

उपात्ता भिक्षा येन परितुष्टचित्तः स श्रीशंकरोऽस्मै भट्टपादाय भाष्यं दर्शयामास। ननु किमर्थं दर्शयामासेत्यपेक्षायामाह—सर्व इति ॥ ८१ ॥

तत्र हेतुमाह—हि यस्माल्लोकेऽल्पः क्षुद्रो मत्सरग्रामशाली सर्वज्ञानः सर्वज्ञस्तु मात्सर्यादिलक्षणस्य क्षुद्रभावस्य पात्रं न भवतीत्यर्थः। शालिनी वृत्तम् ॥ ८२ ॥ [ ननु भेदवादित्वात्कथमसौ हृष्ट इति प्रत्याचष्टे—लोक इति ] ॥ ८२ ॥

यदुवाच तदाह—अष्टाविति। हे विद्वन्नत्रास्मिन्ग्रन्थे प्रथमेऽध्यासभाष्ये सद्वार्तिकानामष्टौ सहस्राणि भान्ति तर्हि कर्तव्यानीति चेत्तत्राऽऽह—अहं यद्यगृहीतदीक्षः स्यां तर्ह्यस्य भाष्यस्य सुनिबन्धं विधास्ये। उपजातिवृत्तम् ॥ ८३ ॥

तिष्ठत्वेतद्भवद्दर्शनं त्वतिदुर्लभं मया लब्धमित्याह—भवादृशामिति। उपेन्द्रवज्रावृत्तम् ॥ ८४ ॥ [ अस्मिन्समयेऽन्तकाले ] ॥ ८४ ॥

---

१ ख. ग. घ स्वल्पो। २ ख ग. घ. 'ग्रासशा°'। ३ ख. 'यमदृष्टि°'। ४ ख. ग. घ °ग्रासशा°। ५ क. °ध्याये भा°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असारसंसारपयोब्धिमध्ये
निमज्जतां सद्भिरुदारवृत्तैः ॥
भवादृशैः संगतिरेव साध्या
नान्यस्तदुत्तारविधावुपायः ॥ ८५ ॥

चिरं दिदृक्षे भगवन्तमित्थं
त्वमद्य मे दृष्टिपथं गतोऽभूः ॥
नेह्यत्र संसारपथे नराणां
स्वेच्छाविधेयोऽभिमतेन योगः ॥ ८६ ॥

युनक्ति कालः क्वचिदिष्टवस्तुना
क्वचित्त्वरिष्टेन च नीचवस्तुना ॥
तथैव संयोज्य वियोजयत्यसौ
सुखासुखे कालकृते प्रवेद्म्यतः ॥ ८७ ॥

कृतो निबन्धो निरणायि पन्था
निरासि नैयायिकयुक्तिजालम् ॥
तथाऽन्वभूवं विपयोत्थजातं
न कालमेनं परिहर्तुमीशे ॥ ८८ ॥

---

यतो भवादृशां संगतिरेव संसारादुद्धरणोपाय इत्याह—असारेति। तदुत्तारविधौ संसारोत्तरणविधौ। उपजातिवृत्तम् ॥ ८५ ॥

नन्वेवं तर्हि पूर्वं दर्शनेच्छा तव कुतो नोत्पन्नेति चेत्तत्राऽऽह—चिरकालमारभ्येत्थं दर्शनमिच्छामि परंत्वद्य दृष्टिमार्गे त्वं गतोऽसि। नन्वेवं तर्हि किमिति स्वाभिलषितं त्वया न संपादितमिति चेत्तत्राऽऽह—नहीति ॥ ८६ ॥

तर्हि को वा युनक्तीति चेत्तत्राऽऽह—युनक्तीति। अतः कारणात्सुखदुःखे कालकृते अहं विजानामि। इन्द्रवंशा वृत्तम् ॥ ८७ ॥ [प्रवेद्म्यबाधितत्वात्स्वप्रकर्षेण जानामीत्यर्थः] ॥ ८७ ॥

अहं तु सर्वं कर्तव्यं कृतवानेवेत्याह—कृत इति। पुनश्च कर्ममार्गो निर्णीतः पुनश्च नैयायिकयुक्तिजालं निरस्तं विपर्योत्थं सुखदुःखजातं चान्वभूवम्। नन्वेवं-भूतस्त्वमेनं कालं किमिति न परिहरसीति चेतत्राऽऽह—नेशे समर्थो न भवामि ॥ ८८ ॥

---

१ घ. न तत्र। २ ग. घ. 'र्योत्थसु°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निरास्थमीशं श्रुतिलोकसिद्धं
श्रुतेः स्वतो मात्वमुदाहरिष्यन् ॥
न निह्नुवे येन विना प्रपञ्चः
सौख्याय कल्पेत न जातु विद्वन् ॥ ८९ ॥

तथागताक्रान्तमभूदशेषं
स वैदिकोऽध्वा विरली बभूव ॥
परीक्ष्य तेषां विजयाय मार्गं
प्रावर्ति संत्रातुमनाः पुराणम् ॥ ९० ॥

सशिष्यसंघाः प्रविशन्ति राज्ञां
गेहं तदादि स्ववशे विधातुम् ॥
राजा मदीयोऽजिरमस्मदीयं
तदाद्रियध्वं न तु वेदमार्गम् ॥ ९१ ॥

वेदोऽप्रमाणं बहुमानबाधा-
त्परस्परव्याहतिवाचकत्वात् ॥
एवं वदन्तो विचरन्ति लोके
न काचिदेषां प्रतिपत्तिरासीत् ॥ ९२ ॥

---

ननु किमर्थमेवं विधातुं प्रवृत्तोऽसीति जिज्ञासायामीश्वरनिरासगुरुद्रोहलक्षणयोः पापयोः प्रायश्चित्तं कर्तुं प्रवृत्तोऽस्मीति दर्शयितुमुपक्रमते—निरास्थमिति । 'ईशानो भूतभव्यस्य' इत्यादिश्रुतेर्लोकाच्च सिद्धमीशं निराकृतवान् । किमिच्छन्निति चेत्तत्राऽऽह—वेदस्य स्वतःप्रामाण्यमुदाहरिष्यन्हे विद्वञ्जातु कदाचित्प्रपञ्चो जगद्येन विना सौख्याय न कल्पते योग्यो न भवति तमीशं न निह्नुवे नैवापलपामि तन्निषेधे मदभिप्रायो नास्तीत्यर्थः ॥ ८९ ॥ [ क्षित्यङ्कुरादिकं सकर्तृकम् । कार्यत्वात् । घटवदित्याद्यनुमितिलक्षणलौकिकप्रमितिरेव लोकपदार्थः प्रकृते ] ॥ ८९ ॥

एवमेकं पापं प्रदर्श्य द्वितीयं दर्शयति—तथागतैः सुगतैराक्रान्तमशेषं सर्वमभूत्तेन च स वैदिकः पन्था विरली बभूवेति परीक्ष्य तेषां विनयाय पुराणं वेदमार्गं संत्रातुमना अहं प्रवृत्तः ॥ ९० ॥

शिष्यसंघैः सहिताः सुगता राज्ञां गेहं प्रविशन्ति तदादि राजादि स्ववशे विधातुं राजा मदीयस्तथाऽजिरं विषयो देशोऽस्मदीयस्तस्माद्वेदमार्गं नैवाऽऽद्रियध्वं यद्वा तत्तस्मादस्मदीयमजिरमस्मदीयशास्त्रविषयमाश्रयध्वं न तु वेदमार्गमिति वदन्तो विचरन्तीति परेणान्वयः । 'अजिरं प्राङ्गणे चान्ते विषये दर्दुरेऽनिले' इति मेदिनी ॥ ९१ ॥

वेदोऽप्रमाणं बहुमानेन प्रत्यक्षादिप्रमाणेन बाधात्परस्परव्याघातवाचकत्वाद्वेदं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवादिषं वेदविघातदक्षै-
स्तान्नाशकं जेतुमबुध्यमानः ॥
तदीयसिद्धान्तरहस्यवार्धी-
न्निषेध्यबोधाद्धि निषेध्यबाधः ॥ ९३ ॥

तदा तदीयं शरणं प्रपन्नः
सिद्धान्तमश्रौषमनुद्धतात्मा ॥
अदूदुपद्वैदिकमेव मार्गं
तथागतो जातु कुशाग्रबुद्धिः ॥ ९४ ॥

तदाऽपतन्मे सहसाऽश्रुबिन्दु-
स्तच्चाविदुः पार्श्वनिवासिनोऽन्ये ॥
तदाप्रभृत्येव विवेश शङ्का
मध्यास्तभावं परिहृत्य तेषाम् ॥ ९५ ॥

विपक्षपाठी बलवान्द्विजातिः
प्रत्याददद्दर्शनमस्मदीयम् ॥
उच्चाटनीयः कथमप्युपायै-
र्नैतादृशः स्थापयितुं हि योग्यः ॥ ९६ ॥

---

यन्तो लोके विचरन्ति स्मैषां सुगतानां काचित्प्रतिपत्तिः प्रतिक्रिया नाऽऽसीत् । आख्या-नकी वृत्तम् ॥ ९२ ॥ [ परस्परेति । 'स्वर्गकामो यजेत' 'नेह नानाऽस्ति किंचन' इत्यादिपरस्परव्याघातीभूतद्वैताद्वैतवाचकत्वाच्चेत्यर्थः ॥ ९२ ॥

वेदविघातदक्षैस्तैरवादिषं वादं कृतवान्परं तु तदीयसिद्धान्तरहस्यजलधीनबुध्यमानस्ता-ञ्जेतुं नाशकं हि यतो निषेध्यस्य ज्ञानान्निषेध्यस्य बाधो भवति नान्यथेत्यर्थः । उपजाति-वृत्तम् ॥ ९३ ॥ [ वेदेति । बौद्धैः सहेत्यर्थः ] ॥ ९३ ॥

तदानीं तदीयं शरणं प्रपन्नोऽनुद्धतात्मा तदीयं सिद्धान्तमश्रौषं जातु कदाचित्तीक्ष्णबुद्धिः सुगतो वैदिकमेव मार्गमदूदुपत् ॥ ९४ ॥ [ शरणं सौगतसद्मेत्यर्थः ] ॥ ९४ ॥

तदा सहसा मेऽश्रुबिन्दुरपतत्तच्चाश्रुपतनमन्ये पार्श्वनिवासिनोऽविदुस्तदाप्रभृत्येव मध्या-स्थभावं परिहृत्य स्थितानां तेषां शङ्का विवेश । उपजातिवृत्तम् ॥ ९५ ॥

दर्शनं शास्त्रम् । उपजातिवृत्तम् ॥ ९६ ॥ [ विपक्षेति । विपक्षः सन्पठतीति तथा ] ॥ ९६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संमन्त्र्य चेत्थं कृतनिश्चयास्ते
ये चापरेऽहिंसनवादशीलाः ॥
व्यपातयन्नुच्चतरात्प्रमत्तं
मामग्रसौधाद्विनिपातभीरुम् ॥ ९७ ॥

पतन्पतन्सौधतलान्यरोरुहं
यदि प्रमाणं श्रुतयो भवन्ति ॥
जीवेयमस्मिन्पतितोऽसमस्थले
मज्जीवने तच्छ्रुतिमानता गतिः ॥ ९८ ॥

यदीह संदेहपदप्रयोगा-
द्व्याजेन शास्त्रश्रवणाच्च हेतोः ॥
ममोच्चदेशात्पततो व्यनङ्क्षी-
त्तदेकचक्षुर्विधिकल्पना सा ॥ ९९ ॥

---

इत्थं संमन्त्र्य कृतनिश्चयास्ते ये चान्येऽहिंसनवादशीला विनिपातभीरुं विनिपाताद्भय-
शीलं प्रमत्तं मामुच्चतराच्छ्रेष्ठसौधाद्व्यपातयन् ॥ ९७ ॥ [ अहिंसनेति च्छेदः । साभिप्राय-
मेवेदम् । वक्ष्यमाणहिंसाकारित्वात् । एवं चाहिंसनविषयकवादमात्रस्वभावा न तु तदाच-
णप्रवीणा इत्यर्थः ] ॥ ९७ ॥

सौधतलात्पतन्पतन्नरोरुहं पुनः पुनरारूढो यदि श्रुतयः प्रमाणं भवन्ति तत्तर्ह्यस्मिन्न-
मस्थले पतितो जीवेयं यतः श्रुतिप्रामाण्यस्य मज्जीवनेनैव गतिः ॥ ९८ ॥ [ यदि श्रुत-
प्रमाणं भवन्ति तर्ह्यसमस्थले विषमस्थाने पतनेऽपि जीवेयमन्यथा नैव जीवेयम् ।
मज्जीवने विषये तु गतिः साधनं श्रुतिमानता वेदप्रामाण्यमेवास्तीति ब्रुवाणः सन्सौधतला-
वारूरुहं पुनः पुनरारूढोऽभवमिति योजना । एतेनाक्षत एव बहुधा सौधमधिरूढोऽपि
सहस्रधा पातित इति ध्वन्यते ] ॥ ९८ ॥

इह वेदप्रामाण्ये यदीति संदेहप्रतिपादकपदस्य प्रयोगाद्व्याजेन कपटेन शास्त्रस्य श्रव-
हेतोरुच्चदेशात्पततो मम तैदेकं चक्षुर्व्यनङ्क्षीत् । किंच सा चक्षुरस्य नाशं गच्छ-
विधेर्दैवस्य कल्पना ॥ ९९ ॥ [ उच्चेति । पततो ममैकमेव चक्षुर्यद्यस्माद्धेतोर्व्यनङ्-
द्विनष्टमभूत्तत्तस्मात्कारणात्सैकचक्षुर्मात्रनाशरूपा । विधीति । दैवकल्पनाऽ-
न्वयः ] ॥ ९९ ॥

---

१ ख. घ. °न्पतनेऽस° । २ ख. घ. °त्तदेक° । ३ ख. तदेकं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकाक्षरस्यापि गुरुः प्रदाता
शास्त्रोपदेष्टा किमु भाषणीयम् ॥
अहं हि सर्वज्ञगुरोरधीत्य
प्रत्यादिशे तेन गुरोर्महागः ॥ १०० ॥

तदेवमित्थं सुगतादधीत्य
प्राघातयं तत्कुलमेव पूर्वम् ॥
जैमिन्युपज्ञेऽभिनिविष्टचेताः
शास्त्रे निरास्थं परमेश्वरं च ॥ १ ॥

दोषद्वयस्यास्य चिकीर्षुरर्ह-
न्यथोदितां निष्कृतिमाश्रयाशम् ॥
प्राविक्षमेषा पुनरुक्तभूता
जाता भवत्पादनिरीक्षणेन ॥ २ ॥

भाष्यं प्रणीतं भवतेति योगि-
न्नाकर्ण्य तत्रापि विधाय वृत्तिम् ॥
यशोऽधिगच्छेयमिति स्म वाञ्छा
स्थिता पुरा संप्रति किं तदुक्त्या ॥ ३ ॥

---

एकाक्षरस्यापि प्रदाता गुरुर्भवति शास्त्रोपदेष्टा स भवतीति किमु वक्तव्यम् । अहं तु सर्वज्ञात्सुगतात् । ' सर्वज्ञः सुगतः ' इत्यमरः । गुरोरधीत्य तेनाधीतेन गुरोर्महागः प्रत्यादिशे प्रत्यर्पितवान् ॥ १०० ॥ [ सर्वज्ञेति । सुगतसंज्ञकाद्गुरोः सुगतानां वा गुरोः ] ॥ १०० ॥

महापराधमेवाऽऽह—तदेवमनेन प्रकारेण सुगतादधीत्य तस्य सुगतस्य कुलमेवाऽऽदौ प्राघातयं जैमिनेरुपज्ञाऽऽद्यं ज्ञानं यत्र ' उपज्ञा ज्ञानमाद्यं स्यात् ' इत्यमरः । तस्मिञ्शास्त्रेऽभिनिविष्टं चेतो यस्य सोऽहं परमेश्वरं च निरास्थं निरस्तवान् ॥ १ ॥ [ जैमिनीति । पूर्वमीमांसाशास्त्र इत्यर्थः ] ॥ १ ॥

अस्योदाहृतस्य दोषद्वयस्य यथोक्तां निष्कृतिं चिकीर्षुर्हेऽर्हन्नाश्रयाशं पावकं प्राविक्षं प्रवेशं कृतवानस्मि ।

' आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः '

इत्यमरः । तव पादनिरीक्षणस्य निष्कृतिरूपत्वादेषा निष्कृतिस्तव पादनिरीक्षणेन पुनरुक्तभूता जाता संपन्ना ॥ २ ॥

ननु शाबरभाष्यवदस्मद्भाष्येऽपि त्वया वार्तिकं कर्तव्यं स्थितमिति चेत्तत्राऽऽह—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाने भवन्तमहमार्यजनार्थजात-
मद्वैतरक्षणकृते विहितावतारम् ॥
प्रागेव चेन्नयनवर्त्म कृतार्थयेथाः
पापक्षयाय न तदेदृशमाचरिष्यम् ॥ ४ ॥
प्रायोऽधुना तदुभयप्रभवाघशान्त्यै
प्राविक्षमार्य तुषपावकमात्तदीक्षः ॥
भाग्यं न मेऽजनि हि शाबरभाष्यवत्त्व-
द्भाष्येऽपि किंचन विलिख्य यशोऽधिगन्तुम् ॥ १०५ ॥
इत्यूचिवांसमथ भट्टकुमारिलं त-
मीषद्विकस्वरमुखाम्बुजमाह मौनी ॥
श्रुत्यर्थकर्मविमुखान्सुगतान्निहन्तुं
जातं गुहं भुवि भवन्तमहं तु जाने ॥ ६ ॥

---

भाष्यं भवता प्रणीतमिति श्रुत्वा हे योगिन्भवत्प्रणीते भाष्ये वृत्तिं विधाय यशोऽधिगच्छेयमिति वाञ्छा पुरा स्थिता परंतु संप्रति तदुक्त्या किं निष्फलत्वात्। स्मेति पादपूरणे ॥ ३ ॥

आर्याणामर्थे जातमार्याणामर्थसमुदायो यस्मात्तथाभूतमिति वा। हे आर्य जनार्थ जातमिति वा। पुनश्चाद्वैतरक्षणाय विहितोऽवतारो येन तथाभूतं भवन्तमहं जानाम्यतो यदि तुषानलप्रवेशात्प्रागेव पापक्षयाय मम नेत्रमार्गं कृतार्थयेथास्तर्हि हे यते ईदृशं प्रायश्चित्तं नाऽऽचरिष्यम्। वसन्ततिलका वृत्तम् ॥ ४ ॥

अधुना तु प्रायो गुरुद्रोहेश्वरनिरासप्रभवाघशान्त्यर्थमात्तदीक्षस्तुषानलं हे आर्य प्राविक्षम्। मम भाग्यानुदय एव भवद्भाष्यवार्तिकाकरणे निदानमित्याह—भाग्यमिति ॥ १०५ ॥ [ किंचन यथाशक्ति यत्किंचिदित्यर्थः। विलिख्य। यशोऽधिगन्तुम्। भाग्यं 'दैवं दिष्टं भागधेयं भाग्यम्' इत्यमराद्दैवमित्यर्थः ] ॥ १०५ ॥

एवं भट्टपादोक्तमुदाहृत्य श्रीशंकरवाक्यमुदाहर्तुमाह—इत्येवमुक्तवन्तं भट्टकुमारिलमीषद्विकस्वरमुखकमलमथ तदुक्त्यनन्तरं मौनी श्रीशंकर उवाच। यद्यप्यन्ये न जानन्ति तथाऽपि श्रुत्यर्थात्कर्मणो विमुखान्सुगतान्निहन्तुं भुवि जातं स्कन्दं भवन्तमहं तु जाने ॥ ६ ॥ [ श्रुत्यर्थेति। श्रुत्यर्थीभूतं यत्कर्म तत्र विमुखास्तानुपलक्षणमिदं ब्रह्मणोऽपि। कर्मब्रह्मोभयभ्रष्टानित्यर्थः। एतेन हनने हेतुर्द्योतितः ] ॥ ६ ॥

---

१ क. ग. 'य बत नेदृ'। २ क 'रणनि'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संभावनाऽपि भवतो नहि पातकस्य
सत्यं[1] व्रतं चरसि सज्जनशिक्षणाय ॥
उज्जीवयामि करकाम्बुकणोक्षणेन
भाष्येऽपि मे रचय[2] वार्तिकमङ्ग भव्यम् ॥ ७ ॥
इत्यूचिवांसं विबुधावतंसं
स धर्मविद्ब्रह्मविदां वरेण्यम् ॥
विद्याधनः शान्तिधनाग्रगण्यं
सप्रश्रयं वाचमुवाच भूयः ॥ ८ ॥
नार्हामि शुद्धमपि लोकविरुद्धकृत्यं
कर्तुं मयीडच महितोक्तिरियं तवार्हा ॥
आजानतोऽतिकुटिलेऽपि जने महान्त-
स्त्वारोपयन्ति हि गुणं धनुषीव शूराः ॥ ९ ॥
संजीवनाय चिरकालमृतस्य च त्वं
शक्तोऽसि शंकर दयोर्मिलदृष्टिपातैः ॥
आरब्धमेतदधुना व्रतमागमोक्तं
मुञ्चन्सतां न भवितास्मि बुधाविनिन्द्यः ॥ १० ॥

---

दोषद्वयनिवृत्तये तुषानलं प्राविक्षामित्युक्तं तत्राऽऽह—संभावनेति। तथाऽपि सज्जनानां शिक्षणाय सत्यं[3] व्रतं चरसि यत एवमतः कमण्डलुजलकणसेचनेन भवन्तमुज्जीवयामि। ननु किमर्थं जीवयसीति चेत्तत्राऽऽह—अङ्ग हे भट्टकुमारिल मे भाष्येऽपि भव्यं वार्तिकं रचय ॥ ७ ॥ [ कवय रचय ] ॥ ७ ॥

इत्यूचिवांसं देवशिरोमणिं पण्डितावतंसं वा ब्रह्मविदां मध्ये श्रेष्ठतमं शान्तिधनेषु यतिष्वग्रे गणनीयं श्रीशंकरं धर्मज्ञो विद्याधनः स भट्टपादः सप्रश्रयं यथा तथा वाचं पुनरुवाच। उपजातिवृत्तम् ॥ ८ ॥ [ सप्रश्रयं सनम्रीभावम् ] ॥ ८ ॥

यदुक्तं श्रुत्यर्थेत्यादि तत्राऽऽह—नेति। शुद्धमपि लोकविरुद्धं कृत्यं कर्तुं योग्यो न भवामि हे स्तुत्य मय्यतिक्षुद्रेऽपीयं महितोक्तिस्तव योग्याऽऽजानतः स्वभावतोऽतिकुटिलेऽपि जने महान्तस्तु गुणमारोपयन्ति। तत्र दृष्टान्तो यथाऽऽजानतोऽतिकुटिलेऽपि धनुषि शूरा गुणं ज्यामारोपयन्ति तद्वत्। वसन्ततिलका वृत्तम् ॥ ९ ॥ [ आजानतो जनानां लोकानामयं जान आ समन्ताज्जानस्तस्मात्स्वभावतः ] ॥ ९ ॥

हे शंकर यद्यपि चिरकालं मृतस्यापि दयालक्षणोर्मिव्याप्तदृष्टिपातैः। शंकरेत्याद्येकं

---

१ ख ग. घ. सत्यव्र°। २ ख. घ. कवय। ३ क सत्यव्र°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाने तवाहं भगवन्प्रभावं
संहृत्य भूतानि पुनर्यथावत् ॥
स्रष्टुं समर्थोऽसि तथाविधो मा-
मुज्जीवयेश्चेदिह किं विचित्रम् ॥ ११ ॥

नाभ्युत्सहे किंतु यतिक्षितीन्द्र
संकल्पितं हातुमिदं व्रताग्र्यम् ॥
तत्तारकं देशिकवर्य मह्य-
मादिश्य तद्ब्रह्म कृतार्थयेथाः ॥ १२ ॥

अयं च पन्था यदि ते प्रकाश्यः
सुधीश्वरो मण्डनमिश्रशर्मा ॥
दिगन्तविश्रान्तयशा विजेयो
यस्मिञ्जिते सर्वमिदं जितं स्यात् ॥ १३ ॥

सदा वदन्योगपदं च सांप्रतं
स विश्वरूपः प्रथितो महीतले ॥
महागृही वैदिककर्मतत्परः
प्रवृत्तिशास्त्रे निरतः सुकर्मठः ॥ १४ ॥

---

वा पदम् । संजीवनाय त्वं शक्तोऽसि तथाऽप्यधुनाऽरब्धं वेदोक्तमेतद्व्रतं त्यजन्सताम- विनिन्द्यो न भवितास्म्येतज्ज्ञातुं योग्योऽसीति ज्ञापनाय संबोधयति—हे बुधेति ॥१०॥

किंच समस्तभूतानि संहृत्य पुनर्यथावत्स्रष्टुं समर्थस्य तव नैतच्चित्रमित्याह—जान इति । इन्द्रवज्रा वृत्तम् ॥ ११ ॥

यद्यप्येवं तथाऽपि हे यतिराज संकल्पितमिदं व्रताग्र्यं त्यक्तुं नाभ्युत्सहे यद्यहमवश्यम- नुग्राह्यस्तर्हीदं विधेहीत्याह—तत्तस्माद्धे देशिकवर्य तत्तारकं काश्यामुपदिश्यमानं ब्रह्म मह्यमुपदिश्य कृतार्थयेथाः ॥ १२ ॥

अद्वैतमार्गप्रकाशनाय मां जेतुमयमागत इति विज्ञायाऽऽह—अयं चेति । दिशा- मन्ते विश्रान्तं यशो यस्य ॥ १३ ॥ [ अयमद्वैतविद्याख्यः ] ॥ १३ ॥

सदा योगस्य कर्मयोगस्य पैदं मार्गं सांप्रतं न्याय्यं वदन्स विश्वरूपो भूतले प्रथितः । उपजातिवृत्तम् ॥ १४ ॥

---

१ क. सुकर्मतः । २ क. ख. 'दं सां' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवृत्तिशास्त्रे नकृतादरः स्वयं
केनाप्युपायेन वशं स नीयताम् ॥
वशं गते तत्र भवेन्मनोरथ-
स्तदन्तिकं गच्छतु मा चिरं भवान् ॥ ११५ ॥
उंवेक इत्यभिहितस्य हि तस्य लोकै
रुंवेति बान्धवजनैरभिधीयमाना ॥
हेतोः कुतश्चिदिह वाक्सुरुपाऽभिशप्ता
दुर्वाससाऽजनि वधूर्द्वयभारतीति ॥ १६ ॥
सर्वासु शास्त्रसरणीषु स विश्वरूपो
मत्तोऽधिकः प्रियतमश्च मदाश्रवेषु ॥
तत्प्रेयसीं शमधनेन्द्र विधाय साक्ष्ये
वादे विजित्य तमिमं वशगं विधेहि ॥ १७ ॥

---

किंच निवृत्तिशास्त्रे नकृतादरः स्वयं तस्मात्स मण्डनः केनाप्युपायेन वशं नीयतां तत्र तस्मिन्वशं प्राप्ते भवन्मनोरथो भवेदतस्तत्समीपं शीघ्रं भवान्गच्छतु । उपजातिवृत्तम् ॥ १५ ॥

उंवेकै इति लोकैरभिहितस्य तस्य मण्डनस्य वधूरुंवेति बान्धवजनैरभिधीयमाना कुतश्चिद्धेतोर्वाक्सरस्वती दुर्वाससा सुरुपाऽभिशप्ता द्वयभारतीत्यजनि प्रादुर्भूता । एतेन 'उंवेकै' 'उंवा' इति मण्डनसरस्वत्योः प्राकृतं नाम कथितमिति बोध्यम् । वसन्ततिलका वृत्तम् ॥ १६ ॥ [ अथ लौकिकं तस्य तृतीयं नाम तद्भार्यायाश्च नाम कथयंस्तस्याः सरस्वत्यवतारत्वं वक्ति—*अम्बेक इतीत्यादिवसन्ततिलकया । अम्बया जगन्मातृभूतसरस्वत्यवतारत्वादम्बाख्यया वक्ष्यमाणोभयभारत्यभिधधर्मपत्न्या सह एः कामस्य कं सुखमिकं तद्यस्य सोऽम्बेक इत्यर्थः ] ॥ ११६ ॥

किंच सर्वासु शास्त्रसरणीषु स विश्वरूपो मत्तोऽधिको मदाश्रवेषु मम शिष्येषु मध्ये प्रियतमश्च तस्माद्धे शमधनेन्द्र तस्य प्रेयसीमतिशयेन प्रियां सरस्वतीं साक्ष्ये विधाय तमिमं विश्वरूपं वादे विजित्य वशगं विधेहि ॥ १७ ॥ [ साक्ष्ये माध्यस्थ्ये ] ॥ १७ ॥

---

* एतेन मूल उंवेक इत्यत्र लोकैरुंवेतीत्यत्र च यथाक्रममम्बेक इति लोकैरम्बेतीति च पाठो दृश्यते । अग्रेऽष्टमसर्गे ६६ श्लोके 'अम्बामुदारधिषणाम्' इति बहुपाठानुरोधेन चायमेव युक्ततर इति भाति । आदर्शपुस्तकेषु तु नायमुपलभ्यते ।

---

१ ख. उंवेक । २ ख. 'रुंवेति । ३ ख उंवेक । ४ ख. 'रुंवेति । ५ ख. "उंवेक" । ६ ख 'रुंवा' इ' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेनैव तावककृतिष्वपि वार्तिकानि
कर्मन्दिवर्यतम कारय मा विलम्बम् ॥
त्वं विश्वनाथ इव मे समये समागा-
स्तत्तारकं समुपदिश्य कृतार्थयेथाः ॥ १८ ॥

निर्व्याजकारुण्य मुहूर्तमात्र-
मत्र त्वया भाव्यमहं तु यावत् ॥
योगीन्द्रहृत्पङ्कजभाग्यमेत-
त्त्यजाम्यसूत्रूपमवेक्षमाणः ॥ १९ ॥

इत्यूचिवांसमिममिद्धसुखप्रकाशं
ब्रह्मोपदिश्य बहिरन्तरपास्तमोहम् ॥
तन्वन्दयानिधिरसौ तरसाऽभ्रमार्गा-
च्छ्रीमण्डनस्य निलयं स इयेष गन्तुम् ॥ १२० ॥

अथ गिरमुपसंहृत्याऽऽदराद्भट्टपादः
शमधनपतिनाऽसौ बोधिताद्वैततत्त्वः ॥
प्रशमितममतः संस्तत्प्रसादेन सद्यो
विदलदखिलबन्धो वैष्णवं धाम पेदे ॥ ७८४ ॥

---

तेनैव तावककृतिष्वपि वार्तिकानि कारय हे परिव्राट्श्रेष्ठतम । 'भिक्षुः परिव्राट्कर्मन्दि' इत्यमरः । विलम्बं मा कुरु त्वं विश्वनाथ इव मे समये समागास्तत्तस्मात्तारकं सम्यगुपदिश्य कृतार्थयेथाः । वसन्ततिलका वृत्तम् ॥ १८ ॥ [ विलम्बं मा कुर्वित्यार्थिकम् ] ॥ १८ ॥

हे निर्व्याजकारुण्य मुहूर्तमात्रं त्वयाऽत्र भवितव्यमहं तु यावद्योगीन्द्रहृत्कमलभाग्यं तत्तव रूपमवेक्षमाणोऽसूंस्त्यजामि । उपजातिवृत्तम् ॥ १९ ॥

इत्यूचिवांसमिमं भट्टपादं संदीप्तसुखप्रकाशात्मकं ब्रह्मोपदिश्य बहिरन्तरपास्तमोहं कुर्वन्दयानिधिरसौ श्रीशंकरोऽभ्रमार्गादाकाशमार्गान्मण्डनस्य निलयं गन्तुमियेषेच्छति स्म । वसन्ततिलका वृत्तम् ॥ २० ॥ [ तरसा योगबलेन ] ॥ २० ॥

अथोपदेशानन्तरमादरादसौ भट्टपादो गिरमुपसंहृत्य शमधनानां यतिवराणामधीशेन श्रीशंकरेण बोधितमद्वैततत्त्वं यस्मै प्रशमिता ममता येन यस्य वा स तथाभूतः संस्तस्य श्रीशंकरस्य प्रसादेन सद्यो दलिताखिलबन्धो वैष्णवं धाम प्रापेत्यर्थः । मालिनीवृत्तम् ॥ २१ ॥ [ वैष्णवं स्वप्रकाशचिन्मात्रम् ] ॥ २१ ॥

---

१ क. ख घ. 'त्मकब्र' । २ क ग 'न स ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीमाधवीये तद्व्याससंदर्शचित्रगः ॥
संक्षेपशंकरजये सर्गोऽसौ सप्तमोऽभवत् ॥ ७ ॥

---

## अथाष्टमः सर्गः।

अथ प्रतस्थे भगवान्प्रयागा-
त्तन्मण्डनं पण्डितमाशु जेतुम् ॥
गच्छन्खसृत्या पुरमालुलोके
माहिष्मतीं मण्डनमण्डितां सः ॥ १ ॥
अवातरद्रत्नविचित्रवप्रां
विलोक्य तां विस्मितमानसोऽसौ ॥
पुराणवत्पुष्करवर्तनीतः
पुरोपकण्ठस्थवने मनोज्ञे ॥ २ ॥

---

[इति श्रीति। तदिति। संदर्शनं संदर्शो व्यासस्य संदर्शो व्याससंदर्शस्तस्य श्रीभाष्यकारस्य यो व्याससंदर्शस्तदेव चित्रं तत्र विषये गच्छति प्रतिपादकतया पर्यवस्यतीति तथेत्यर्थः] ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसराम-
कुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजयडिण्डिमे

सप्तमः सर्गः ॥ ७ ॥

अथाष्टमसर्गस्य टीका।

नमः शर्वाय शान्ताय विमुक्ताय जटादिभिः।
निरस्तवाममार्गाय यतीन्द्राय कृपालवे ॥

एवं व्यासदर्शनादिकं निरूप्याऽऽचार्यमण्डनसंवादं सपरिकरं वर्णयितुमुपक्रमते—अथ प्रश्नादं ब्रह्मोपदिश्य तस्य वैष्णवपदप्राप्तेरनन्तरं स भगवान्योगीन्द्रो मण्डनं पण्डितं जेतुं श्रीघ्रं प्रयागातीर्थराजात्प्रतस्थे प्रस्थानं कृतवान्। तत आकाशमार्गेण गच्छन्स मण्डनेन तन्नामकेन कृतां माहिष्मतीं पुरं तन्नामकं नगरमालुलोक आ समन्तादवलोकितवान्। उपजातिवृत्तम् ॥ १ ॥ [मण्डनेति। मण्डनेन मण्डनमिश्राख्यपण्डितेन पक्षे रङ्गध्वजपताकाविशेषादिस्थावरभूषणेन वस्त्रालंकाराङ्गरागादिनागरिकनरनार्यादिजङ्गमभूषणेनेति यावत्। मण्डितां भूषितामित्यर्थः] ॥ १ ॥

रत्नविचित्रवप्रां विचित्ररत्नैर्हीरकादिभिर्विचित्रा वप्रा अट्टालिका यस्यां तां माहि-

---

१ ग गात्तं म°। २ ख. घ °ण्डनप°। ३ ख. 'जात्मस्था°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रफुल्लराजीववने विहारी
तरङ्गरिङ्गत्कणशीकरार्द्रः ॥
रेवामरुत्कम्पितसालमालः
श्रमापहृद्भाष्यकृतं सिषेवे ॥ ३ ॥
तस्मिन्स विश्रम्य कृताह्निकः स-
न्खस्वस्तिकारोहणशालिनीने ॥
गच्छन्नसौ मण्डनपण्डितौको
दासीस्तदीयाः स ददर्श मार्गे ॥ ४ ॥
कुत्राऽऽलयो मण्डनपण्डितस्ये-
त्येताः स पप्रच्छ जलाय गन्त्रीः ॥
ताश्चापि दृष्ट्वाऽद्भुतशंकरं तं
संतोषवत्यो ददुरुत्तरं स्म ॥ ५ ॥

ष्मतीं विलोक्य विस्मितं विस्मयं प्राप्तं मानसं मनो यस्य सोऽसौ योगीन्द्रो मनोज्ञे... रम्ये पुरोपकण्ठस्थवने पुरसमीपस्थवने पुराणवत्पुराणः पुराणपुरुषो विष्णुस्तद्वत्पुष्कर... आकाशमार्गादवातरदवतीर्णः । 'व्योम पुष्करमम्बरम्' 'सरणिः पद्धतिः पद्या ... कपदीति च' इत्यमरः । उपेन्द्रवज्रा वृत्तम् ॥ २ ॥ पुराणवदिति । पुराऽपि ... पुराणो नित्यनूतनाकृतिर्विष्णुस्तद्वदित्यर्थः । सोऽपि भगवान्भार्गवरामरूपी कार्तवीर्य... यार्थं माहिष्मत्यामेव तन्नगर्यां योगैश्वर्यबलादाकाशमार्गादेवावतीर्णोऽभूदिति पुरा... प्रसिद्धमेव । एतेन स्वविजयावश्यंभावो व्यज्यते ] ॥ २ ॥

तस्मिन्प्रफुल्लकमलवने विहारी विहरणशीलस्तरङ्गेभ्यो रिङ्गन्तो निःस्रवन्तो ये क... करा अतिसूक्ष्माम्बुकणाः 'कणोऽतिसूक्ष्मे धान्यांशे' 'शीकरं शवङ्के वातंहताम्बु... पुमान्' इति मेदिनी । तैरार्द्रो रेवामरुत् । कम्पिताः सालानां वृक्षविशेषाणां ... पङ्क्तयो येन स श्रमापहारको भाष्यकारं सिषेवे सेवितवान् । उपजातिवृत्तम् ॥ १ ... प्रफुल्लेति । एतेन सौगन्ध्यं गन्धवाहे ध्वन्यते । तरङ्गेति । एतेन शैत्यं ... तम् ] ॥ ३ ॥

तस्मिन्वने स श्रीशंकरो विश्रम्य विश्रामं कृत्वा कृतमाह्निकमह्नि कर्तव्यं येन तथा... सन्मध्याह्नकाले यत्र सूर्य आयाति तत्खस्वस्तिकं सिद्धान्तशिरोमण्यादौ प्रसिद्धं तदा... णशालिनीने सूर्ये सत्यसौ मण्डनपण्डितस्यौको गृहं प्रति गच्छन्स तदीया मण्डन... तस्य दासीर्मार्गे ददर्श । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

दृष्ट्वा च किं कृतवानित्यपेक्षायामाह—कुत्रेति । मण्डनपण्डितस्याऽऽलयो ...

१ ख. ग. घ. 'मले व°' । २ क. 'तसुता' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वतः प्रमाणं परतः प्रमाणं
कीराङ्गना यत्र गिरं गिरन्ति ॥
द्वारस्थनीडान्तरसंनिरुद्धा
जानीहि तन्मण्डनपण्डितौकः ॥ ६ ॥

फलप्रदं कर्म फलप्रदोऽजः
कीराङ्गना यत्र गिरं गिरन्ति ॥
द्वारस्थनीडान्तरसंनिरुद्धा
जानीहि तन्मण्डनपण्डितौकः ॥ ७ ॥

जगद्ध्रुवं स्याज्जगदध्रुवं स्या-
त्कीराङ्गना यत्र गिरं गिरन्ति ॥
द्वारस्थनीडान्तरसंनिरुद्धा
जानीहि तन्मण्डनपण्डितौकः॥ ८ ॥

---

स्थानं कुत्रेत्येतास्तस्य दासीर्जलानयनार्थं गन्त्रीर्गमनकर्त्रीः स भाष्यकारः पप्रच्छ । ताश्चा-द्भुतश्चासौ शंकरश्चेत्यद्भुतशंकरस्तमद्भुतत्वं च शंकरत्वे सत्येकवक्त्रद्विनेत्रादिमत्त्वं यद्वाऽ-द्भुतमनिर्वाच्यं शं सुखं करोतीति तथा तं दृष्ट्वाऽवलोक्य संतोषवत्य उत्तरं प्रतिवचनं ददुः । अपिशब्देन तादृशशंकरदर्शनं निकृष्टानामपि सुखजनकमासीत्किमुतोत्कृष्टानामिति सूचितम् ॥ ५ ॥

ताभिर्दत्तमुत्तरमुदाहरति त्रिभिः—स्वत इति । वेदवाक्यं स्वतः प्रमाणमुत परतः प्रमाणमिति विचारात्मिकां गिरं वाचं यत्र मण्डनालये कीराणां शुकादिपक्षिणामङ्गना अपि द्वारस्थस्य नीडस्य पञ्जरादिरूपस्यान्तरे मध्ये सम्यङ्निरुद्धा गिरन्त्युच्चारयन्ति तत्तादृशं मण्डनपण्डितस्यौको गृहं जानीहि ॥ ६ ॥

सुखदुःखादिफलप्रदं कर्म किंवाऽजो जन्मशून्यः सर्वशक्तिः सर्वज्ञः परमात्मेतिविचारा-त्मिकाम् । समानमन्यत् ॥ ७ ॥ [ 'अजोऽजामेकाम्' इत्यादिश्रुतेरीश्वर इत्यर्थः । तत्राऽऽद्यो जैमिनीयसिद्धान्तः । अन्त्यस्तु बादरायणादिसिद्धान्त इति ध्येयम् ] ॥ ७ ॥

किंच जगद्ध्रुवं प्रवाहरूपेण नित्यं न कदाऽप्यनीदृशं स्यात्किंवाऽध्रुवमनित्यं स्यादिति विचारात्मिकामित्यर्थः ॥ ८ ॥ [ जगदिति । 'जगद्विश्वं ध्रुवं नित्यम्' इति भाट्टा-दिपदस्थादिमतम् । 'अध्रुवं कल्पितम्' इति वेदान्तिसंमतम् ] ॥ ८ ॥

---

१ ग 'ष्ट्वाऽलो' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पीत्वा तदुक्तीरथ तस्य गेहा-
द्गत्वा बहिः सद्म कवाटगुप्तम् ॥
दुर्वेशमालोच्य स योगशक्त्या
व्योमाध्वनाऽवातरदङ्गणान्तः ॥ ९ ॥

तदा स लेखेन्द्रनिकेतनाभं
स्फुरन्मरुच्चञ्चलकेतनाभम् ॥
समग्रमालोकत मण्डनस्य
निवेशनं भूतलमण्डनस्य ॥ १० ॥

सौधाग्रसंछन्ननभोवकाशं
प्रविश्य तत्प्राप्य कवेः सकाशम् ॥
विद्याविशेषात्तयशःप्रकाशं
ददर्श तं पद्मजसंनिकाशम् ॥ ११

---

ताभिर्दत्तं प्रतिवचनं श्रुत्वा भगवान्भाष्यकारो यत्कृतवांस्तदाह—पीत्वेति । तासां दासीनामुक्तीर्वचनानि कर्णपुटेन पीत्वाऽवधार्य तस्य मण्डनस्य गेहाद्बहिर्गत्वा कवाटैर्गुप्तं रक्षितं दुर्वेशं दुर्घटः प्रवेशो यस्मिंस्तादृशं तस्य सद्म भवनमवलोक्य स योगीन्द्रो योगशक्त्या व्योमाध्वनाऽऽकाशमार्गेणाङ्गणान्तश्चत्वरमध्येऽवातरत् ॥ ९ ॥

ततश्च यद्वृत्तं तदाह—तदेति । तदा तस्मिन्नवतरणकाले स योगीन्द्रो भूतलमण्डनस्य भूलोकालंकारस्य मण्डनस्य निवेशनं वासस्थानं समग्रमालोकत दृष्टवान् । निवेशनं विशिनष्टि—लेखा देवाः 'लेखा अदितिनन्दनाः' इत्यमरः । तेषामिन्द्रस्य यन्निकेतनं गृहं तस्याऽऽभेवाऽऽभा कान्तिरिव कान्तिर्यस्य तद्देवेन्द्रगृहतुल्यमित्यर्थः । स्फुरता मरुता वायुना चञ्चलस्य केतनस्य केतोराभा यस्मिंस्तत् 'केतनं तु निमन्त्रणे' 'गृहे केतौ च कृत्ये च' इति मेदिनी ॥ १० ॥

सौधस्य प्रासादस्याग्रेणाग्रभागेण संछन्नं नभस्तदात्मकोऽवकाशो यस्मिंस्तत्तथा प्रविश्य कवेर्मण्डनस्य सकाशं समीपं प्राप्य तं कविं ददर्श । कविं विशिनष्टि—विद्याविशेषात्सर्वत आधिक्यादात्तः प्राप्तो यशसः प्रकाशो यं तं पद्मजेन ब्रह्मणा समम् । आख्यानकी वृत्तम् ॥ ११ ॥

---

१ क. 'तं दत्तकवाटं दुर्निवे' । ख 'तं सकवाटं दुर्निवे' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तपोमहिम्नैव तपोनिधानं
सजैमिनिं सत्यवतीतनूजम् ॥
यथाविधि श्राद्धविधौ निमन्त्र्य
तत्पादपद्मान्यवनेजयन्तम् ॥ १२ ॥
तत्रान्तरिक्षादवतीर्य योगि-
वर्यः समागम्य यथार्हमेषः ॥
द्वैपायनं जैमिनिमप्युभाभ्यां
ताभ्यां सहर्षं प्रतिनन्दितोऽभूत् ॥ १३ ॥
अथ द्युमार्गादवतीर्णमन्तिके
मुन्योः स्थितं ज्ञानशिखोपवीतिनम् ॥
संन्यास्यसावित्यवगत्य सोऽभव-
त्प्रवृत्तिशास्त्रैकरतोऽपि कोपनः ॥ १४ ॥
तदाऽतिरुष्टस्य गृहाश्रमेशितु-
र्यतीश्वरस्यापि कुतूहलं भृतः ॥
क्रमात्किलैवं बुधशस्तयोस्तयोः
प्रश्नोत्तराण्यासुरथोत्तरोत्तरम् ॥ १६ ॥

---

पुनस्तं विशिनष्टि—सत्यवत्यास्तनूजमात्मजं व्यासं जैमिनिना सह वर्तमानं तपोनिधानं तपोमाहात्म्येनैव श्राद्धविधौ यथाविधि निमन्त्र्य तयोर्व्यासजैमिन्योः पादकमलान्यवनेजयन्तं प्रक्षालयन्तम् । उपजातिवृत्तम् ॥ १२ ॥

एतादृशं मण्डनं दृष्ट्वा यत्कृतवांस्तदाह—तत्र तस्मिन्मण्डनगृहेऽम्बरादाकाशादवतीर्य व्यासं जैमिनिं चैष योगिश्रेष्ठो यथायोग्यं समागम्य ताभ्यां चोभाभ्यां सहर्षं यथा स्यात्तथाऽभिनन्दितोऽभूत् । इन्द्रवज्रा वृत्तम् ॥ १३ ॥

अथानन्तरं स मण्डन आकाशमार्गादवतीर्णं मुन्योर्व्यासजैमिन्योरन्तिके समीपे स्थितं ज्ञानमेव शिखोपवीतं चास्यास्तीति तं शिखोपवीतविवर्जितमिति यावत् । असौ संन्यासीत्यवगत्य बुद्ध्वा प्रवृत्तिशास्त्रैकरतोऽपि कोपनः कोपयुक्तोऽभवत् ।

'अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि'

इत्यादिप्रवृत्तिशास्त्रेण श्राद्धादिकर्मणि कोपस्य निषिद्धत्वात्तदभिरतत्वेन कोपायोग्योऽपीत्यपिशब्दार्थः । उपजातिवृत्तम् ॥ १४ ॥

तदा तस्मिन्काले गृहस्थाश्रमस्येशितुरीश्वरस्य मण्डनस्यातिक्रुद्धस्य यतीश्वरस्य च कोप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुतो मुण्ड्यागलान्मुण्डी पन्थास्ते पृच्छ्यते मया ॥
किमाह पन्थास्त्वन्माता मुण्डेत्याह तथैव हि ॥ १६ ॥
पन्थानं त्वमपृच्छस्त्वां पन्था: प्रत्याह मण्डन ॥
त्वन्मातेत्यत्र शब्दोऽयं न मां ब्रूयाद*पृच्छकम् ॥ १७ ॥

---

राहितस्यापि कुतूहलं कौतुकं भृंतो धारयत एवं किल वक्ष्यमाणप्रकारेण बुधश्रेष्ठयोस्तयोरेव क्रमेणोत्तरोत्तरं प्रश्नोत्तराण्याभुर्बभूवुः । वंशस्थं वृत्तम् ॥ १५ ॥ [कुतूहलं कौतुकम् । भृतो धारयतः सकलदृश्यावच्छेदेनेन्द्रजालत्वानुसंधानात्तदीयास्थानिककोपेऽप्यक्षुब्धस्य श्रीभाष्यकारस्येत्यर्थः ॥ १५ ॥

प्रश्नोत्तराण्युदाहरन्नादौ मण्डनकर्तृकं प्रश्नमुदाहरति–कुत इति । मुण्डी कुतो गृहद्वाराणां कवाटैः पिहितत्वान्मुण्डी श्राद्धकर्मणि द्रष्टुमयोग्यो भवान्केन मार्गेण प्रविष्ट एवं मण्डनोक्तं श्रुत्वा तद्वचनस्य किंपर्यन्तं भवान्मुण्डीत्यर्थं प्रकल्प्याऽऽह भगवान् । आ गलाद्गलपर्यन्तं मुण्डी मत्प्रश्नार्थ एतेन न बुद्ध इत्यवगत्य मण्डन आह—पन्था मार्गस्ते तव मया पृच्छ्यते न तु किंपर्यन्तं भवान्मुण्डीत्येवमुक्तस्तद्वचनस्य तव पन्थानं प्रति मया प्रश्नः कृत इत्यर्थं प्रकल्प्याऽऽह भगवान्—किमाह । पन्थास्त्वया पृष्टः पन्थास्त्वां प्रति किमाह किमुक्तवानेवं विपरीतं श्रुत्वा कुपितः सन्मण्डन आह—त्वन्मातेति । मया पृष्टः पन्थास्त्वन्माता मुण्डेत्याह । एवमाक्रुष्टो भगवानुवाच—तथैवेति । त्वया पृष्टेन पथा त्वां प्रति त्वन्माता मुण्डेति यदुक्तं तत्तथैव हि यस्मात्पन्थानं प्रति त्वमपृच्छस्त्वां प्रष्टारं प्रत्येव पन्थास्त्वन्माता मुण्डेत्याह । हे मण्डनेति संबोधयन्पण्डितशिरोमणिस्त्वमिदं ज्ञातुं योग्योऽसीति सूचयति । तस्मात्त्वन्मातेत्यत्रायं त्वच्छब्दो मामप्रच्छकं न ब्रूयान्मद्वाचको न भवतीत्यर्थः।

'वक्रोक्तिः श्लेषकाकुभ्यामपरार्थत्वकल्पनम्' ॥ १६ ॥

[आगलादित्यादि । आगलाद्गलपर्यन्तमेव मुण्डी कृतक्षौरोऽस्मीत्यर्थः । कण्ठाधःक्षौरस्य यतीनां धर्मशास्त्रे निषेधप्रसिद्धेः ] ॥ १६ ॥

॥ १७ ॥ [ त्वन्मातेत्यत्र वाक्येऽयं प्रत्यक्षस्त्वच्छब्दोऽप्रच्छकं प्रश्नमकुर्वाणं मां प्रति नैव ब्रूयादिति योजना । तस्मात्तत्प्रच्छकस्त्वमेव त्वन्मातेति त्वदनूदिततद्वाक्यगतत्वच्छब्दवाच्यो भवसीति भावः । अपृच्छकमिति त्वपपाठ एव । असाधुत्वात् ।

---

* न विद्यते पृच्छा यस्येति बहुव्रीहिः । गपुस्तके तु ब्रूयादप्रच्छकमित्येव पाठो दृश्यते ।

---

१ ग. घ. भृत आश्रय°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहो पीता किमु सुरा नैव श्वेता यतः स्मर ॥
किं त्वं जानासि तद्वर्णमहं वर्णं भवान्रसम् ॥ १८ ॥
मत्तो जातः कलञ्जाशी विपरीतानि भाषते ॥
सत्यं ब्रवीति पितृवत्त्वत्तो जातः कलञ्जभुक् ॥ १९ ॥
कन्थां वहसि दुर्बुद्धे गर्दभेनापि दुर्वहाम् ॥
शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति ॥ २० ॥

न च च्छन्दोभङ्गः । 'प्रह्वाभ्यां च' इति सूत्रेण प्रादेः पूर्ववर्णस्य गुरुत्वापवादेन तदभावात् । अत एव कुमारसंभवेऽपि तथोदाजहार कालिदासः—

'सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा'

इति ] ॥ १७ ॥

एवमुक्तोऽतिरुष्टः सन्मण्डन आह—अहो किमु सुरा मदिरा पीता किं त्वया मद्यपानं कृतमन्यथा विपरीतभाषणं कथं स्यात् । एवमाक्रुष्टो भगवांस्तद्वचनस्य सुरा किमु पीता पीतवर्णेत्यर्थं प्रकल्प्याऽऽह—नैवेति । सुरा पीता पीतवर्णा नैव भवति यतः कारणाच्छ्वेता श्वेतवर्णा । स्वानुभूतमप्यर्थं कुतो न स्मरसीत्याशयेनाऽऽह—स्मर स्मरणं कुरु । सुरेति कचित्पाठः । एवमुक्तो मण्डन आह—किमिति । तस्याः सुराया वर्णं त्वं यतिः किं जानासि तद्वर्णज्ञानं यतेस्त्वत्यन्तानुचितमित्यर्थः । एवमाक्षिप्तो भगवानुवाच—अहं वर्णं जानामि भवांस्तु रसं जानाति तथाच तद्वर्णज्ञानवानप्यहं न प्रत्यवायी त्वं तु तद्रसानुभविता प्रत्यवायार्हः । 'न सुरां पिबेत्' इति निषेधेन पानस्य प्रत्यवायजनकत्वबोधनान्न तु तद्वर्णज्ञानस्येति भावः ॥ १८ ॥

एवं विपरीतानि वचनानि श्रुत्वाऽतिरुष्टो मण्डन आह—मत्त इति । कलञ्जं विषलिप्तशरेण हतस्य मृगस्य मांसं कलञ्जं न भक्षयेदिति वाक्येन निषिद्धमशितुं भोक्तुं शीलमस्येति स कलञ्जाद्यभक्ष्यभक्षणशीलो मत्त उन्मत्तो जातो यतो भवान्विपरीतानि भाषते । एवमाक्रुष्टो भगवांस्तद्वाक्यस्य मत्तो मत्सकाशाज्जातः कलञ्जाशी विपरीतानि भाषत इत्यर्थं प्रकल्प्याऽऽह—सत्यमिति । यथा पिता त्वं कलञ्जाशी विपरीतानि भाषसे तथा त्वत्तस्त्वत्सकाशाज्जात उत्पन्नः कलञ्जभुग्विपरीतानि ब्रवीति भाषत इति सत्यं यथार्थमेवेत्यर्थः ॥ १९ ॥

एवं पुनः पुनर्विपरीतं भगवद्वाक्यं श्रुत्वा प्रकारान्तरेणाऽऽक्षिपति—कन्थामिति । गर्दभेनापि दुर्वहां वोढुमशक्यां कन्थां वहसि तथाचातिभारभूतां कन्थां वोढुं समर्थस्य ते तव शिखायज्ञोपवीताभ्यां को भारो भविष्यति न कोऽपीत्यर्थः । स्वल्पभारभयादनल्पभारवाहकस्य तवाहो दुर्बुद्धितेति सूचयन्संबोधयति—हे दुर्बुद्ध इति ॥ २० ॥

१ ख. ग. घ. ङ । स्मरणं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कन्थां वहामि दुर्बुद्धे तव पित्राऽपि दुर्भराम् ॥
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति ॥ २१ ॥
त्यक्त्वा पाणिगृहीतीं स्वामशक्त्या परिरक्षणे ।
शिष्यपुस्तकभारेच्छोर्व्याख्याता ब्रह्मनिष्ठता ॥ २२ ॥
गुरुशुश्रूषणालस्यात्समावर्त्य गुरोः कुलात् ।
स्त्रियः शुश्रूषमाणस्य व्याख्याता कर्मनिष्ठता ॥ २३ ॥
स्थितोऽसि योषितां गर्भे ताभिरेव विवर्धितः ।
अहो कृतघ्नता मूर्ख कथं ता एव निन्दसि ॥ २४ ॥

---

एवमाक्षिप्तो भगवानपि कौतुकादाक्षेपं प्रतिक्षिपञ्शिखायज्ञोपवीताभ्यामित्यादेरुत्तरमाह—कन्थामिति । तव पित्राऽपि दुर्भरां स्त्रीभिस्तिरस्कृतेन पुनश्च तास्वेव प्रीतिमता गृहे तव पित्राऽपि दुर्वहां कन्थां शिखायज्ञोपवीते विहाय वहामि यतस्ताभ्यां परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' । 'ब्रह्मचर्याद्वा गृहाद्वा वनाद्वा' । 'संन्यस्य श्रवणं कुर्यात्' । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' । 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' इत्यादिश्रुतेर्भारो भविष्यति स च वैदिकेनावश्यं मया वारणीयः । पाठान्तरे तु विधिनिषेधात्मिका श्रुतिर्भारो भविष्यतीत्यर्थः । अतस्तद्भारविमोक्षणाय कन्थावाहकस्य मम सुबुद्धित्वमविदित्वा दुर्बुद्धित्वं दृष्टं स्तवाहो दुर्बुद्धितेति ध्वनयन्संबोधयति—हे दुर्बुद्ध इति ॥ २१ ॥

संन्यासं विना ब्रह्मनिष्ठता न सिध्यतीति शिखायज्ञोपवीते मया त्यक्ते इति श्रुत्वा भगवद्वाक्यं श्रुत्वा मण्डन आह—त्यक्त्वेति । स्वां स्वीयां पाणिगृहीतीं भार्यां परिरक्षणेऽशक्त्या विहाय शिष्यपुस्तकभारेच्छोस्तव या ब्रह्मनिष्ठता सा व्याख्याताऽहो दोषै: प्रथिता ॥ २२ ॥

एवमाक्षिप्तस्तं प्रत्याक्षिपति—गुरुशुश्रूषण आलस्याद्गुरोः कुलात्समावर्त्य समावर्तनं विधाय स्त्रियः शुश्रूषमाणस्य तव या कर्मनिष्ठता सा व्याख्याता ॥ २३ ॥ [ स्त्रियः शुश्रूषमाणस्य सेवमानस्येत्यर्थः । बहुवचनं तु कचिद्गृहस्थे बहुभार्यत्वस्यापि संभवाभिप्रायम् ] ॥ २३ ॥

मण्डन आह—योषितां स्त्रीणां गर्भे स्थितोऽसि ताभिरेव विवर्धितस्त्वं ता एव निन्दसीत्यहो हे मूर्ख तादृशस्त्रीकृतोपकारनाशकस्य तव कृतघ्नता ॥ २४ ॥

---

१ क °वश्यमपाकर° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यासां स्तन्यं त्वया पीतं यासां जातोऽसि योनितः।
तासु मूर्खतम स्त्रीषु पशुवद्रमसे कथम् ॥ २५ ॥
वीरहत्यामवाप्तोऽसि वह्नीनुद्वास्य यत्नतः।
आत्महत्यामवाप्तस्त्वमविदित्वा परं पदम् ॥ २६ ॥
दौवारिकान्वञ्चयित्वा कथं स्तेनवदागतः।
भिक्षुभ्योऽन्नमदत्त्वा त्वं स्तेनवद्भोक्ष्यसे कथम् ॥ २७ ॥
कर्मकाले न संभाष्य अहं मूर्खेण संप्रति।
अहो प्रकटितं ज्ञानं यतिभङ्गेन भाषिणा ॥ २८ ॥

---

भगवानुवाच—यासां योषितां स्तन्यं स्तनभवं पयस्त्वया पीतं यासां च योनितो जातोऽसि तासु स्त्रीषु हे मूर्खतम पशुवत्कथं रमसे ॥ २५ ॥

मण्डन आह—वीरेति। गार्हपत्याहवनीयदक्षिणाख्यान्वह्नीन्यत्नतः प्रयत्नेनोद्वास्य वीरस्येन्द्रस्य हत्यामवाप्तोऽसि[1]। तथाच श्रुतिः—'वीरहा वा एष देवानां योऽग्नीनुद्वासयति'। एवमाक्रुष्टो भगवानुवाच—परं पदं परमात्मस्वरूपमविदित्वाऽऽत्महत्यामवाप्तः प्राप्तः। 'असन्नेव स भवत्यसद्ब्रह्मेति चेद्वेद'।

'असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः'।
'अन्यथा सन्तमात्मानं योऽन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा'।

इत्यादिश्रुतिस्मृतिभ्यः ॥ २६ ॥

एवं वाक्यचातुर्येण प्रतिबद्धो मण्डनः प्रकारान्तरेणाऽऽक्षिपति—दौवारिकान्द्वारपालान्वञ्चयित्वा चौरवत्कथमागतः। प्रत्याक्षिपति भगवान्—भिक्षुभ्योऽन्नं तेषां भागमदत्त्वा स्तेनवत्कथं भोक्ष्यसे ॥ २७ [ तद्रीत्यैव तं प्रत्याचष्टे—भिक्षुभ्य इत्युत्तरार्धेन। तथा च भगवानाह गीतासु—

'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः' इति।

स्मृत्यन्तरेऽपि—

'यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत्' इति ] ॥ २७ ॥

एवं प्रत्युत्तरैः पराजितो वक्तुमशक्तः सन्मण्डन आह—संप्रतीदानीं कर्मकालेऽहं मूर्खेण त्वया संभाष्यो भाषणयोग्यो न भवामि। एवमुक्तो भगवानुवाच—यतौ पाठ-

---

१ ग. घ. °सि प्राप्तोऽसि। तं°। २ ग. घ. संभाष्य°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतिभङ्गे प्रवृत्तस्य यतिभङ्गो न दोषभाक् ।
यतिभङ्गे प्रवृत्तस्य पञ्चम्यन्तं समस्यताम् ॥ २९ ॥
क्व ब्रह्म क्व च दुर्मेधाः क्व संन्यासः क्व वा कलिः ।
स्वाद्वन्नभक्षकामेण वेषोऽयं योगिनां धृतः ॥ ३० ॥
क्व स्वर्गः क्व दुराचारः क्वाग्निहोत्रं क्व वा कलिः ।
मन्ये मैथुनकामेन वेषोऽयं कर्मिणां धृतः ॥ ३१ ॥
इत्यादिदुर्वाक्यगणं ब्रुवाणे
रोषेण साहंकृतिविश्वरूपे ॥
श्रीशंकरे वक्तरि तस्य तस्यो-
त्तरं च कौतूहलतश्च चारु ॥ ३२ ॥

---

विच्छेदे भङ्गेन भेदेन विसंधिना भाषणकर्त्रा त्वयाऽहो ज्ञानं प्रकटितम् ॥ २८॥
[ यतीति । यतावनुष्टुप्श्लोकच्छन्दःपाठविरामस्थल इत्यर्थः । यो भङ्गः कर्मकाण्डे न संभाष्य अहमित्यत्र न संभाष्योऽहमिति व्याकरणसिद्धं संधिमविधाय काल्पनिकमशांकेन विसर्गलोपलक्षणं तद्विरुद्धत्वेन विसंध्याख्यदोषदुष्टत्वात्काव्यनाशस्तेन द्वारेति यावत्। भाषिणा भाषणशीलेन त्वया ] ॥ २८ ॥

मण्डन आह—यतेस्तव भङ्गे प्रवृत्तस्य मम तत्सूचको यतिभङ्गो न दोषभाग्दोषयुक्तो न भवतीत्यर्थः । एवमुक्तो भगवानुवाच—यतिभङ्गे प्रवृत्तस्येत्यत्र यतेः सकाशाद्भङ्ग इति पञ्चम्यन्तं समस्यतां नतु षष्ठ्यन्तं तथाच यतेः सकाशाद्भङ्गे जयविपर्यये सति प्रवृत्तस्य यतिभङ्गो दोषभाग्भवतीति त्वद्वाक्यार्थः ॥ २९ ॥

मण्डन आह—क्वेति ॥ ३० ॥

भगवानुवाच—क्व स्वर्ग इति ॥ ३१ ॥

उपसंहरति—इत्यादिदुर्वाक्यगणं साहंकृतिविश्वरूपे रोषेण ब्रुवाणे श्रीशंकरे च तस्य तस्य वचनस्योत्तरं चारु सुन्दरं कौतुकादेव न तु कोपाद्वक्तरि सति तं मण्डनं व्यासोऽब्रवीदिति परेणान्वयः । आदिपदेन—

" किं जडो जडता देहे भौतिके न चिदात्मनि ।
किमभाग्योऽसि यत्पर्चाराहितोऽभाग्य उच्यते ।
किं दूषकोऽसि पापेन दूषितो जायते नरः ।
चोरैरुपाश्रितः किं त्वं स तु षड्वर्गपीडितः ।
अप्रार्थितः किमर्थं त्वं समायातो गृहे मम ।
तव भाग्यवशाद्विष्णुरहमत्र समागतः " ।

---

१ भक्ष्यका° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तं मण्डनं सस्मितजैमिनीक्षितं
व्यासोऽब्रवीज्जल्पसि वत्स दुर्वचः ॥
आचारणा नेयमनिन्दितात्मनां
ज्ञातात्मतत्त्वं यमिनं धुतैषणम् ॥ ३३ ॥
अभ्यागतोऽसौ स्वयमेव विष्णु-
रित्येव मत्वाऽऽशु निमन्त्रय त्वम् ॥
इत्याश्रवं ज्ञातविधिं प्रतीतं
सुध्यग्रणीः साध्वशिषन्मुनिस्तम् ॥ ३४ ॥
अथोपसंस्पृश्य जलं स शान्तः
ससंभ्रमं मण्डनपण्डितोऽपि ॥
व्यासाज्ञया शास्त्रविदर्चयित्वा
न्यमन्त्रयद्भैक्ष्यकृते महर्षिम् ॥ ३५ ॥

---

इत्यादिवाक्यजातं ग्राह्यम् । उपजातिवृत्तम् ॥ ३२ ॥ [ सेति । अहंकृत्याऽभिमानेन सहितं यथा स्यात्तथेति क्रियाविशेषणमिदम् ] ॥ ३२ ॥

सस्मितेन जैमिनिनेक्षितं तं मण्डनं व्यास उवाच हे वत्स ज्ञातं साक्षात्कृतमात्मतत्त्वं येन तं धुता विगताः पुत्रदारलोकैषणा यस्मात्तं यमिनं प्रति यद्दुर्वचो जल्पसीयमनिन्दितात्मनामाचारणाऽऽचारो न भवति । इन्द्रवंशा वृत्तम् ॥ ३३ ॥ [ हे वत्स । एतेनानुकम्पयैवाहं ब्रवीमि न तु पक्षपातेनेति द्योत्यते ] ॥ ३३ ॥

तथाचानिन्दितात्मा त्वमेवं कर्तुं योग्योऽसीत्याह—असौ यतिः स्वयमेव विष्णुरागत इति मत्वा ज्ञातात्मतत्त्वं धुतैषणं यमिनमिममाशु शीघ्रं त्वं निमन्त्रयेत्येवंप्रकारेणाऽऽश्रवं वचनस्थितम् ।

'आश्रवोऽङ्गीकृतौ क्लेशेनान्यवद्वचनस्थिते'

इति मेदिनी । ज्ञातविधिं प्रतीतं प्रख्यातं तं मण्डनं सुध्यग्रणीर्मुनिर्व्यासः साधु यथा स्यात्तथाऽशिषच्छिक्षणं कृतवान् । इन्द्रवज्रा वृत्तम् ॥ ३४ ॥

अथ व्यासकृतशिक्षानन्तरं स मण्डनपण्डितोऽपि शान्तः सजलमुपसंस्पृश्याऽऽचमनादिकं कृत्वा व्यासाज्ञया स्वयं च शास्त्रविन्महर्षिं शंकराचार्यमर्चयित्वा भैक्ष्यकृते भैक्ष्यार्थं न्यमन्त्रयत् । उपजातिवृत्तम् ॥ ३५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स चाब्रवीत्सौम्य विवादभिक्षा-
मिच्छन्भवत्संनिधिमागतोऽस्मि ॥
साऽन्योन्यशिष्यत्वपणा प्रदेया
नास्त्यादरः प्राकृतभक्तभैक्ष्ये ॥ ३६ ॥

मम न किंचिदपि ध्रुवमीप्सितं
श्रुतिशिरःपथविस्तृतिमन्तरा ॥
अवहितेन मखेष्ववधीरितः
स भवता भवतापहिमद्युतिः ३७ ॥

जगति संप्रति तं प्रथयाम्यहं
समभिभूय समस्तविवादिनम् ॥
त्वमपि संश्रय मे मतमुत्तमं
विगद वा वद वाऽस्मि जितास्त्विति ॥ ३८ ॥

---

एवं भैक्ष्यकृते मण्डनेन निमन्त्रितो महर्षिः किमुक्तवानित्यत आह—स च महर्षि[illegible] विद्धि सौम्य प्रियदर्शन विवादभिक्षामिच्छन्भवत्संनिधिं तव समीपमागतोऽस्मि [illegible] ॥ ३९ ॥ [ [illegible] वादभिक्षाऽन्योन्यशिष्यत्वपणा प्रदेया प्राकृतान्नभैक्ष्ये तु ममाऽऽदरो नास्ति ॥ ३९ ॥ [ [illegible] सौम्य प्रियदर्शनेति मण्डनं प्रति संबोधनम् । एतेन श्वेतकेतुं प्रत्युद्दालकेनेव त्वां प्रति [illegible] विद्यामुपदेष्टुमेव मयाऽयमुपक्रमः कृत इति द्योत्यते ] ॥ ३६ ॥

नन्

'वादवादांस्त्यजेत्तर्कान्न पक्षं कंचनाऽऽश्रयेत्'

इति संन्यासिनस्तव निषिद्धां वादभिक्षां कथं याचस इति चेत्तत्राऽऽह—ममेति । श्रुति[illegible] शिरसां वेदान्तानां पथो मार्गस्य विस्तृतिं विस्तारं विना मम किंचिदपि ध्रुवमीप्सितमन[illegible] सुमिष्टं न भवति तथाच स्वख्यात्याद्यर्थं वादाद्याश्रयणनिषेधपरमुदाहृतवाक्यं न तु[illegible] नवादाश्रयणनिषेधपरम् । एतादृशवादस्य लोकोपकारकत्वात् । पन्था भव एव तापो दुः[illegible] संसारसंबन्ध्याध्यात्मिकाधिदैविकाधिभौतिकलक्षणं दुःखमिति वा । तस्य हिमद्युति[illegible] औष्ण्यनिवृत्तिपूर्वकशैत्यजनकाहिमद्युतिवान्निादिल्दुःखानिवृत्तिपूर्वकपरमानन्दप्रापकः इत्यर्थः [illegible] मखेषु यज्ञेष्ववहितेन सावधानेन भवताऽवधीरितस्तिरस्कृतः । द्रुतविलम्बितं वृत्तम् ॥ ३७ ॥

अतो यो वेदान्तमार्गो भवदादिभिरवधीरितस्तमहं समस्तविवादिनं सम्यगभिभूय [illegible] स्कृत्य जगति प्रथयामि सर्वोत्कृष्टत्वेन प्रकटी करोमि । तस्मात्त्वमपि मे मतं वेदा[illegible]

---

१ ग. ॰वीत्सोम्य । २ ग. सोम्य । ३ क पन्था मार्गस्तस्य ४ ग 'तमा' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति यतिप्रवरस्य निशम्य त-
द्वचनमर्थवदागतविस्मयः ॥
परिभवेन नवेन महायशाः
स निजगौ निजगौरवमास्थितः ॥ ३९ ॥
अपि सहस्रमुखे फणिनामके
न विजितस्त्विति जातु फणत्ययम् ॥
न च विहाय मतं श्रुतिसंमतं
मुनिमते निपतेत्परिकल्पिते । ४० ॥
अपि कदाचिदुदेष्यति कोविदः
सरसवादकथाऽपि भविष्यति ॥
इति कुतूहलिनो मम सर्वदा
जयमहोऽयमहो स्वयमागतः ॥ ४१ ॥
भवतु संप्रति वादकथाऽऽवयोः
फलतु पुष्कलशास्त्रपरिश्रमः ॥
उपनता स्वयमेव न गृह्यते
नवसुधा वसुधावसथेन किम् ॥ ४२ ॥

---

सिद्धान्तत्वादुत्तमं संश्रय विगद वा यद्वा विवादं कुरु जितस्त्विति जितोऽस्मीत्येवं वा वद ॥ ३८ ॥

इति यतिप्रवरस्य तत्तादृशमर्थवद्वचोऽर्थयुक्तं वचनं निशम्य श्रुत्वा नवेनापूर्वेण परिभवेन तिरस्कारेणाऽऽगतविस्मयः प्राप्तविस्मयः स मण्डनो निजगौरवमास्थितो निजगौ जगाद ॥ ३९ ॥

सहस्रमुखे फणिनामके शेषनागे सत्यप्ययं मण्डनो जातु कदाचिद्विजित इति तु न फणति नैव वदत्यतोऽयं वेदसंमतं मतं विहाय परिकल्पिते मुनेर्व्यासस्य तव वा मते न च निपतेत् ॥ ४० ॥ [ सहस्रेति । सहस्राननेऽपि जल्पति सतीत्यर्थः ] ॥ ४० ॥

इदं तु मदभिलषितमेव सिद्धमित्याशयेनाऽऽह—अपि कदाचित्कश्चन कोविदः पण्डित उदेष्यति रसेन सहिता सरसा सा चासौ वादकथा च साऽपि कदाचिद्भविष्यतीति कुतूहलिनो ममाहो अद्यायं जयमहो जयोत्सवः स्वयमागतः ॥ ४१ ॥

तस्मात्संप्रतीदानीमावयोर्वादकथा भवतु जायमानया च वादकथया शास्त्रपरिश्रमः फलतु सफलो भवतु । बहुकालमारभ्याभिलाषास्पदाऽमृततुल्या वादकथा ग्रहीतुं योग्यैवेत्याशयेनाऽऽह—स्वयमेवोपनता समीपमागता नवसुधा नवीनाऽननुभूतपूर्वा सुधा वसुधावसथेन भूमिनिवासिना मर्त्येन किं न गृह्यतेऽपि तु गृह्यत एवेत्यर्थः ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयमहं यमहन्तुरपि स्वयं
शमयिता मयि तावकसङ्गिराम् ॥
सुकलहं कलहंसकलाभृतां
दिश सुधांशुसुधामलसत्तनो ॥ ४३ ॥
अपि तु दुर्हृदयस्मयकानन-
क्षतिकठोरकुठारधुरंधरा ॥
न पटुता मम ते श्रवणान्तिकं
ननु गताऽनुगताखिलदर्शना ॥ ४४ ॥
अत्यल्पमेतद्भवतेरितं मुने
भैक्ष्यं प्रकुर्वे यदि वाददित्सुता ॥
गतोद्यमोऽहं श्रुतवादवार्तया
चिरेप्सितेयं वदिता न कश्चन ॥ ४५ ॥

---

स्वगौरवं द्योतयन्स्वस्मिन्वादात्मकं सुकलहं प्रार्थयते—अयमहं मण्डनो यमस्य मृत्यो हन्तुरीश्वरस्यापि शमयितेश्वरस्य यमहन्तृत्वं तु 'मृत्युर्यस्योपसेचनम्' इति श्रुतिसिद्धं निरीश्वरवादिमीमांसकत्वादीश्वरो नास्तीति स्थापनेन तस्यापि स्वयं शमनकर्तेतादृशो मयि कलहंसानां कला बिभ्रतीति तास्तासां कलहंसकलाभृतां तावकसद्गिरां सुकलहं दिशेत्य। एतस्मिन्योग्योऽसीति सूचयन्संबोधयति—सुधांशोश्चन्द्रस्य यत्सुधाम तद्वल्लसन्ती द्योतमाना तनूर्यस्य तस्य संबोधनं हे सुधांशुसुधामलसत्तनो इति ॥ ४३ ॥ [ कलहंसेति । कल- हंसानामतिमधुरध्वनिशालिराजहंसानां ये कला अव्यक्तमधुरध्वनयस्ताना समन्ताद्बिभ्रति तथा तासामित्यर्थः ] ॥ ४३ ॥

मम वाक्चातुर्यमज्ञात्वा मया सह वादमिच्छसीति सूचयन्नाह—अपि तु दुर्हृदयानां स्मयो गर्व एव काननं वनं तस्य क्षतौ छेदने कठोरकुठारधुरंधरा कठोरकुठारतुल्याऽनुगता- न्यनुसृत्यान्यखिलदर्शनानि सर्वशास्त्राणि ययाऽनुगतान्यनुस्यूतान्यखिलदर्शनानि यस्यामिति नैवंविधा मम पटुता चातुरी ननु निश्चयेन ते तव श्रवणस्य कर्णस्यान्तिकं समीपं न ... न प्राप्ता यतो मत्तो वादभिक्षां याचस इत्यर्थः ॥ ४४ ॥

किंच । अत्यल्पमिति । हे मुने यदि तव वाददित्सुता वाददानेच्छुत्वं तर्हि ... भैक्ष्यं प्रकुर्वे इत्येतद्भवताऽत्यल्पमीरितं कथितं यतोऽहं श्रुता या वादवार्ता ... याचनां विनैव वादं कर्तुं गतोद्यमः प्राप्तोद्यमः । इदं कुत इत्यत आह—यत ... वादवार्ता चिरेप्सिता चिरकालादाप्तुमिष्टा । तर्हि किमिति केनचिद्वादो न कृत ... तत्राऽऽह—वदिता वादकर्ता न कश्चन कोऽपि न मिलित इत्यर्थः । उपजातिवृत्तं ॥ ४५ ॥ [ अहं श्रुतवादवार्तयैव गतोद्यमो गतो नष्ट उद्यम इतरव्यापारो यस्य ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वादं करिष्यामि न संदिहेऽत्र
जयाजयौ नौ वदिता न कश्चित्।
न कण्ठशोषैकफलो विवादो
मिथो जिगीषू कुरुतस्तु वादम् ॥ ४६ ॥
वादे हि वादिप्रतिवादिनौ द्वौ
विपक्षपक्षग्रहणं विधत्तः ॥
का नौ प्रतिज्ञा वदतोश्च तस्यां
किं मानमिष्टं वद कः स्वभावः ॥ ४७ ॥
कः पार्ष्णिकोऽहं गृहमेधिसत्तम-
स्त्वं भिक्षुराजो वदतामनुत्तमः ॥
जयाजयौ नौ सपणौ विधीयतां
ततः परं साधु वदाव सुस्मितौ ॥ ४८ ॥
अद्यातिधन्योऽस्मि यदार्यपादो
मया सहाभ्यर्थयते विवादम् ॥
भविष्यते वादकथाऽपरेद्यु-
र्माध्याह्निकं संप्रति कर्म कुर्याम् ॥ ४९ ॥

---

तथा सकलशब्दब्रह्मैकमनननिष्ठोऽस्मीत्यर्थः। तत्र हेतुः—चिरेत्यादि। यद्वा श्रुतवाद-वार्तैवाहमद्य मोहं छालस्यं गतः प्राप्त इत्यर्थः ] ॥ ४५ ॥

वादं करिष्याम्यत्र वादकरणे न संदिहे संदेहं न करोमि परं तु नावावयोर्जयाजयावयं जयं प्राप्तोऽयं तु पराजयमिति वदिता कश्चिन्मध्यस्थो न भवति। माऽस्त्विति चेत्तत्राह—पत्र आवयोर्विवादः कण्ठस्य शोष एवैकं फलं यस्य स कण्ठशोषैकफलो न भवति। तु-शब्दो ह्यर्थः। हि यस्मात्परस्परं विजिगीषू विवादं कुरुतोऽत इत्यर्थः ॥ ४६ ॥

वादरीतिं दर्शयति—हि यस्माद्वादे वादिप्रतिवादिनौ द्वौ विपक्षपक्षयोर्ग्रहणं विधत्त इति रीतिस्तस्मान्नावावयोर्विवदतोः प्रतिज्ञा का तस्यां प्रतिज्ञायां मानं प्रमाणं किमिष्टं स्वभावः स्वीयो भावोऽभिप्रायः ॥ ४७ ॥

कः पार्ष्णिकः समीपस्थो मध्यस्थः क इति सर्वं वद किंचाहं गृहमेधिसत्तमस्त्वं तु वदतामनुत्तमो भिक्षुराजस्तस्मादादौ नौ जयाजयौ सपणौ विधीयतां ततः परं द्वावपि सुस्मितौ वदाव वादं करवाव ॥ ४८ ॥

एवं प्रागल्भ्यपूर्वकमुक्त्वा नम्रतापूर्वकमाह—अद्याहमतिधन्योऽस्मि यद्यस्मादार्यपादो मान्यमया सह विवादमभ्यर्थयते प्रार्थयते ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथेति सूक्ते स्मितशंकरेण
भविष्यते वादकथा श्व एव ॥
तत्साक्षिभावं व्रजतं मुनीन्द्रा-
वित्यर्थयद्व्यासदरिजैमिनी सः ॥ ५० ॥
विधाय भार्यां विदुषीं सदस्यां
विधीयतां वादकथा सुधीन्द्र ॥
इत्थं सरस्वत्यवतारताज्ञौ
तद्धर्मपत्न्यास्तमभापिपाताम् ॥ ५१ ॥
अथानुमोद्याभिहितं मुनिभ्यां
स मण्डनार्यः प्रकृतं चिकीर्षुः ॥
आनर्च दैवोपगतान्मुनीन्द्रा-
नग्नीनिव त्रीन्मुनिशेखरांस्तान् ॥ ५२ ॥

---

वादकथा श्व एव भविष्यत इति तथैव स्मितयुक्तेन शंकरेण सुष्ठूक्ते सति हे मुनीन्द्रौ तस्य विवादस्य साक्षिभावं व्रजतमिति व्यासजैमिनी स मण्डनः प्रार्थयत् ॥ ५० ॥

तस्य मण्डनस्य धर्मपत्न्याः सरस्वत्यवतारताज्ञावियं सरस्वत्यवतारभूतेत्यभिज्ञौ हे सुधीन्द्र विदुषीं भार्यां सदस्यां विधाय वादकथा विधीयतामित्यनेन प्रकारेण तं मण्डनमभापिपातामुक्तवन्तौ ॥ ५१ ॥

मुनिभ्यां व्यासजैमिनिभ्याम् ॥ ५२ ॥ [ मुनिशेखरानिति । पौनरुक्त्यपरिहारार्थमग्निविशेषणमेव कर्तव्यम् । मुनीनां मननकर्मनिष्ठानां शेखरा इव पूज्यत्वेन शिरोधार्याः तानित्यर्थः । तथा मुनीन्द्रपदप्रतिपादितव्यासजैमिनिश्रीशंकराचार्याणामपि विशेषणं श्लेषालंकारादिसिद्ध्यर्थं मुनिशेखरानिति पौनरुक्त्यप्रशामकव्युत्पत्त्यन्तरेण कार्यम् । तद्यथा— मुनयोऽद्वैतब्रह्ममात्रमननशीलाः शेखरा इव शिरोधार्यत्वेन चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिरिति ब्रह्मसूत्रचरमचरणे संलिखितसिद्धान्तसंमत्यादिना पूज्या एषाम् । एवं मुनीनां मननशीलप्रणतमुमुक्षूणां प्रणामकाले शेखरास्तदधिकरणीभूताशिरांसि येषु तथा मुनयोऽत एव शेखराः शिरोधार्याश्चेति । एवं मुनीन्द्रानित्यग्निविशेषणमपि मुनीनामिन्द्राः श्रुतिमननशीलानां कर्मकाले पूज्यास्तान् । तद्वन्मुनयः श्रुतिमननशीला एवेन्द्रा वासवाः कल्पान्तरे येभ्यस्ते तान् । एवं मुनयः श्रुतिमननशीला एवेन्द्रा इन्द्रशब्दितपरमात्मलक्ष्यं येभ्यस्ते तान् । एवमन्यदपि यथोक्तादिशा व्युत्पत्तिजातमूह्यमाविमत्सरैः सूरिभिरित्यलं पल्लवेनेत्युपरम्यत इति दिक् ] ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भुक्त्वोपविष्टस्य मुनित्रयस्य
श्रमापनोदाय तदीयशिष्यौ ॥
अतिष्ठतां पार्श्वगतौ बटू द्वौ
सचामरौ वीजनमाचरन्तौ ॥ ५३ ॥

अथ क्रियान्ते किल सूपविष्टा-
स्त्र्यन्तवेद्यार्थविदस्त्रयोऽमी ॥
अमन्त्रयंश्चारु परस्परं ते
मुहूर्तमात्रं किमपि प्रहृष्टाः ॥ ५४ ॥

तेषां द्विजेन्द्रालयनिर्गताना-
मदर्शनं जग्मतुरञ्जसा द्वौ ॥
रेवातटे रम्यकदम्बसाले
देवालयेऽवस्थितवांस्तृतीयः ॥ ५५ ॥

इति स यतिवरेण्यो दैवयोगाद्गुरूणा-
मितरजनदुरापं दर्शनं प्राप्य हृष्टः ॥
तदुदितवचनानि श्रावयन्नात्मशिष्या-
ननयदमृततुल्यान्यात्मवित्तां त्रियामाम् ॥ ५६ ॥

---

वीजनं चामरसंचालनमाचरन्तौ स्थितवन्तौ ॥ ५३ ॥

ऋग्यजुःसामाख्यवेदत्रय्या अन्त उपनिषद्भागस्तेन तत्र वा वेद्यमर्थं परमपुरुषार्थभूतं परमात्मानं जानन्तीति त्र्यन्तवेद्यार्थविदोऽमी त्रयो व्यासजैमिनिशंकराः क्रियायाः पूर्वोक्ताया अन्ते सूपविष्टाः परस्परं प्रहृष्टास्ते मुहूर्तमात्रं चारु किमप्यमन्त्रयन् ॥ ५४ ॥

द्विजेन्द्रस्य मण्डनस्य गृहान्निर्गतानां मध्ये द्वौ व्यासजैमिनी शीघ्रमदर्शनं प्रापतुस्तृतीयः शंकराचार्यो रेवाया नर्मदायास्तटे रम्याः कदम्बाः सालाश्च यस्मिंस्तस्मिन्स्थिते देवालयेऽवस्थितवान् ॥ ५५ ॥

इत्येवंप्रकारेण यतिश्रेष्ठो गुरूणामिति बहुवचनमादरार्थं व्यासजैमिन्योर्दर्शनमितरजनैः प्राप्तुमशक्यं दैवयोगात्प्राप्य हृष्टस्तैर्गुरुभिरुदितानि वचनान्यमृततुल्यानि स्वशिष्याञ्श्रावयंस्तां त्रियामां रात्रिमात्मविदनयत् । मालिनी वृत्तम् ॥ ५६ ॥

---

१ क. 'गतावभुवां स°' । २ कं. 'रपूरु' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातः शोणसरोजबान्धवरुचिप्रद्योतिते व्योमनि
प्रख्यातः स विधाय कर्म नियतं प्रज्ञावतामग्रणीः ॥
साकं शिष्यवरैः प्रपद्य सदनं सन्मण्डितं माण्डनं
वादायोपविवेश पण्डितसभामध्ये मुनिर्ध्येयवित् ॥ ५७ ॥

ततः समादिश्य सदस्यतायां
सधर्मिणीं मण्डनपण्डितोऽपि ॥
स शारदां नाम समस्तविद्या-
विशारदां वादसमुत्सुकोऽभूत् ॥ ५८ ॥

पत्या नियुक्ता पतिदेवता सा
सदस्यभावे सुदती चकाशे ॥
तयोर्विवेक्तुं श्रुततारतम्यं
समागता संसदि भारतीव ॥ ५९ ॥

प्रवृद्धवादोत्सुकतां तदीयां
विज्ञाय विज्ञः प्रथमं यतीन्द्रः ॥
परावरज्ञः स परावरैक्य-
परां प्रतिज्ञामकरोत्स्वकीयाम् ॥ ६० ॥

---

प्रातःकाले शोणसरोजानां रक्तकमलानां बान्धवस्य सूर्यस्य रुच्या कान्त्या प्रद्योतिते व्योमन्याकाशे सति स यतिप्रवरः प्रज्ञावतामग्रणीर्नियतं नित्यं कर्म स्नानादि विधाय शिष्यवरैः साकं मण्डनस्येदं माण्डनं सदनं भवनं सद्भिर्मण्डितं प्रपद्य प्राप्य ध्येयं ब्रह्म जानातीति ध्येयविन्मुनिः पण्डितसभामध्ये वादायोपविवेश । पाठान्तरे तु मण्डनं प्रतीति व्याख्येयम् । शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥ [ शोणपदं सरोजबान्धवेन सूर्येण सहैव संबध्यते ] ॥ ५७ ॥

ततः सभामध्ये वादार्थं यतेरुपवेशनस्यानन्तरं स मण्डनपण्डितोऽपि सधर्मिणीं भार्यां शारदां सरस्वतीं नाम प्रसिद्धां समस्तविद्यासु विशारदां कुशलां सदस्यतायां सभानायकतायां समादिश्य वादं प्रति समुत्सुकः सम्यगुत्कण्ठितोऽभूत् । उपेन्द्रवज्रा वृत्तम् ॥ ५८ ॥

सा शारदा पतिदेवता सुष्ठु दन्तवती सदस्यमात्रे पत्या नियुक्ता चकाशे तयोर्यतिमण्डनयोः श्रुतस्य तारतम्यं विवेक्तुं समागता संसदि भारतीव ॥ ५९ ॥ [ सुदतीत्यनेन नैसर्गिकस्मितशालित्वं तस्यां सूच्यते ] ॥ ५९ ॥

तदनन्तरं भगवान्भाष्यकारः किं कृतवानित्यपेक्षायामाह—तदीया प्रवृद्धा या

---

१ ख. 'तिन' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मैकं परमार्थसच्चिदमलं विश्वप्रपञ्चात्मना
शुक्ती रूप्यपरात्मनेव बहलाज्ञानावृतं भासते ॥
तज्ज्ञानान्निखिलप्रपञ्चनिलया स्वात्मव्यवस्था परं
निर्वाणं जनिमुक्तमभ्युपगतं मानं श्रुतेर्मस्तकम् ॥ ६१ ॥

बाढं जये यदि पराजयभागहं स्यां
संन्यासमङ्ग परिहृत्य कषायचेलम् ॥
शुक्लं वसीय वसनं द्वयभारतीयं
वादे जयाजयफलप्रतिदीपिकाऽस्तु ॥ ६२ ॥

इत्थं प्रतिज्ञां कृतवत्युदारां
श्रीशंकरे भिक्षुवरे स्वकीयाम् ॥
स विश्वरूपो गृहमेधिवर्य-
श्चक्रे प्रतिज्ञां स्वमतप्रतिष्ठाम् ॥ ६३ ॥

---

वादोत्सुकता तां विज्ञाय विज्ञैः पराभिप्रायज्ञः परं कारणमवरं कार्यं यद्वा परं भविष्यमवरं भूतं ते परावरे जानातीति परावरज्ञो यद्वा परे ब्रह्मादयोऽवरे यस्मात्तं परमात्मानं जानातीति तथा परावरावीशजीवावभेदेन जानातीति वा । अत एतादृशः स यतीन्द्रः प्रथमं परावरयोरीशजीवयोरैक्यपरां स्वकीयां प्रतिज्ञामकरोत् ॥ ६० ॥

तामेवोदाहरति—ब्रह्मैकं परमार्थसच्चिदमलं बहलेन निबिडेनानादिसिद्धेनाज्ञानेनाऽऽवृतं सत्सकलप्रपञ्चात्मना भासते शुक्तिर्यथा रूप्यपरात्मना रूप्यात्मकपरस्वरूपेण भासते तद्वत्तस्य परावरैक्यस्य ज्ञानान्निखिलप्रपञ्चस्य नितरां कारणेनाज्ञानेन सह लयो बाधो यस्यामेवंविधा या स्वात्मनि व्यवस्था व्यवस्थितिः सा परं निर्वाणं जनिमुक्तं जन्मविनिर्मुक्तमभ्युपगतमस्यां प्रतिज्ञायां प्रमाणं श्रुतेर्मस्तकं वेदान्ताः प्रमाणमिष्टम् । तथाच श्रुतेर्मस्तकम्—'एकमेवाद्वितीयम्' 'सत्यं ज्ञानमनन्तम्' । 'विज्ञानमानन्दं ब्रह्म' । 'सर्वं खल्विदं ब्रह्म' । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'तरति शोकमात्मवित्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' । 'ब्रह्म वेद ब्रह्मैव भवति' 'न स पुनरावर्तते न स पुनरावर्तते' इत्यादि । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

तत्र पणं दर्शयति—बाढमिति । दृढेऽप्यस्मज्जये यदि पराजयभागहं स्यां तर्ह्यङ्ग हे मण्डन कषायवस्त्रं संन्यासं परित्यज्य शुक्लं वस्त्रं वसीयाऽऽच्छादनार्थमङ्गी कुर्यां क्रियमाणे वादे जयाजयफलस्य प्रतिदीपिकेयमुभयभारत्यस्तु । वसन्ततिलका वृत्तम् ॥ ६२ ॥

विश्वरूपो मण्डनः स्वमते प्रतिष्ठा यस्यास्तथाभूतां प्रतिज्ञाम् । उपजातिवृत्तम् ॥ ६३ ॥

---

१ क. ध. 'यचैल' । २ ख. घ. 'ज्ञः परं । ३ ख. 'लं नि' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदान्ता न प्रमाणं चितिवपुषि पदे तत्र संगत्ययोगा-
त्पूर्वो भागः प्रमाणं पदचयगमिते कार्यवस्तुन्यशेषे ॥
शब्दानां कार्यमात्रं प्रति समधिगता शक्तिरभ्युन्नतानां
कर्मभ्यो मुक्तिरिष्टा तदिह तनुभृतामाऽऽयुषः स्यात्समाप्तेः ॥ ६४ ॥

वादे कृतेऽस्मिन्यदि मे जयान्य-
स्त्वयोदितात्स्याद्विपरीतभावः ॥
येयं त्वयाऽभूद्गदिता प्रसाक्ष्ये
जानाति चेत्सा भविता वधूर्मे ॥ ६५ ॥

जेतुः पराजित इहाऽऽश्रममाददीते-
त्येतौ मिथः कृतपणौ यतिविश्वरूपौ ॥
अम्बामुदारधिषणामभिषिच्य साक्ष्ये
जल्पं वितेनतुरथो जयदत्तदृष्टी ॥ ६६ ॥

---

मण्डनकृतां प्रतिज्ञामुदाहरति—वेदान्ता इति । चितिवपुषि चित्स्वरूपे पदे परमात्मनि वेदान्ताः प्रमाणं न भवन्ति तत्र चिद्रूपे सिद्धे वस्तुनि कार्यानन्विते संगतेः शक्तेरयोगाद्वेदान्तेभ्यः पूर्वो भागः पदचयेन पदसमुदायात्मकेन वाक्येन गमिते बोधितेऽशेषे कार्यवस्तुनि प्रमाणमभ्युन्नतानां प्रसिद्धानां घटमानयेत्यादिकानां शब्दानां कार्यमात्रं प्रति शक्तिः समधिगता कर्मभ्यश्च मुक्तिरिष्टाऽभिमता तत्कर्मेहास्मिँल्लोके तनुभृतां देहभृतां जीवानामाऽऽयुषो जीवनस्य समाप्तेः समाप्तिपर्यन्तमिष्टं स्यात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति वचनात् । समाप्तिरितिपाठे तु तत्तस्मादिहास्मिन्कर्मणि तनुभृतामायुषः समाप्तिः स्यादिति व्याख्येयम् । स्रग्धरा वृत्तम् ॥ ६४ ॥ [ तदिह तनुभृतामिति मध्यमणिन्यायेनोभयत्राप्यन्वेति । कर्मभ्य इत्यपि काकाक्षिवदायुष इत्यत्रापि संबध्यते ] ॥ ६४ ॥

पणं दर्शयति—अस्मिन्वादे कृते सति यदि मे जयादन्यः पराजयः स्यात्तर्हि त्वयोदितात्त्वदुक्ताद्विपरीतभावः शुक्लवसनं गृहाश्रमं विहाय कषायवस्त्रपरिधानं स्याद्येयमुभयभारती प्रसाक्ष्ये त्वया कल्पिताऽभूत्सैवेयं वधूर्मे जानाति चेत्प्रसाक्ष्ये भविष्यति उपजातिवृत्तम् ॥ ६५ ॥

इहास्यां सभायां वादे वा पराजितो जेतुराश्रमभङ्गी कुर्यादिति कृतपणौ यतिमण्डनावुदारबुद्धिमम्बां सरस्वतीं साक्ष्येऽभिषिच्याथो अनन्तरं जये दत्ता स्थापिता दृष्टिर्याभ्यां तौ जल्पं विजिगीषुकथां वितेनतुर्विस्तारितवन्तावित्यर्थः । वसन्ततिलका वृत्तम् ॥ ६६ ॥

---

१ ग उम्बामु' । २ ख. घ. 'गात्संगतिग्रहाभावादे' । ३ क. ख. कथिता' । ४ ख. 'मम वधूर्भारती जा' । ५ क 'मे प्र' । ६ क क्ष्ये भविता भ' । ७ ग 'द्विमुंबां स' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आवश्यकं परिसमाप्य दिने दिने तौ
वादं समं व्यतनुतां किल सर्ववेदौ ॥
एवं विजेतुमनसोरुपविष्टयोस्तां
मालां गले न्यधित सोभयभारतीयम् ॥ ६७ ॥
माला यदा मलिनभावमुपैति कण्ठे
यस्यापि तस्य विजयेतरनिश्चयः स्यात् ॥
उक्त्वा गृहं गतवती गृहकर्मसक्ता
भिक्षाशने पि चरितुं गृहिमस्करिभ्याम् ॥ ६८ ॥
अन्योन्यसंजयफले विहितादरौ तौ
वादं विवादपरिनिर्णयमातनिष्टाम् ॥
ब्रह्मादयः सुरवरा अपि वाहनस्थाः
श्रोतुं तदीयसदनं स्थितवन्त ऊर्ध्वम् ॥ ६९ ॥
ततस्तयोरास महान्विवादः
सदस्यविश्राणितसाधुवादः ॥
स्वपक्षसाक्षीकृतसर्ववेदः
परस्परस्यापि कृतप्रमोदः ॥ ७० ॥

---

सर्ववेदौ सर्वज्ञौ तौ समं मिथो वादं वितनुतां विस्तारितवन्तावेवं विजेतुमनसोरुपविष्टयोर्यतिमण्डनयोर्गले तां प्रसिद्धां पुष्पनिर्मितामेकैकां मालां सेयमुभयभारती न्यधित स्थापितवती ॥ ६७ ॥ [ आवश्यकं स्वस्वनित्यकृत्यं स्नानसंध्याध्यानहवनादिकम् ] ॥ ६७ ॥

तयोर्गले मालां निधाय यदुक्तवती तदाह—यदा यस्मिन्काले यस्य गले माला मलिनभावमुपैति प्राप्नुयात्तस्य तदा विजयेतरस्य पराजयस्य निश्चयः स्यादित्युक्त्वा गृहं गतवती यतो गृहकर्मसक्ताऽपि च भिक्षा चाशनं भोजनं च भिक्षाशने चरितुं गृहिणे गृहस्थार्थमशनं मस्करिणे यत्यर्थं भिक्षां निर्मातुमित्यर्थः ॥ ६८ ॥

साक्ष्ये स्थापितायाः कृत्यमुक्त्वा वादिकृत्यमाह—तौ यतिमण्डनावन्योन्यसंजयात्मके फले विहितादरौ वादं जल्पात्मकमातनिष्टां विस्तारितवन्तौ तस्मिन्काले ब्रह्मादयोऽपि सुरश्रेष्ठा वाहनस्थाः सन्तो विवादस्य परिनिर्णयं श्रोतुं तदीयं सदनं[2] तस्य भवनमूर्ध्वमन्तरिक्षे स्थितवन्तः ॥ ६९ ॥ [ तदीयेति । मण्डनमिश्रगृहं प्रति । ऊर्ध्वं स्थितवन्त आसन्निति योजना ] ॥ ६९ ॥

ततो वादविस्तारानन्तरं ब्रह्मादिस्थित्यनन्तरं च तयोर्यतिमण्डनयोर्महान्विवाद

---

१ ख 'दप'। २ क. ख. 'नं भ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिने दिने चाधिगतप्रकर्षो
भूरीभवत्पण्डितसंनिकर्षः ॥
अन्योन्यभङ्गाहिततीव्रतर्ष-
स्तथाऽपि दूरीकृतजन्यमर्षः ॥ ७१ ॥

दिने दिने वासरमध्यमे सा
ब्रूते पतिं भोजनकालमेव ॥
समेत्य भिक्षुं समयं च भैक्ष्ये
दिनान्यभूवन्निति पञ्चपाणि ॥ ७२ ॥

अन्योन्यमुत्तरमखण्डयतां प्रगल्भं
बद्धासनौ स्मितविकासिमुखारविन्दौ ॥
न स्वेदकम्पगगनेक्षणशालिनौ वा
न क्रोधवाक्छलमवादि निरुत्तराभ्याम् ॥ ७३ ॥

---

आस बभूव । विवादं विशिनष्टि—सदस्यैः सभ्यैर्विश्राणितो दत्तः साधुवादो यस्मै स्वस्वपक्षे साक्षीकृताः सर्वे वेदा यत्र स परस्परस्यापि कृतः प्रमोदः प्रहर्षो येन । उपेन्द्रवज्रा वृत्तम् ॥ ७० ॥

पुनर्विवादं विशिनष्टि—दिने दिने चाधिगतः प्रकर्षो येन स भूरीभवतां पण्डितानां संनिकर्षः सांनिध्यं यस्य सोऽन्योन्यभङ्गेन विवदतोरन्तःकरण आहित स्थापितस्तर्षो जयाभिलाषो येन तथाऽपि दूरीकृतो जन्यमर्षो युद्धरोषो यस्मात्सः ।

जन्यं हट्टे परीवादे संयुगे जनके पुनः '

इति विश्वप्रकाशः । उपजातिवृत्तम् ॥ ७१ ॥

सोभयभारती प्रतिदिनं मध्याह्ने समागत्य पतिं भोजनकालमेव वक्ति भिक्षुं श्रीशंकरं भैक्ष्ये समयं च वदतीत्येवंप्रकारेण पञ्चपाणि पञ्च वा षड्वा दिनान्यभूवन् ॥ ७२ ॥

दृढतया बद्धमासनं याभ्यां तौ स्मितेन मन्दहसितेन विकासयुक्ते मुखकमले ययोस्तौ यतिमण्डनौ प्रगल्भमुत्तरमन्योन्यमखण्डयतां खण्डितवन्तौ पुनश्च स्वेदः प्रस्वेदो गगनेक्षणमुत्तराप्रतिमान आकाशं प्रति निरीक्षणं स्वेदकम्पगगनेक्षणशालिनौ न बभूवतुर्न वा निरुत्तराभ्यां क्रोधेन वाक्छलं क्रोधवाक्छलमवादि कथितम् । वसन्ततिलका वृत्तम् ॥ ७३ ॥

[ न स्वेदेति । स्वेदकम्पौ सात्त्विकविकारौ । तदुक्तम्—

' स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ' इति ] ॥ ७३ ॥

---

१ ग. 'स्मै स्वस्वपं' । २ क. ग. घ. 'दा येन स । ३ ग हृदे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततो यतिक्ष्माभृदवेक्ष्य दाक्ष्यं
क्षोदक्षमं तस्य विचक्षणस्य ॥
चिक्षेप तं क्षोभितसर्वपक्षं
विद्वत्समक्षाप्रतिभातकक्ष्यम् ॥ ७४ ॥

ततः स्वसिद्धान्तसमर्थनाय
प्रागल्भ्यहीनोऽपि स सभ्यमुख्यः ॥
जगाद वेदान्तवचःप्रसिद्ध-
मद्वैतसिद्धान्तमपाकरिष्णुः ॥ ७५ ॥

भो भो यतिक्ष्माधिपते भवद्भि-
र्जीवेशयोर्वास्तवमैकरूप्यम् ॥
विशुद्धमङ्गी क्रियते हि तत्र
प्रमाणमेधं न वयं प्रतीमः ॥ ७६ ॥

---

ततो बहुकालपर्यन्तं वादप्रवृत्त्यनन्तरं यतिक्ष्माभृद्यतिराजस्तस्य विचक्षणस्य मण्डनस्य क्षोदं विचारात्मकं पेषणं क्षमते सहत इति क्षोदक्षमं दाक्ष्यं कुशलतामवेक्ष्य क्षोभितः सर्वे पक्षा येन तथाभूतमपि विदुष आचार्यस्य समक्षे संमुखेऽप्रतिभाताः कक्ष्याः कोट्यो यस्यै-तादृशं तं चिक्षेप यद्वक्तव्यं तदुच्यतामिति पुनः प्रेरितवान्। उपजातिवृत्तम् ॥ ७४ ॥ [ विद्वदिति। विदुषां विवादकौतुकावलोकनार्थमागतानां पण्डितानां समक्षं प्रत्यक्षमेव यथा स्यात्तथाऽप्रतिभाता कक्षायै—

'स्पर्धापदे च दोर्मूले कक्षा वीरुत्तृणेषु च'

इति मेदिन्याः स्पर्धास्थानायार्हा कोटिर्यस्य स तथा तमेतादृशं सन्तमिति यावत् ]॥७४॥

तदनन्तरं मण्डनो यत्कृतवांस्तदाह—ततः स्वसिद्धान्तसमर्थनाय प्रागल्भ्यहीनोऽपि सभ्यमुख्यः स मण्डनो वेदान्तवचोभिः प्रसिद्धमद्वैतसिद्धान्तमपाकरिष्णुरुवाच। उपजाति-वृत्तम् ॥ ७५ ॥

यदुवाच तदुदाहरति—भो भो इति। संभ्रमे वीप्सा। यतिक्ष्माधिपते यतिराज जीवेश्वरयोर्वास्तवमैकरूप्यं विशुद्धं यद्भवद्भिरङ्गी क्रियते तत्र प्रमाणं वयं न प्रतीमो न जानीमस्तत्र प्रमाणं नास्तीत्यर्थः। अयं भावः—न हि श्रुतिमस्तकमुक्तार्थे प्रमाणं भवितुमर्हति शुद्धबुद्धोदासीनतयोपेक्षणीयं ब्रह्म भूतमभिदधतस्तस्यापुरुषार्थोपदेशि-नोऽप्रयोजनत्वप्रसङ्गात्। किंच यथा लौकिकवाक्यानि प्रमाणान्तरावगतार्थबोधकानि

---

१ क. °कक्षम्। २ क. कक्षाः ३ क. यस्य स ता°। ४ ग. °रं सम°। ५ ग. घ. °भीयन्न°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स प्रत्यवादीदिदमेव मानं
यच्छ्वेतकेतुप्रमुखान्विनेयान् ॥
उद्दालकाद्या गुरवो महान्तः
संग्राहयन्त्यात्मतया परेशम् ॥ ७७ ॥

---

न स्वतः प्रमाणं तथा भूतार्थानुवादकत्वेन श्रुतिमस्तकस्यान[1]पेक्षालक्षणं प्रामाण्यं व्याहन्येत। तथाच प्रत्यक्षादिविषयस्य परिनिष्ठितवस्तुनः प्रतिपादनासंभवात्प्रतिपादने च हेयोपादेय- हिते पुरुषार्थाभावाच्छ्रुतिमस्तकस्य तत्र प्रमाणत्वाभावेन भवत्सिद्धान्ते वयं प्रमाणं न प्र- इति। उपजातिवृत्तम् ॥ ७६ ॥

एवं मण्डनकर्तृ[3]कमाक्षेपमुदाहृत्य भाष्यकृत्कर्तृकमुत्तरमुदाहर्तुमाह—स भगवान्भाष्यकृ- प्रत्यवादीत्प्रत्युत्तरं दत्तवान्। इदमेव प्रमाणं यच्छ्वेतकेतुप्रभृतीञ्शिष्यानुद्दालकाद्या महान्तो गुरवः परेशं परमात्मानमात्मतया ग्राहयन्ति। 'तत्त्वमसि श्वेतकेतो' इति। आद्यपदग्र- दाभ्यां जनकयाज्ञवल्क्यादयो गृह्यन्ते। तथाचाऽऽह जनकं प्रति याज्ञवल्क्यः—'अभयं वै जनक प्राप्तोऽसि तदाऽऽत्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्'। 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादि। अयमभिसंधिः—पुंवाक्यदृष्टान्तेन भूता- तया सापेक्षत्वेनाप्रामाण्यापत्तिमभिप्रेत्य प्रत्यगभिन्ने ब्रह्मणि प्रमाणं न वयं प्रतीम इ- वदता त्वया वक्तव्यं किं पुंवाक्यानां सापेक्षत्वं भूतार्थत्वेनोत पौरुषेयत्वेन। आद्ये प्रत्यक्षा- दीनामपि भूतार्थतया सापेक्षत्वेनाप्रामाण्यप्रसङ्गः। द्वितीये त्वपौरुषेयाणां वेदान्तानां प्रत्य- क्षादीनामिव भूतार्थानामपि नाप्रामाण्यम्। तथाच ब्रह्मात्मभावस्य 'परिनिष्ठितवस्तु- पत्वेऽपि तत्त्वमसीत्यादिशास्त्रमन्तरेणानवगम्यमानतया प्रत्यक्षादिविषयत्वाभावेनानधि- गन्तृत्ववतां वेदान्तानां प्रत्यगभिन्ने ब्रह्मणि प्रामाण्यमवश्यमास्थेयम्। नापि हेयोपादेय- हितत्वादपुरुषार्थत्वम्। हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्वक्लेशनिवृत्तिपूर्वकपरमान- प्राप्त्या पुरुषार्थसिद्धेः। द्विविधं ह्युपादेयं किंचिदप्राप्तं यथा ग्रामादि किंचित्पुनः प्राप्त- विभ्रमवशादप्राप्तमिवावगतं यथा स्वग्रीवावनद्धं ग्रैवेयकम्। एवं हेयमपि द्विविधं किंचि- हीनं यथा व्यावहारिकसर्पादि किंचित्पुनर्हीनं यथा चरणाभरणे नूपुरादौ समारोपितसर्पादि- रेवं च ब्रह्मात्मभावस्याऽऽत्यहेयोपादेयत्वाभावेऽप्यविद्यासमारोपितशोकादेस्तत्त्वमस्यादिश्रुति- जनिततत्त्वज्ञानादवगतिपर्यन्तान्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति त्यक्त- शोकाद्यत्यक्तमिव त्यक्तं भवतीति तस्य परमपुरुषार्थत्वसिद्धिरिति ॥ ७७ ॥

---

१ क घ. 'पेक्षल'। २ क. 'वाचत्म'। ३ ख. घ. 'र्तृकाक्षे'। ४ ख. 'कादिकमत्यक्त'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदावसानेषु हि तत्त्वमादि-
वचांसि जप्तान्यघमर्षणानि ॥
हुंफण्मुखानीव वचांसि योगि-
न्नेषां विवक्षाऽस्ति कुहस्विदर्थे ॥ ७८ ॥
अर्थाप्रतीतौ किल हुंफडादे-
र्जपोपयोगित्वमभाणि विज्ञैः ॥
अर्थप्रतीतौ स्फुटमत्र सत्यां
कथं भवेत्प्राज्ञ जपार्थतैव ॥ ७९ ॥
आपाततस्तत्त्वमसीतिवाक्या-
द्यतीश जीवेश्वरयोरभेदः ॥
प्रतीयतेऽथापि मखादिकर्तृ-
प्रशंसया स्याद्विधिशेष एव ॥ ८० ॥

---

ननु भूतार्थतया वेदान्तानामपौरुषेयत्वासिद्ध्या वेदान्ताः पौरुषेया वाक्यत्वाद्भारतादिवदित्यनुमानस्याप्रत्यूहमुत्पत्तेः। पौरुषेयत्वस्य दुर्वारत्वाद्वेदान्तवचसां कस्मिंश्चिदर्थे विवक्षा नास्ति किंतु जप्तानि तान्यघमर्षणानीत्यभ्युपगन्तव्यमित्याशयवान्मण्डन आह—वेदावसानेषु वेदान्तेषु हि यस्माद्धुंफण्मुखानि वचनानि यथा जप्तान्यघमर्षणानि तथा तत्त्वमस्यादिवचांसि जप्तानि पापनिवर्तकानि तस्माद्धे योगिन्नेषां तत्त्वमस्यादिवचसां कुहस्विदर्थे कस्मिंश्चिदर्थे विवक्षा नास्तीत्यर्थः ॥ ७८ ॥

एतद्दूषयति भगवान्—अर्थस्याप्रतीतावप्रतिभाने किल प्रसिद्धं हुंफडादेर्जपोपयोगित्वं विज्ञैरपाणि भाषितम्। अत्र तत्त्वमस्यादिवचनेषु स्पष्टं यथा स्यात्तथाऽर्थस्य प्रतीतौ सत्यामेषां जपार्थतैव कथं भवेत्केनापि प्रकारेण न भवतीत्यर्थः। प्राज्ञस्त्वं दृष्टान्तवैषम्यं कथं न जानासीति सूचयन्संबोधयति—हे प्राज्ञेति। आख्यानकी वृत्तम् ॥ ७९ ॥

उक्तं पक्षं विहाय पक्षान्तरालम्बनाय मण्डन आह—आपातत इति। हे यतीश यद्यपि जीवेशयोरभेदस्तत्त्वमसीतिवाक्यादापाततः प्रतीयते तथाऽपि मखादिकर्तृप्रशंसयेशाभिन्नोऽयं मखादिकर्तेतिस्तुत्या तयोरभेदो विधेः शेष एवेत्यर्थः। अयं भावः—वेदान्तवचसां तत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वमभ्युपेयम्। कार्यस्यापूर्वस्य मानान्तरागोचरतयाऽत्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात्त*दर्थाना वेदान्तानां कार्यपरत्वाङ्गीकारस्याऽऽवश्यकत्वात्। तथाच जैमिनिनाऽपि आम्नायस्य

---

* यज्ञादिपरार्थानाम्।

---

१ ख. 'षु हि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रत्वङ्गयूपादिकमर्यमादि-
देवात्मना वाक्यगणः प्रशंसन् ॥
शेषः क्रियाकाण्डगतो यदि स्या-
त्काण्डान्तरस्थोऽपि भवेत्कथं सः ॥ ८१ ॥

---

क्रियार्थत्वादानर्थक्यमतदर्थानाम् ' इतिसूत्रेणाक्रियार्थानामर्थवादानामानर्थक्यं पूर्वपक्षं कृ' विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ' इत्याक्रियार्थानामानर्थक्यं पूर्वपक्षोक्तमङ्गीकृत्यैवार्थवादानां विध्येकवाक्यतया प्रामाण्यं प्रतिपादितम् । नचाक्रियार्थत्वेऽपि वेदान्तानां ब्रह्मरूपविधिपरत्वस्वीकारेण न सिद्धान्तसूत्रविरोध इति वाच्यम् । विधीनामनागतोत्पाद्यभावनाविषयत्वेन परिनिष्ठितवस्तुस्वरूपविधेरसंभवादिति । उपजाति वृत्तम् ॥ ८० ॥ [ पातं तत्तद्विषयकाज्ञानविनाशं मर्यादीकृत्येत्यापातं तस्मात्तत्तद्विषयकाज्ञानविनाशादर्वागेवेत्यर्थः ] ॥ ८० ॥

वेदान्तानां कार्यपरत्वस्वीकारेणापौरुषेयत्वं प्रतिपादयता त्वया वक्तव्यं किं तत्कार्यं यदशक्यं पुरुषेण ज्ञातुमपूर्वमिति चेन्मानान्तरानवगते संगतिग्रहायोगाल्लिङादीनामबोधकत्वप्रसङ्गः । स्वर्गकामपदसमभिव्याहारसंख्यौकतर्कानुगृहीतवेदादेव क्रियाविलक्षणापूर्वे लिङादीनां संगतिग्रहाद्बोधकत्वमिति चेच्चैत्यवन्दनादिवाक्येष्वपि स्वर्गकाम इत्यादिपदसंबन्धादपूर्वकार्यत्वप्रसङ्गेन तेषामप्यशक्यरचनतयाऽपौरुषेयत्वप्रसङ्गः । स्पष्टेन पौरुषेयत्वेन तेषामपौरुषेयत्वप्रतिषेध इति चेद्वाक्यत्वादिलिङ्गेन वेदानामपि पौरुषेयत्वानुमानादपूर्वार्थता न स्यात् । स्मर्यमाणकर्तृकत्वेन वाक्यादि सोपाधिकमिति चेद्यथा वेदान्तानां कार्यार्थत्वपक्षे तेषां पौरुषेयत्वानुमानं कर्तृस्मरणोपाधिना निरस्यते तथा तेषां सिद्धार्थत्वपक्षेऽपि तन्निरसनस्य समानत्वात्तेषां कार्यार्थत्वकल्पनमप्रयोजकम् । तस्माद्वेदान्तानामपौरुषेयत्वसंपादनाय क्रियार्थत्वं नैवाभ्युपेयम् । ' सदेव सौम्येदमग्र आसीत् ' । ' एकमेवाद्वितीयम् ' । ' आत्मा वा इदमेक एवाग्र आसीत् ' । ' तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् ' । ' अयमात्मा ब्रह्म सर्वानुभूः ' । ' ब्रह्मैवेदममृतं पुरस्तात् ' इत्यादिवाक्येषूपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैर्निखिलब्रह्मात्मभावे प्रतिपादकत्वेन समनुगतेषु स्थितानां पदानां प्रत्यगभिन्नब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पनायाः श्रुतहान्यश्रुतकल्पनाग्रस्ताया अयुक्तत्वात् । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिक्रियाकारकफलनिराकरणश्रुतेः—प्रकरणान्तरपठितवेदान्तवाक्यानां कर्त्रादिप्रशंसया विधिशेषत्वासंभवाच्चेत्याशयवान्भगवानाह—क्रत्वङ्गयूपादिकमिति । ' आदित्यो यूपः ' ' यजमानः प्रस्तरः ' इत्यादिवाक्यगणः क्रत-

---

१ ख. 'यार्थत्वेऽपि वेदान्तानामा' । २ ख. 'संशक' । घ. 'सपादक' । ३ क. 'स्वत-कों' । ४ ख. ग. 'व सोम्ये' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तर्ह्यस्तु जीवे परमात्मदृष्टि-
विधायकः कर्मसमृद्धयेऽर्हन् ॥
अब्रह्माणि ब्रह्मधियं विधत्ते
यथा मनोन्नार्कनभस्वदादौ ॥ ८२ ॥
संश्रूयतेऽन्यत्र यथा लिङादि-
र्विधायको ब्रह्मविभावनाय ॥
तथा विधेरश्रवणान्मनीषि-
न्संजाघटीत्यत्र कथं विधानम् ॥ ८३ ॥
यद्वत्प्रतिष्ठाफलदर्शनेन
विधिर्यतीनां वर रात्रिसत्रे ॥
प्रकल्प्यते तद्वदिहापि मुक्ति-
फलश्रुतेः कल्पयितुं स युक्तः ॥ ८४ ॥

---

स्रुक्प्रस्तरादिकमादित्ययजमानाद्यात्मना प्रशंसन्क्रियाकाण्डगतत्वाच्छेषो यदि स्यात्तर्हि भवतु नाम तथाऽपि काण्डान्तरे ज्ञानकाण्डे स्थितः 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवाक्यगणो विधिशेषः कथं भवेत्। इन्द्रवज्रा वृत्तम् ॥ ८१ ॥ [ क्रियेति। कर्मकाण्डगतः। शेषो विध्यङ्गीभूतः ] ॥ ८१ ॥

एवमुक्तो मण्डन आह—हेऽर्हन्यद्येवं तर्हि तत्त्वमस्यादिवाक्यगणो जीवे परमात्मदृष्टिविधायकोऽस्तु किमर्थमिति चेत्तत्राऽऽह—कर्मसमृद्धये तत्र दृष्टान्तो यथा 'मनो ब्रह्मेत्युपासीत'। 'अन्नमुपास्स्व'। 'आदित्यो ब्रह्मेत्यादेशः'। 'वायुर्वाव संवर्गः'। 'प्राणो वाव संवर्गः' इत्यादिवाक्यगणः कर्मणां सम्यगभिवृद्धयेऽब्रह्माणि मनआदौ ब्रह्मधियं विधत्ते तद्वत्। तथाचाऽऽरोपितब्रह्मभावस्य जीवस्योपास्तिपरा वेदान्ता न तस्य ब्रह्मात्मत्वे प्रमाणमिति भावः। आख्यानकी वृत्तम् ॥ ८२ ॥ [ कर्मेत्यादि। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतेरग्निहोत्रादिक्रियाजन्यपुण्यापूर्वस्य वीर्यवत्तरत्वसंपत्त्यर्थमिति यावत् ] ॥ ८२ ॥

एतद्दूषयति भगवान्—अन्यत्र 'मनो ब्रह्मेत्युपासीत' इत्यादिवाक्ये यथा ब्रह्मविभावनाय विधायको लिङादिः श्रूयते तथाऽत्र तत्त्वमस्यादिवाक्ये लिङादिरूपस्य विधेरश्रवणाद्विधानं कथं संजाघटीति केन प्रकारेण घटते न केनापीत्यर्थः। मनीषी सन्कथमेवं भाषस इति संबोधनाशयः। तथाच विध्यभावेनाऽऽरोपितब्रह्मभावस्य जीवस्योपास्तिपरत्वं वेदान्तानां न संभवतीति तस्य ब्रह्मात्मत्व एव वेदान्ताः प्रमाणमिति भावः। उपजातिर्वृत्तम् ॥ ८३ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तर्हि क्रियाजन्यतया विमुक्तिः
स्वर्गादिवद्धन्त विनश्वरा स्यात् ॥
उपासना कर्तुमकर्तुमन्यथा
वा कर्तुमर्हा मनसः क्रियैव ॥ ८५ ॥

ननु सन्तु वेदान्ता ब्रह्मात्मत्वे प्रमाणं परं तु ज्ञानविधिद्वारा तत्र विधेः कल्पयितुं शक्यत्वादिति मन्वानो मण्डन आह—यद्वत्प्रतिष्ठाफलदर्शनेन हे यतीनां मध्ये श्रेष्ठविसंबंधे घननाध्वरमीमांसानध्ययनं सूचयति रात्रिसत्रे विधिः प्रकल्प्यते तद्वदिहापि ब्रह्मात्मैकत्वेऽपि मुक्तिफलश्रुतेः स विधिः कल्पयितुं युक्तः । अयमर्थः—' प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति ' इति श्रूयते तत्र रात्रिशब्देनाऽऽयुर्ज्योतिरित्यादिवाक्यविहिताः सोमयागविशेषा उच्यन्तेऽत्र यद्यपि प्रतितिष्ठन्तीति वर्तमानापदेशान्सिद्धरूपैव प्रतिष्ठा प्रतीयते न साध्यरूपा तथाऽपि श्रुताया एव प्रतिष्ठाया विपरिणामेन फलकल्पनस्यात्यन्ताश्रुतस्वर्गस्य फलत्वकल्पनापेक्षया वरत्वाद्यत्तदोर्व्यत्यासेन योजनया प्रतितिष्ठन्तीत्यत्र सन्नर्थान्तर्भावेन च ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति वाक्यविपरिणामेन्न यथा रात्रिसत्रे विधिः प्रकल्प्यते तथेहापि ' ब्रह्म वेद ब्रह्मैव भवति ' इति मुक्तिफलश्रुतेः ' ब्रह्म बुभूषुर्ब्रह्मवेदनं कुर्यात् ' इति विधिः कल्पयितुं युक्तः । तथाच ' आत्मा वा अरे द्रष्टव्यः ' । ' य आत्माऽपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ' । ' आत्मेत्येवोपासीत ' । ' आत्मानमेव लोकमुपासीत ' ' ब्रह्म वेद ब्रह्मैव भवति ' इत्यादिषु विधानेषु सत्सु को वाऽऽत्मा किं ब्रह्मेत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन ' नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म ' इत्येवमादयः सर्वे वेदान्ता उपयुक्तास्तदुपासनाच्च शास्त्रदृष्टोऽदृष्टमोक्षो भविष्यति । कर्तव्यविध्यननुप्रवेशे तु वस्तुमात्रकथने हानोपादानासंभवात् ' सप्तद्वीपा वसुमती ' ' राजाऽसौ गच्छति ' इत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यं स्यात् । किंच वेदान्तानां प्रवृत्तिनिवृत्त्यबोधकत्वे शास्त्रत्वमेव न स्यात् । तत्परस्यैव शास्त्रत्वबोधनात् । यथाऽऽहुः—

' प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ' इति ।

अपिच रज्जुरियं नायं सर्प इत्यादिश्रवणेन यथा भयकम्पादि निवर्तते न तथा संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणेन निवर्तते । श्रुतब्रह्मस्वरूपस्य यथापूर्वं सुखदुःखादिसंसारधर्मदर्शनात् । ' मन्तव्यो निदिध्यासितव्यः ' इति श्रवणोत्तरकालयोर्मनननिदिध्यासनयोः श्रवणाच्चेति ॥ ८४ ॥

एतद्दूषयति भगवान्—तर्हि मोक्षस्योपास्तिरूपक्रियाफलत्वे सति विमुक्तिर्विनश्वरा स्यात्क्रियाजन्यत्वात्स्वर्गादिवदिति । अयमर्थः—कर्तव्यविधिशेषत्वेनाऽऽत्मोपदेशे

१ ख. ग. घ. °पेक्षाया । २ ख योजनेन । ३ ख. 'न ये' । ४ क. 'त्रिवि' । ५ ... ह्मविद्ब्रह्मै' । ६ ख. 'द्धशु' । ७ ख. ग 'दृष्टो मो°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मा भूदिदं तत्त्वमसीति वाक्य-
मुपासनापर्यवसायि कामम् ॥
किंत्वस्य जीवस्य परेण साम्य-
प्रत्यायकं सत्तम बोभवीतु ॥ ८६ ॥

---

न युक्तः स्वर्गादिवन्मोक्षस्यानित्यत्वसातिशयत्वयोरनिष्टयोरापत्तेः[1]। ननु ज्ञानस्यापि मानसक्रियात्वात्त्वन्मतेऽपि विमुक्तेरनित्यत्वं कुतो न स्यादित्याशङ्क्य ज्ञानस्य मानसत्वेऽपि यथाभूतवस्तुविषयप्रमाणजन्यत्वेन कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वात्केवलवस्तुतन्त्रत्वेन चोदनातन्त्रत्वाभावात्पुरुषतन्त्रत्वशून्यत्वाच्चास्मन्मते नोक्तदोष इत्याशयेनाऽऽह—उपासनेति। यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्'। 'संध्यां मनसा ध्यायेत्' इत्येवमादिषु ध्यानं चिन्तनं मानसं पुरुषतन्त्रत्वात्कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं तथा मनसः क्रियोपासनैव कर्तुमकर्तुमन्यथा वा कर्तुमर्हा न तु ज्ञानं तथाच तज्जन्यविमुक्तेरनित्यत्वं स्पष्टमेवेत्यर्थः। तस्मात्तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्तो विधिच्छायारूपत्वात्स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थाः। अन्यथा—

'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' ॥

'अभयं वै जनक प्राप्तोऽसि' 'तदात्मानमेवावेदहं ब्रह्मास्मि' इत्याद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं प्रदर्शयन्त्यो मोक्षस्य ज्ञानजन्यापूर्वजन्यत्वं वारयन्त्यो नोपपद्येरन् ब्रह्मावगतौ सत्यां सर्वकर्तव्यताहानेः कृतकृत्यताया[2]श्चास्माकमलंकारत्वात्। मननादिसहकृतेन श्रवणेन ब्रह्मस्वरूपसाक्षात्कारे संसारित्वनिवृत्तेः श्रुतिस्मृत्यनुभवसिद्धत्वाद्धितशासनेनै[3]तत्प्रतिपादकस्य गुरुपशास्त्रत्वाच्च न कोऽपि दोष इति ॥ ८५ ॥ [ अथ तुष्यतु दुर्जन इति न्यायेन भगवान्भाष्यकृत्प्रोक्तविधिकल्पनमङ्गीकृत्यापि भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन दूषयति—तर्हीति ] ॥ ८५ ॥

एवमुक्तो मण्डनस्तत्त्वमस्यादिवाक्यस्योपासनापर्यवसानाभावमङ्गीकृत्य प्रकारान्तरेणाऽऽक्षिपति—इदं तत्त्वमसीति वाक्यमुपासनापर्यवसायि यथेष्टं मा भूत्तथाऽप्यैक्यप्रतिपादकं नास्ति किंत्वस्य जीवस्य परमेश्वरेण सादृश्य[4]स्य प्रतिपादकं हे सत्तम बोभवीतु भवतु ॥ ८६ ॥ [ अथ मण्डनमिश्रः 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्याथर्वणीयमुण्डकोपनिषच्छ्रुतेरस्य जीवस्य ब्रह्मणा सह सादृश्यबोधकमेवेदमिति पुनः शङ्कते—मा भूदिति ] ॥ ८६ ॥

---

१ ख. ग. घ. 'योरा'। २ ग. घ तदाऽऽत्मा'। ३ ख तत्प्र'। ४ ख 'श्यम'।

किं चेतनत्वेन विवक्षि साम्यं
सार्वज्ञसार्वात्म्यमुखैर्गुणैर्वा ॥
आद्ये प्रसिद्धं न खलूपदेश्य-
मन्ते स्वसिद्धान्तविरुद्धता स्यात् ॥ ८७ ॥

नित्यत्वमात्रेण मुने परात्म-
गुणोपमानैः सुखबोधपूर्वैः ॥
गुणैरविद्यावृतितोऽप्रतीतैः
साम्यं ब्रवीत्वस्य ततो न दोषः ॥ ८८ ॥

यद्येवमेतस्य परत्वमेव
प्रत्याययत्वत्र दुराग्रहः कः ॥
त्वयैव तस्य प्रतिभासशङ्का
विद्वन्नविद्यावरणान्निरस्ता ॥ ८९ ॥

भोश्चेतनत्वेन शरीरिसाम्य-
मावेद्यतामस्य जगत्प्रसूतेः ॥
चिदुत्थितत्वेन परोदितस्या-
प्यणुप्रधानप्रभृतेर्निरासः ॥ ९० ॥

---

एतद्विकल्प्य दूषयति भगवान्—किमिति । तत्त्वमसीति वाक्यं किं चेतनत्वेन [illegible] सादृश्यं प्रवदति किं वा सार्वज्ञसार्वात्म्यसर्वशक्तित्वप्रभृतिभिर्गुणैः साम्यं विवक्षि । [illegible] चेतनत्वेन साम्यस्य प्रसिद्धत्वादुपदेशानर्थक्यम् । द्वितीये जीवस्य परमात्मस्वरूपाप्त्याऽ[illegible] नास्तीतिस्वसिद्धान्तविरुद्धता स्यात् । तस्मादैक्यप्रतिपादकमेवोक्तवाक्यमभ्युपेयमित्यर्थः । इन्द्रवज्रा वृत्तम् ॥ ८७ ॥

एवमुक्तो मण्डन आह—नित्यत्वमात्रेण परमात्मगुणसदृशैः सुखबोधानन्त्यादिभिरवि[illegible] वरणादप्रतीतैरस्य जीवस्य परेण साम्यमुक्तवाक्यं हे मुने ब्रवीतु तस्मान्नोक्तदोषः । उप[illegible] तिवृत्तम् ॥ ८८ ॥

एवमुक्तो भगवानाह—यद्येवं तर्हि तस्य जीवस्य परमात्मत्वमेवोक्तवाक्यं बोध[illegible] तस्य परत्वे दुराग्रहः कः । नन्वेव तर्हि तस्य परत्वं कुतो न प्रतिभासत इति चेत्तत्राऽऽ[illegible] तस्य सुखबोधानन्तरूपस्य परत्वस्य प्रतिभासशङ्का त्वविद्यावरणात्त्वयैव निरस्ता । विद्वन्[illegible] न्कथमेवं भाषस इति संबोधनाशयः ॥ ८९ ॥

एवमुक्तो मण्डनः प्रकारान्तरमालम्ब्याऽऽह—हे यतीशास्य जगत्कारणस्य [illegible]

---

१ क. ग. °र्वस्यसा° । २ क. °र्वस्यसा । ३ क. ख. घ. अथ । ४ ग. 'त्वानङ्गीकारे ई' । ५ ख. 'पप°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हन्तैवमस्तीति तदा प्रयोगः
स्यात्त्वन्मते तत्त्वमसीति न स्यात् ॥
तदैक्षतेत्यत्र जडत्वशङ्का-
व्यावर्तनाच्चात्र पुनर्न चोद्यम् ॥ ९१ ॥
नन्वेवमप्यैक्यपरत्वमस्य
प्रत्यक्षपूर्वप्रमितिप्रकोपात् ॥
न युज्यते तज्जपमात्रयोगि-
स्वाध्यायविध्याश्रितमभ्युपेयम् ॥ ९२ ॥
अक्षेण चेद्भेदमितिस्तदा स्या-
दभेदवादिश्रुतिवाक्यबाधः ॥
असंनिकर्षान्न भवेद्धि भेद-
प्रमैव तेनास्य कुतो विरोधः ॥ ९३ ॥

स्येन जीवसाम्यमावेद्यताम्। तथाच चितश्चेतनाज्जगत उत्थितत्वात्परैः सांख्यादिभिरुदितस्य प्रधानपरमाण्वादेर्निरासोऽपि सिध्यतीत्यर्थः ॥ ९० ॥ [ अस्य प्रकृतत्वेन बुद्धिस्थस्य परमेश्वरस्य। आवेद्यतां ज्ञाप्यताम्। तत्त्वमस्यादिमहावाक्यैरिति शेषः ] ॥ ९० ॥

एवमुक्तो भगवानाह—हन्त हे मण्डनैवं चेत्तदा त्वन्मते तज्जगत्कारणं त्वं त्वत्सदृशमसीति प्रयोगः स्यात्तत्त्वमसीति न स्यात्। जडत्वशङ्कायास्तु 'तदैक्षत बहु स्यां प्रजायेय' इतीक्षणश्रवणात्तत्त्वमसीति जगत्कारणस्य चेतनाभेदप्रतिपादनेन च व्यावर्तनात्पुनरत्र चोद्याभावात्प्रधानादेर्निरासायैवं न वाच्यमित्यर्थः ॥ ९१ ॥

एवं सर्वतः प्रतिरुद्धो मण्डन इममपि पक्षमुपेक्ष्य पुनस्तत्त्वमस्यादिवाक्यस्य जपोपयोगित्वाश्रयणाय परपक्षे प्रत्यक्षविरोधमापादयति—नन्वेवं साम्याप्रत्यायकत्वेऽप्यस्योक्तवाक्यस्यैक्यपरत्वं नाहमीश्वर इति प्रत्यक्षात्मिकाया ज्येष्ठप्रमायाः प्रकोपान्न युज्यते ततः 'स्वाध्यायोऽध्येतव्यः' इति विधिनाऽऽश्रितमुक्तवाक्यं जपोपयोग्यमभ्युपेयमिति ॥ ९२ ॥ [ पूर्वशब्दितादिग्रहणादनुमानादेः संग्रहः। तद्यथा—अहमनीश्वरः। जगन्नियन्तृत्वाभावाद्दुःखित्वात्किंचिज्ज्ञत्वाच्च। आद्ये घटवत्। अन्त्ययोर्व्यतिरेक ईश्वरवदि...त्यनुमानम्। एवं यद्यहमीश्वरः स्यां तर्हि जगज्जन्मादौ शक्तः स्याम्। यतो न शक्तस्तस्मान्नेश्वर इत्यर्थापत्तिरपि। ऐक्येति। जीवेश्वराभेदबोधकत्वमिति यावत् ] ॥ ९२ ॥

एतद्दूषयति भगवान्—अक्षेणेन्द्रियेण चेद्भेदमितिर्भेदप्रमा यदि स्यात्तदाऽभेदवादिश्रुतिवाक्यस्य बाधः स्यात्। अक्षस्य भेदेनासंनिकर्षाद्भेदप्रमैव न हि भवेत्तेन कारणे-

१ ख. 'ज्यतेऽतो जप'। २ क. जीवेन सा'। ३ ख, घ. 'तमधीतमु'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिन्नोऽहमीशादिति भासते हि
भेदस्य जीवात्मविशेषणत्वम् ॥
तत्संनिकर्षोऽस्त्वथ संप्रयोगा-
भावेऽपि भेदेन्द्रिययोर्मनीषिन् ॥ ९४ ॥

---

नास्य वाक्यस्य कुतो विरोधो न केनापि विरोधोऽस्य प्रत्यक्षस्य कस्माद्धेतोर्विरोध इति वा । तेन प्रत्यक्षेणास्य वाक्यस्येति वा । अयमर्थः—इन्द्रियं भेदे न प्रमाणं तदसंनिकृष्टत्वात्संमतवत् । ननु हेत्वसिद्धिरिति चेदिन्द्रियस्य भेदेन संयोगसमवायतादात्म्यानामन्यतमः संनिकर्षस्तदन्यो वा । आद्ये न तावत्समवायोऽसंभवात्तदसिद्धेश्च । ननु रूपी घटो मृदि घट इति प्रत्ययस्य संयोगानवगाहित्वात्परिशेषात्समवाय एव सिध्यतीति चेन्न । गुणगुणिनोरवयवावयविनोश्चात्यन्तभेदे तत्संबन्धस्य च तथात्वे दण्डपुरुषादाविव शुक्लो घटो मृद्घट इति समानाधिकरणप्रत्ययानुपपत्तेः । किंच समवायिभ्यां संबद्धः समवायो विशिष्टप्रत्ययनियामक उतासंबद्धः । नाऽऽद्यः । तस्य तस्यान्योन्यसंबन्धः कल्पयितव्य इत्यनवस्थापातात् । ननु समवायिभिर्नित्यसंबन्ध एवायं गृह्यतेऽतो नोक्तदोष इति चेत्तर्हि संयोगोऽपि संयोगिभिर्नित्यसंबद्धत्वात्संबन्धान्तरं नापेक्षेत । अर्थान्तरत्वादपेक्षत इति चेत्तर्हि समवायोऽपि तथात्वात्कुतो नापेक्षते संयोगो गुणत्वात्तथेति चेन्न । गुणपरिभाषाया अतन्त्रत्वादपेक्षाकारणस्य च तुल्यत्वात् । नान्त्यः । अतिप्रसङ्गात् । किंच सोऽनेक एको वा । आद्येऽपसिद्धान्तो गौरवं च द्वितीये रूपज्ञानादिसमवायस्य वायुघटादिवृत्तिसमवायाभेदाद्रूपी वायुर्घटो ज्ञानवानिति प्रतीतिप्रसङ्गः । न च तत्र रूपादेरभावान्नोक्तप्रतीतिरिति वाच्यम् । तद्बुद्धिप्रयोजकसंबन्धे सति तदभावव्यवहारस्य व्याहतत्वात् । तस्मान्न कथमपि समवायः सिध्यति । अवयवावयव्यादीनां संबन्धस्तु तादात्म्यं तच्च न भिन्नाभिन्नत्वम् । विरुद्धयोर्भेदाभेदयोरेकत्रासंभवात् । अपि तु भिन्नत्वे सत्यभिन्नसत्ताकत्वं तच्चानिर्वाच्यम् । नापि संयोगतादात्म्ये तदभावस्य सुप्रसिद्धेः । न द्वितीयस्तदन्यसंनिकर्षस्य क्वाप्यप्रसिद्धेरिति ॥ ९३ ॥ [ प्रत्यक्षादेर्जीवेश्वरभेदपरत्वमेव न संभवतीति मन्वानः प्रथमं प्रत्यक्षस्य भेदेन सह संनिकर्ष एव नास्तीति तद्विषयकतत्प्रमाभावान्न तेन सह विरोधात्तत्त्वमस्यादिश्रुतिबाध इति समाधत्ते—अक्षेण चेदिति । ] [ अक्षेणेन्द्रियेण करणेन ] ॥ ९३ ॥

ननु भेदस्यान्योन्याभावरूपत्वादभावे च विशेषणतायाः संनिकर्षत्वादसंनिकर्षासिद्धिरिति मण्डनः शङ्कते—हि यस्मादीशादहं भिन्न इति भेदस्य जीवात्मविशेषणत्वं

---

१ क. ग. °वा । अ°। २ ख. 'णास्ये'। क. मृद्घट । ४ ग. घ. 'न्योन्यः सं°। ५ ग. 'बन्धत्वा'। ६ क. संबन्धात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतिप्रसक्तेर्न तु केवलस्य
विशेषणत्वस्य तदभ्युपेयम् ॥
भेदाश्रये हीन्द्रियसंनिकृष्टे
न संनिकृष्टत्वमिहाऽऽत्मनोऽस्ति ॥ ९५ ॥

भेदाश्रयात्मेन्द्रियसंनिकर्षो
नेत्युक्तमेतच्चतुरं न यस्मात् ॥
चित्तात्मनोर्द्रव्यतया द्वयोर-
प्यस्त्येव संयोगसमाश्रयत्वम् ॥ ९६ ॥

आत्मा विभुः स्यादथवाऽणुमात्रः
संयोगिता नोभयथाऽपि युक्ता ॥
दृष्टा हि सा सावयवस्य लोके
संयोगिता सावयवेन योगिन् ॥ ९७ ॥

---

भासतेऽस्य तस्माद्धे मनीषिन्भेदेन्द्रिययोः संयोगादिसंप्रयोगाभावेऽपि तत्संनिकर्षो विशेषणतासंनिकर्षोऽस्तु । इन्द्रवज्रा वृत्तम् ॥ ९४ ॥

परिहरति भगवान्—केवलस्य विशेषणत्वस्य विशेषणतामात्रस्य तत्संनिकर्षत्वं नैवाभ्युपेयं तत्र हेतुरतिप्रसक्तेः । भित्त्यादिव्यवहितभूतलादिनिष्ठघटाद्यभावेऽपि विशेषणतामात्रस्य सत्त्वेन प्रत्यक्षत्वप्रसङ्गात् । तस्माद्भेदाश्रये हीन्द्रियसंनिकृष्टे सति विशेषणतायाः संनिकर्षत्वमभ्युपेयम् । न च संनिकृष्टत्वमिहेन्द्रिय आत्मनोऽस्ति । वस्तुतस्त्वधिकरणेन्द्रियसंनिकर्षोऽपि न कारणम् । परमते कर्णवलयावच्छिन्ननभस एव श्रोत्रेन्द्रियत्वात्तस्यैव स्वाश्रयशब्दाभावाधिकरणत्वात्स्वेन स्वस्यासंनिकर्षादधिकरणेन्द्रियसंनिकर्षाभावेन शब्दाभावे प्रत्यक्षत्वं न स्यादिति ध्येयम् । उपजातिवृत्तम् ॥ ९५ ॥

एतदसहमानो मण्डन आह—भेदाश्रयस्याऽऽत्मन इन्द्रियेण संनिकर्षो नास्तीति त्वयोक्तमेतन्न समीचीनं यस्माच्चित्तात्मनोर्द्रव्यत्वेनोभयोरपि संयोगसमाश्रयत्वमस्त्येव । इन्द्रवज्रा वृत्तम् ॥ ९६ ॥ [ अथ मण्डनस्तु तार्किकरीत्या तत्खण्डयति—भेदेति । ] ॥ ९६ ॥

एवमाक्षिप्तो भगवान्विकल्प्याऽऽक्षेपं प्रक्षिपति—आत्मा विभुः स्यादथवाऽणुमात्रः पक्षद्वयेऽपि संयोगिता न युक्ता हि यस्मात्सावयवस्य सावयवेन सा संयोगिता लोके दृष्टा तस्मादित्यर्थः । मार्यादियोगित्वमनुभूतमपलपितुमनर्होऽसीति कटाक्षेण संबोधयति—हे योगिन्निति ॥ ९७ ॥

---

१ ग. प्रतिक्षि° । २ ख. 'योगीत्व' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोऽक्षमित्यभ्युपगम्य भेदा-
सङ्गित्वमुक्तं परमार्थतस्तु ॥
साहाय्यकृल्लोचनपूर्वकस्य
दीपादिवन्नेन्द्रियमेव चित्तम् ॥ ९८ ॥

भेदप्रमा नेन्द्रियजाऽस्तु तर्हि
साक्षिस्वरूपैव तथाऽपि योगिन् ॥
तया विरोधात्परमात्मजीवा-
भेदं कथं बोधयितुं प्रमाणम् ॥ ९९ ॥

प्रत्यक्षमात्मेश्वरयोरविद्या-
मायायुजोर्द्योतयति प्रभेदम् ॥
श्रुतिस्तयोः केवलयोरभेदं
भिन्नाश्रयत्वान्न तयोर्विरोधः ॥ १०० ॥

---

किंच मन इन्द्रियमित्यङ्गीकृत्य भेदेनास्यासङ्गित्वमुक्तं वस्तुतस्तु मनो नेन्द्रियं चक्षुरादिसहकारित्वाद्दीपवत् ।

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः'

इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावधारणादेवेत्युक्तम् । 'मनःषष्ठानीन्द्रियाणि' इति वचनं तु न मनस इन्द्रियत्वे प्रमाणम् । 'यजमानपञ्चमा इडां भक्षयन्ति' ।

'वेदानध्यापयामास महाभारतपञ्चमान्' इत्यादिवदनिन्द्रियेणापि मनसा षट्त्वसंख्यापूर्णत्वसंभवात् ।

'इन्द्रियाणां मनश्चास्मि' इति वचनमपि 'नक्षत्राणामहं शशी' इतिवन्न मनस इन्द्रियत्वे प्रमाणमिति । उपजातिवृत्तम् ॥ ९८ ॥

एवं निरुद्धो मण्डन आह—भेदप्रमेन्द्रियजा न चेत्तर्हि साक्षिस्वरूपैवास्तु तथाऽपि हे योगिंस्तया साक्षिस्वरूपया भेदप्रमया विरोधात्परमात्मजीवयोरभेदं बोधयितुं कथं प्रमाणं तत्त्वमस्यादिवाक्यमिति शेषः ॥ ९९ ॥

मण्डनोक्तमङ्गीकृत्य विषयभेदाद्विरोधं परिहरति भगवान्—साक्षिस्वरूपं प्रत्यक्षं जीवात्मपरमात्मनोरविद्यामायायुक्तयोः प्रभेदं द्योतयति । श्रुतिस्तु तद्विनिर्मुक्तयोः शुद्धयोस्तयोर्जीवेश्वरयोरभेदं द्योतयतीत्येवं श्रुतिप्रत्यक्षयोर्भिन्नाश्रयत्वान्न विरोधः ॥ १०० ॥

[ प्रभेदं द्योतयति नाहमीश्वर इत्यनुभवेन सूचयतीति संबन्धः ] ॥ १०० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्याद्वा विरोधस्तदपि प्रवृत्तं
प्रत्यक्षमग्रेऽबलमेव बाध्यम् ॥
प्राबल्यवत्या चरमप्रवृत्त्या
श्रुत्या ह्यपच्छेदनयोक्तरीत्या ॥ १०१ ॥
नन्वेवमप्यस्त्यनुमानबाधोऽ-
भेदश्रुतेः संयमिचक्रवर्तिन् ॥
घटादिवद्ब्रह्मनिरूपितेन
भेदेन युक्तोऽयमसर्वविस्वात् ॥ २ ॥

---

विरोधमङ्गीकृत्यापि परिहरति—स्याद्वा विरोधस्तदाऽप्यग्रे प्रथमं प्रवृत्तं बलहीनं भेदप्रत्यक्षमेव प्राबल्यवत्याऽभेदवादिश्रुत्या चरमप्रवृत्त्या बाध्यमपच्छेदन्यायेनोक्तया रीत्याऽपच्छेदनयेति वा। तथा च षाष्ठ पारमर्षं सूत्रम्—पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति। ज्योतिष्टोमे बहिष्पवमानार्थं हविर्धानान्निर्गच्छतामृत्विग्यजमानामध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्तेत्यादिनाऽन्वारम्भणं विहितं तद्विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते यद्युद्गाताऽपच्छिद्येतादक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्द्यात्पूर्वस्मिन्दास्यं स्याद्यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यादिति। तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासंभवात्किं पूर्वं कार्यमुत परमिति वि॰येऽनुपजातविरोधितया पूर्वमिति प्राप्ते राद्धान्तः पौर्वापर्ये सति निमित्तयोः पूर्वस्य नैमित्तिकस्य दौर्बल्यम्। उत्तरस्य पूर्वनिरपेक्षस्य तद्बाधकतयोदितत्वात्। पूर्वोदयकाल उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगात्। तदुक्तम्।

'पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्न त्वबाधेन संभवः'

तत्र दृष्टान्तः प्रकृतिवद्यथा प्रकृतौ कृतोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकारा-काङ्क्षिण्यां प्राप्ताः कल्प्योपकारचरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वत्। तथाच यथा प्रथमप्रवृत्तं दुर्बलं पूर्वनैमित्तिकमेव पश्चात्प्रवृत्तेन प्रबलेनोत्तरेण नैमित्तिकेन बाध्यं तद्वद्यथोक्तं प्रत्यक्षमेव यथोक्तश्रुत्या बाध्यम्। हिशब्दो लोकप्रसिद्धिं द्योतयति। यथा पूर्वप्रवृत्तं रजतज्ञानमेव पश्चात्प्रवृत्तेन शुक्तिज्ञानेन बाध्यमन्यथा तदनपबाधने तदपबाधनात्मकस्य तस्योत्पत्त्यनुपपत्तेस्तद्वदित्यर्थः। इन्द्रवज्रा वृत्तम् ॥ १०१ ॥

एवमुक्तो मण्डनोऽयं जीवो ब्रह्मनिरूपितभेदवानसर्वज्ञत्वाद्घटादिवदित्यनुमानेन श्रुतेर्बाधं शङ्कते। नन्वेवं प्रत्यक्षेणाभेदश्रुतेर्बाधाभावेऽपि हे संयमिचक्रवर्तिन्नित्यनेन तर्कानधिकारं द्योतयति। अनुमानेनाभेदश्रुतेर्बाधोऽस्ति तदेव दर्शयति—घटादिवदिति। उपलक्षणमेत-

---

१ क. 'स्तदप्य॰'। २ ग. 'मर्षसू॰'। ३ ग घ. विशये। ४ क पूर्वं प्र।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमेष भेदः परमार्थभूतः
प्रसाध्यते काल्पनिकोऽथवाऽऽद्ये ॥
दृष्टान्तहानिश्चरमे तु विस्न-
म्भूरीकृतोऽस्माभिरसाधनीयः ॥ ३ ॥
स्वप्रत्ययावाध्यभिदाश्रयत्वं
साध्यं घटादौ च तदस्ति योगिन् ॥
त्वयाऽऽत्मबोधेन भिदा न वाध्ये-
त्यनभ्युपेतेति न कोऽपि दोषः ॥ ४ ॥
ननु स्वशब्देन सुखादिमान्वा
विवक्षितस्तद्विधुरोऽथवाऽऽत्मा ॥
आद्येऽस्मदिष्टं न तु साध्यमन्त्ये
दृष्टान्तहानिः पुनरेव ते स्यात् ॥ १०५ ॥

---

ब्रह्मधर्मिकभेदप्रतियोगित्वस्यापि । असर्वज्ञत्वादिति पदार्थत्वादित्यस्याप्युपलक्षणं पदं ब्रह्म तदर्थत्वात्तच्छेषत्वात्तन्नियम्यत्वादिति वा । उपजातिवृत्तम् ॥ २ ॥ [ अयं नित्यापरोक्ष आत्मा ] ॥ २ ॥

मण्डनोक्तमनुमानं विकल्प्य दूषयति भगवान्भाष्यकारः—किमेष ब्रह्मनिरूपितो भेदः परमार्थभूतः प्रसाध्यतेऽथवा काल्पनिकः । आद्ये दृष्टान्तहानिर्घटादेरुक्तभेदवत्त्वतत्प्रतियोगि-त्वयोरभावात् । अन्त्ये तु स्वीकृतोऽस्माभिर्न साधनीयः । परस्परप्रतियोगिककाल्पनिकव्या-वहारिकभेदस्यास्माभिरङ्गीकृतत्वात्सिद्धसाधनमित्यर्थः । एतेन जीवस्य ब्रह्मणो भेदाभावे तन्नियम्यत्वानुपपत्तिरपि प्रत्युक्ता । नियम्यत्वादेः स्वसमानसत्ताकनियन्त्रादिभेदसापेक्षत्वा-त्तस्य च स्वीकारात् ॥ ३ ॥

एवमुक्तो मण्डन आह—ब्रह्मनिरूपितस्वज्ञानाबाध्यभेदवत्त्वं साध्यं तच्च घटादावस्ति । आत्मज्ञानेन घटादिगतभेदस्याबाध्यत्वात् । हे योगिन्नात्मज्ञानेन न बाध्या भिदा त्वयाऽन-भ्युपेताऽऽत्मज्ञानाबाध्यो भेदस्त्वया नाङ्गीकृतः स चास्माभिः साधनीय इति हेतोर्न कोऽपि दृष्टान्तहान्यादिरूपो दोषः ॥ ४ ॥ [ आत्मबोधेन ब्रह्मात्मैक्यसाक्षात्कारेणेत्यर्थः । भिदा भेदः । बाध्येति नानभ्युपगता किं त्वभ्युपगतैवेत्यर्थः । अत्रायं प्रयोगः—ब्रह्म स्वप्रमाबा-ध्यभेदवत्पदार्थत्वाद्घटवादिति । एवं च सिद्धान्तिनस्तव तु ब्रह्म स्वप्रमाबाध्यभेदवदधिष्ठान-त्वाच्छुक्त्यादिवदित्यनुमानस्य सत्प्रतिपक्षत्वमेव मयोच्यते ] ॥ ४ ॥

एतदपि विकल्प्य दूषयति भगवान्—ननु स्वशब्देन सुखादिमाञ्जीवपदवाच्यः कर्त्रादिरूप आत्मा विवक्षितोऽथवा सुखादिरहितः । आद्ये सुखदुःखादिमतः शरी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगिन्ननौपाधिकभेदवत्त्वं
विवक्षितं साध्यमिह त्वदिष्टः ॥
औपाधिकस्त्वीश्वरजीवभेदो
घटेशभेदो निरुपाधिकश्च ॥ ६ ॥
घटेशभेदेऽप्युपधिर्ह्यविद्या
तवानुमानेषु जडत्वमेव ॥
चित्त्वादभिन्नः परवत्परस्मा-
दात्मेति वाऽत्र प्रतिपक्षहेतुः ॥ ७ ॥

---

रिणः प्रत्ययेनाबाध्यस्य व्यावहारिकानिर्वचनीयभेदस्यास्मदिष्टत्वान्नैव * तत्साध्यम् । अन्त्ये दृष्टान्तहानिः पुनरेव ते स्यात् । घटादेः सुखदुःखादिविधुरात्मन्यज्ञानविलसितत्वेन तद्बोधबाध्यत्वस्वीकारात्तद्बोधाबाध्यस्य भेदस्य क्वाप्यनभ्युपगमात् । घटादावपि व्याप्त्यभावेन व्याप्यत्वासिद्धेः ॥ ५ ॥ [ सुखेति । सुखमत्रेष्टविषयसंनिकर्षजन्यं जाग्रदाद्यवच्छेदेन चित्तवृत्तिविशेषात्मकमेव । अविद्यावृत्त्यात्मकं तत्सुषुप्तावपीति बोध्यम् । तदिति । सुखादिलक्षणोक्तचित्तादिधर्मशून्यः साक्षित्वोपलक्षितः कूटस्थचिन्मात्र इति यावत् ] ॥ १०५ ॥

एवमुक्तो मण्डन आह—हे योगिन्ननौपाधिकभेदवत्त्वमिहास्मिन्ननुमाने विवक्षितम् । ननु जीवेशभेदस्य निरुपाधिकत्वेऽपि घटादिभेदवन्मिथ्यात्वोपपत्तेः सिद्धसाधनताऽत्रापि तदवस्थेत्याशङ्क्याऽऽह—त्वदिति । जीवेशभेदस्य निरुपाधिकत्वे तत्त्वज्ञानादविद्यादेर्निवृत्तावपि तत्कार्यघटादिभेदवत्ततस्तन्निवृत्तेरयोगात्तत्सत्यत्वसिद्धिभियौपाधिकस्यैश्वरजीवभेदस्य तवेष्टत्वादस्माभिश्चानौपाधिकभेदवत्त्वस्य साध्यमानत्वाच्च सिद्धसाधनं नापि दृष्टान्तहानिस्तत्र निरुपाधिकभेदस्य तवेष्टत्वादित्याह—घटेशभेद इति । आख्यानकी वृत्तम् ॥ ६ ॥ [अनौपाधिकेति । स्वप्रमाबाध्यपदेनैवानौपाधिकत्वं विवक्षितमिति यावत् । औपाधिकं हि रक्तः स्फटिक इत्यादिज्ञानं शुद्धः स्फटिक इत्यादिरूपेण रक्तिमाध्यासाधिष्ठानविषयकप्रत्यक्षेण सविषयकमपि बाधितं भवति मिथ्यात्वाच्च त्वनौपाधिकं घटपटौ भिन्नावित्यादि यथार्थत्वादित्याशयः ] ॥ ६ ॥

परिहरति भगवान्—घटेशभेदेऽप्यविद्याया उपाधित्वेनानौपाधिकस्य तस्य तत्रानङ्गीकाराद्दृष्टान्तहानिरेवेत्यर्थः । किंच तवानुमानेषु जडत्वमुपाधिरेव घटादेर्जडत्वेन दृश्यतया मिथ्यात्वात्तद्गोचरज्ञानस्य घटतद्भेदहेत्वज्ञाननिवृत्त्ययोग्यत्वात्तत्र स्वज्ञानाबाध्यभेदवत्त्वं नाद्यप्रयुक्तमिति जडत्वमुक्तसाध्यव्यापकम् । साधनवति स्वप्रकाशात्मन्यभावात्साधना-

---

* स्वज्ञानाबाध्यभेदवत्त्वम् ।

---

१ क. 'कस्येश्व' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मिप्रमाबाध्यशरीरिभेदो
ह्यसंसृतौ ब्रह्मणि साध्यमिष्टम् ॥
त्वयेष्यते ब्रह्मधियाऽऽत्मभेदो
बाध्यो घटादिप्रमया त्वबाध्यः ॥ ८ ॥
किं कृत्स्नधर्मिप्रमया न बाध्यः
किंवा स यत्किंचनधर्मिबोधात् ॥
घटादिके ब्रह्मणि चाऽऽत्मभेद-
स्यैक्यात्पुनः स्यान्ननु पूर्वदोषः ॥ ९ ॥

---

व्यापकम् । ततश्च सोपाधिकत्वादयं हेत्वाभास इत्यर्थः । ननु प्रमेयत्वातिरिक्तजडत्वाभावात्तस्य च केवलान्वयित्वात्साधनव्यापकत्वादिना नोपाधित्वमिति चेन्न । तस्यास्वप्रकाशत्वादात्मनः स्वप्रकाशत्वस्य च श्रुतिन्यायसिद्धत्वात् । यद्वा । आत्मा परप्रतियोगिकभेदशून्यश्चित्त्वात्परवदिति प्रतिपक्षः साध्याभावसाधको हेतुर्यस्य स तव हेतुः सत्प्रतिपक्ष इत्यर्थः । उपजातिवृत्तम् ॥ ७ ॥ [ व्याप्यत्वासिद्धत्वं सोपाधिकत्वेनोक्त्वा सत्प्रतिपक्षत्वमप्याह—चित्त्वादित्याद्युत्तरार्धेन ] ॥ ७ ॥

एवमुक्तो मण्डनो ब्रह्मपक्षकानुमानं प्रयुञ्जन्सिद्धसाध्यत्वादिपरिहारं शङ्कते—धर्मिप्रमाबाध्यशरीरिभेदो ब्रह्मणि साध्यमिष्टं हि यस्मात्संसृतिशून्ये ब्रह्म जीवप्रतियोगिकधर्मिप्रमाबाध्यभेदवत्संसृतिशून्यत्वाद्घटादिवदित्येवमस्मदिष्टत्वादात्मप्रतियोगिकभेदस्य च ब्रह्मज्ञानेन बाध्यत्वस्य तवेष्टत्वादस्माभिश्च तद्विपरीतस्य साध्यमानत्वान्न सिद्धसाधनं नापि दृष्टान्तहानिर्घटादिप्रमया तथाभूतभेदस्याबाध्यतायास्तवापीष्टत्वादित्याह—त्वयेति ॥ ८ ॥ [ ब्रह्मणि पक्षे । धर्मीति । धर्मी जीवस्तद्विषयिणी येयं प्रमाऽहं जीवोऽस्मीत्यादिमानसप्रत्यक्षरूपा तयाऽबाध्य एतादृशो यः शरीरिणो जीवस्य भेदो जीवप्रतियोगिकोऽन्योन्याभाव इत्यर्थः ] ॥ ८ ॥

एतद्विकल्प्य दूषयति भगवान्—किं स भेदः समस्तधर्मिप्रमया न बाध्यः किंवा यत्किंचनधर्मिबोधान्न बाध्यः । तत्र घटगतजीवभेदस्यापि स्वधर्मिब्रह्मज्ञानबाध्यत्वस्वीकारेण यावद्धर्मिज्ञानाबाध्यत्वस्यासंप्रतिपत्त्या दृष्टान्तहानेराद्यपक्षासंभवमभिप्रेत्य द्वितीये दोषमाह—पुन. पूर्वोक्तः सिद्धसाधनलक्षणो दोषः स्यात् । तत्र हेतुमाह—घटादिकइति । स्वरूपातिरिक्तभेदवादिमते घटादौ ब्रह्मणि चाऽऽत्मभेदस्यैक्यात्तद्धर्मिघटज्ञानाबाध्यजीवभेदस्य ब्रह्मण्यस्माभिरपि स्वीकृतत्वादित्यर्थः ॥ ९ ॥

---

१ क 'शस्याऽऽत्म°' । २ ग. 'शत्व°' । ३ क. 'त्वात्पदार्थत्वादिति प्रतिपक्षहेतुः नीपक्षं दर्शयति । आ°' । ४ क 'त्वाचन्न दृष्टान्तः पर°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंचागुणो वा सगुणो मनीषि-
न्विवक्ष्यते धर्मिपदेन नान्त्यः ॥
भेदस्य तद्बुद्ध्यविबाध्यतेष्टे-
र्नाऽऽद्यश्च तत्रोभयथाऽपि दोषात् ॥ ११० ॥
किं निर्विशेषं प्रमितं न वाऽन्त्ये
प्राप्ताऽऽश्रयासिद्धिरथाऽऽद्यकल्पे ॥
शरीर्यमेदेन परस्य सिद्धेः
प्राप्नोति धर्मिग्रहमानकोपः ॥ ११ ॥
मो द्वा सुपर्णा सयुजा सखाये-
त्याद्या श्रुतिर्भेदमुदीरयन्ती ॥
जीवेशयोः पिप्पलभोक्त्रभोक्त्रो-
स्तयोरभेदश्रुतिबाधिकाऽस्तु ॥ १२ ॥

---

पुनः प्रकारान्तरेण विकल्प्य दूषयति—किंचेति। हे मनीषिन्धर्मिपदेन किं वेदान्ततात्पर्यगोचरः सत्यज्ञानादिरूपो निर्गुणो विवक्ष्यते किंवा ब्रह्मेशादिपदवाच्योऽनवच्छिन्नत्वसर्वज्ञत्वादिविशिष्टः सगुणः। न द्वितीयः। भेदस्य तत्प्रमाविबाध्यताया इष्टत्वेन सिद्धसाधनत्वात्। नचाऽऽद्यपक्षः। उभयथाऽपि प्रमितत्वाप्रमितत्वलक्षणपक्षद्वयेऽपि वक्ष्यमाणविषया दोषस्य सत्त्वादित्यर्थः ॥ १० ॥

उभयथाऽपि दोषादित्युक्तं विवृणोति— किं निर्गुणं ब्रह्म प्रमितं सत्पक्षः किंवाऽप्रमितम्। द्वितीये प्राप्ताऽऽश्रयासिद्धिः। अथाऽऽद्यपक्षे ब्रह्मादिपदलक्ष्यस्याद्वयानन्दस्य प्रत्यग्बोधात्मजीवाभेदे निर्धारिततात्पर्यैस्तत्त्वमस्यादिवेदान्तैर्जीवात्माभेदेन परमात्मनः सिद्धेर्धर्मिग्राहकवेदान्तप्रमाणस्य प्रकोपः प्राप्नोति। तथाच ज्योतिष्टोमो न स्वर्गफलः क्रियात्वान्मर्दनक्रियावदित्यनुमानं 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इतिवेदबाधितविषयत्वाद्यथाऽऽभासरूपं तथेदमपीति भावः ॥ ११ ॥ [धर्मीति। धर्मिणः पक्षीकृतस्य ब्रह्मणो ग्रहः प्रमा येन निरुक्तवेदान्तमहावाक्येन तस्य कोपो व्याकोपः प्राप्नोतीति योजना। तस्य भेदभञ्जकत्वात्तद्विरुद्धभेदसाधकानुमाने तत्कोपापत्तिरित्याशयः] ॥ ११ ॥

एवं सर्वतः प्रतिरुद्धो मण्डनोऽनुमानविरोधं स्थापयितुमशक्तः श्रुतिविरोधमुद्भावयति—मो इति। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' इति श्रुतिः कर्मफलभोक्त्रभोक्त्रोर्जीवेशयोर्भेदमुदीरयन्ती तयोर्जीवेशयोरभेदश्रुतेर्बाधिकाऽस्तु ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षसिद्धे विफले परात्म-
भेदे श्रुतिर्नो नयवित्प्रमाणम् ॥
स्यादन्यथा मानमतत्परोऽपि
स्वार्थेऽर्थवादः सकलोऽपि विद्वन् ॥ १३ ॥
स्मृतिप्रसिद्धार्थविबोधि वाक्यं
यथेष्यते मूलतया प्रमाणम् ॥
प्रत्यक्षसिद्धार्थकवाक्यमेवं
स्यादेव तन्मूलतया प्रमाणम् ॥ १४ ॥

---

परिहरति भगवान्—प्रत्यक्षसिद्धे विफले स्वर्गापवर्गाख्यफलशून्ये प्रत्युत 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इतिश्रुत्युक्तानर्थप्रदे परजीवयोर्भेदे श्रुतिः प्रमाणं न स्यादत्र भेदे प्रत्यक्षप्रतिपन्नत्वमात्रमङ्गी क्रियते तत्र श्रुतिप्रामाण्यवारणाय न तु ... प्रमाणं तदसंभवस्योक्तत्वात् । सिद्धान्ते शुक्तिरूप्यवत्तस्यानुभवमात्रसिद्धत्वस्वीकारात् । अज्ञातेऽर्थे श्रुतिप्रमाणस्य न्यायेन निर्धारितवतो जैमिनेर्न्यायाभिज्ञस्य तवैवं कथनं न ... नमिति ध्वनयन्नाह—हे नयवित् । तथाच भेदस्यान्यतः सिद्धावपूर्वत्वाभावान्न ... तात्पर्यगोचरता येन वाक्येन यत्र प्रतीत्युत्पादनेन मानाभावप्रयुक्तासत्त्वशङ्का ... तस्य तत्र तात्पर्यमन्यथा तत्य तदर्थत्वायोगाद्यत्परः शब्दः स शब्दार्थ इतिन्यायात् । ... पसिद्धान्तदण्डं पातयति—अन्यथा स्वार्थेऽतत्परोऽप्यर्थवादः सकलोऽपि प्रमाणं स्यात् । एतज्ज्ञातुं योग्योऽसीति सूचयितुमाह—हे विद्वन्निति । इन्द्रवज्रा वृत्तम् ॥ १३ ॥

एवमुक्तो मण्डन आह—

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'

इत्यादिस्मृतिप्रसिद्धस्यार्थस्य विबोधकतत्त्वमस्यादिश्रुतिवाक्यं मूलतया यथा प्रमाणमिष्यते तथा प्रत्यक्षेण सिद्धोऽर्थो यस्य तथाभूतं वाक्यं प्रत्यक्षस्य मूलतया प्रमाणं स्यात् ... भेदस्य प्रत्यक्षादिप्रवृत्तेः प्रागपूर्वताया निरपेक्षश्रुतिप्रमेयत्वाच्छ्रुतेस्तत्र तात्पर्योपपत्तिरिति भावः ॥ १४ ॥ [ प्रत्यक्षेति । साक्षिप्रत्यक्षसिद्धजीवेश्वरभेदलक्षणार्थकं 'द्वा सुपर्णा' इत्यादिवाक्यम् ] ॥ १४ ॥

---

१ ख. ग 'तचत्र । २ क. 'वर्तते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिः स्मृतेऽर्थे यदि वेदविद्भि-
र्भवेन्न तन्मूलतया प्रमाणम् ॥
कथं भवेद्वेदकथानभिज्ञै-
र्ज्ञातेऽपि भेदे परजीवयोः सा ॥ ११५ ॥

जीवेश्वरौ सा वदतीत्युपेत्य
प्रावोचमेतत्परमार्थतस्तु ॥
विविच्य सत्त्वात्पुरुषं समस्त-
संसारराहित्यममुष्य वक्ति ॥ १६ ॥

यदीयमाख्यात्यथ सत्त्वजीवौ
विहाय सर्वज्ञशरीरभाजौ ॥
जडस्य भोक्तृत्वमुदाहरन्ती
प्रामाण्यमर्हन्कथमश्नुवीत ॥ १७ ॥

---

परिहरति भगवान्—यदि वेदविद्भिः स्मृतेऽर्थे श्रुतिस्तन्मूलतया प्रमाणं न भवेत्किंत्वन-धिगतगन्तृत्वेनैव वेदविद्भिः स्मर्यमाणार्थस्य तत एव ज्ञातत्वात्तर्हि वेदकथानभिज्ञैरपि पर-जीवयोर्भेदे ज्ञाते सा श्रुतिस्तन्मूलतया प्रमाणं कथं भवेन्न केनापि प्रकारेणेत्यर्थः। तथाच वेदकथानभिज्ञैर्निरपेक्षतया प्रथमप्रवृत्तैः प्रत्यक्षादिभिर्ज्ञाते भेदे श्रुतेः प्रमेयत्वाभावान्न तस्या-स्तत्र तात्पर्यमिति भावः ॥ ११९ ॥ [ वेदकथा वेदार्थीभूतं कर्म ब्रह्म च तदनभिज्ञैः पामरैर्नरैरित्यर्थः। ज्ञातेऽपि नाहमीश्वर इत्यनुभवेन प्रत्यक्षीकृतेऽपीति यावत्। सा श्रुतिः 'द्वा सुपर्णा' इत्यादिरूपा ]॥ १९ ॥

किंच सा श्रुतिर्जीवेश्वरौ वदतीत्यङ्गीकृत्यैतत्प्रावोचम्। परमार्थतस्तु कर्मफलभोक्तुः सत्त्वाद्बुद्धेः पुरुषं विविच्य सा श्रुतिरमुष्य पुरुषस्य समस्तसुखदुःखभोक्तृत्वलक्षणस्य संसारस्य राहित्यं वक्ति ॥ १६ ॥ [ सा 'द्वा सुपर्णा' इत्यादिपूर्वोक्तश्रुतिः ]॥ १६॥

उक्तश्रुत्यर्थमसहमानो मण्डन आह—यदीयं श्रुतिः परजीवौ विहायाथ सत्त्वजीवौ वक्ति तर्हि प्रत्यक्षविरुद्धं जडस्य सत्त्वस्य भोक्तृत्वमुदाहरन्ती हे अर्हन्प्रामाण्यं कथम-श्नुवीत केन प्रकारेण प्राप्नुयात्प्रत्यक्षविरुद्धार्थप्रतिपादकत्वेन 'यजमानः प्रस्तरः' इत्या-दिश्रुतिवत्स्वार्थे प्रामाण्यानुपपत्तेः ॥ १७ ॥ [ यदीयं 'द्वा सुपर्णा' इत्यादिश्रुतिः। सत्त्व-जीवावन्तःकरणकूटस्थौ ]॥ १७ ॥

---

·१ ग घ. उक्तं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चोदनीया वयमत्र विद्व-
न्यतस्त्वया पैङ्ग्यरहस्यमेव ॥
अत्तीति सत्त्वं त्वभिपश्यति ज्ञ
इति स्म सम्यग्विवृणोति मन्त्रम् ॥ १८ ॥
शारीरवाची ननु सत्त्वशब्दः
क्षेत्रज्ञशब्दः परमात्मवाची ॥
तत्राप्यतो नान्यपरत्वमस्य
वाक्यस्य पैङ्ग्योदितवर्त्मनाऽपि ॥ १९ ॥
तदेतदित्यादिगिरा हि चित्ते
प्रदर्शिता सत्त्वपदस्य वृत्तिः ॥
क्षेत्रज्ञशब्दस्य च वृत्तिरुक्ता
शारीरके द्रष्टरि तत्र विद्वन् ॥ १२० ॥

---

अस्य मन्त्रस्य पैङ्ग्यरहस्यब्राह्मणेनैवमेव व्याख्यातत्वान्मैवमिति परिहरति भगवान्— अत्रास्मिन्नर्थे त्वया वयं न शङ्कनीया यतः 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति सत्त्वम् अनश्नन्नन्यो अभिचाकशीत्यनश्नन्नन्योऽभिपश्यति ज्ञस्तावेतौ तत्त्वक्षेत्रज्ञाविति पैङ्ग्य रहस्यमेवेमं मन्त्रं विवृणोतीत्यर्थः । विद्वांस्त्वमेतज्ज्ञातुं योग्योऽसीति संबोधनाशयः ॥ १८ ॥

उक्तब्राह्मणस्यापि शारीरक्षेत्रज्ञप्रतिपादकत्वाद्द्वा सुपर्णेतिवाक्यस्य नान्यपरत्वमिति मण्डनः शङ्कते—ननु तत्र पैङ्ग्यरहस्यब्राह्मणेऽपि सत्त्वशब्दः शारीरवाची क्षेत्रज्ञ शब्दः परमात्मवाच्यतः कारणात्पैङ्ग्यरहस्योक्तमार्गेणाप्यस्य वाक्यस्य बुद्ध्यात्मप रत्वं नास्तीत्यर्थः ॥ १९ ॥ [ अस्य द्वा सुपर्णेत्यादेः । किंतु जीवेश्वरपरत्वमेवे भावः ] ॥ १९ ॥

सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात्तत्रैव व्याख्यातत्वाच्च मैवमित्युत्तरमाह भगवान्—तत्र पैङ्ग्यरहस्ये 'तदेतत्सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इति गिरा सत्त्वपदस्य वृत्तिश्चित्ते प्रदर्शिता । क्षेत्रज्ञशब्दस्य च शारीरके द्रष्टरि वृत्तिरुक्ता । हिरिति प्रसिद्ध्यर्थको निपातः ॥ १२० ॥ [ वृत्तिः शक्तिः ] ॥ २० ॥

---

१ क. 'स्य द्व' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येनेति हि स्वप्नद्रशिक्रियायाः
कर्तोच्यते तत्र स जीव एव ॥
क्षेत्रज्ञशब्दाभिहितश्च योगि-
न्स्यात्स्वप्नहक्सर्वविदीश्वरोऽपि ॥ २१ ॥

तिङ्प्रत्ययेनाभिहितोऽत्र कर्ता
ततस्तृतीया करणेऽभ्युपेया ॥
द्रष्टा च शारीरतया मनीषि-
न्विशेष्यते तेन स नेश्वरः स्यात् ॥ २२ ॥

वृत्तिः शरीरे भवतीत्यमुष्मि-
न्नर्थे हि शारीरपदस्य योगिन् ॥
तस्मिन्भवन्सर्वगतो महेशः
कथं न शारीरपदाभिधेयः ॥ २३ ॥

---

उदाहृतपैङ्ग्यरहस्यगिराऽपि जीवपरमात्मानावेव सिध्यत इति मण्डनः शङ्कते—येनेत्य-नेन हि तत्रोदाहृतगिरि स्वप्नदर्शनक्रियायाः कर्तोच्यते स कर्ता जीव एव तथा क्षेत्रज्ञश-ब्दाभिहितः स्वप्नद्रष्टेश्वरोऽपि स्याद्यतो हे योगिन्स सर्वज्ञ इत्यर्थः॥ २१ ॥ [क्षेत्रज्ञेति । क्षेत्रज्ञ इति शब्देनाभिहितः शक्तिवृत्त्या प्रतिपादित इत्यर्थः ] ॥ २१ ॥

कर्त्रर्थस्य तिङ्प्रत्ययेनाभिहितत्वाच्छारीर इति विशेषणाच्च मैवमिति भगवान्परिहरति—अत्र गिरि तिङ्प्रत्ययेन कर्तोक्तस्ततस्तस्मात्करणे तृतीया स्वीकर्तव्या । अनभिहित इत्यधि-कारात् । द्रष्टा च शारीर इति शारीरत्वेन विशेष्यते तेन हेतुना स द्रष्टेश्वरो न स्यादि-त्यर्थः । मनीषिणा त्वयैवं न वक्तव्यमिति संबोधनाशयः ॥ २२ ॥ [ करणे करणार्थे-कैव । अभ्युपेया स्वीकार्येत्यर्थः । न तु कर्तर्यनभिहित इत्यधिकारादिति यावत् । 'तंस्मात-देतत्सत्त्वं येन स्वप्नं पश्यति' इत्युदाहृतश्रुतौ जीवस्य स्वप्नावलोकनसाधनीभूतान्तःकरण एव सत्त्वशब्दस्य शक्तिः श्रुत्यैव कण्ठतः प्रकटिता न तु जीव इति स्फुटमेवेति भावः ] ॥२२॥

एवमुक्तो मण्डनः सत्त्वपदस्य जीवे वृत्तिं प्रतिपादयितुमशक्तः शारीरपदस्य परमात्मनि वृत्तिं दर्शयति—शरीरे भवतीत्यस्मिन्नर्थे हि यस्माद्धे योगिन्शारीरपदस्य [1]वृत्तिस्तस्मात्सर्वग-तत्वात्तस्मिन्शरीरे भवन्महेशः शारीरपदाभिधेयः कथं न भवेदपि तु भवेदेव ॥ २३ ॥

---

१ ख. 'ति । ति°' । २ क. 'क्तस्तस्मा°' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवञ्शरीरादितरत्र चेशः
कथं न शारीरपदाभिधेयः ॥
नभः शरीरेऽपि भवत्यथापि
न केऽपि शारीरमितीरयन्ति ॥ २४ ॥
यद्येप मन्त्रोऽनभिधाय जीव-
प्राज्ञौ वदेद्बुद्धिशरीरभाजौ ॥
अत्तीति भोक्तृत्वमचेतनाया
बुद्धेर्वदेत्तर्हि कथं प्रमाणम् ॥ २५ ॥
अदाहकस्याप्ययसः कृशानो-
राश्लेपणाद्दाहकता यथाऽऽस्ते ॥
तथैव भोक्तृत्वमचेतनाया
बुद्धेरपि स्याच्चिदनुप्रवेशात् ॥ २६ ॥
छायातपौ यद्वदतीव भिन्नौ
जीवेश्वरौ तद्वदिति ब्रुवाणा ॥
ऋतं पिबन्ताविति काठकेपु
श्रुतिस्त्वभेदश्रुतिबाधिकाऽस्तु ॥ २७ ॥

---

परिहरति भगवान्—सर्वगत्वादीशः शरीरादितरत्रापि भवञ्शारीरपदाभिधेयः कथं न दृष्टान्तो यथाऽऽकाशं व्यापकत्वाच्छरीरेऽपि भवति तथाऽपि शारीरपदाभिधेयं केऽपि न कथयन्ति तद्वदित्यर्थः। उपेन्द्रवज्रा वृत्तम् ॥ २४ ॥

एवं तर्हि मन्त्रस्य प्रामाण्यं बाध्येतेति शङ्कितं मण्डनः स्मारयति—यद्येष मन्त्रो जीवेशावनभिधाय बुद्धिजीवौ वदेद्बुद्धेश्चाचेतनाया अत्तीति भोक्तृत्वं वदेत्तर्हि प्रमाणं कथं प्रमाणं न भवेदित्यर्थः। इन्द्रवज्रा वृत्तम् ॥ २५ ॥ [ मण्डनः सप्तदशपद्ये शङ्कितमेवं स्मारयति—यद्येष इति ] ॥ २५ ॥

परिहरति भगवान्—अदाहकस्यापि लोहपिण्डस्य वह्नेस्तादात्म्याद्यथा दाहकत्वेमारो[1] तथैव चैतन्यानुप्रवेशादचेतनाया बुद्धेरपि भोक्तृत्वं स्यात्। तथाचायो दहतीतिवाक्यवदत्तीति वाक्यमपि सुखदुःखादिविक्रियावति सत्त्वे भोक्तृत्वमारोप्य प्रवृत्तं प्रमाणमेव न हीयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्तुं प्रवृत्ता किंतु चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां च वक्तुं प्रवृत्तेति भावः। उपजातिवृत्तम् ॥ २६ ॥

एवमुक्तो मण्डनः—

---

१ ख. 'त्वमस्ति त।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदं वदन्ती व्यवहारसिद्धं
न बाधतेऽभेदपरश्रुतिं सा ॥
एषा त्वपूर्वार्थतया बलिष्ठा
भेदश्रुतेः प्रत्युत बाधिका स्यात् ॥ २८ ॥
मानान्तरोपोद्बलिता हि भेद-
श्रुतिर्बलिष्ठा यमिनां वरेण्य ॥
तद्बाधितुं सा प्रभवत्यभेद-
श्रुतिं प्रमाणान्तरबाधितार्थाम् ॥ २९ ॥
प्राबल्यमापादयति श्रुतीनां
मानान्तरं नैव बुधाग्रयायिन् ॥
गतार्थतादानमुखेन तासां
दौर्बल्यसंपादकमेव किंतु ॥ १३० ॥

---

' ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः ' ॥

इति कठवल्लीस्था श्रुतिरभेदश्रुतेर्बाधिकाऽस्त्वित्याह—ऋतं कर्मफलं पिबन्तौ पानप्रयोज्यप्रयोजकाविति काठकेषु श्रुतिस्तु ' छायातपौ यद्वदतीव भिन्नौ जीवेश्वरौ तद्वत् ' इति ब्रुवाणाऽभेदश्रुतेर्बाधिकाऽस्तु । उपजातिवृत्तम् ॥ २७ ॥

इयमपि श्रुतिर्न बाधिका प्रत्युत बाध्येति परिहरति भगवान्—व्यवहारसिद्धं भेदं वदन्ती सा भेदश्रुतिस्तदसिद्धाभेदपरां श्रुतिं न बाधते प्रत्युतापूर्वोऽर्थो यस्यास्तत्तयाऽपूर्वार्थबोधकतया बलिष्ठैषाऽभेदश्रुतिर्भेदश्रुतेर्बाधिका स्यात् ॥ २८ ॥ [ अपूर्वेति । अज्ञातज्ञापकतयेति यावत् ] ॥ २८ ॥

एवमुक्तो मण्डन आह—प्रमाणान्तरेण प्रत्यक्षेणोपोद्बलितोपबृंहिता भेदश्रुतिर्हे यमिनां वरेण्य बलिष्ठा तत्तस्मात्सा भेदश्रुतिः प्रत्यक्षप्रमाणबाधितार्थामभेदश्रुतिं बाधितुं प्रभवति न त्वभेदश्रुतिर्भेदश्रुतिमित्यर्थः ॥ २९ ॥

परिहरति भगवान्—हे बुधानामग्रयायिन्प्रमाणान्तरं श्रुतीनां प्राबल्यं नाऽऽपादयति किंतु गतार्थतादानमुखेन तासां श्रुतीनां दौर्बल्यसंपादकमेव । बुधाग्रयायिनस्तवेयमुक्तिरशोभनेति संबोधनाशयः ॥ १३० ॥ [ गतार्थतेति । अनुवादकत्वसंपादनद्वारा ] ॥३०॥

---

१ क. 'ति हे' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्याद्या दृढयुक्तिरस्य शुशुभे दत्तानुमोदा गिरां
देव्या तादृशविश्वरूपरभसावष्टम्भमुष्टिंधया ॥
भर्तृन्यासविलक्ष्यसूक्तिजननीसाक्षित्वकुक्षिंभरिः
सश्लाघाद्भुतपुष्पवृष्टिलहरीसौगन्ध्यपाणिंधया ॥ ३१ ॥

उपसंहरति—इतीति । अस्य श्रीशंकरस्येत्याद्या दृढयुक्तिः शुशुभे । आद्यपदेन—

"मुक्तोऽश्नुते कामगणान्सहेशोत्येवं वदन्ती खलु तैत्तिरीया ।
श्रुतिर्विना भेदमबाध्यमर्थाद्धीना सती सत्त्वममुष्य वक्ति ॥ १ ॥
मैवं यतोऽज्ञाननिवृत्तितोऽयं सत्यामितानन्दचिदात्मभावम् ।
गतोऽश्नुते सौम्य स सर्वकामांस्तदन्तरस्थानिति सा ब्रवीति ॥ २ ॥
द्रष्टव्य आत्मेति परात्मनोर्वाक्कर्मत्वकर्तृत्वमिदं हि वक्ति ।
संदर्शनेऽतो यतिराज भेदः सत्योऽन्यथा स्याच्छ्रुतिरप्रमाणम् ॥ ३ ॥
नेयं श्रुतिस्तात्त्विकभेदगाऽस्त्यद्वैतश्रुतेर्वेदविदां वरेण्य ।
विरोधतो ब्रह्मपरत्वतोऽस्यास्तात्पर्यगत्या किल मानभावः ॥ ४ ॥
नन्वस्त्वभेदश्रुतिरेव योगिन्प्रकल्पिताभेदपरेति मैवम् ।
प्रातीतिको वा व्यवहारसिद्धो भेदो न वै भेदमितिप्रकोपात् ॥ ५ ॥
अथास्तु भेदे यतिशेखरार्थापत्तिर्न चैवं ननु सत्यभेदम् ।
विनोपपत्त्या रहितो न चार्थस्तस्मादभेदार्थश्रुतिर्बलिष्ठा ॥ ६ ॥
स्याच्चेदभेदोऽस्य परात्मना मुने तर्ह्युपलभ्येत न चोपलभ्यते ।
तस्मादसौ नास्ति ततो यते भिदा षष्ठप्रमाणस्य तु गम्यतां गता ॥ ७ ॥
यथाऽऽवृतो नैव घटः प्रदृश्यते तथाऽऽवृतोऽसावपि नैव भासते ।
अविद्यया तत्त्वविदामनावृतः प्रकाशतेऽतो न भिदाऽन्त्यमानगा" ॥ ८ ॥

इत्यादिदृढयुक्तिजातं ग्राह्यम् । तां विशिनष्टि—गिरां देव्याऽधिष्ठातृदेवतया सरस्वत्या दत्तोऽनुमोदो यस्यै तयाऽनुमोदितेति यावत् । तथा तादृशस्य विश्वरूपस्य मण्डनस्य यो रभसावष्टम्भो वेगस्य हर्षस्य वा स्तम्भस्तस्य मुष्टिंधया निष्पीड्य सा- कर्षिका तथा भर्तुर्न्यासस्य संन्यासस्य विलक्ष्येण संव्याजेन या सूक्तिस्तस्या जननी सरस्वत्येव साक्षित्वकुक्षिंभरिः साक्षित्ववती यस्यास्तथा श्लाघया सह वर्तमाना याऽ- द्भुतपुष्पवृष्टिलहरी तस्याः सौगन्ध्यस्य पाणिं धयति हस्तं पिबतीति तथा । शार्दूलवि- क्रीडितं वृत्तम् ॥ ३१ ॥ [ भर्तृन्यासेति । भर्तुर्विश्वरूपपण्डितस्य योऽयं न्यासः पूर्वो- क्तप्रतिज्ञया संन्यासस्तेन यद्विलक्ष्यं विगतं लक्ष्यं विलक्ष्यमभिमतच्यवनं तेन ...

१ ख. ग. 'लक्षस्'। २ ग सोम्य । ३ ग. 'ति वचः प°। ४ ग. 'त्मनोः क°। ५ ... मिदं हि । ६ ग. °ीड्याऽऽकृ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थं यतिक्षितिपतेरनुमोद्य युक्तिं
मालां च मण्डनगले मलिनामवेक्ष्य ॥
भिक्षार्थमुच्चलतमद्य युवामितीमा-
वाचष्ट तं पुनरुवाच यतीन्द्रमम्बा ॥ ३२ ॥

कोपातिरेकवशतः शपता पुरा मां
दुर्वाससा तदवधिर्विहितो जयस्ते ॥
साऽहं यथागतमुपैमि शमिप्रवीरे-
त्युक्त्वा ससंभ्रममसुं निजधाम यान्तीम् ॥ ३३ ॥

बबन्ध निःशङ्कमरण्यदुर्गा-
मन्त्रेण तां जेतुमना मुनीन्द्रः ॥
जयोऽपि तस्याः स्वमतैक्यसिद्ध्यै
सार्वज्ञतः स्वस्य न मानहेतोः ॥ ३४ ॥

---

सूक्तयः प्रम्लानवदनतया सरलोक्तयस्तासां जननी निर्मात्री भगवती सरस्वत्येव साक्षित्व-कुक्षिंभरिः साक्षित्वपोपिका यस्यां सा ] ॥ ३१ ॥

इत्थमेवंप्रकारेण यतिराजस्य युक्तिमनुमोद्य मालां च मण्डनगले मलिनामवेक्ष्याद्य युवां भिक्षार्थमुच्चलतमितीमौ शंकरमण्डनावाचष्टोवाचाम्बा सरस्वती तं यतीन्द्रं पुनरुवाच ॥ ३२ ॥ [ भिक्षार्थमुच्चलतम् । संन्यासकरणप्रतिज्ञापरिपालनावसराप्त्या श्रीशंकरविश्व-रूपाभ्यामुभाभ्यामपि भिक्षार्थमेव व्युत्थातव्यमित्यर्थः ] ॥ ३२ ॥

पुरा कोपातिरेकवशतो मां शपता दुर्वाससा तव जयस्तस्यावधिर्विहितस्तस्यं ज्ञातस्वा-साऽहं हे शमिप्रवीर यथागतमुपैम्यनुगच्छामीत्येवममुं ससंभ्रममुक्त्वा निजधाम यान्तीं बबन्धेत्यन्वयः । ससंभ्रमं यान्तीमिति वा ॥ ३३ ॥ [ तदवधिर्मनुष्यशरीरधारणरूपशापा-वधिरित्यर्थः । निजेति । स्वस्थानीभूतं सत्यलोकं प्रतीति यावत् ] ॥ ३३ ॥

निःशङ्कमरण्यदुर्गामन्त्रेण वनदुर्गामन्त्रेण मुनीन्द्रः श्रीशंकरो बबन्ध । किमर्थमित्यपे-क्षायामाह—तां सरस्वतीं जेतुमनाः । ननु यतीन्द्रस्य तस्य तज्जयसिद्धमानेन किमित्या-शङ्क्याऽऽह—तस्याः सरस्वत्या जयोऽपि स्वमतैक्यसिद्ध्यै न तु स्वस्य सर्वज्ञतानिमित्त-कमानपूजादिसिद्ध्यर्थम् । उपजातिवृत्तम् ॥ ३४ ॥ [ अरण्येति । एतन्नाम्ना मन्त्र-शास्त्रप्रसिद्धा नवकोटिशक्तिगणना काचिद्देवता तस्यास्तत्प्रसिद्धो यो मन्त्रस्तेनेत्यर्थः । बबन्ध रुरोध ] ॥ ३४ ॥

---

१ ख. °ण मु°। २ क. °मि ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानामि देवीं भवतीं विधातु-
र्देवस्य मायां पुरभित्सगर्भ्याम् ॥
उपात्तलक्ष्म्यादिविचित्ररूपां
गुप्त्यै प्रपञ्चस्य कृतावताराम् ॥ ३५ ॥

व्रज जननि तदा त्वं भक्तचूडामणिस्ते
निजपदमनुदास्याम्यभ्यनुज्ञां यदैतुम् ॥
इति निजवचनेऽस्मिञ्शारदासंमतेऽसौ
मुनिरथ मुदितोऽभून्माण्डनं हृद्बुभुत्सुः ॥ १२० ॥

इति श्रीमाधवीये तन्मण्डनार्यकथापरः ॥
संक्षेपशंकरजये सर्गोऽसावष्टमोऽभवत् ॥ ८ ॥

---

मन्त्रेण बद्ध्वा किमुक्तवानित्यपेक्षायां तद्वचनमुदाहरति—देवस्य विधातुर्ब्रह्मणो मायां त्रिपुरसंभेदकस्य महादेवस्य सगर्भ्यां सहोदरामुपात्तं लक्ष्म्यादीनां विचित्रं रूपं यया तथाभूतामिदानीं प्रपञ्चस्य रक्षणार्थं कृतावतारां देवीं भवतीं सरस्वतीं त्वामहं जानामि। सरस्वत्याः शिवसगर्भ्यत्वम्—

‘ नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् ।
जनयामास पुरुषं महाकाली सितां स्त्रियम् ’

इत्यादेरवगन्तव्यम् ॥ ३५ ॥ [ जानामीति । एतेन स्वस्मिन्नतिप्रौढत्वं द्योत्यते ]

तस्माद्धे जननि ते भक्तचूडामणिरहं यदा निजस्थानमेतुं गन्तुमभ्यनुज्ञामभिदास्यामि तदा त्वं निजपदं व्रजेत्येवंभूते निजवचने शारदया सरस्वत्या संमते सति माण्डनं हृन्मण्डनस्याभिप्रायं ज्ञातुमिच्छुरसौ मुनिः श्रीशंकरो मुदितोऽभूत् । मालिनी वृत्तम् ॥ ३६ ॥ [ अत्र भक्तपदेन ‘ यो मद्भक्तः स मे प्रियः ’ इति

‘ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ’

इति च स्मृतेर्जीवन्मुक्तचक्रवर्तित्वं व्यज्यते ] ॥ ३६ ॥

[ उपसंहरति—इतीति । तदिति । तेन सह यो मण्डनार्यस्य मण्डनामिश्रस्य कथाव्यवहारस्तत्पर इत्यर्थः ] ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपूज्यपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजयडिण्डिमेऽष्टमः सर्गः ॥ ८ ॥

---

१ क. ‘मि । ३५ ॥ [ जानामि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ नवमः सर्गः।

अथ संयमिक्षितिपतेर्वचनै-
र्निगमार्थनिर्णयकरैः सनयैः ॥
शमिताग्रहोऽपि पुनरव्ययवद्-
त्कृतसंशयः सपदि कर्मजडः ॥ १ ॥
यतिराज संप्रति ममाभिनवा-
न्न विषादितोऽस्म्यपजयादपि तु ॥
अपि जैमिनीयवचनान्यहहो-
न्माथितानि हीति भृशमस्मि कृशः ॥ २ ॥
स हि वेत्त्यनागतमतीतमपि
प्रियकृत्समस्तजगतोऽधिकृतः ॥
निगमप्रवर्तनविधौ स कथं
तपसां निधिर्वितथसूत्रपदः ॥ ३ ॥
इति संदिहानमवदत्तमसौ
न हि जैमिनावपनयोऽस्ति मनाक् ॥
प्रमिमीमहे न वयमेव मुने-
र्हृदयं यथावदनभिज्ञतया ॥ ४ ॥

---

एवं मण्डनाचार्यसंवादं सपरिकरं निरूप्य सार्वज्ञ्योपायं सप्रपञ्चं निरूपयितुमुपक्रमते—अथाऽऽचार्ययुक्तीनां सरस्वतीकृतानुमोदनस्य स्वगलस्थमालाया मलिनीभावस्य चानन्तरं संयमिराजस्य श्रीशंकरस्य वेदार्थनिर्णयकरैः पुनश्च न्यायसहितैर्वचनैः शमित आग्रहो यस्य स तथाभूतोऽपि सपदि तत्क्षणे कृतसंशयः पुनरवोचद्यतः कर्मजडः। प्रमिताक्षरा वृत्तम्। 'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ १ ॥ [संयमीति। एतेन वक्ष्यमाणपरकायप्रवेशादि योगैश्वर्यमूलीभूतं योगीन्द्रत्वं ध्वन्यते ] ॥ १ ॥

यदुवाच तदाहं—अपि हे यतिराज संप्रति ममाभिनवादपजयाद्विषादं न प्राप्तोऽस्म्यपि तु जैमिनीयवचनानि। अहहेति निपातावाश्चर्यातिशयार्थावत्यन्तखेदार्थौ वा। उन्माथितानीतिकारणादत्यन्तं कृशोऽस्मि ॥ २ ॥

हि यस्मात्स जैमिनिर्भविष्यं भूतं च जानाति पुनश्च जगतः प्रियकरणोर्थवेदस्य वेदार्थस्य वा प्रवर्तनविधावधिकृतस्तथा चैवंभूतस्तपसां निधिः स कथं वितथसूत्रपदो वितथानि व्यर्थानि सूत्रपदानि यस्य वितथसूत्रेषु व्यवसायो वा यस्य तथाभूतः कथं भवेदित्यर्थः ॥ ३ ॥

इत्येवं संदेहं प्राप्तवन्तं तं मण्डनमसौ श्रीशंकरोऽवोचत्—जैमिनौ मनागीपदप्यप-

---

१ ग. °चत यतः। २ क. °ह। हे। ३ घ. °णार्थे वे°। ४ ग. °न्तं म°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि विद्यते कविजनाविदितं
हृदयं मुनेस्तदिह वर्णय भोः॥
यदि युक्तमत्र भवता कथितं
हृदि कुर्महे दलदहंकृतयः॥ ५॥

अभिसंधिमानपि परे विषय-
प्रसरन्मतीननुजिघृक्षुरसौ॥
तदवाप्तिसाधनतया सकलं
सुकृतं न्यरूपयदिति स्म परम्॥ ६॥

वचनं तमेतमिति धर्मचयं
विदधाति बोधजनिहेतुतया॥
तदपेक्षयैव स च मोक्षपरो
निरधारयन्न परथेति वयम्॥ ७॥

---

नयोऽन्यायो न हि। किं तु वयमेवानभिज्ञतया मुनेरभिप्रायं यथावन्न प्रमिमीमहे ...
न शक्नुमः॥ ४॥ अत्र वयमेवेति स्वस्य तत्तात्पर्याभिज्ञत्वेऽप्यमानित्वावद्योतनार्थं ...
नभिज्ञैर्भवादृशैरेव तद्रहस्यं न ज्ञायत इति ध्वन्यते]॥ ४॥

एवं श्रुत्वाऽत्युत्सुको मण्डन आह—यदि कविजनैरप्यविदितं मुनेर्हृदयमभि...
विद्यते तत्तर्हीहास्मदग्रे वर्णय। ननु मुन्यभिप्रायवित्त्वाभिमानवतां भवद्भिर्यानामग्रे ...
र्णनं निष्फलमित्याशङ्कयाऽऽह—यदि भवताऽत्रास्मिन्हृदयवर्णने प्रसक्ते युक्तं ...
तर्हि दलिताहंकृतयः सन्तो वयं तद्धृदि कुर्महे॥ ५॥ [कवीति। पण्डित...
तमित्यर्थः। दलदहंकृतयो निरभिमानाः]॥ ५॥

एवं प्रार्थितः स श्रीशंकरो जैमिन्यभिप्रायमाविष्करोति—परे ब्रह्मण्यभिप्राय...
विषयेषु प्रवाहीकृतबुद्धींस्तत्रानधिकारमालोच्य तत्राधिकारायताननुग्रहीतुमिच्छुरसौ ...
परब्रह्मप्राप्तिसाधनतया परं केवलं सुकृतं पुण्यं कर्मातिशयेन निरूपितवान्न तु ...
त्यर्थः॥ ६॥ [सकलं यावत्सहस्राधिकरणविचार्यमित्यर्थः]॥ ६॥

नन्विदं भवद्भिः कथं ज्ञातमिति चेच्छ्रुत्यर्थनिर्णायकस्य श्रुत्यननुरूपाभिप्राय...
वनिश्चयादित्याशयेनाऽऽह—वचनमिति। 'तमेतं वेदानुवचनेन ब्राह्मणा वि...
षन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वचनं परब्रह्मावगतिजन्महेतुतया ...
दिधर्मसमुदायं विदधाति यद्यपि प्रत्ययार्थप्रधानतापक्षे सन्नर्थेच्छाजनिहेतुतया ...
धायकं तथाऽप्यश्वेन जिगमिषतीतिवत्प्रकृत्यर्थप्रधानताश्रयेणैवमुक्तम्। तदपे...

---

१ घ. 'कारिणोऽनु'। २ ख. ग. 'ब्र°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतयः क्रियार्थकतया सफला
अतदर्थकानि तु वचांसि वृथा ॥
इति सूत्रयन्ननु कथं मुनिराड-
पि सिद्धवस्तुपरतां मनुते॥ ८ ॥
श्रुतिराशिरद्वयपरोऽपि पर-
म्परयाऽऽत्मबोधफलकर्मणि च ॥
प्रसरत्कटाक्ष इति कार्यपर-
त्वमसूचि तत्प्रकरणस्थगिराम् ॥ ९ ॥
ननु सच्चिदात्मपरताऽभिमता
यदि कृत्स्नवेदनिचयस्य मुनेः ॥
फलदातृतामपुरुषस्य वद-
न्स कथं निराह परमेशमपि ॥ १० ॥

---

पेव स च मोक्षपरो जैमिनिर्धर्मनिचयं निरधारयन्नान्यथेति वयं मन्मह इत्यध्याहारः ॥ ७ ॥ [ धर्मेति । पुण्यगणं विदधास्यनुष्ठेयत्वेनोपदिशतीत्यन्वयः । तदपेक्षयैव चित्तशुद्धिद्वारा निरुक्तसाक्षात्कारोदयेच्छयैवेत्यर्थः ] ॥ ७ ॥

ननु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति सूत्रयन्वेदस्य सिद्धवस्तुपरतां कथं मनुत इति मण्डनः शङ्कते—श्रुतयः क्रियार्थकतया सफला अक्रियार्थकानि तु वचांसि वृथाऽनर्थकानीति सूत्रयन्मुनिराड्वेदवचसां सिद्धवस्तुपरतां ननु कथं मनुत इत्यर्थः ॥ ८ ॥ [ मुनिराडपि मननशीलशिरोमणिरपीत्यर्थः ॥ ८ ॥

उक्तसूत्रस्य कर्मकाण्डाभिप्रायत्वान्नैवमिति परिहरति भगवान्—श्रुतिराशिः परम्परयाऽद्वितीयब्रह्मपरोऽप्यात्मबोधः फलं यस्य तस्मिन्कर्मणि प्रसरत्कटाक्षः प्रवाहीकृतदृष्टिरित्यतः कर्मप्रकरणस्थगिरां कार्यपरत्वमसूचि सूत्रितवान् ॥ ९ ॥ [ परम्परया तद्बोधोदयसाधनीभूतचित्तशुद्ध्यादिजनकक्रमसरण्येत्यर्थः ] ॥ ९ ॥

नन्वेवं तर्हि फलदातृत्वं कर्मणः स्वीकृत्य परेशं किमर्थं निराहेति मण्डनः शङ्कते—ननु कृत्स्नवेदकदम्बस्य सच्चिदात्मपरता यदि मुनेरभिमता तर्हि पुरुषात्परमात्मनो भिन्नस्य कर्मणः फलदातृत्वं वदन्सन्मुनिः परमेश्वरमपि कथं निराकृतवानित्यर्थः ॥ १० ॥ [ मुनेर्जैमिनेः ] ॥ १० ॥

---

१ ग. 'धा त्यर्थ' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु कर्तृपूर्वकमिदं जगदि-
त्यनुमानमागमवचांसि विना ॥
परमेश्वरं प्रथयति श्रुतय-
स्त्वनुवादमात्रमिति काणभुजाः ॥ ११ ॥
न कथंचिदौपनिषदं पुरुषं
मनुते बृहन्तमिति वेदवचः ॥
कथयत्यवेदविदगोचरतां
गमयेत्कथं तमनुमानमिदम् ॥ १२ ॥
इति भावमात्मनि निधाय मुनिः
स निराकरोच्छिशितयुक्तिशतैः ॥
अनुमानमीश्वरपरं जगतः
प्रभवं लयं फलमपीश्वरतः ॥ १३ ॥
तदिहास्मदुक्तविधया निपदा
न विरुद्धमण्वपि मुनेर्वचसि ॥
इति गूढभावमनवेक्ष्य बुधा-
स्तमनीशवाद्ययमिति ब्रुवते ॥ १४ ॥

---

अनुमानगम्यं तं निराकृतवान्न तु वेदनिचयगम्यमिति समाधत्ते भगवान्—नन्विति। इदं जगत्कर्तृपूर्वकं कार्यत्वाद्घटादिवदित्यनुमानं वेदवचांसि विना परमेश्वरं साधयति श्रुतयस्त्वनुमानसिद्धार्थस्यानुवादमात्रमिति काणभुजाः काणादाः ॥ ११ ॥

औपनिषदमुपनिषदेकगम्यं बृहन्तं पुरुषमवेदवित्कथंचिदपि न मनुते न विजानातीति वेदवचः परमात्मनोऽवेदविदगोचरतां कथयति । तथाच श्रुतिः 'तं त्वौपनिषदं पुरुषं पृच्छामि । नावेदविन्मनुते तं बृहन्तम्' इति । तस्मादिदं काणादोक्तमनुमानं तं कथं गमयेदिति भावमिति परेणान्वयः ॥ १२ ॥ [ अवेदविदिति । वेदहृदयानभिज्ञाविषयत्वमिति यावत् ] ॥ १२ ॥

इत्युक्तं भावमात्मनि बुद्धौ निधाय स मुनिस्तीक्ष्णयुक्तिशतैरीश्वरपरमनुमानं निराकरोत्। तथेश्वराज्जगतः प्रभवं लयं फलं च निराकरोत् ॥ १३ ॥ [ जगतः प्रभवम् । उपलक्षणमिदं स्थित्यादेरपि ] [ फलमपि यावज्जीवानां सुखदुःखसाक्षात्काररलक्षणं कर्मफलमपीत्यर्थः ] [ यद्वा प्रभवलयशब्दौ जन्मप्रलयपरावेव । फलमित्यादि स्थितिपरम् ] ॥ १३ ॥

तत्तस्मादिहास्मिन्मुनेर्वचस्यस्मदुक्तविधया निपदा रहस्येनाण्वपि विरुद्धं न भवति । तथाचोक्तं गूढभावमनवेक्ष्य बुधास्तं जैमिनिमनीश्वरवाद्ययमिति कथयन्ति ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमु तावतैव स निरीश्वरवा-
द्यभवत्परात्मविदुषां प्रवरः ॥
न निशाटनाहिततमः क्वचिद-
प्यहनि प्रभां मलिनयेत्तरणेः ॥ १५ ॥

इति जैमिनीयवचसां हृदयं
कथितं निशम्य यतिकेसरिणा ॥
मनसा ननन्द कविराण्नितरां
स सशारदाश्च सदसस्पतयः ॥ १६ ॥

विदिताशयोऽपि परिवर्तिमना-
ग्विशयः स जैमिनिमवाप हृदा ॥
अवगन्तुमस्य वचसाऽपि पुनः
स च संस्मृतः सविधमाप कवेः ॥ १७ ॥

---

[अस्मदिति। निरुक्तरीतिकास्मदुक्तप्रकारेणेत्यर्थः। निपदा रहस्येनेति डिण्डिमकृत्। एवं च तन्मतेऽस्मदित्यादिविशेषणं निपदेति विशेष्यमिति समानाधिकरणे एव तृतीये। वस्तुतस्तु निषदोपनिषदा सह] [बुधाः साधारणपण्डिताः] ॥ १४ ॥

परमेश्वरपरानुमानखण्डनमात्रेण तस्यानीश्वरवादित्वं न संभवतीत्याह—किमु तावतैव स परात्मविदुषां प्रवरो निरीश्वरवाद्यभवन्निशाटनैर्मेचकादिभिराहितं स्थापितं तमो दिवसे तरणेः सूर्यस्य प्रभां क्वचिदपि न मलिनयेन्नैव मलिनां कुर्यात् ॥ १५ ॥ [परेति। परमात्मनिष्ठानां मध्य इत्यर्थः] [नेति। निशाटना उलूकादयो हि नक्तंचरत्वेन सुप्रसिद्धा एव। तैराहितं कल्पितम्] ॥ १५ ॥

इत्येवंप्रकारेण यतिसिंहेन कथितं जैमिनीयवचनानां हृदयं निशम्य स कविराण्मण्डनो मनसाऽत्यन्तं ननन्द शारदया सह वर्तमानाश्च सभानायकास्तथैव ननन्दुः ॥ १६ ॥ [हृदयं तात्पर्यम्] [अत्र मनसेति पदेन वास्तविकार्थकथनशालित्वमाचार्ये सूच्यते] ॥ १६ ॥

यतिराजोक्त्या विदिताभिप्रायोऽपि स मण्डनः परिवर्ती वर्तमानो मनागपि द्विशयः संशयो यस्य सोऽस्य जैमिनेर्वचसाऽपि च तमभिप्रायमवगन्तुं मनसा जैमिनिं प्राप तस्य ध्यानं कृतवान्स च जैमिनिः कवेर्मण्डनस्य समीपमवाप ॥ १७ ॥

---

१ क. सह शा°। २ ख. 'वर्त°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवदच्च शृण्विति स भाष्यकृतिं
प्रजहा[1]हि संशयमिमं सुमते ॥
यदवोचदेष मम सूत्रतते-
र्हृदयं तदेव मम नापरथा ॥ १८ ॥
न ममैव वेद हृदयं यमिरा-
ऽपि तु श्रुतेः सकलशास्त्रततेः ॥
यदभूद्भविष्यति भवत्तदपि[2]
ह्ययमेव वेद न तथा त्वितरः ॥ १९ ॥
गुरुणा चिदेकरसतत्परता
निरणायि हि श्रुतिशिरोवचसाम् ॥
कथमेकसूत्रमपि तद्विमतं
कथयाम्यहं तदुपसादितधीः ॥ २० ॥
अलमाकलय्य विशयं सुयशः
शृणु मे रहस्यमिममेव परम् ॥
त्वम[3]वेहि संसृतिनिमग्नजनो-
त्तरणे गृहीतवपुषं पुरुषम् ॥ २१ ॥

स जैमिनिः शृण्वित्यवदच्च हे सुमते भाष्यकारे श्रीशंकरे । एतेनोक्त एव मुनेराशय उतान्य इतीमं संशयं परित्यज । यतो मम सूत्रततेर्यद्धृदयमेषोऽवोचत्तदेव मम हृदयं नान्यथा ॥ १८ ॥

किंच न केवलं ममैव हृदयं यमिराड्जानात्यपि तु श्रुतेः सर्वशास्त्रततेश्च हृदयं वे[द] यच्च भूतं भविष्यं वर्तमानं तदप्ययमेव वेदेतरस्तु न तथा वेद ॥ १९ ॥

तथाचैतदुक्त एव ममाऽऽशयो व्यासशिष्यस्य मम तद्विरुद्धकथनासंभवादित्याह—गुरुणा श्रीवेदव्यासेन वेदान्तवचसां चिदेकरसतत्परता निरणायि तद्विरुद्धमेकसूत्रमप्यहं कथं कथयामि यतस्तस्मात्परिप्राप्तबुद्धिः ॥ २० ॥ [ चिदेकेति । अद्वैतवस्तु-मात्रपर्यवसायितेति यावत् ] ॥ २० ॥

तस्माद्धे सुयशः संशयमलमाकलय्यालं कृत्वा विमुच्य मम वचनाद्रहस्यं शृणु । संसृतिसागरनिमग्नजनोत्तरणार्थं गृहीतविग्रहं परं पुरुषं परमात्मानं शिवमेवेमं त्वं जानीहि । यद्वेममेव परं पुरुषमेवेहि । ननु निर्विग्रहस्य तस्य कथं तद्वत्त्वेत्याशङ्क्याऽऽह— संसृतीति ॥ २१ ॥

१ ग. 'जहीहि । २ ग. 'पि त्वय' । ३ क. ख. घ. 'मैवेहि । ४ क 'क्षरे । इवे'
५ क ख. घ. 'मेवेहि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आद्ये सत्त्वमुनिः सतां वितरति ज्ञानं द्वितीये युगे
दत्तो द्वापरनामके तु सुमतिर्व्यासः कलौ शंकरः॥
इत्येवं स्फुटमीरितोऽस्य महिमा शैवे पुराणे यत-
स्तस्य त्वं सुमते मते त्ववतरेः संसारवार्धिं तरेः॥ ५२॥

इतिबोधितद्विजवरोऽन्तरधा-
न्मनसोपगुह्य यमिनामृषमम्॥
स च यायजूकपरिषत्प्रमुखः
प्रणिपत्य शंकरमवोचदिदम्॥ २३॥

विदितोऽस्ति संप्रति भवाञ्जगतः
प्रकृतिर्निरस्तसमतातिशयः॥
अवबोधमात्रवपुरप्यबुधो-
द्धरणाय केवलमुपात्ततनुः॥ २४॥

---

ननु कुत एतज्ज्ञातमिति चेत्तत्राऽऽह—यत आद्ये कृतयुगे सत्त्वमुनिः कपिलाचार्यः सतां ज्ञानं प्रयच्छति द्वितीये त्रेतासंज्ञके युगे दत्तो द्वापरनामके तु सुमतिर्व्यासः कलौ शंकर इत्येवमस्य महिमा शैवे पुराणे स्फुटं यथा स्यात्तथा यतः कथितस्तस्मात्तस्य मते हे सुमते त्वमवतरेः प्रविष्टो भव। ततः किमिति तत्राऽऽह—संसारसमुद्रं तेरुत्तीर्णो भव। शार्दूलविक्रीडितं वृत्तम्॥ २२॥ [ सत्त्वेति। सत्त्वं सत्त्वगुणं मनुते ज्ञानसाधनत्वेन 'सत्त्वात्संजायते ज्ञानम्' इति भगवद्गीतायामभिहितत्वादङ्गी-करोतीति तथा। यद्वा। सतः 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतेः परब्रह्मणो भावः सत्त्वं तन्मनुते सर्वदा मननविषयी करोतीति तथा सत्त्वमुनिः कपिलाचार्य इति डिण्डि-मोक्तेः कपिल इत्यर्थः ]॥ २२॥

ततः किं वृत्तमित्यपेक्षायामाह—इत्येवं बोधितो द्विजवरो मण्डनो येन स जैमिनिर्य-मिनामृषभं मनसाऽऽलिङ्ग्यान्तर्धानमगात्। स च यायजूकानामिज्याशीलानां सदसि प्रमुखः श्रेष्ठो मण्डनः शंकरं प्रणिपत्येदं वक्ष्यमाणमवोचत्। प्रमिताक्षरा वृत्तम्॥ २३॥

संप्रति भवान्विदितोऽस्ति। कोऽसावहमिति तत्राऽऽह—जगतः प्रकृतिः कारणमत एव निरस्तसमतातिशयो जगत्कारणस्यैकत्वादन्यथैकस्य सिसृक्षायामपरस्य जिहीर्षाऽपरस्य निर्जिहीर्षायामन्यस्य सिसृक्षेत्यनवस्थित्यापातात्। ननु सांख्याद्यभिमतं प्रधानादिरूपं मां जानासीति चेत्तत्राऽऽह—अवबोधमात्रवपुः। ननु विग्रहवन्तं मां कथमेवं जानासीति चेत्तत्राऽऽह—एवंभूतोऽप्यस्मदाद्यज्ञजनोद्धरणाय केवलं गृहीतविग्रहो न तु वस्तुतस्तद्वा-नित्यर्थः॥ २४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदेकमुदितं पदं यतिवर त्रयीमस्तकै-
स्तदस्य परिपालकस्त्वमसि तत्त्वमस्यायुधः ॥
परं गलितसौगतप्रलपितान्धकूपान्तरे
पतत्कथमिवान्यथा प्रलयमद्य नाऽऽपत्स्यते ॥ २५ ॥
प्रबुद्धोऽहं स्वप्नादिति कृतमतिः स्वप्नमपरं
यथा मूढः स्वप्ने कलयति तथा मोहवशगाः ॥
विमुक्तिं मन्यन्ते कतिचिदिह लोकान्तरगतिं
हसन्त्येतान्दासास्तव गलितमायाः परगुरोः ॥ २६ ॥
मुहुर्धिग्धिग्भेदिप्रलपितविमुक्तिं यदुदयेऽप्य-
सारः संसारो विरमति न कर्तृत्वमुखरः ॥
भृशं विद्वन्मोदे स्थिरतमविमुक्तिं त्वदुदितां
भवातीता येयं निरवधिचिदानन्दलहरी ॥ २७ ॥

---

अबुधोद्धारश्च त्वया संपादित एव वेदान्तवेद्यस्थापनादित्याशयेनाऽऽह—'आत्मा वा इदमेक एवाग्र आसीत्'। 'ब्रह्म वा इदमग्र आसीदेकमेव'। 'सदेव सोम्येदमग्र आसीत्'। 'एकमेवाद्वितीयम्' इत्यादिभिर्ऋग्यजुःसामाख्यवेदत्रयीमस्तकैर्यदेकं पदं कथितं तस्यास्य पदस्य तत्त्वमस्यायुधस्त्वं परं केवलं परिपालकोऽस्यन्यथा गलिताः भ्रष्टा ये सौगतास्तैः प्रलपितलक्षणस्यान्धकूपस्यान्तरेऽद्य पतत्तत्पदं कथमिव प्रलयं नाऽऽपत्स्यतेऽपि त्वापत्स्यत एव। पृथ्वी वृत्तम् ॥ २५ ॥ [ यदेकमद्वितीयम्। पदं ... इति तथा निखिलमुमुक्षुप्राप्यं ब्रह्मेत्यर्थः ] ॥ २५ ॥

किंच यथा कश्चन मूढः स्वप्ने श्रमं प्राप्य सुप्त्वा प्रबुद्धः प्रबोधरूपमपरं स्वप्नं स्वप्नात्प्रबुद्ध इति कृतबुद्धिः कलयति मन्यते तथेह लोके केचिदविवेकवशवर्तिनो ... पामेव लोकान्तरगतिं विमुक्तिं मन्यन्ते तव परगुरोर्दासास्तु विगलितमाया एतान्हसन्ति। शिखरिणी वृत्तम् ॥ २६ ॥ [ कतिचिद्वैष्णवंमन्यप्रमुखा लोकान्तरगतिं वैकुण्ठादिलोका-न्तरगमनरूपाम् ] ॥ २६ ॥

तस्माद्भेदवादिप्रलपितविमुक्तिं मुहुर्धिग्धिग्यतो यस्या उदयेऽपि कर्तृत्वप्रमुखोऽसारः संसारो न शाम्यति त्वदुक्तां स्थिरतमां विमुक्तिं मोदेऽनुमोदे यतः सर्वानर्थनिवृत्ति-पूर्वकपरमानन्दप्राप्तिरूपेत्याह—सेयं त्वदुक्ता स्वस्वरूपरूपा। एवंभूताया अपि ... वत्त्वेऽनुपादेयत्वं स्यादित्यतः स्थिरतमेत्युक्तम् ॥ २७ ॥ [ कर्तृत्वेति। ...

---

१ क. ख. 'व सोम्ये°'। २ ख. घ. 'पि तु प्राऽऽ°'। ३ ग. सुप्त्वा प्रबु°'। ४ ग. कल्पयति। ५ क. स्वरू°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविद्याराक्षस्या गिलितमखिलेशं परगुरो
पिचण्डं भित्त्वाऽस्या सरभसममुष्मादुदहरः ॥
वृतां पश्यन्रक्षोयुवतिभिरमुष्य प्रियतमां
हनूमाँल्लोकेड्यस्तव तु कियती स्यान्महितता ॥ २८ ॥

जगदार्तिहन्ननवगम्य पुरा
महिमानमीदृशमचिन्त्यमहम् ॥
तव यत्पुरोऽब्रुवमसांप्रतम-
प्यखिलं क्षमस्व करुणाजलधे ॥ २९ ॥

कपिलाक्षपादकणभुक्प्रमुखा
अपि मोहमीयुरमितप्रतिमाः ॥
श्रुतिभावनिर्णयविधावितरः
प्रभवेत्कथं परशिवांशभृते ॥ ३० ॥

समेतैरेतैः किं कपिलकणभुग्गौतमवच-
स्तमस्तोमैश्वेतोमलिनिमसमारम्भणचणैः ॥
सुधाधारोद्गारप्रचुरभगवत्पादवदन-
प्ररोहद्व्याहारामृतकिरणपुञ्जे विजयिनि ॥ ३१ ॥

---

[ईशे प्रथमं यस्यैतादृशो रः 'रः पावके च तीक्ष्णे च' इति विश्वादग्निः कर्तृत्वभोक्तृत्वादि-
प्रस्नानलो यस्मिन्स तथेत्यर्थः ] ॥ २७ ॥

किंचाविद्यालक्षणया राक्षस्या गिलितमखिलेशं हे परगुरोऽस्याः पिचण्डमुदरं भित्त्वा
सरभसं यथा स्यात्तथाऽमुष्मादुदरात्सकाशादुदहर आहृतवानसि तथाच रक्षसां युवतिभि-
र्वृतां न तु गिलितां तत्राप्यमुष्याखिलेशस्य रामचन्द्रस्य प्रियतमां सीतां न तु तं तत्रापि
पश्यन्न तु रक्षोयुवतिनाशेनाऽऽहरद्धनूमाँल्लोकेड्य एवंभूतस्य तव तु महत्ता कियती स्यात्तथा
त्वस्याः परिमाणं नास्तीत्यर्थः ॥ २८ ॥

एवं स्तुत्या संमुखीकृत्य क्षमापयति। हे जगदार्तिहन्नीदृशमचिन्त्यं तव महिमानं
पूर्वमबुद्ध्वा यदहमन्यार्थ्यं तवाग्रेऽब्रुवं तत्सर्वं क्षमस्व यतो हे करुणासमुद्र। प्रमिताक्षरा
वृत्तम् ॥ २९ ॥

एवं क्षमाप्य पुनः स्तौति—अपरिमितप्रतिभाः कपिलगौतमकणादप्रभृतयोऽपि श्रुति-
भावनिर्णयविधौ मोहं प्रापुस्तत्र परशिवांशं त्वां विनाऽन्यः कथं प्रभवेत् ॥ ३० ॥

तथाचेदानीं तेषां वचस्तमःपुञ्जा अकिंचित्करा एवेत्याह—समेतैरिति। सुधाधा-

---

१ क. ग. 'म्। यदहं पुरःऽब्रु'। २ ग. महितता। ३ क ग. 'त्यं म'। ४ क ग. 'ध्यं
ह्यऽब्रु'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिन्दानैर्देवमेतैरभिनवयवनैः सद्भवीमञ्जनोत्कै-
र्व्याप्ता सर्वेयमुर्वी क्व जगति भजतां कैव मुक्तिप्रसक्तिः ॥
यद्वा सद्वादिराजा विजितकलिमला विष्णुतत्त्वानुरक्ता
उज्जृम्भन्ते समन्ताद्दिशि दिशि कृतिनः किं तया चिन्तया मे ॥

कथमल्पबुद्धिविवृतिप्रचय-
प्रबलोरगक्षतिहताः श्रुतयः ॥
न यदि त्वदुक्त्यमृतसेकधृता
विहरेयुरात्मविधृतानुशयाः ॥ ३३ ॥

---

रोद्गारप्रचुराद्भगवत्पादमुखलक्षणाच्चन्द्रात्प्ररोहन्तो व्याहारलक्षणा अमृतकिरणास्तेषां [illegible]
विजयिनि सति मनसो मलिनिम्नो मालिन्यस्य समारम्भणेन चणैर्वित्तैः प्रतीतैरेतैः [illegible]
दिवचस्तमस्तोमैर्मिलितैरपि किं स्वकार्यकरणाय स्थातुमप्यशक्तत्वात् । शिख[illegible]
वृत्तम् ॥ ३१ ॥

दुर्वादिभिर्व्याप्तामुर्वीमालोच्योद्भूतां चिन्तां दर्शयति—देवं परमात्मलक्षणं दे[illegible]
भिन्दानैस्तद्भेदनपरैर्मोहमदेन मत्तैरेतैरुपलभ्यमानैर्वादिलक्षणाभिनवयवनैः श्रुतिलक्षणसद्भ[illegible]
नोत्सुकैः सर्वेयं भूमिर्व्याप्ता ततश्च जगत्येवंविधान्सेवतां कस्मिन्देशे कस्मिन्काले वा [illegible]
प्रसक्तिः कैव क्वापि काऽपि नास्ति । पुनराचार्यशिष्यानालोच्याऽऽह—यद्वा [illegible]
भवान्राजा येषां ते विजितकलिमला विष्णुतत्त्वानुरक्ता वशीकृतचित्ता भवच्छिष्या [illegible]
दिशि समन्ताद्विजृम्भन्तेऽतस्तया चिन्तया मम किं न किमपीत्यर्थः । स्रग्धरा वृत्तम् ॥ [illegible]
[ देवं दीव्यतीति व्युत्पत्त्या 'एको देवः सर्वभूतेषु गूढः' इति श्रुत्या चाद्वैतात्मा[illegible]
हरिहरादितत्प्रतिमाविशेषमित्यर्थः । भिन्दानैः खण्डयद्भिः । वादैः पक्ष आयुर्वैरि[illegible]
कम् ] [ सदिति । कालत्रयाबाध्यं 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' [illegible]
दिश्रुतिप्रसिद्धमद्वैतं ब्रह्मात्मतत्त्वमेव वदतीति तथैतादृशो योऽयं भगवान्भाष्यकारः स [illegible]
येषां ते तथेति यावत् । एतेनाऽऽश्रयदार्ढ्यं ध्वन्यते ] ॥ ३२ ॥

किंचाल्पबुद्धीनां या विवृतयो व्याख्यास्तासां प्रचयः प्रचारः स एव प्रबलोरगस्त[illegible]
कक्षत्या हताः श्रुतयो यदि त्वदुक्तिलक्षणामृतसेकेन धृता न स्युस्तर्ह्यात्मनि कृता[illegible]
कथं विहरेयुर्जीवनं लब्ध्वा विहारं कुर्युरित्यर्थः । प्रमिताक्षरा वृत्तम् ॥ ३३ ॥ [अल्पबु[illegible]
मूढमतयः । यद्वाऽल्पं परिच्छिन्नं वस्तु तद्विषयिणी बुद्धिर्येषां ते तथा ] ॥ ३३ ॥

---

१ ख ग. °चार ए°।

भवदुक्तसूक्त्यमृतभानुकरा
न चरेयुरार्य यदि कः शमयेत् ॥
अतितीव्रदुःसहभवोष्णकर-
प्रचुरातपप्रभवतापमिमम् ॥ ३४ ॥
घत कर्मयन्त्रमधिरुह्य तपः-
श्रुतगेहदारसुतभृत्यधनैः ॥
अतिरूढमानभरितः पतितो
भवतोद्धृतोऽस्मि भवकूपबिलात् ॥ ३५ ॥
अहमाचरं बहु तपोऽसुकरं
ननु पूर्वजन्मसु न चेदधुना ॥
जगदीश्वरेण करुणानिधिना
भवता कथा मम कथं घटते ॥ ३६ ॥
शान्तिप्राक्सुकृताङ्कुरं दमसमुल्लासोल्लसत्पल्लवं
वैराग्यद्रुमकोरकं सहनतावल्लीप्रसूनोत्करम् ॥
ऐकाग्रीसुमनोमरन्दविसृतिं श्रद्धासमुद्यत्फलं
विन्देयं सुगुरोर्गिरां परिचयं पुण्यैरगण्यैरहम् ॥ ३७ ॥

---

किंच भवदुक्तसूक्तिलक्षणस्यामृतभानोः सुधाकिरणस्य चन्द्रस्य भानवोंऽशवो हे आर्य यदि न विचरेयुस्तर्ह्यतितीव्रस्यात एव दुःसहस्य भवलक्षणस्योष्णभानोः सूर्यस्य प्रचुरातपात्प्रभवो यस्य तथाभूतमिममनुभूयमानं तापं कः शमयेत्। अतितीव्रो दुःसहो भवोष्णकरप्रचुरातपप्रभवो यस्तापस्तमिममिति वा ॥ ३४ ॥

अत एवैवंविधोऽप्यहं त्वयोद्धृतोऽस्मीत्याह—वत् खेदे हर्षे वा। कर्मयन्त्रमधिरुह्य तपआदिभिरतिरूढाभिमानेन भरितो व्याप्तः संसारकूपबिले पतितोऽहं तस्माद्भवतोद्धृतोऽस्मि ॥ ३५ ॥ [ कर्मयन्त्रं कर्मलक्षणं घटीयन्त्रम् ] ॥ ३५ ॥

नन्वेकस्योद्धरणेऽपरस्यानुद्धरणे वैषम्यं मम स्यादिति चेत्तत्कृतसुकृतदुष्कृतानुसारित्वात्तव नेत्याह—अहं पूर्वजन्मसु निश्चयेनासुकरमतिकष्टसाध्यं बहु तपोऽचरं नो चेदधुनाऽस्मिञ्जन्मनि करुणानिधिना जगदीश्वरेण भवता सह ममात्यन्तायोग्यस्य कथा कथं घटते ॥ ३६ ॥

अतोऽसंख्यातैः स्वपुण्यैः सुगुरोस्तव गिरां परिचयं लब्धवानस्मि। तं विशिनष्टि—शान्तिरूपेण परिणतस्य प्राक्कृतस्य सुकृतस्य बीजभूतस्याङ्कुरं दमसमुल्लासस्योल्लसन्तं

---

१ क. 'भवता'। २ क. 'तैरेव पु'।

४५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिदिवौकसामपि पुमर्थकरी-
मिह संसरज्जनविमुक्तिकरीम् ॥
करुणोर्मिलां तव कटाक्षझरी-
मवगाहतेऽत्र खलु धन्यतमः ॥ ३८ ॥

केचिच्चञ्चललोचनाकुचतटीचेलाञ्चलोच्चालन-
स्पर्शद्राक्परिरम्भसंभ्रमकलालीलासु लोलाशयाः ॥
सन्त्वेते कृतिनस्तु निस्तुलयशःकोशादयः श्रीगुरु-
व्याहारक्षरितामृताब्धिलहरीदोलासु खेलन्त्यमी ॥ ३९ ॥

---

पल्लवं वैराग्यद्रुमस्य वैराग्यलक्षणपारिजातस्य कोरकं कलिकाभूतं तितिक्षावल्ल्याः प्रसूनोत्करं पुष्पनिचयमैकाग्रीसुमनसः समाधानपुष्पस्य मरन्दविसृतिं मकरन्दविस्तारं श्रद्धापःसमुद्यत्फलं तथाच शान्त्यादिमताऽधिकारिणा लभ्यं तमहमसंख्यातैः पुराकृतैः पुण्यैः प्राप्तवानस्मीत्यहो मद्भाग्यमाहात्म्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥

अतोऽत्रास्मिँल्लोके तव कटाक्षझरीं धन्यतमोऽवगाहते । तां विशिनष्टि—देवानामपि चतुर्विधपुरुषार्थकरीमिह च संसरतां जनानां विमुक्तिकरीं करुणालक्षणोर्मिभिर्न्यासाम् । प्रमिताक्षरा वृत्तम् ॥ ३८ ॥

ननु प्रमदालीलासु लोलाशयानामुक्तझर्यवगाहनासंभवात्कथमिह संसरतां विमोक्षकातं तस्या इत्याशङ्क्याऽऽह—केचिदेते विषयिणश्चञ्चले लोचने यासां तासामङ्गनानां कुचतटीवस्त्रैकदेशोच्चालनादिरूपासु लीलासु चञ्चलान्तःकरणाः सन्ति चेत्सन्तु तथाऽप्यमी वशीकृतचित्ता अप्रतिमयशसां कोशादयः पात्रमञ्जूषादिरूपाः श्रीगुरोस्तव व्याहारेभ्यः क्षरितस्य निःसृतस्यामृतस्य योऽब्धिस्तस्य लहरीलक्षणासु दोलासु खेलन्ति । तत्र द्राक्परिरम्भो झटित्यालिङ्गनम् ।

'संभ्रमस्त्वरया काले भूषास्थानविपर्ययः' ।

कला शिल्पनैपुण्यम् ।

'प्रियानुकरणं लीला वाग्भिर्गत्या च चेष्टया'

शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

---

१ घ. 'मदृपि' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिन्तासंतानतन्तुग्रथितनवमवत्सूक्तिमुक्ताफलौघै-
रुच्चैर्वैशद्यसद्यःपरिहृततिमिरैर्हारिणो हारिणोऽमी ॥
सन्तः संतोपवन्तो यतिवर किमतो मण्डनं पण्डितानां
विद्या हृद्या स्वयं ताञ्शतमखमुखरान्वारयन्ती वृणीते ॥ ४० ॥
सन्तः संतोपपोषं दधतु तव कृताम्नायशोभैर्यशोभिः
सौरालोकैरुलूका इव निखिलखला मोहमाहो वहन्तु ॥
धीरश्रीशंकरार्यप्रणतिपरिणतिभ्रश्यदन्तर्दुरन्त-
ध्वान्ताः सन्तो वयं तु प्रचुरतरनिजानन्दसिन्धौ निमग्नाः ॥ ४१ ॥
चिन्तासंतानशाखी पदसरसिजयोर्वन्दनं नन्दनं ते
संकल्पः कल्पवल्ली मनसि गुणनुतेर्वर्णना स्वर्णदीयम् ॥
स्वर्गो दृग्गोचरस्त्वत्पदमजनमतः संविचार्येदमार्या
मन्यन्ते स्वर्गमन्यं तृणवदतिलघुं शंकरार्य त्वदीयाः ॥ ४२ ॥

---

किंचोच्चैर्वैशद्येन प्रौढ्यव्यक्तताक्षणेन शौक्ल्येन सद्यः परिहृतमज्ञानलक्षणं तिमिरं यैश्चिन्ताया विचारस्य संतानलक्षणैस्तन्तुभिर्ग्रथितानां नवीनानां भवत्सूक्तिलक्षणमुक्ताफलानां समूहैर्हारिणो हारशालिनोऽहारिणो युद्धरहिता हारिणो मनोज्ञा इति वा। अमी सन्तो भवच्छिष्याः संतोपवन्तः सन्त्यतो हे यतिवर पण्डितानां मण्डनमतः परं किमयमेव पण्डितानामलंकारो न त्वन्योऽत एवातिरम्या विद्यालक्षणाऽङ्गना पुरन्दरप्रमुखान्वारयन्त्येतान्वृणीते। स्रग्धरा वृत्तम् ॥ ४० ॥

किंच तव कृताम्नायस्योपदेशस्य शोभा येषु तैर्यशोभिः सन्तः संतोपस्य पोपं पुष्टिं धारयन्त्वाहो सूर्यसंबन्ध्यालोकैरुलूका इव तैर्निखिलखला मोहं वहन्तु वयं तु धीराश्च ते श्रीशंकरार्यप्रणतेः परिणत्या प्रणामस्य परिणामेन भ्रश्यदन्तर्दुरन्तं तमो येषां तादृशाः सन्तः प्रचुरतरनिजानन्दसागरे निमग्नाः। धीरश्चासौ श्रीशंकरश्चेति वा ॥ ४१ ॥ [ प्रचुरेति। विपुलतमस्वात्मसुखसमुद्र इत्यर्थः। निमग्ना भवाम इति योजना ] ॥ ४१ ॥

किंच ते चिन्तनं सर्वाभिलषितसंपादकत्वात्कल्पवृक्षस्तथा ते पदकमलयोर्वन्दनं नन्दनं तथा त्वद्विषयको मनसि संकल्प आराधनादीच्छा कल्पवल्ली तथा तव गुणस्तुतेर्वर्णनेयं स्वर्णदी गङ्गा तथा स्वर्गस्ते दृग्गोचरः कटाक्षविषयोऽतो हे शंकरार्येदमेवंविधं स्वद्भजनं विचार्य त्वदीयाः वर्णितादन्यं स्वर्गं शुष्कतृणवदतिलघुं मन्यन्ते ॥ ४२ ॥ [ अस्तीति सर्वत्र संबन्धः। तथा त इत्यपि सर्वत्र बोध्यम्। त्वदिति। त्वत्पाद-

---

१ क. 'या भ्रमविषाल'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदहं विसृज्य सुतदारगृहं
द्रविणानि कर्म च गृहे विहितम् ॥
शरणं वृणोमि भगवच्चरणा-
वनुशाधि किंकरममुं कृपया ॥ ४३ ॥
इति सूनृतोक्तिभिरुदीर्णगुणः
सुधियाऽऽत्मवाननुजिघृक्षुरसौ ॥
समुदैक्षतास्य सहधर्मचरीं
विदिताशया मुनिमवोचत सा ॥ ४४ ॥
यतिपुण्डरीक तव वेद्मि मनो
ननु पूर्वमेव विदितं च मया ॥
इह भावि तापसमुखादखिलं
तदुदीर्यते शृणु ससभ्यजनः ॥ ४५ ॥

---

पद्मसेवनमेव दृग्गोचरः प्रत्यक्षः स्वर्गः । इदं प्रागुक्तवस्तुजातम् । संविचार्य सम्यङ्नि-र्णीय ] ॥ ४२ ॥

तत्तस्मादहं सुतादि सर्वं परित्यज्य भवच्चरणौ शरणं वृणोम्यतोऽमुं[1] मां किंकरं शाध्य-ज्ञापय । प्रमिताक्षरा वृत्तम् ॥ ४३ ॥ [ सुतेति । एतेन मण्डनमिश्राणां पुत्रसद्भा-वोऽवगम्यते । यदि न सांप्रदायिकानां तत्प्रसिद्धिस्तर्ह्यत्र सुतशब्देन शिष्या एव ग्राह्याः । गृहे गृहस्थाश्रमे विहितं कर्माग्निहोत्राद्यपि ] ॥ ४३ ॥

इत्येवं सुबुद्धिना मण्डनेन सूनृतोक्तिभिरुदीर्णगुण आत्मवानसौ श्रीशंकरस्तमनुग्रहीतु-मिच्छुरस्य मण्डनस्य सहधर्मचरीं पत्नीं समुदैक्षत विदितो मुनेराशयो यया सा सरस्वती मुनिमवोचत ॥ ४४ ॥ [ सूनृतोक्तिभिः । 'सूनृतं प्रिये' इत्यमरात्प्रियवाग्भि-रित्यर्थः ] ४४ ॥

यदुवाच तदाह—हे यतिव्याघ्र—

'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे ।
कोशकारान्तरे व्याघ्रे पुण्डरीकोऽग्निदिग्गजे'

इति विश्वप्रकाशः । अहं तव मनोगतं वेद्मि पूर्वमेव चेहास्मिन्स्वजन्मनि यत्सर्वं भविष्यं तापसमुखान्मया विदितं तदुदीर्यते सभ्यजनैः सह[2] त्वं शृणु ॥ ४५ ॥

---

१ क. 'मुं किं । २ ग. 'ह शृ' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मयि जातु मातुरुपकण्ठजुषि
प्रभया तडित्प्रतिमटोच्चजटः ॥
सितभूतिरूपितसमस्ततनुः
श्रमणोऽभ्ययादपरसूर्य इव ॥ ४६ ॥
परिगृह्य पाद्यमुखयाऽर्हणया
रचिताञ्जलिर्नमितपूर्वतनुः ॥
जननी तदाऽऽत्तवरिवस्यममुं
मुनिमन्वयुङ्क्त मम भाव्यखिलम् ॥ ४७ ॥
भगवन्न वेद्मि दुहितुर्मम भा-
व्यखिलं च वेत्ति तपसा हि भवान् ॥
प्रणते जने हि सुधियः कथय-
न्त्यपि गोप्यमार्यसदृशाः कृपया ॥ ४८ ॥
कियदायुराप्स्यति सुतान्कति वा
दयितं कथंविधमुपैष्यति च ॥
अथ च क्रतूनपि करिष्यति मे
दुहिता प्रभूतधनधान्यवती ॥ ४९ ॥

एवं तापसमुखाद्विदितं वृत्तान्तं श्रावयितुमभिमुखीकृत्य तं श्रावयति । जातु कदाचि-न्मातुरुपकण्ठजुषि मातृसामीप्यं सेवमानायां मयि सत्यां प्रभया विद्युत्प्रतिमटा जटा यस्य सितभूत्या श्वेतभस्मना रूपिता लिप्ता तनुः शरीरं यस्य सोऽपरसूर्य इव कश्चित्तपस्व्यभ्ययो-दभ्यागमत् ॥ ४६ ॥ [ श्रमणः 'श्रमणो यतिभेदे ना' इति मेदिन्यास्तपस्विविशेष इत्यर्थः ] ॥ ४६ ॥

तदा पाद्याद्यया पूजया मुनिं परिगृह्य रचिताञ्जलिर्नमिता पूर्वतनुः शिरोभागो यया सा जनन्यात्ता वरिवस्या पूजा येन तममुं मुनिं मम भविष्यमखिलमन्वयुङ्क्त पृष्टवती ॥ ४७ ॥ [ परिगृह्य—

'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः'

इति मेदिन्याः स्वेप्सितदातृत्वेन स्वीकृत्येत्यर्थः ] ॥ ४७ ॥

हे भगवन्स्वदुहितुर्भविष्यमहं न जानामि भवान्हि तपसा वेत्त्यार्यसदृशा नम्रे जने गोप्यमपि कृपया कथयन्त्येव ॥ ४८ ॥

एवं तं संमुखीकृत्य गुह्यं पृच्छति—मे दुहिता कियदायुः प्राप्स्यति सुतान्कति

१ क. यात् । ४६ । त॰ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति पृष्टभाविचरितः प्रसुवा
क्षणमात्रमीलितविलोचनकः ॥
सकलं क्रमेण कथयन्निदम-
प्यपरं जगाद सुरहस्यमपि ॥ ५० ॥

निगमाध्वनि प्रबलबाह्यमतै-
रमितैरधिक्षिति खिले द्रुहिणः ॥
पुनरुद्दिधीर्षुरवतीर्य खलु
प्रतिभाति मण्डनकवीन्द्रमिषात् ॥ ५१ ॥

तमवाप्य रुद्रमिव साऽद्रिसुता
दुहिता तवाच्युतमिवाब्धिसुता ॥
अनुरूपमाहृतसमस्तमखा
ससुता भविष्यति चिरं मुदिता ॥ ५२ ॥

अथ नष्टमौपनिषदं प्रबलैः
कुमतैः कृतान्तमिह साधयितुम् ॥
ननु मानुषं वपुरुपेत्य शिवः
समलंकरिष्यति धरां स्वपदैः ॥ ५३ ॥

---

वा प्राप्स्यति पतिं कीदृशमुपैष्यति तथा प्रभूतधनधान्यवती सती यज्ञानि क…
॥ ४९ ॥ [ ऋतूनित्यत्रापि कतिशब्दो ज्ञेयः ] ॥ ४९ ॥

इत्येवं प्रसुवा जनन्या पृष्टं भावि चरितं यस्मै स क्षणमात्रं मीलिते विलोचने …चनके नेत्रे येन स क्रमेण सकलं कथयन्निदमप्यपरमतिगोप्यमपि जगाद ॥ ५० ॥

वेदबाह्यं मतं येषां कर्मधारयो वा प्रबलैश्च तैर्बाह्यमतैरसंख्यातैर्वेदमार्गेऽधिक्षिति … खिले उच्छिन्ने सति द्रुहिणो ब्रह्मा वेदमार्गमुद्धर्तुमिच्छुर्मण्डनकवीन्द्रव्याजेनावतीर्य … भाति प्रकाशते ॥ ५१ ॥ [ द्रुहिणः 'धाताऽब्जयोनिर्द्रुहिणः' इत्यमराच्चतुरानन … यावत् ] ॥ ५१ ॥

पर्वतसुता पार्वती रुद्रमिव समुद्रसुता लक्ष्मीर्विष्णुमिव सा तव सुता तं द्रुहिण… मनुरूपं मण्डनमवाप्याऽऽहृताः सर्वे मखा यज्ञा यया सुतैः सह वर्तमाना च सती चिर… मुदिता भविष्यति ॥ ५२ ॥

अथानन्तरमिहास्मिँल्लोके प्रबलैः कुमतैर्नष्टमौपनिषदं कृतान्तं सिद्धान्तं साधयितुं … शिवो मानुषं वपुरवाप्य स्वचरणन्यासैर्भूमिमलंकरिष्यति ॥ ५३ ॥ [ नष्टं …

---

१ क. ख 'खिले छिन्ने'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सह तेन वादमुपगम्य चिरं
दुहितुः पतिस्तु यतिवेषजुषा ॥
विजितस्तमेव शरणं जगतां
शरणं गमिष्यति विसृष्टगृहः ॥ ५४ ॥
इति गामुदीर्य स मुनिः प्रययौ
सकलं यथातथमभूच्च मम ॥
भवदीयशिष्यपदमस्य कथं
वितथं भविष्यति मुनेर्वचसि ॥ ५५ ॥
अपि तु त्वयाऽद्य न समग्रजितः
प्रथिताग्रणीर्मम पतिर्यदहम् ॥
वपुरर्धमस्य न जिता मतिम-
न्नपि मां विजित्य कुरु शिष्यमिमम् ॥ ५६ ॥
यदपि त्वमस्य जगतः प्रभवो
ननु सर्वविच्च परमः पुरुषः ॥
तदपि त्वयैव सह वादकृते
हृदयं बिभर्ति मम तूत्कलिकाम् ॥ ५७ ॥

---

न्तयम्। औपनिषदमुपनिषदेकसंमतं दृश्यमिथ्यात्वपूर्वकमद्वैतब्रह्मात्मैक्यलक्षणमिति यावत्।
कृतान्तं—

'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु'

इति मेदिन्याः सिद्धान्तमित्यर्थः ] ॥ ५३ ॥

तेन यतिवेषजुषा श्रीशंकरेण सह तव दुहितुः पतिर्वादं प्राप्य तेन विजितः सन्परित्य-क्तगृहो जगतां शरणं तं शरणं गमिष्यति ॥ ५४ ॥

इति वाचमुदीर्य स मुनिः प्रययौ मम सर्वं भविष्यं यथा तेनोक्तं तथैवाभूत्तस्मादस्य मम पत्युर्भवदीयशिष्यपदं मुनेर्वचसि कथमसत्यं भविष्यति ॥ ५५ ॥

यद्यप्येवं तथाऽपि मदविजयेन सकलस्यापराजितत्वान्मां विजित्येमं शिष्यं कुर्वित्याह—अपि तु किंतु प्रथितानामग्रणीर्मम पतिरद्य त्वया समग्रो जितो न भवतीति तथा यद्यस्मादस्यार्धं शरीरं न जिता 'आत्मनोऽर्धं पत्नी' इति श्रुतेः। एतज्ज्ञातुं योग्योऽसीति सूचकसंबोधयति—हे मतिमन्निति। तस्मान्मां विजित्येमं शिष्यं कुरु ॥ ५६ ॥

ननु भेत्स्वरूपाभिज्ञा मया सह वादं कथमिच्छसीति चेत्तत्राऽऽह—यद्यप्यस्य जग-

---

१ ख. ग. घ. 'मम स्वरू'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति यायजूकसहधर्मचरी-
कथितं वचोऽर्थवदगर्ह्यपदम् ॥
मधुरं निशम्य मुदितः सुतरां
प्रतिवक्तुमैहत यतिप्रवरः ॥ ५८ ॥

यदवादि वादकलहोत्सुकतां
प्रतिपद्यते हृदयमित्यबले ॥
तदसांप्रतं न हि महायशसो
महिलाजनेन कथयन्ति कथाम् ॥ ५९ ॥

स्वमतं प्रभेत्तुमिह यो यतते
स वधूजनोऽस्तु यदि वाऽस्त्वितरः ॥
यतितव्यमेव खलु तस्य जये
निजपक्षरक्षणपरैर्भगवन् ॥ ६० ॥

अत एव गार्ग्यभिधया कलहं
सह याज्ञवल्क्यमुनिराडकरोत् ॥
जनकस्तथा सुलभयाऽबलया
किमभी भवन्ति न यशोनिधयः ॥ ६१ ॥

---

तस्त्वं कारणं सर्वज्ञश्च परमः पुरुषस्तथाऽपि त्वयैव सह वादार्थं मम तु हृदयमुत्क... धारयति ॥ ५७ ॥

इत्येवं यजनशीलस्य पत्न्या कथितमर्थवदनिन्दितपदं मधुरं वचो निशम्यात्यन्तं हृष्टो यतिश्रेष्ठः श्रीशंकरः प्रतिवक्तुमैच्छत् ॥ ५८ ॥

मे हृदयं वादकलहोत्सुकतां प्रतिपद्यत इति त्वया यदुक्तं हे अबले तदयुक्तं हि ... न्महायशसो वधूजनेन कथां न कथयन्ति ॥ ५९ ॥ [ हेऽबले । एतेन जात्यैव ... न्यतः सार्वांशिकसामर्थ्याभावः सूचितः ] ॥ ५९ ॥

स्वमतरक्षणाय प्रवृत्तेन त्वयैतन्न वाच्यमित्याशयेन सरस्वत्याह—इहास्मिँल्लोके ... प्रभेत्तुं यः प्रयत्नं करोति स वधूजनोऽस्त्वन्यो वाऽस्तु तस्य जये हे भगवन्स्वपक्ष... यत्नः कर्तव्यं एव खलु प्रसिद्धम् ॥ ६० ॥

तत्रैवंविधौ वृद्धावुदाहरति—अत एव गार्ग्याख्ययाऽबलया सह याज्ञवल्क्यो ... द्कलहमकरोत्तयोः संवादो बृहदारण्यक उक्तस्तथा जनकः सुलभयाऽबलया सह ... करोदिति मोक्षधर्मेषूक्तम् । यदुक्तं महायशस इति तत्राऽऽह—किमेतावताऽमी ... ल्क्यादयो यशोनिधयो न भवन्त्यपि तु भवन्त्येव ॥ ६१ ॥

---

१ ग. घ, 'यैतनं क°' । २ ग. घ. 'व्यमेव' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति युक्तिमद्गदितमाकलय-
न्मुदितान्तरः श्रुतिसरिज्जलधिः ॥
स तया विवादमधिदेवतया
वचसामियेष विदुषां सदसि ॥ ६२ ॥

अथ सा कथा प्रववृते स्म तयो-
रुभयोः परस्परजयोत्सुकयोः ॥
मतिचातुरीरचितशब्दझरी
श्रुतिविस्मयीकृतविचक्षणयोः ॥ ६३ ॥

अनयोर्विचित्रपदयुक्तिभरै-
र्निशमय्य संकथनमाकलितम् ॥
न फणीशमप्यतुलयन्न पर्पी
न गुरुं कविं किमपरं जगति ॥ ६४ ॥

न दिवा न निश्यपि च वादकथा
विरराम नैयमिककालमृते ॥
इति जल्पतोः सममनल्पधियो-
र्दिवसाश्च सप्त दश चात्यगमन् ॥ ६५ ॥

---

इत्येवं युक्तियुक्तं तया कथितमाकर्णयन्मुदितान्तरः श्रुतिलक्षणानां नदीनां समुद्रः स श्रीशंकरो वचसामधिष्ठात्र्या देवतया सरस्वत्या विदुषां सदसि वादमियेषेच्छति स्म ॥६२॥ [ श्रुतीति । श्रुतय एव सरितस्तासां जलधिः पर्यवसानभूमित्वेन समुद्र इत्यर्थः ] ॥६२॥

अथानन्तरं परस्परजयोत्सुकयोः श्रुत्या श्रवणेन विस्मयीकृता विचक्षणा याभ्यां तयोर्द्वयोः शंकरसरस्वत्योर्वादकथा प्रववृते । तां विशिनष्टि—बुद्धिचातुर्या रचिता शब्दझरी यत्र सा ॥ ६३ ॥

विचित्रपदयुक्तिभरैर्व्याप्तमनयोः कथितं श्रुत्वा फणीशं शेषमपि नातुलयन्नापि सूर्यं नापि बृहस्पतिं नापि शुक्रं जगत्यपरं नातुलयन्निति किं वक्तव्यम् ॥ ६४ ॥ [ विचित्रेति । विचित्राण्यद्भुतानि पदानि सुबन्तादीनि च तथा युक्तिभराश्च तर्कसमूहाश्च तैरित्यर्थः ] ॥६४॥

नैयमिककालं संध्यावन्दनादिषु नियतं कालं विना ॥ ६५ ॥

---

१ क. रविं ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ शारदाऽकृतकवाक्प्रमुखे-
ष्वखिलेषु शास्त्रनिचयेषु परम् ॥
तमजय्यमात्मनि विचिन्त्य मुनिं
पुनरप्यचिन्तयदिदं तरसा ॥ ६६ ॥

अतिबाल्य एव कृतसंन्यसनो
नियमैः परैरविधुरश्च सदा ॥
मदनागमेष्वकृतबुद्धिरसौ
तदनेन संप्रति जयेयमहम् ॥ ६७ ॥

इति संप्रधार्य पुनरप्यमुना
कथने प्रसङ्गमथ संगतितः ॥
यमिनं सदस्यमुमपृच्छदसौ
कुसुमास्त्रशास्त्रहृदयं विदुषी ॥ ६८ ॥

कलाः कियन्त्यो वद पुष्पधन्वनः
किमात्मिकाः किं च पदं समाश्रिताः ॥
पूर्वे च पक्षे कथमन्यथा स्थितिः
कथं युवत्यां कथमेव पूरुषे ॥ ६९ ॥

---

अथ शारदाऽकृतकवाक्प्रमुखेष्वनादिसिद्धवेदवाक्प्रभृतिष्वखिलेषु शास्त्रसमूहेषु तं य-
मिनं जेतुमशक्यमात्मनि विचिन्त्य पुनरपीदं वक्ष्यमाणं झटित्यचिन्तयत् ॥ ६६ ॥

यदचिन्तयत्तद्दर्शयति—अतिबाल्य एव कृतं संन्यसनं येन नियमैः परैरविधुरोऽविकलः
सदा कदाऽपि नियमविनिर्मुक्तो न भवतीत्यर्थः । अतः कामागमेष्वयमकृतबुद्धिस्तस्मात्त-
दनेन मदनागमेनेदानीमहं जयेयम् ॥ ६७ ॥

इत्येवममुना कथने प्रसङ्गं संप्रधार्याथ प्रसङ्गात्सदस्यमुं यमिनं कामशास्त्रस्य रहस्यं
विदुषी सरस्वत्यपृच्छत् ॥ ६८ ॥ [ असौ पूर्वप्रकृता सरस्वती विदुषी । कुसुमेत्यस्य
न्वेति स्मरशास्त्रसारज्ञेत्यर्थः ॥ ६८ ॥

यदपृच्छत्तदुदाहरति—पुष्पधन्वनः कामस्य कलाः कियन्त्य इति संख्याविषयकः प्रश्नः ।
किमात्मिका इति स्वरूपविषयकः । किं स्थानमाश्रिता इति स्थानगोचरः । पूर्वे शुक्ले
पक्षेऽन्यथा कृष्णपक्षे या स्थितिस्तस्या विपर्ययेण तस्य केन प्रकारेण स्थितिरिति प्रश्नः
तस्य स्थितिप्रकारविषयः । कथं युवत्यां पुरुषे च कथमिति स्त्रीपुरुषयोर्भेदेन
स्थितिविषयः ॥ ६९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेतीरितः किंचिदुवाच शंकरो
विचिन्तयन्नत्र चिरं विचक्षणः ॥
तासामनुक्तौ भविताऽल्पवेदिता
भवेत्तदुक्तौ मम धर्मसंक्षयः ॥ ७० ॥
इति संविचिन्त्य स हृदाऽऽशु तदाऽ-
नवबुद्धपुष्पशरशास्त्र इव ॥
विदितागमोऽपि सुरिरक्षयिषु-
र्नियमं जगाद जगति व्रतिनाम् ॥ ७१ ॥
इह मासमात्रमवधिः क्रियता-
मनुमन्यते हि दिवसस्य गणः ॥
तदनन्तरं सुदति हास्यसि भोः
कुसुमास्त्रशास्त्रनिपुणत्वमपि ॥ ७२ ॥
उररीकृते सति तथेति तयाऽऽ-
क्रमते स्म योगिमृगराड्गगनम् ॥
श्रुतविग्रहः श्रुतविनेययुतो
दधदभ्रचारमथ योगदृशा ॥ ७३ ॥

---

इतीरितोऽस्मिन्नर्थे विचिन्तयन्विचक्षणः श्रीशंकरः किंचिदपि नोवाच। विचिन्तनमाह— तासां कलानामकथने ममाल्पज्ञता भविष्यति तासां कथने तु मम यतेर्धर्मस्य संक्षयः॥७०॥

इत्येवं स शीघ्रं मनसा संचिन्त्य विदितकामागमोऽपि जगति व्रतिनां कामशास्त्रानभ्यासादिव्रतवतां परमहंसपरिव्राजकानां नियमं रक्षयितुमिच्छुस्तस्मिन्कालेऽनवबुद्धकामशास्त्र इव संजगाद ॥ ७१ ॥

यदुवाच तदाह—इहास्मिन्कलादिसंकथने मासमात्रमवधिः क्रियतां हि यस्माद्दिवसस्य गणो वादिभिरनुमन्यते तथाच मासानन्तरं भोः सुदति कामशास्त्रनिपुणत्वमपि त्यक्ष्यसि ॥ ७२ ॥ [ मासमात्रं मास एव मासमात्रमेकमासपर्यन्तमित्यर्थः ] ॥ ७२ ॥

तथेति तया सरस्वत्या स्वीकृते सति योगिराट्श्रीशंकर आकाशमाक्रमते स्मायानन्तरं श्रुतो विग्रहः स्वरूपं यस्य स प्रख्यातविग्रहस्तथा श्रुतैर्विनेयैः शिष्यैर्युतः स योगदृष्ट्याऽभ्रचारमाकाशगमनं दधत् ॥ ७३ ॥ [ योगदृशा योगावलम्बनेन । दधत्कुर्वन्नित्यर्थः ॥ ७३ ॥

---

१ घ. ङ. 'पि स रिं°। २ ग. 'तोऽत्रास्मि°। ३ ख. 'मिच्छंस्त°। ४ घ. स जगा°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स ददर्श कुत्रचिदमर्त्यमिव
त्रिदिवच्युतं विगतसत्त्वमपि ॥
मनुजेश्वरं परिवृतं प्रलप-
त्प्रमदार्थिरार्तिमदमात्यजनम् ॥ ७४ ॥

अथो निशाखेटवशादटव्यां
मूले तरोर्मोहवशात्परासुम् ॥
तं वीक्ष्य मार्गेऽमरकं नृपालं
सनन्दनं प्राह स संयमीन्द्रः ॥ ७५ ॥

सौन्दर्यसौभाग्यनिकेतसीमाः
परःशता यस्य पयोरुहाक्ष्यः ॥
स एष राजाऽमरकाभिधानः
शेते गतासुः श्रमतो धरण्याम् ॥ ७६ ॥

प्रविश्य कायं तमिमं परासो-
र्नृपस्य राज्येऽस्य सुतं निवेश्य ॥
योगानुभावात्पुनरप्युपैतु-
मुत्कण्ठते मानसमस्मदीयम् ॥ ७७ ॥

---

स कस्मिंश्चिद्देशे विगतजीवमपि स्वर्गात्पतितं देवमिव प्रलपन्तीभिः प्रमदाभिः धीरैः मार्तिमानमात्यजनो यस्य तं नरेश्वरं ददर्श ॥ ७४ ॥

अथो निशायां रात्रौ मृगयावशात्। 'आखेटो मृगया स्त्रियाम्' इत्यमरः। अटव्यां वने वृक्षस्य मूले मोहो मूर्छनं तद्वशात्परासुमुत्क्रान्तप्राणं तममरकसंज्ञं राजानं वीक्ष्य मार्गे संयमीन्द्रः सनन्दनं पद्मपादं प्रोवाच उपजातिवृत्तम् ॥ ७५ ॥ अमरुकं न विद्यते मरुः स्थलदेशो यस्य राष्ट्र इति तथा तमित्यर्थः। डिण्डिमकाराद्दतेऽमरकमिति पाठे त्वमरो... मरवद्वा कं सुखं यस्य तमिति व्याख्ययेम्। तथाऽपि प्रायः शिष्टसांप्रदायिकः प्राय... एव पाठः सर्वत्र दृश्यते ] ॥ ७५ ॥

यस्य सौन्दर्यसौभाग्यनिकेतसीमाः परःशताः शतादधिकाः कमलनयनाः स एषोऽमरक-संज्ञो राजा श्रमतो गतप्राणो भूमौ शेते ॥ ७६ ॥ [ सौन्दर्यं सर्वावयवसौष्ठवम्। सौभाग्यं तारुण्यम्। व्युत्पत्तिपक्षेण तस्यैव लाभात्। तयोर्यो निकेतनं निकेतः 'केतं... तु निमन्त्रणे। गृहे केतौ च कृत्ये' इति मेदिन्या गृहं तस्य सीमाः 'सीमसीमे स्त्रियां... उभे' इत्यमरान्मर्यादीभूता इत्यर्थः ] ॥ ७६ ॥

परासोर्नृपस्य तमिमं देहं प्रविश्य राज्येऽस्य पुत्रं निवेश्य योगप्रभावात्पुनरप्युपगन्तु-मस्मदीयं मन उत्कण्ठते ॥ ७७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यादृशानामदसीयनाना-
कुशेशयाक्षीकिलकिंचितानाम् ॥
सर्वज्ञतानिर्हरणाय सोऽहं
साक्षित्वमप्याश्रयितुं समीहे ॥ ७८ ॥

इत्यूचिवांसं यतितल्लजं तं
सनन्दनः प्राह ससान्त्वमेनम् ॥
सर्वज्ञ नैवाविदितं तवास्ति
तथाऽपि भक्तिर्मुखरं तनोति ॥ ७९ ॥

मत्स्येन्द्रनामा हि पुरा महात्मा
गोरक्षमादिश्य निजाङ्गगुप्त्यै ॥
नृपस्य कस्यापि तनुं परासोः
प्रविश्य तत्पत्तनमाससाद ॥ ८० ॥

भद्रासनाध्यासिनि योगिवर्ये
भद्राण्यनिद्राण्यभवन्प्रजानाम् ॥
ववर्ष कालेषु बलाहकोऽपि
सस्यानि चाऽऽशास्यफलान्यभूवन् ॥ ८१ ॥

---

सर्वज्ञतानिर्हरणाय सर्वज्ञत्वनिर्वाहायामुष्य राज्ञ इमा अदसीया नानाऽनेकविधाः कुशेशयाक्ष्यः कमलाक्ष्यस्तासां यानि किलकिंचितानि रोषाश्रुहर्षभीत्यादेः संकरः किलकिंचितमित्युक्तानि तेषामन्यादृशानामतिविलक्षणानां साक्षित्वं साक्षाद्द्रष्टृत्वमप्याश्रयितुं सोऽहं समीहे ॥ ७८ ॥ [स पूर्वं सरस्वत्या कृतप्रश्नः] ॥ ७८ ॥

इत्युक्तवन्तं यतिश्रेष्ठं तमेनं श्रीशंकरं ससान्त्वं यथा स्यात्तथा प्रोवाच हे सर्वज्ञ सर्वविदस्तव यद्यपि किंचिदप्यज्ञातं नास्ति तथाऽपि तव भक्तिर्मां मुखरं वाचालं करोति ॥ ७९ ॥ [ 'अत्यर्थमधुरं सान्त्वम्' इत्यमरः ] ॥ ७९ ॥

एवं पुरावृत्तं वृत्तान्तं श्रावयितुमभिमुखीकृत्य तं श्रावयति—हि प्रसिद्धं पुरा मत्स्येन्द्रनामा महात्मा स्वशरीररक्षणाय गोरक्षसंज्ञं शिष्यमाज्ञाप्य कस्यचिन्मृतकस्य राज्ञः शरीरं प्रविश्य तस्य नगरं प्राप्तवान् ॥ ८० ॥

योगिश्रेष्ठे तस्मिन्भद्रासनाध्यासिनि नृपासनमुपविष्टे सति प्रजानां भद्राणि निद्रावर्जितान्यभवन्नभ्रमपि कालेषु ववर्ष सस्यानि चेच्छानुसारिफलान्यभूवन् ॥ ८१ ॥

---

१ ख. °त्पद्मन°। २ क. 'क्तिरस्मन्मुखं कथनाय मु°। ख. 'क्तिरस्मन्मुखंकथनाय विस्तारयति। ३ ख. ग. घ. 'द्वृत्तवृ'। ४ घ. 'स्य राजन°। ५ ख. ग. राज्यं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञाय विज्ञाः सचिवा नृपस्य
काये प्रविष्टं कमपीह दिव्यम् ॥
समादिशन्राजसरोरुहाक्षीः
सर्वात्मना तस्य वशीक्रियायै ॥ ८२ ॥

संगीतलास्याभिनयादिमेषु
संसक्तचेता ललितेषु तासाम् ॥
स एष विस्मृत्य मुनिः समाधिं
सर्वात्मना प्राकृतवद्बभूव ॥ ८३ ॥

गोरक्ष एषोऽथ गुरोः प्रवृत्तिं
विज्ञाय रक्षन्बहुधाऽस्य देहम् ॥
निशान्तकान्तानटनोपदेष्टा
नितान्तमस्याभवदन्तरङ्गः ॥ ८४ ॥

तत्रैकदा तत्त्वनिबोधनेन
निवृत्तरागं निजदेशिकं सः ॥
योगानुपूर्वीमुपदिश्य निन्ये
यथापुरं प्राक्तनमेव देहम् ॥ ८५ ॥

---

इहास्मिन्नृपस्य काये प्रविष्टं कमपि दिव्यं विज्ञाः सचिवा विज्ञाय राज्ञः कमलाक्षीः सर्वभावेन तस्य वशीकरणार्थं समादिशन् ॥ ८२ ॥

एवं संप्रेरितानां तासां ललितेषु संगीतनृत्याभिनयाद्येषु सक्तं चित्तं यस्य स एष मुनिः समाधिं विस्मृत्य सर्वात्मभावेन प्राकृतवद्बभूव ॥ ८३ ॥ [ संगीतेति । 'लास्यं नृत्यं च नर्तने' इति 'व्यञ्जकाभिनयौ समौ' इति चामरः । 'अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम्' इत्यभियुक्ताः ] ॥ ८३ ॥

अथानन्तरमेष गोरक्षो गुरोः प्रवृत्तिं विज्ञाय बहुप्रकारेणास्य गुरोर्देहं रक्षन्सवि[...]न्तस्यान्तःपुरस्य कान्तानां नर्तनोपदेष्टा सन्नस्य गुरोरत्यन्तमन्तरङ्गो बभूव ॥ ८४ ॥

तत्र तस्मिन्देश एकस्मिन्काले तत्त्वनिबोधनेन निवृत्तरागं निजगुरुं स गोरक्षो योगानु[...]पूर्वीमुपदिश्य यथापूर्वं प्राक्तनमेव देहं निन्ये ॥ ८५ ॥

---

१ क. 'दिकेषु । २ ख. ग. घ. 'ङ्गोऽभवत् ॥ ८४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हन्तेदृशोऽयं विषयानुरागः
किंचोर्ध्वरेतोव्रतखण्डनेन ॥
किं नोदयेत्किल्बिषमुल्बणं ते
कृत्यं भवानेव कृती विवेक्तुम् ॥ ८६ ॥

व्रतमस्मदीयमतुलं क्व मह-
त्क्व च कामशास्त्रमतिगर्ह्यमिदम् ॥
तदपीष्यते भगवतैव यदि
ह्यनवस्थितं जगदिहैव भवेत् ॥ ८७ ॥

अधिमेदिनि प्रथयितुं शिथिलं
धृतकङ्कणस्य यतिधर्ममिमम् ॥
भवतः किमस्त्यविदितं तदपि
प्रणयान्मयोदितमिदं भगवन् ॥ ८८ ॥

स निशम्य पद्मचरणस्य गिरं
गिरति स्म गीष्पतिसमप्रतिमः ॥
अविगीतमेव भवता फणितं
शृणु सौम्य वच्मि परमार्थमिदम् ॥ ८९ ॥

---

तथाचैवंविधोऽयं विषयानुरागः किंचोर्ध्वरेतोव्रतखण्डनेनोल्बणं पापं किं ते नोदयेदपि तूदयेदेव। तथाच यत्कर्तव्यं तद्भवानेव विवेक्तुं कृती समर्थः। इन्द्रवज्रा वृत्तम् ॥ ८६ ॥

किंचास्मदीयमतुलं महद्व्रतं क्व क्व चेदमतिनिन्द्यं कामशास्त्रं तदपि भवतैव यदीष्यते तर्ह्यस्मिँल्लोके जगदनवस्थितमेव भवेत्। तथाचोक्तम्—

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते'

इति। प्रमिताक्षरा वृत्तम् ॥ ८७ ॥ [इहैव कल्पारम्भकाल एव] ॥ ८७ ॥

इदं न मयाऽविदितं ज्ञापितं सर्वज्ञत्वात्तव किंतु प्रेम्णोदितमित्याह—शिथिलमिमं यतिधर्मं भूमौ प्रकटयितुं धृतकङ्कणस्य गृहीतप्रतिज्ञस्य भवतोऽविदितं किमस्ति न किमपि तथाऽपि हे भगवन्प्रणयादिदं मयोक्तम् ॥ ८८ ॥

एवं पद्मपादवाक्यमुदाहृत्याऽऽचार्यस्य तदुदाहर्तुमाह—पद्मपादस्य वचः श्रुत्वा वाचस्पतितुल्या प्रतिमा यस्य स उक्तवान्यद्यपि त्वयाऽनिन्दितमेव कथितं तथाऽपि हे सौम्य श्रोतुं सावधानो भव परमार्थमिदं कथयामि ॥ ८९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असङ्गिनो न प्रभवन्ति कामा
हरेरिवाऽऽभीरवधूसखस्य ॥
वज्रोलियोगप्रतिभूः स एष
वत्सावकीर्णित्वविपर्ययो नः ॥ ९० ॥
संकल्प एवाखिलकाममूलं
स एव मे नास्ति समस्य विष्णोः ॥
तन्मूलहानौ भवपाशनाशः
कर्तुः सदा स्याद्भवदोषदृष्टेः ॥ ९१ ॥
अविचार्य यस्तु वपुराद्यहमि-
त्यभिमन्यते जडमतिः सुदृढम् ॥
तमबुद्धतत्त्वमधिकृत्य विधि-
प्रतिषेधशास्त्रमखिलं सफलम् ॥ ९२ ॥

---

किं तदित्यपेक्षायामाह—असङ्गिन आसक्तिविनिर्मुक्तस्य कामा न प्रभवन्ति ह… दृष्टान्तो गोपवधूसखस्य श्रीकृष्णस्येव किंच यो वज्रोलिसंज्ञकयोगप्रतिभूमिः स एष हे वत्स नोऽस्माकमवकीर्णित्वस्य रेतःपातेन क्षतव्रतत्वस्य विपर्ययस्तदभावस्तस्या… आकर्षणसामर्थ्यसंपादकत्वात् । उपजातिवृत्तम् ॥ ९० ॥ [ वज्रोलीति । … हठप्रदीपिकायाम्—

' मेहनेन शनैः सम्यगूर्ध्वाकुञ्चनमभ्यसेत् ।
पुरुषो वाऽपि नारी वा वज्रोलीं सिद्धिमाप्नुयात् '

इति । तल्लक्षणो योगश्चित्तनिरोधविशेषः प्रतिभूः 'स्युर्लग्नकाः प्रतिभुवः' इत्यमरः… यतसंपादको यस्य स तथा ] ॥ ९० ॥

किंच संकल्प एवाखिलाभिलापस्य मूलं स एव कृष्णतुल्यस्य मम नास्ति … सदैव संसारदोषदृष्टेः कर्तुरपि काममूलस्य संकल्पस्य हानौ सत्यां भवपाशनाशः स्यात् ॥ ९१ ॥ [ मे समस्य 'निर्दोषं हि समं ब्रह्म' इति च तद्वचनादद्वैतब्रह्मरूपस्य … वैवोष्टि कल्पितं द्वैतं व्यवहारदृशा व्याप्नोतीति तथा तस्येति यावत् ] [ कर्तुरपि … रेवं व्यवहर्तुरपि ] ॥ ९१ ॥

नन्वेवं तर्हि विधिप्रतिषेधशास्त्रं निष्फलं स्यादिति चेत्तत्राऽऽह—यस्तु देहादी… देहादेर्जडत्वादिनाऽनात्मत्वमविचार्याहमित्यहंप्रत्यालम्बनमात्मानं सुदृढमभिमन्यते … जडबुद्धिस्तमबुद्धतत्त्वमधिकृत्य सर्वं विधिप्रतिषेधशास्त्रं सफलम् । प्रमिताक्षरा वृत्तम् ॥ ९२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतधीस्त्वनाश्रममवर्णमजा-
त्यवबोधमात्रमजमेकरसम् ॥
स्वतयाऽवगत्य न भजेन्निवस-
न्निगमस्य मूर्ध्नि विधिकिंकरताम् ॥ ९३ ॥
कलशादि मृत्प्रभवमस्ति यथा
मृदमन्तरा न जगदेवमिदम् ॥
परमात्मजन्यमपि तेन विना
समयत्रयेऽपि न समस्ति खलु ॥ ९४ ॥
कथमज्यते जगदृशोपमिदं
कलयन्मृषेति हृदि कर्मफलैः ॥
न फलाय हि स्वपनकालकृतं
सुकृतादि जात्वनृतबुद्धिहृतम् ॥ ९५ ॥

---

एवमज्ञस्याधिकारिणः सत्त्वाद्विधिप्रतिषेधशास्त्रसाफल्यमुक्त्वा तत्त्वविदोऽधिकाराभावमाह—कृता संपादिता महावाक्यजन्या धीर्येन स त्वाश्रमादिविनिर्मुक्तमात्मानमात्मत्वेनावगत्य वेदान्तप्रतिपाद्यस्वरूपत्वान्निगमस्य मूर्ध्नि वसन्विधिकिंकरतां न भजेत् । विधिग्रहणं प्रतिषेधस्याप्युपलक्षणम् ॥ ९३ ॥ [ अवर्णं ब्राह्मणादिवर्णशून्यम् । अजाति मनुष्यत्वादिजातिविधुरम् ] ॥ ९३ ॥

ननु—

‘ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ’

इत्यादिवचनैः कर्मफलभोगस्याऽऽवश्यकत्वावगमात्कथं तेन तत्त्वविदोऽसंबन्ध इत्याशङ्क्य ‘ वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ’ इति श्रुत्युक्तदृष्टान्तेन कालत्रयेऽप्यात्मव्यतिरिक्तस्य प्रपञ्चस्याभावविचारणेन तस्य मृषात्वनिश्चयादित्याह—घटादि मृत्प्रभवं वस्तु यथा मृदं विना नास्ति तथा परमात्मजन्यमिदं जगदपि परमात्मानं विना कालत्रयेऽपि नास्ति । ‘ तदनन्यत्वमारम्भणशब्दादिभ्यः ’ इति न्यायात् । कल्पितस्याधिष्ठानानतिरिक्तत्वं प्रसिद्धमिति खल्वर्थः ॥ ९४ ॥

तथा चैवंप्रकारेणेदं सर्वं जगन्मिथ्येति हृद्यनुसंदधानः कर्मफलैर्न केनापि प्रकारेण लिप्यते हि परमात्मस्वप्नकालकृतं सुकृतं दुष्कृतं च मृषा बुद्धिहृतत्वात्कदाचिदपि फलाय न भवति ॥ ९५ ॥

---

१ ख. ग. घ. मूर्धनि । २ क. ख भजेत ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदयं करोतु हयमेधशता-
न्यमितानि विप्रहननान्यथवा ॥
परमार्थविन्न सुकृतैर्दुरितै-
रपि लिप्यतेऽस्तमितकर्तृतया ॥ ९६ ॥

अवधीत्त्रिशीर्षमददाच्च यती-
न्वृकमण्डलाय कुपितः शतशः ॥
बत लोमहानिरपि तेन कृता
न शतक्रतोरिति हि बह्वृचगीः ॥ ९७ ॥

बहुदक्षिणैरयजत क्रतुभि-
र्विबुधानतर्पयदसंख्यधनैः ॥
जनकस्तथाऽप्यभयमाप परं
न तु देहयोगमिति काण्ववचः ॥ ९८ ॥

---

तत्तस्मादयमश्वमेधशतानि करोत्वथवाऽसंख्यातानि विप्रहननानि करोतु तथाऽपि परमार्थ-वित्सुकृतैर्दुरितैश्च न लिप्यते लेपकारणस्य कर्तृत्वस्य निवृत्तत्वादिति हेतुमाह—अस्तमितकर्तृतयेति ॥ ९६ ॥ [ अस्तमितेति । नष्टकर्तृत्वाध्यासतयेति यावत् । तदुक्तं परमार्थसारे पतञ्जलिना—

'हयमेधसहस्राण्यप्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैर्लिप्यते क्वापि ' इति ] ॥ ९६ ॥

अयममितानि ब्रह्महननानि वा करोतु तथाऽपि दुरितैर्न लिप्यत इत्युक्तं तत्र प्रमाणा-काङ्क्षायां 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्शालावृकेभ्यः प्रायच्छत्तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया ' इति श्रुतिमर्थतः पठति—त्रिशिरसं त्वष्टृपुत्रं विश्वरूपमिन्द्रोऽवधीत्तथा रौति शब्दयतीति रुद्वेदान्तवाक्यं तद्येषां मुखे नास्तीति तानरुन्मुखान्शतशो यतीन्शालावृक-समूहाय कुपितः सन्नदात्तथाऽपि शतक्रतोरिन्द्रस्य तेन कर्मणा लोमहानिरपि नेति बह्वृचा-त्यृग्वेदिनां वागित्यर्थः ॥ ९७ ॥

हयमेधशतानि करोतु तथाऽपि सुकृतैर्न लिप्यत इत्यत्रापि प्रमाणमाह—जनको बहुदक्षिणैः क्रतुभिर्देवानयजत तथाऽसंख्यधनैरतर्पयत्तथाऽपि केवलं सर्वभयशून्यं परमात्म-स्वरूपं मोक्षं प्राप न तु तत्फलभोगाय देहसंबन्धमापेति काण्वानां वचनम् । तथा च श्रुतिः 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे ' 'अभयं वै जनक प्राप्तोऽसि ' इत्यादि ॥ ९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न विहीयतेऽहिरिपुवद्दुरितै-
र्न च वर्धते जनकवत्सुकृतैः ॥
न स तापमेत्यकरवं दुरितं
किमहं न साध्वकरवं त्विति च ॥ ९९ ॥

तदनङ्गशास्त्रपरिशीलनम-
प्यमुनैव सौम्य करणेन कृतम् ॥
न हि दोषकृत्तदपि शिष्टसर-
ण्यवनार्थमन्यवपुरेत्य यते ॥ १०० ॥

इति सत्कथाः स कथनीययशा
भवभीतिभञ्जनकरीः कथयन् ॥
सुदुरासदं चरणचारिजनै-
र्गिरिशृङ्गमेत्य पुनरेव जगौ ॥ १ ॥

अथ साऽनुपश्यत विभाति गुहा
पुरतः शिला समतला विपुला ॥
सरसी च तत्परिसरेऽच्छजला
फलभारनम्रतरुरम्यतटा ॥ २ ॥

---

फलितमाह—तथाच तत्त्वविद्वृत्ररिपुरिन्द्रस्तद्वद्दुरितैर्न हीयते तथा जनकवत्सुकृतैश्च न वर्धते किंच स तत्त्वविदहं दुरितं किमर्थमकरवं साधु कर्म च किमर्थं नाकरवमिति तापमपि न प्राप्नोतीत्यर्थः। तथाच श्रुतिः 'तत्सुकृतदुष्कृते विधुनुत एनं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्' इत्याद्या ॥ ९९ ॥

तत्तस्माद्यद्यपि कामशास्त्रपरिशीलनं हे सौम्यानेनैव करणेन वपुषा कृतमपि न च दोषकृत्तथाऽपि शिष्टसरणीपरिपालनार्थमन्यशरीरं प्राप्य यत्नं करोमि ॥ १०० ॥

इत्येवं भवभयभञ्जनकरीः सत्कथाः कथयन्कथनीयं यशो यस्य स चरणचारिजनैरतिदुष्प्रापमद्रिशृङ्गं प्राप्याथ गिरिशृङ्गप्राप्त्यनन्तरं स श्रीशंकरो भूयोऽप्युवाच ॥ १ ॥

यदुवाच तदुदाहरति—गुहायाः पुरतः समं तलं यस्याः सा विपुला शिला विभाति तथा तस्या गुहायाः परिसरे प्रान्तभूमौ स्वच्छजला पुनश्च फलानां भारेण नम्रैर्वृक्षै रम्यं तटं यस्याः सा सरसी विभाति हे विनेया अनुपश्यत ॥ २ ॥

---

१ ख. सौम्य। २ ख. ग. 'हे सौम्या'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिपालयतामिह वसद्भिरिदं
वपुरप्रमादमनवद्यगुणाः ॥
अहमास्थितस्तदुचितं करणं
कलयामि यावदसमेषुकलाम् ॥ ३ ॥

इति शिष्यवर्गमनुशास्य यमि-
प्रवरो विसृष्टकरणोऽधिगुहम् ॥
महिपस्य वर्ष्म गुरुयोगबलोऽ-
विशदातिवाहिकशरीरयुतः ॥ ४ ॥

अङ्गुष्ठमारभ्य समीरणं नय-
न्करन्ध्रमार्गाद्बहिरेत्य योगवित् ॥
करन्ध्रमार्गेण शनैः प्रविष्टवा-
न्मृतस्य यावच्चरणाग्रमेकधीः ॥ १०५ ॥

गात्रं गतासोर्वसुधाधिपस्य
शनैः समास्पन्दत हृत्प्रदेशे ॥
तथोदमीलन्नयनं क्रमेण
तथोदतिष्ठत्स यथा पुरेव ॥ ६ ॥

---

तथाच यावत्कामकलाज्ञानायोचितं शरीरमास्थितोऽहं विषमेषुकलामनुभवामि तावदत्र शिलायां वसद्भिर्हेऽनवद्यगुणा इदं च मद्वपुरप्रमादं यथा स्यात्तथा परिपाल्यतामित्यर्थः ॥ ३ ॥

इत्येवं शिष्यवर्गमनुशास्य गुहायां त्यक्तदेहो गुरुयोगबल आतिवाहिकेन ज्ञानेन्द्रियकर्मेन्द्रियप्राणमनोबुद्धिरूपेण लिङ्गशरीरेण युतो यमिनां प्रवरः श्रीशंकरोऽमरकाभिधक्षितिपस्य कायमविशत् ॥ ४ ॥ [ गुरुयोगबलः प्रबलयोगसामर्थ्यः ] [ वर्ष्म 'गात्रं वर्ष्म विग्रहः ' इत्यमराच्छरीरम् ] ॥ ४ ॥

कथं विसृष्टदेहस्तच्छरीरं प्रविष्टवानित्यपेक्षायां तत्प्रकारं दर्शयति—स्वशरीरस्याङ्गुष्ठमारभ्य दशमद्वारपर्यन्तं प्राणवायुं नयन्सन्शिरोरन्ध्रमार्गाद्बहिरागत्य मृतस्य राजदेहस्य चरणाग्रपर्यन्तं करन्ध्रमार्गेण शनैः प्रविष्टवानेवं सत्यप्येकबुद्धिरेव । उपजातिवृत्तम् ॥ १०५ ॥ [ करन्ध्रमार्गेण ब्रह्मरन्ध्रद्वारा । एकधीर्धारणयैकाग्रबुद्धिः ] ॥ ५ ॥

ततः किं वृत्तमित्यपेक्षायामाह—मृतकस्य भूमिपतेर्गात्रं हृत्प्रदेशे शनैः समास्पन्दत सम्यक्प्रचलितं तथा हस्तादिचलनक्रमेण नयनमुदमीलत्तथा स राजा यथापूर्वमेवोदतिष्ठत् ॥ ६ ॥

---

१ ग. 'स्य कायमुद' । २ क. ङ. 'देह उद' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदौ तदङ्गमुदयन्मुखकान्ति पश्चा-
च्छ्वासान्तनिर्यदनिलं शनकैः परस्तात्॥
उन्मीलदङ्घ्रिचलनं तदनूद्यदक्षि-
व्याकोचमुत्थितमुपात्तबलं क्रमेण ॥ ७ ॥

तं प्राप्तजीवमुपलभ्य पतिं प्रभूत-
हर्षस्वनाः प्रमुदिताननपङ्कजास्ताः ॥
नार्यो विरेजुररुणोदयसंप्रफुल्ल-
पद्माः ससारसरवा इव वारिजिन्यः ॥ ८ ॥

हर्षं तासामुदितमतुलं वीक्ष्य वामेक्षणाना-
मात्तप्राणं नृपमपि महामात्यमुख्याः प्रहृष्टाः ॥
दध्मुः शङ्खान्पणवपटहान्दुन्दुभींश्चाभिजघ्नु-
स्तेषां घोषाः सपदि बधिरी चक्रिरे द्यां भुवं च॥ १०२९॥

---

क्रमेणेत्युक्तं तत्र केन क्रमेणेत्याकाङ्क्षायां क्रमं निरूपयति—आदौ तस्याङ्गं गात्रमुदयन्ती मुखकान्तिर्यस्मिंस्तथाभूतं पश्चाच्छ्वासान्तनिर्गच्छत्प्राणवायुर्यस्मिन्शनकैः पश्चादुन्मीलच्चरण-योश्चलनं यस्मिंस्ततः पश्चादुद्यन्नेत्रयोर्व्याकोचः संकोचविनिर्मोको यस्मिन्नित्येवंक्रमेणोपात्त-बलं सदुत्थितम्। वसन्ततिलका वृत्तम् ॥ ७ ॥ [ उद्यदिति। उद्यन्नाविर्भवन्नक्षि-व्याकोचो नेत्रविकासो यत्र तत्तथेत्यर्थः ] ॥ ७ ॥

तं प्राप्तजीवं पतिमुपलभ्य प्रभूतो हर्षयुक्तः शब्दो यासां प्रमुदितानि मुखकमलानि यासां ता नार्यो विरेजुः। तत्र दृष्टान्तः—अरुणोदयेन संप्रफुल्लानि कमलानि यासु ताः सारसानां शब्देन सहिताः पुष्करिण्य इव ॥ ८ ॥ [ अरुणोदयेति। अरुणोदये सम्यक्प्रफुल्लानि पद्मानि यासां ताः ] ॥ ८ ॥

तासां वामेक्षणानामुदितं हर्षं वीक्ष्य नृपतिमप्यात्तप्राणं वीक्ष्य महामात्यप्रमुख्याः प्रहृष्टाः सन्तः शङ्खान्पूरितवन्तः पणवादीन्वाद्यविशेषांश्चाभिजघ्नुस्तेषां शङ्खादीनां शब्दा द्यां भूमिं च बधिरी चक्रिरे। मन्दाक्रान्ता वृत्तम् ॥ १०२९ ॥ [ द्यां द्युलोकम् ॥ १०२९ ॥

---

१ ख. 'यन्नक्ष्णोर्व्या'। २ क. ख. घ 'निर्मोको।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीमाधवीये तत्सार्वज्ञ्योपायगोचरः ॥
संक्षेपशंकरजये सर्गोऽयं नवमोऽभवत् ॥ ९ ॥

अथ दशमः सर्गः ।

अथ पुरोहितमन्त्रिपुरःसरै-
र्नरपतिः कृतशान्तिककर्मभिः ॥
विहितमाङ्गलिकः स यथोचितं
नगरमास्थितमद्रगजो ययौ ॥ १ ॥

समधिगम्य पुरं परिसान्त्वित-
प्रियजनः सचिवैः सह संमतैः ॥
भुवमपालयदाहृतशासनो
नृपतिभिर्दिवमिन्द्र इवाधिराट् ॥ २ ॥

---

[ इति श्रीति । तदिति । तस्य श्रीमच्छंकरभगवत्पादस्य यत्सार्वज्ञ्यं तस्य
उपायः स गोचरो विषयो यस्य स तथेत्यर्थः । अपरं तु प्रागवदेव ] ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपूज्यपादशिष्यदत्तवं-
शावतंसरामकुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्य-
विजयडिण्डिमे नवमः सर्गः ॥ ९ ॥

अथ दशमसर्गस्य टीका ।

एवं सार्वज्ञ्योपायं सप्रपञ्चं निरूप्य कामकलातत्त्वं सपरिकरं प्रपञ्चयितुमारभते—अथ
नन्तरं कृतशान्तिककर्मभिः पुरोहितादिभिर्यथोचितं विहितमाङ्गलिक आस्थितो म...
येन स नरपतिर्नगरं ययौ । द्रुतविलम्बितं वृत्तम् ॥ १ ॥ [ कृतेति । संपादितपुन...
विर्भावप्रयुक्तशान्तिकक्रियाविशेषैरिति यावत् । यद्वा । कृतानि यानि शान्तिककर्माणि
तैरिति करण एव तृतीया । विहितेति । कृतमाङ्गलिकाचारः ] ॥ १ ॥

पुरं समधिगम्य परिसान्त्वितः प्रियजनो येन नृपतिभिराहृतं शासनं यस्य सोऽधिराट्
मतैः सचिवैः सह दिवमिन्द्र इव भुवमपालयत् ॥ २ ॥ [ अधीति । अधिकं ...
कल्याणगुणनिलयत्वेन लोकोत्तरं राजते शोभत इति तथेत्यर्थः ] ॥ २ ॥

---

१ ग. 'र्वज्ञोपा' । २ घ. 'र्ज्ञोपा' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति नृपत्वमुपेत्य वसुंधरा-
मवति संयमिभूभृति मन्त्रिणः ॥
तमधिकृत्य परं कृतसंशया
इति जजल्पुरनल्पधियो मिथः ॥ ३ ॥
मृतिमुपेत्य यथा पुनरुत्थितः
प्रकृतिभाग्यवशेन तथा स्वयम् ॥
नरपतिः प्रतिभाति न पूर्वव-
त्समुदिताखिलदिव्यगुणोदयः ॥ ४ ॥
वसु ददाति ययातिवदर्थिने
वदति गीष्पतिवद्गिरमर्थवित् ॥
जयति फाल्गुनवत्प्रतिपार्थिवा-
न्सकलमप्यवगच्छति शर्ववत् ॥ ५ ॥
अनुसवनविसृत्वरैरपूर्वै-
र्वितरणपौरुषशौर्यधैर्यपूर्वैः ॥
अनितरसुलभैर्गुणैर्विभाति
क्षितिपतिरेष परः पुमानिवाऽऽद्यः ॥ ६ ॥

---

इत्येवं नृपत्वं प्राप्य यतिराजे श्रीशंकरे भूमिमवति सति तं परमधिकृत्य तस्मिन्परस्मि-न्नल्पबुद्धयो मन्त्रिणः कृतसंशयाः सन्तः परस्परमूचुः ॥ ३ ॥

जल्पनमेवोदाहरति—मृतिमुपेत्य प्रजाभाग्यवशेन यथा पुनरुत्थितस्तथैव प्रकृतिभाग्य-वशेनैवायं न पूर्ववत्प्रतिभाति किंतु समुदितानामखिलानां दिव्यगुणानामुदयो यस्मिंस्तथा-भूतः प्रतिभातीत्यर्थः ॥ ४ ॥ [ प्रकृतीति ।

'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः ।
योनौ लिङ्गे पौरवर्गे' इति मेदिनी ] ॥ ४ ॥

गुणानेवोपवर्णयन्ति—अर्थिने ययातिवद्धनं ददाति तथाऽयमर्थविद्वाचस्पतिवद्गिरं वदति प्रतिराज्ञोऽर्जुनवज्जयति सर्वमपि महादेववज्जानाति ॥ ५ ॥ [ प्रतिपार्थिवान्प्रतिकूलनृ-पतीन् ] ॥ ५ ॥

अनुसवनं सर्वदा विसरणशीलैरपूर्वैर्दातृत्वादिभिर्नान्यस्मिन्सुलभैर्गुणैरेष भूमिपतिराद्यः परः पुमान्परमात्मेव विभाति । पुष्पिताग्रा वृत्तम् ॥ ६ ॥ [ वितरणेति । वितरणं दानं पौरुषं पराक्रमः शौर्यं शस्त्रविद्यानैपुण्यपूर्णत्वं धैर्यं महासंकटेऽप्यस्खलितविवेकत्वमेतत्पूर्वै-रेतत्प्रमुखैरिति यावत् ] ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनृतुषु तरवः सुपुष्पिताग्रा
बहुतरदुग्धदुघाश्च गोमहिष्यः ॥
क्षितिरभिमतवृष्टिराढ्यसस्या
स्वविहितधर्मरताः प्रजाश्च सर्वाः ॥ ७ ॥
कालस्तिष्यः सर्वदोपाकरोऽपि
त्रेतामत्येत्यद्य राज्ञः प्रभावात् ॥
तस्मादस्मद्राजवर्ष्म प्रविश्य
प्राप्तैश्वर्यः शास्ति कश्चिद्धरित्रीम् ॥ ८ ॥
तदयं गुणवारिधिर्यथा
प्रतिपद्येत न पूर्वकं वपुः ॥
करवाम तथेति निश्चयं
कृतवन्तः सचिवाः परस्परम् ॥ ९ ॥
अथ ते भुवि यस्य कस्यचि-
द्विगतासोर्वपुरस्ति देहिनः ॥
अविचार्य तदाशु दह्यता-
मिति भृत्यान्रहसि न्ययोजयन् ॥ १० ॥

---

किंच वृक्षा अनृतुषु सुपुष्पिताग्रा गोमहिष्यश्च बहुतरदुग्धदुघाः क्षितिश्चाभिमत वृष्टिर्यस्यां साऽऽढ्यसस्था प्रजाश्च सर्वाः स्वविहितधर्मरताः ॥ ७ ॥ [ अनृतुष्विति। यद्यप्यकाले कुसुमोद्गमो हि दुर्निमित्तमेव तथाऽप्यत्रानृतुष्वपि स्वर्तुभिन्नकालेष्वपि सम न्यतः सर्वेऽपि तरवः सुपुष्पिताग्रा एवेति व्याख्येयम् ] ॥ ७ ॥

किं बहुनाऽद्य राज्ञः प्रभावात्सर्वदोषाकरोऽपि कलिकालस्त्रेतामतिक्रामति तत उत्कृष्टो भवति । तस्मात्प्राप्तैश्वर्यः कश्चिदस्मद्राज्ञः शरीरं प्रविश्य पृथिवीं शास्ति । शालिनी वृत्तम् ॥ ८ ॥

[ 'तिष्यो नक्षत्रभेदे स्यात्कलौ धात्र्यां च योषिति' इति मेदिनी ] ॥ ८ ॥

तत्तस्मादयं गुणसमुद्रो यथा पूर्वं शरीरं न प्राप्नुयात्तथा करवामेत्येवं सचिवाः परस्परं निश्चयं कृतवन्तः । वियोगिनी वृत्तम् ॥ ९ ॥

अथैवं निश्चयकरणानन्तरं यस्य कस्यचिन्मृतकस्य देहिनः शरीरं भूमावस्ति तदविचार्याऽऽशु दह्यतामित्येवं भृत्यानेकान्ते न्ययोजयन् ॥ १० ॥

---

१ ग. घ अथान°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ राज्यधुरं धराधिपः
परमाप्तेषु निवेश्य मन्त्रिषु ॥
बुभुजे विषयान्विलासिनी-
सचिवोऽन्यक्षितिपालदुर्लभान् ॥ ११ ॥
स्फटिकफलके ज्योत्स्नाशुभ्रे मनोज्ञशिरोगृहे
वरयुवतिभिर्दीव्यन्नक्षैर्दुरोदरकेलिषु ॥
अधरदशनं बाह्वावाहं महोत्पलताडनं
रतिविनिमयं राजाऽकार्षीद्ग्लहं विजये मिथः ॥ १२ ॥
अधरजसुधाश्लेषाद्रुच्यं सुगन्धि मुखानिल-
व्यतिकरवशात्कामं कान्ताकरात्तमतिप्रियम् ॥
मधु मदकरं पायं पायं प्रियाः समपायय-
त्कनकचषकैरिन्दुच्छायापरिष्कृतमादरात् ॥ १३ ॥
मधुमदकलं मन्दस्विन्नं मनोहरमापणं
निभृतपुलकं सीत्काराढ्यं सरोरुहसौरभम् ॥
दरमुकुलिताक्षीपल्लज्जं विसृत्वरमन्मथं
प्रचरदलकं कान्तावक्त्रं निपीय कृती नृपः ॥ १४ ॥

---

एवं मन्त्रिणां जल्पनादि ... त्यप्रूप्य राज्ञश्चरितं वर्णयितुमुपक्रमते—अथ राजदेहप्रवेशाद्य-नन्तरं भूमिपः परमाप्तेषु मन्त्रि... ... राज्यभारं निवेश्य विलासिनीसहायोऽन्यभूमिपालानां दुर्लभान्विषयान्बुभुजे ॥ ११ ॥ [ ... ल्यंभयानिष्टशब्दादीन् ] ॥ ११ ॥

ज्योत्स्नावच्छुभ्रे स्फटिकफलके ... न्य... नोज्ञानि शिरोगृहाण्युपबर्हणानि यस्मिंस्तस्मिन्दुरोदरकेलिषु द्यूतकारक्रीडास्वक्षैर्दीव्यन्... प्रमदा मिथो जयेऽधरदशनं बाह्वावाहं भुजेनोद्वहनं महोत्पलेन ताडनं रतिविपर्ययं ग्लहं ... ... मकार्षीत्। हरिणी वृत्तम्। 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' ... लक्षणात् ॥ १२ ॥ [ वरेति। श्रेष्ठसुन्दरीभिरित्यर्थः ॥ १२ ॥

अधरोज्जातायाः सुधायाः श्लेषाद्रुच्यं मुख... ...ाह- ...ना... वायोर्व्यतिकरवशात्संपर्कवशात्सुगन्धि कान्तानां करेभ्यः प्राप्तमत एवातिप्रियं मदकरमिन्दुच्छा... ...यया चन्द्रप्रतिबिम्बेन परिष्कृतं मधु मद्यं कनकचषकैः[2] ... ...ः समपाययत् ॥ १३ ॥ [ यथेष्टमादरात्सुवर्णपात्रैः पीत्वा पीत्वा प्रियमाः' रुच्यं रुचय आस्वादयताया अर्हम् ] ॥ १३ ॥

मधुमदेन कलमव्यक्ताक्षरं मन्दस्विन्नमीषत्स्वेदयुक्तं ... कं मनोहरं मापणं यस्मिन्निभृतरोमाञ्चं[4]

---

१ ख. घ. 'निभृत'। २ ख. 'राजनिता'। ३ ग. 'थेष्टं पी'। ४ ख. घ. 'निभृत'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवृतजघनं संदष्टोष्ठं प्रणुन्नपयोधरं
प्रसृतभणितं प्राप्तोत्साहं रणन्मणिमेखलम् ॥
निभृतकरणं नृत्यद्गात्रं गतेतरभावनं
प्रसृमरसुखं प्रादुर्भूतं किमप्यपदं गिराम् ॥ १५ ॥
मनसिजकलातत्त्वाभिज्ञो मनोज्ञविचेष्टितः
सकलविषयव्यावृत्ताक्षः सदानुसृतोत्तमः ॥
कृतकुचगुरूपास्त्याऽत्यन्तं सुनिर्वृतमानसो
निधुवनवरब्रह्मानन्दं निरर्गलमन्वभूत् ॥ १६ ॥

---

सीत्कराढ्यं कमलस्य सौरभवत्सौरभं यस्य विसृत्वरः प्रसरणशीलो मन्मथो यत्रैतादृशं कान्तामुखं निपीय नृपः कृतकृत्योऽभूत् ॥ १४ ॥ [ प्रचलदिति । प्रकर्षेण चञ्चलाः स्खला अलकाः 'अलकाश्चूर्णकुन्तलाः' इत्यमरात्सौगन्ध्याधायकपटवासादिचूर्णविशेषसंस्कृतकेशा यस्य तत्तथेत्यर्थः । * प्रचरदिति पाठेऽपि रलयोः सावर्ण्यादयमेवार्थः ॥ १४ ॥ ]

विवृते आवरणरहिते जघने यस्मिन् । संदष्टोऽधरोष्ठो यस्मिन् । प्रणुन्नौ प्रकर्षेण पीडितौ स्तनौ यस्मिन् । प्रसृतं भणितं रतिकूजितं यस्मिन् । प्राप्त उत्साहो यस्मिन् । रणन्ती मणिमेखला यस्मिन् । निभृतमासादितं करणं क्रियाभेदः संवेशनं वा यस्मिन् ।

'करणं हेतुकर्मणोः ।
क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च'

इति मेदिनी । नृत्यन्ति गात्राणि यस्मिन्गतेतरस्य भावना यस्मात्तथाभूतं वाचामगम्यं किमप्यतिशयितं सुखं प्रादुर्भूतमित्यर्थः ॥ १५ ॥

तत्रापि ब्रह्मानन्दमेवान्वभूदित्याह—मनसिजेति ।

"श्रद्धा प्रीती रतिश्चैव धृतिः कीर्तिर्मनोभवा ।
विमला मोदिनी घोरा मदनोत्पादिनी मदा ।
मोहिनी दीपनी चैव ज्ञेया वशकरी तथा ।
रञ्जनी चैव मदना कलास्त्वङ्गेषु सर्वशः ।
दक्षिणांशं समाश्रित्य आशिरश्चरणावधि ।

---

* आदर्शपुस्तकेषु द्वयमेवोपलभ्यते ।

---

१ क. 'क्षिणङ्कं स° । २ ग. 'णांसं स° ।

पुरेव भोगान्बुभुजे महीभृ-
त्स भोगिनीभिः सहितोऽध्यरंस्त ॥
कंदर्पशास्त्रानुगतः प्रवीणै-
र्वात्स्यायने तच्च निरैक्षताद्धा ॥ १७ ॥
वात्स्यायनप्रोदितसूत्रजातं
तदीयभाष्यं च निरीक्ष्य सम्यक् ॥
स्वयं व्यधत्ताभिनवार्थगर्भं
निबन्धमेकं नृपवेषधारी ॥ १८ ॥

---

पादे गुल्फे तथोरौ च भगे नाभौ कुचे हृदि ।
कक्षे कण्ठे तथौष्ठे च गण्डे नेत्रे श्रुतावपि ।
ललाटे च शिरोदेशे वसेत्कामस्तिथिक्रमात् ।
दक्षे पुंसः स्त्रिया वामे शुक्ले कृष्णे विपर्ययः ”

इत्युक्तप्रकारेण मनसिजस्य कामस्य कलास्वभिज्ञो मनोज्ञं विचेष्टितं यस्य सकलवि-षयेषु व्यापारयुक्तानीन्द्रियाणि यस्य सदाऽनुसृताः प्रमदोत्तमा येन कृता या कुचलक्षण-गुरूपासना तथाऽत्यन्तं सुनिर्वृतमन्तःकरणं यस्य स निरर्गलं निराबाधं निधुवनं मैथुनम् । 'मैथुनं निधुवनं रतम्' इत्यमरः । तत्र वरो यो ब्रह्मानन्दस्तमनुभूतवान् । हरिणी वृत्तम् ॥ १६ ॥ [ सकलेति । विशेषेण तत्तत्कालावच्छेदेनाऽऽसमन्तात्तत्तद्देशावच्छे-देन वृत्तं शास्त्राद्यविरुद्धस्वाभाव्यं येषां तानि तथा सकलविषयेषु संपूर्णविहितेष्टशब्दादिषु व्यावृत्तानि सर्वदेशकालसद्वृत्तान्यक्षाणीन्द्रियाणि यस्य स तथेत्यर्थः ] ॥ १६ ॥

स महीभृत्पुरेव भोगिनीभिः प्रमदाभिः सहितो भोगान्बुभुजे । वात्स्यायने प्रवीणैः सहितश्च कामशास्त्रानुगतोऽरंस्त तच्च कंदर्पशास्त्रं स्वयं साक्षाद्दृष्टवान् । उपजाति-वृत्तम् ॥ १७ ॥

तद्दृष्ट्वा निबन्धमेकं चकारेत्याह—वात्स्यायनेन प्रोदितम् । त्रिवर्गप्रतिपत्तिः । विद्यासमुद्देशः । नागरिकं वृत्तम् । नायकसहायदूतीकर्मविमर्शः । प्रमाणकालभावेभ्यो रतावस्थापनम् । प्रीतिविशेषाः । आलिङ्गनविचाराः । चुम्बनविकल्पाः । नखरदश-नजातयः । दशनच्छेद्यविधयः । देश्या उपचाराः । संवेशनप्रकाराः । चित्ररतानि । प्रहणयोगाः । तद्युक्ताश्च सीत्कृतोपक्रमाः । पुरुषायितम् । पुरुषोपसृप्यानि ।

---

१ घ. 'स्व सम्रा' ।

पाराशर्यवनिभृति प्रविश्य राज्ञो
वर्ष्मैवं विहरति तद्विलासिनीभिः ॥
दृष्ट्वा तत्समयमतीतमस्य शिष्या
रक्षन्तो वपुरितरेतरं जजल्पुः ॥ १९ ॥
आचार्यैरवधिरकारि मासमात्रं
सोऽतीतः पुनरपि पञ्चशाश्च घस्राः ॥
अद्यापि स्वकरणमेत्य नः सनाथा-
न्कर्तुं तन्मनसि न जायतेऽनुकम्पा ॥ २० ॥
किं कुर्मः क्व नु मृगयामहे क्व यामः
को जानन्निह वसतीति नोऽभिदध्यात् ॥
विज्ञातुं कथमिममीशमहे विचिन्त्या-
प्यासिन्धु क्षितितलमन्यगात्रगूढम् ॥ २१ ॥

---

औपरिष्टकं रतारम्भावसानिकम् । रतविशेषाः । प्रणयकलहः । इत्यादिसमासन्यासार्थं सूत्रजातं तदीयं भाष्यं च सम्यङ्निरीक्ष्याभिनवार्थगर्भमेकं निबन्धममरकान्यत्वपोर्व्यधत्तेत्यर्थः ॥ १८ ॥

एवं राजदेहप्रवेशानन्तरं कृतं तदीयं चरितं निरूप्य तच्छिष्यचरितं वर्णयितुमुपक्रमते— पराशरेण प्रोक्तं भिक्षुसूत्रमधीत इति पाराशरी यतिः । ' पाराशर्यपि मस्करी ' इत्यमरः । तेषामवनिभृति राज्ञि श्रीशंकरे राज्ञः शरीरं प्रविश्यैवं तद्विलासिनीभिर्विहरति सति तस्याऽऽगमनकालं तत्संकेतं मासमात्रं वा व्यतिक्रान्तं दृष्ट्वाऽस्य शिष्याः शरीरं रक्षन्तः परस्परं जजल्पुः । प्रहर्षणी वृत्तम् ॥ १९ ॥

तज्जल्पनमुदाहरति—आचार्यैर्मासमात्रमवधिः कृतः सोऽतीतः पुनरपि पञ्च षट् दिनानि व्यतीतान्यद्यापि स्वशरीरं प्रविश्यास्मान्सनाथान्कर्तुं तस्य मनसि करुणा न जायते ॥ २० ॥

तस्मात्किं कुर्मः क्व गच्छामः । ननु क्वचिद्गत्वा कश्चन प्रष्टव्य इत्याशङ्क्याऽऽहुः— जानन्सन्निह वसतीति नोऽस्मभ्यं कोऽभिदध्यात् । ननु समुद्रपर्यन्तं क्षितितलमन्विष्य स्वयमेव विज्ञेय इति तत्राऽऽहुः—आसिन्धु भूमितलं विचिन्त्यान्विष्यापीमं गुरुं विज्ञातुं किं समर्था भवामो यतोऽन्यशरीरे गूढम् ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरुणा करुणानिधिना ह्यधुना
यदि नो निहिता विहितास्त्यजिताः ॥
जगति क्व गतिर्भजतां त्यजतां
स्वपदं विपदन्तकरं तदिदम् ॥ २२ ॥
निःशेषेन्द्रियजाड्यह्वन्नवनवाह्लादं मुहुस्तन्वती
नित्याश्लिष्टरजोयतीशचरणाम्भोजाश्रया श्रेयसी ॥
निष्प्रत्यूहविजृम्भमाणवृजिनस्योद्वासना वासना
निःसीमा हृदयेन कल्पितपरीरम्भा चिरं भाव्यते ॥ २३ ॥
फलितैरिव सत्त्वपादपैः
परिणामैरिव योगसंपदाम् ॥
समयैरिव वैदिकश्रियां
सशरीरैरिव तत्त्वनिर्णयैः ॥ २४ ॥
सधनैर्निजलाभवैभवा-
त्सकुटुम्बैरुपशान्तिकान्तया ॥
अतदन्यतयाऽखिलात्मकै-
रनुगृह्येय कदा नु धामभिः ॥ २५ ॥

---

तथा करुणानिधिर्गुरुरपि यदि सनिधिं न विधास्यति तर्ह्यस्माकं क्वापि गतिर्नास्तीत्याशयेनाऽऽहुः—करुणानिधिना करुणाऽपि यदि त्यक्त्वा वयमधुना संनिहिता न विहितास्तर्हि विपदन्तकरं तत्स्वपदं भजतां पुनश्चेदं सर्वं त्यजतां जगति क्व गतिर्न क्वापीत्यर्थः। 'इह तोटकमम्बुधिसैः प्रथितम्' ॥ २२ ॥ [ स्वपदं ब्रह्मात्मैक्यलक्षणमद्वैतस्थानम् ]॥ २२ ॥

नन्वेवंभूतगुरुविरहवतां भवतां कथं जीवनमिति तत्राऽऽहुः—सर्वेन्द्रियजाड्यहृद्यो नवीननवीनाह्लादस्तं मुहुर्वितन्वती पुनश्च नित्यमश्लिष्टमस्पृष्टं रजो याभ्यां ते रजोगुणलक्षणपांसुविनिर्मुक्तयतीशस्य चरणकमले आश्रयो यस्या अत एव श्रेयस्यतिश्रेष्ठा पुनश्च निष्प्रत्यूहं निर्विघ्नं यथा स्यात्तथा विजृम्भमाणस्य वृजिनस्योद्वासना विनाशिका निरवधिरूपा वासना सा हृदयेन कल्पिताऽऽलिङ्गना चिरं भाव्यते। तथाच गुरुचरणवासनाभावनमेव जीवनसाधनमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥ [ वासना भावनाख्यविजातीयप्रत्ययरहितसजातीयप्रत्ययसंततिरिति यावत् ] ॥ २३ ॥

तत्र कश्चिदौत्सुक्यमाविष्कुर्वन्नाह—सत्त्वपादपैर्व्यवसायरूपवृक्षैः फलितैरिव योगसं-

---

१ घ. °त्सकलत्रैरु°। २ ख. ध. 'वीनो न°। ३ ख. घ. 'वीन आह्ला°। ४ क. ख. घ. 'त्र केचिदौ'। ५ क. ख. घ. 'र्वन्त आहुः। स°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविनयं विनयन्नसतां सता-
मतिरयं तिरयन्भवपावकम् ।
जयति यो यतियोगभृतां वरो
जगति मे गतिमेष विधास्यति ॥ २६ ॥
विगतमोहतमोहतिमाप्य यं
विधुतमायतमा यतयोऽभवन् ॥
अमृतदस्य तदस्य दृशः सृता-
ववतरेम तरेम शुगर्णवम् ॥ २७ ॥
शुभाशुभविभाजकस्फुरणदृष्टिमुष्टिंधयः
क्षपान्धमतपान्थदुष्कथकदम्भकुक्षिंभरिः ॥
कदा भवसि मे पुनः पुनरनाद्यविद्यातमः
प्रमृद्य गलितद्वयं पदमुदञ्चयन्नद्वयम् ॥ २८ ॥

---

पदां परिणामैरिव वैदिकश्रियां समयैर्मासैरिव 'समयः शपथे भाससंपदोः' इति विश्व-
काशः । तत्त्वनिर्णयैः शरीरवद्भिरिव निजलाभवैभवात्सधनैरिवोपशान्तिलक्षणया कान्त-
कलत्रसहितैरिव तेभ्योऽन्यस्याभावतया सकलात्मकैस्तेजोभिः कदान्वनुगृह्येयानुगृहीतो भवि-
ष्यामीति द्वयोरर्थः । वियोगिनी वृत्तम् ॥ २४ ॥ २५ ॥ [ सत्त्वं सत्त्वगुणस्तद्रूपा
ये पादपाः कल्पद्रुमास्तैः फलितैरिव स्थितैरित्यर्थः ] ॥ २४ ॥ २५ ॥

तत्र कश्चिदतीव दुःखित आचार्य एव मम गतिं विधास्यतीत्याह—असतामविनयं
विनयन्दूरीकुर्वन्सतामतिवेगवन्तं संसाराग्निं तिरयन्नपगतं चरिष्यन्यो यतियोगभृतां वरो
जगति जयत्येष मम गतिं विधास्यति । द्रुतविलम्बितं वृत्तम् ॥ २६ ॥ [ यतीति ।
यतीन्द्रयोगीन्द्राणां मध्य इत्यर्थः ]॥ २६ ॥

केचित्तु तद्दर्शनेनैव शोकसागरस्य तरणं मत्वाऽऽहुः—यं विगता मोहलक्षणतमसां हं-
तिर्यस्मान्निरावरणतत्त्वज्ञानवन्तं प्राप्य यतयो विधुतमायतमा अतिशयेन विधुता
माया यैस्तथाभूता अभवंस्तस्यामृतप्रदस्य चक्षुषो मार्गे यदाऽवतरेम तदा शोकसाग-
तरेम ॥ २७ ॥ [ अमृतदस्य कैवल्यप्रदस्यास्य श्रीभाष्यकारस्य ] ॥ २७ ॥

सकलानर्थनिवर्तकमद्वयानन्दप्रापकं तदीयमुपदेशं स्मरन्कश्चिदाह—पुनः पुनर-
नाद्यविद्यातमो विमृद्य गलितद्वैतमद्वयं पदमुदञ्चयन्प्रकाशयन्पुण्यापुण्यविभाजक-
रणदृष्टेर्मुष्टिंधयः साराकर्षको राज्यन्धकारात्मकेषु मतेषु पान्थानां मध्ये ये दुष्क-

---

प्रमृज्य । २ क ख. घ. °हीता भूयास्मेति । ३ ख 'तद' । ४ क विधुत ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मर्त्यानां निजपादपङ्कजजुषामाचार्य वाचा यया
रुन्धानो मतिकल्मषं त्वमिह किंकुर्वाणनिर्वाणया ॥
द्राङ्नाऽऽयास्यसि चेत्सुधीकृतपरीहासस्य दासस्य ते
दुःखान्तो न भवेदितीड्य स पुनर्जानीहि मीनीहि मा ॥ २९ ॥

इति खेदमुपेयुषि मित्रजने
प्रतिपन्नयतिक्षितिभृन्महिमा ॥
शुचमर्थवता शमयन्वचसा
निजगाद सरोरुहपाद इदम् ॥ ३० ॥

पर्याप्तं नः क्लैब्यमुपेत्यात्र सखायः
कृत्वोत्साहं भूमिमशेषामपिधानात् ॥
अन्वेष्यामो भूविवराण्यप्यथ च द्यां
यद्वद्देवं देवमनुष्यादिषु गूढम् ॥ ३१ ॥

---

कास्तेषां दम्भस्य कुक्षिंभरिर्भक्षक कदा भवसि। पृथ्वी वृत्तम् ॥ २८ ॥ [ क्षपेति। क्षपान्धसदृशान्यर्थप्रकाशशालित्वाद्रात्र्यन्धसमानि यानि भेदवादिमतानि तत्र ये पान्थदुष्कपकाः पान्थवन्मुमुक्षुं प्रति दुर्मार्गप्रदर्शकाः सकलभेदवादिनस्तेषां ये दम्भास्तेषां कुक्षिंभरिभक्षक इत्यर्थः ]॥ २८ ॥

कश्चित्त्वतिविह्वलः सन्नवश्यं दर्शनं देहीत्याशयेनाऽऽह—हे आचार्येह जीवद्दशायामेव किंकुर्वाणं किंकरतां प्राप्तं निर्वाणं यस्यास्तया यया वाचा निजपादपद्मजुषां मर्त्यानां बुद्धिकल्मषं समूलं रुन्धानस्त्वं शीघ्रं नाऽऽयास्यसि चेत्तर्हि सुबुद्धिभिः कृतः परिहासो यस्य तस्य ते दासस्य मे दुःखान्तो न भवेदिति हे स्तुत्य स पुनस्त्वं जानीहि मां मा मीनीहि न नाशय। शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

इत्येवं मित्रजने खेदमुपेयुषि सति परिज्ञातो यतिराजस्य स्वगुरोर्महिमा येन स पद्मपादोऽर्थवता वचनेन शोकं शमयन्निदं वक्ष्यमाणमुवाच। तोटकं वृत्तम् ॥ ३० ॥

यदुवाच तदाह—नोऽस्माकं क्लैब्यं पर्याप्तमतो हे सखाय उपेत्य मिलित्वोत्साहं कृत्वा सर्वां भूमिमपिधानात्तिरोधानादन्वेष्यामोऽथानन्तरं भूविवराणि पातालानि तदनन्तरं दिवं देवमनुष्योरगादिगूढं महादेवमिव। 'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्' ॥ ३१ ॥ [ क्लैब्यं दैन्यम्। उपेत्य प्राप्य। नोऽस्माकम्। पर्याप्तमलं दैन्यमितः परं नैव कर्तव्यमित्यर्थः ]॥ ३१ ॥

---

१ क. °नादेवान्वे°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनिर्विण्णचेताः समास्थाय यत्नं
सुदुष्प्रापमप्यर्थमाप्नोत्यवश्यम् ॥
मुहुर्विघ्नजालैः सुरा हन्यमानाः
सुधामप्यवापुर्ह्यनिर्विण्णचित्ताः ॥ ३२ ॥
यद्यप्यन्यगात्रप्रतिच्छन्नरूपो
दुरन्वेषणः स्याद्गुरुर्नस्तथाऽपि ॥
स्वभानूदरस्थः शशीव प्रकाशै-
स्तदीयैर्गुणैरेव वेत्तुं स शक्यः ॥ ३३ ॥
इक्षुचापागमापेक्षया निर्गतो
वर्ष्म तस्योचितं कृष्णवर्त्मद्युतिः ॥
विभ्रमाणां पदं सुभ्रुवां भूपतेः
प्राप्तुमर्हत्यकामाग्रणीः संयमी ॥ ३४ ॥

---

एवमुक्तेऽपि दुःसाध्यमालोच्योत्साहमकुर्वत आलक्ष्याऽऽह—अनिर्विण्णं निर्वेदरहितं चित्तं यस्य स यत्नं सम्यगास्थाय सुदुष्प्रापमप्यर्थमवश्यं प्राप्नोति हि यस्मान्मुहुर्विघ्नजालैर्हन्यमाना अपि सुरा अनिर्विण्णचित्ता अतिदुर्लभामपि सुधां प्रापुः । हि यस्मादनिर्विण्णचित्ता अत एवंभूता अपि देवाः सुधामप्यवापुरितिवा । 'भुजंगप्रयातं भवेद्यैश्चतुर्भिः' ॥ ३२ ॥

यद्यप्यन्यगात्रप्रतिच्छन्नरूपत्वान्नोऽस्माकं गुरुर्दुरन्वेषणः स्यात्तथाऽपि यथा राहूदरस्थोऽपि चन्द्रः स्वीयैः प्रकाशैर्विज्ञातुं शक्यस्तद्वत्तदीयैर्गुणैरेव स गुरुर्वेत्तुं शक्यः ॥ ३३ ॥ [ स्वभान्विति । सुतरां न विद्यन्ते भानवः किरणा अस्येति स्वभानुः सर्वथा तमोरूपत्वेन प्रकाशहीनो राहुस्तस्योदरमिव यदुदरं मुखं तत्र तिष्ठतीति तथा ] ॥ ३३ ॥

ननु तथाऽपि क्व गतो यत्रान्वेष्य इति चेत्तत्राऽऽह—कृष्णवर्त्मनो वह्नेर्द्युतिरिव द्युतिर्यस्य स इक्षुधन्वनः कामस्याऽऽगमापेक्षया यतिशरीरान्निर्गतः सुभ्रुवां विभ्रमाणां पदं कामशास्त्रस्योचितं राज्ञः शरीरं प्राप्तुमर्हति । कामागमापेक्षयैव गतो न तु तज्जन्यसुखेच्छयेति बोधयितुमाह—कामविनिर्मुक्तानामग्रणीः । 'रैश्चतुर्भिर्युता स्रग्विणी संमता' ॥ ३४ ॥

---

१ क. ग. घ °द्युति । वि° । २ क. ग. घ. °ह । इ° । ३ ग. चित्रभानुकान्ति र्य° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यतृप्ताग्रयाऽऽयाश्रिते निर्वृताः
प्राणिनो रोगशोकादिना नेक्षिताः ॥
दस्युपीडोज्झिताः स्वस्वधर्मे रताः
कालवर्षी स्वराण्मेदिनी कामसूः ॥ ३५ ॥

तदिहाऽऽलस्यमपास्य विचेतुं
निरवधिसंसृतिजलधेः सेतुम् ॥
देशिकवरपदकमलं यामो
न वृथाऽनेहसमत्र नयामः ॥ ३६ ॥

इति जलरुहपदवचनं सर्वे
मनसि निधाय निराकृतगर्वे ॥
कांश्चित्तत्र निवेश्य शरीरं
रक्षितुमन्ये निरगुरुदारम् ॥ ३७ ॥

ते चिन्वन्तः शैलाच्छैलं
विषयाद्विषयं भुवमनुवेलम् ॥
प्रापुर्धिकृतविबुधनिवेशा-
न्स्फीतानमरकनृपतेर्देशान् ॥ ३८ ॥

---

नन्वेवमपि राज्ञां बहुत्वात्कथमस्य देशस्य राज्ञः शरीरे प्रविष्ट इति विज्ञेयमिति चेत्तत्राऽऽह—नित्यतृप्ताग्रगामिणाऽस्मद्गुरुणाऽऽश्रिते देशे प्राणिन आनन्दिता यतो रोगशोकादिना नावेक्षिता यतश्चोरपीडाविनिर्मुक्ताः स्वस्वधर्मे रताश्च स्युः स्वराडिन्द्रः कालवर्षी स्याद्भूमिश्च कामसूः स्यात् ॥ ३५ ॥ [ कामेति । वाञ्छितफलप्रदा ]

तत्तस्मादस्मिन्काल आलस्यं विहायानाद्यनन्तसंसारसमुद्रस्य सेतुं देशिकवरचरणारविन्दं विचेतुं गच्छामोऽस्मिन्देशे वृथा कालं न नयामः । 'मात्रासमकं नवमो ल्गन्तम्' ॥३६॥

इत्येवं पद्मपादस्य वचनं निराकृतगर्वे मनसि सर्वे निधाय कांश्चिदुदारं गुरुशरीरं रक्षितुं तस्मिन्स्थाने निवेश्यान्ये निर्गताः ॥ ३७ ॥

ते पर्वतात्पर्वतं देशाद्देशं भूमिमनिशं चिन्वन्तो धिक्कृता देवानां निवेशा यैस्तान्स्फीतानमरकनृपतेर्देशान्प्रापुः प्रासवन्तः ॥ ३८ ॥

४९

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृत्वा पुनरप्युत्थितमेनं
श्रुत्वा वैन्यदिलीपसमानम् ॥
त्यक्त्वा विरहजदैन्यममन्दं
मत्वाऽऽचार्यं धैर्यमविन्दन् ॥ ३९ ॥

ते च ज्ञात्वा गानविलोलं
तरुणीसक्तं धरणीपालम् ॥
विविशुः स्वीकृतगायकवेषा
नगरं विदितसमस्तविशेषाः ॥ ४० ॥

राज्ञे ज्ञापितविद्यातिशया-
स्ते तत्संग्रहविधृतातिशयाः ॥
रमणीशतमध्यगमवनीन्द्रं
ददृशुस्तारावृतमिव चन्द्रम् ॥ ४१ ॥

वरचामरकरतरुणीकङ्कण-
रञ्जितमनोहरपश्चाद्भागम् ॥
गीतिगतिज्ञोद्गीतश्रुतिसुख-
तानसमुल्लसदग्रिमदेशम् ॥ ४२ ॥

---

मृत्वा पुनरप्युत्थितममरकसंज्ञं नृपं पृथुदिलीपतुल्यं श्रुत्वाऽऽचार्यं मत्वाऽमन्दं विर[illegible] जन्यं दैन्यं हित्वा धैर्यं प्रापुः ॥ ३९ ॥

ते च तरुणीषु सक्तं गानविलोलं भूपालं ज्ञात्वा स्वीकृतगायकवेषा नगरं विविशुः [illegible] विदितसमस्तविशेषाः ॥ ४० ॥

राज्ञे ज्ञापितगानविद्यातिशया यतस्तस्य राज्ञः संग्रहणाय विधृतोऽतिशयो [illegible] तारावृतं चन्द्रमिव तरुणीमध्यगतं भूमीन्द्रं ददृशुः ॥ ४१ ॥

भूमीन्द्रं विशिनष्टि—वरचामरकराणां तरुणीनां कङ्कणै रञ्जितो मनोहरः [illegible] द्भागो यस्य तं पुनश्च गीतिगतिज्ञैरुद्गीतेन श्रवणसुखेन तानेन समुल्लसन्नग्रिमदे[illegible] यस्य तम् ॥ ४२ ॥ [ वरमुन्नतं यच्चामरं तद्विशिष्टाः करा हस्ता यासामेव[illegible] यास्तरुण्यस्तासां यानि *कङ्कणरवणानि रत्नवलयसिञ्जितानि तैर्मनोहरः [illegible] पश्चाद्भागो यस्य स तथा ] [ गीतीति । गीतिगतिज्ञैः संगीतशास्त्रज्ञैर्यदुत्कर्षेण [illegible] मत एव श्रुतिसुखं कर्णानन्दजनकं यत्तानमेकतानीभूतनिषादादिसप्तस्वरगतमन्द्र[illegible]

---

* एतेन मूले कङ्कणरञ्जितेत्यत्र कङ्कणरवणेति पाठो ज्ञायते । अयमेव च छन्दोऽनु[illegible] समीचीनतर इति भाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धृतचामीकरदण्डसितातप-
वारणरञ्जितरत्नकिरीटम्॥
श्रितविग्रहमिव रतिपतिमाश्रित-
भुवमिव सान्तःपुरममरेशम्॥ ४३॥
रुचिरवेषाः समासाद्य तां संसदं
नयनसंज्ञावितीर्णासना भूभुजा॥
समतिसृष्टास्ततः सुस्वरं मूर्छना-
पदविदस्ते जगुर्मोहयन्तः सभाम्॥ ४४॥

---

रताराख्यत्रिविधभेदभिन्नैकविंशत्यन्यतममूर्छनाविशेषजातं तेन समुल्लसन्नग्रिमदेशो यस्य तमित्यर्थः ]॥ ४२॥

पुनश्च धृतश्चामीकरो हिरण्मयो दण्डो यस्य तथाभूतेन सितेनाऽऽतपवारणेन च्छत्रेण रञ्जितं रत्नकिरीटं यस्य तं स्वीकृतविग्रहं रतिपतिमनङ्गमिव। यद्वा। श्रितभूमिमन्तःपुर-सहितं देवेशं पुरंदरमिव॥ ४३॥

एवंभूतं राजानं दृष्ट्वा यत्कृतवन्तस्तदाह—रुचिरवेषास्ते संसदं समासाद्य नयनसंज्ञया दत्तासना राज्ञा सम्यगाज्ञप्ता मूर्छनापदविदस्ते सभां मोहयन्तः सुस्वरं जगुः। मूर्छनाल-क्षणं तु—

'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्।
सा मूर्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च' इति।

तत्र स्वराः—

'श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः।
पञ्चमो धैवतश्चाथ निषाद इति सप्त ते।' इत्युक्ताः सप्त।

सामान्यतः स्वरस्वरूपं तु—

'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः।
स्वतो रञ्जयति श्रोतृश्चित्तं स स्वर उच्यते' इति।

श्रुतिर्नाम स्वरारम्भकावयवविशेषस्तदुक्तम्—

'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः।
सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा' इति।

---

१ ख. 'त्संमे इ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृङ्ग तव संगतिमपास्य गिरिशृङ्गे
तुङ्गविटपिनि सङ्गमजुषि त्वदङ्गे ॥
स्वाङ्गरचिताः सकलुषान्तरङ्गाः
संगमकृते मङ्गमुपयान्ति भृङ्गाः ॥ ४५ ॥

---

अथ ग्रामलक्षणम्—

'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि ।
तथा स्वराणां संदोहो ग्राम इत्यभिधीयते ।
षड्जग्रामो भवेदादौ मध्यमग्राम एव च ।
गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम् ।
मन्दाचरोऽथ जीमूतः समुद्रो ग्रामकास्त्रयः ।
षड्जमध्यमगान्धारांस्त्रयाणां जन्महेतवः' इति ।

तथाचैवंभूतग्रामत्रयेऽपि प्रत्येकं सप्त सप्त च मूर्छना इत्येकविंशतिमूर्छना भवन्ति । तथाभूतमूर्छनापदविदस्ते सुस्वरं जगुरित्यर्थः । यत्र च्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ ४४ ॥

गानव्याजेन स्वगुरुप्रतिबोधनं कृतवतां तद्गानमुदाहरति—हे भृङ्ग श्रुतिसूत्रादिकुसुममकरन्दास्वादनशील तव संगतिं संगममपास्य विहायोच्चवृक्षवति गिरिशृङ्गे संगमजुषि त्वदङ्गे तव शरीरे सति स्वच्छरीरस्य रक्षणाय रचिताः सकलुषं दुःखयुक्तमन्तरङ्गमन्तःकरणं येषां ते भृङ्गाः शिष्यास्तव संङ्गमार्थं भङ्गमुपयान्ति भेदं प्राप्नुवन्तीत्यर्थः । 'इन्दुवदना भजसनैः सगुरुयुग्मैः' ॥ ४५ ॥ [ अथ ते पद्मपादादयः संगतिच्छद्मना तादृशं श्रीमद्भगवत्पादं प्रति श्रीमद्भिरिन्दुवदनावलम्बनेन च्छन्दःसदृशस्य सरस्वत्यादिकं प्रति मासमात्रोत्तरं प्रत्युत्तरं प्रदास्यामीत्यादिप्रतिज्ञाघटितस्ववाक्यस्य भङ्ग एव संपादित इति द्योतयितुम् 'इन्दुवदना भजसनैः सगुरुयुग्मैः' इति डिण्डिमोदाहृतेन्दुवदनावृत्तेन प्रथमपादे समुपक्रम्याग्रे यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तमिति. तदुदाहृतमार्गेण क्षणैकादशगीतानुकूलगद्यैः स्वगुरुमपि नृपशरीरावच्छिन्नत्वात्प्रबोधार्हतया प्रबोधयामासु-रिति सूचयंस्तद्गीतान्युदाहरति—मृङ्गेत्यादिना ] ॥ ४५ ॥

---

१ क. °पयान्ति । २ क. °म् । नन्दावर्तोऽथ । ३ क. सुभद्रो । ४ क. 'तिमूर्छ' ५ क. °पयान्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पञ्चशरसमयसंचयकृते प्राञ्चं
मुञ्चन्निवेह संचरसि प्रपञ्चम् ॥
पञ्चजनमुख पञ्चमुखमप्यनञ्चं-
स्त्वं च गतिरिति किंच किल वञ्चितोऽसौ ॥ ४६ ॥

पर्वशशिमुख सर्वमपहाय पूर्वं
कुर्वदिह गर्वमनुसृत्य हृदपूर्वम् ॥
न स्मरासि वस्त्वस्मदीयमिति
कस्मात्संस्मर तदस्मर परमस्मदुक्त्या ॥ ४७ ॥

---

पञ्चशरस्य कामस्य यः समयः कलादिरूपः संकेतः सिद्धान्तो वा तस्य संचयार्थं प्राञ्चं शिवगुरूक्तं त्वं प्रपञ्चं शरीरं मुञ्चन्निवेहास्मिन्नाजशरीरे स्थाने वा संचरसि तथाच हे पञ्चजनेषु मनुजेषु मुख श्रेष्ठ । यद्वा । 'यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितस्तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' इति श्रुत्युक्तानां सांख्यरीत्या

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः'

इति पञ्चविंशतितत्त्वानां मुख शुद्धात्मन् । पञ्चजनपदस्य पञ्चपञ्चजनपरत्वाश्रयणात् । सिद्धान्तरीत्या वाक्यशेषस्थानां प्राणचक्षुःश्रोत्रान्नमनसां पञ्चजनानां मुखाधिष्ठानेत्यर्थः । पञ्चाननमप्यगच्छञ्शिवं स्वस्वरूपमप्यनाप्नुवन्गतिश्चासौ त्वमिति हेतोः कुतः खलु वञ्चितोऽसि । गाथा ॥ ४६ ॥ [ असौ निरुक्तप्राक्तनशरीरावच्छेदेन शरणागतः शिष्यसंघः । त्वं किल गतिस्त्वमेव शरणागतास्मदादिजनानां मुक्तिरिति हेतोः । पञ्चमुखमपि काशी-मरणावच्छेदेन ब्रह्माद्वैतात्मैक्यसाक्षात्कारोत्पादनद्वारा कैवल्यप्रदं शिवमपीत्यर्थः । अनञ्चन्पूजयन्सन्वञ्चितः । चोऽवधारणे । किमाक्षेपे । उभयभ्रष्टत्वान्नष्ट एव किमिति योजना ] ॥ ४६ ॥

किंच हे शरत्पूर्णमासीचन्द्रमुख पूर्वं सर्वं शान्तिदान्त्यादिकमपहायेह गर्वं कुर्वन्मानसमनुसृत्यास्मदीयं वास्त्विति कस्मान्न स्मरसि तत्तस्माद्धे अस्मराकामास्मदुक्त्या परं स्वस्वरूपं संस्मर तत्परमिति वा ॥ ४७ ॥ [ गर्वं तादात्म्याभिमानं कुर्वत्संपादयत् । एतादृशमपूर्वमभिनवं हृदन्तःकरणम् ] ॥ ४७ ॥

---

१ क. 'तोऽसि । २६ प° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेतिनेत्यादिनिगमवचनेन
निपुणं निषिध्य मूर्तामूर्तराशिम् ॥
यदशक्यनिह्नवं स्वात्मरूपतया
जानन्ति कोविदास्तत्त्वमसि तत्त्वम् ॥ ४८ ॥
खाद्यमुत्पाद्य विश्वमनुप्रविश्य
गूढमन्नमयादिकोशतुपजाले ॥
कवयो विविच्य युक्त्यवघाततो
यत्तण्डुलवदाददति तत्त्वमसि तत्त्वम् ॥ ४९ ॥

---

अस्मदुक्त्या परं स्मरेत्युक्त्वा 'अथात आदेशो नेति नेति । अस्थूलमनण्वह्रस्व... र्थमनन्तरमवाह्यमपूर्वमनपरम्'

'अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात्प्रमुच्यते

इत्यादिश्रुतिभिस्तं स्मारयन्ति—नेतिनेत्यादिनिगमवचनेन मूर्तामूर्तराशिं सम्यङ्नि... सर्वाधिष्ठानत्वान्निरवधिबाधायोगात्प्रतिषेद्धुः स्वरूपत्वेन प्रतिषेधसाक्षितयाऽवस्थितत्वा... स्यापि सत्यमस्तीत्येवोपलब्धव्यः । 'असन्नेव स भवति' असद्ब्रह्मेति वेद चेद्' ... श्रुतेश्च निषेद्धुमशक्यं यत् 'अहं ब्रह्मास्मि' इति स्वात्मरूपतया विद्वांसो जान... तत्तत्त्वं परमार्थवस्तु त्वमसि ॥ ४८ ॥

तथा पञ्चकोशविवेकेन कवयो यदात्मत्वेन प्रतिपद्यन्ते तत्तत्त्वं त्वमसीति स्मारयन्ति— आकाशादिकं विश्वमुत्पाद्यानुप्रविश्यान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयकोश... तुपजाले गूढं युक्तिलक्षणावघातेन कवयो विविच्य तण्डुलवद्यदाददति तत्तत्त्वं त्वम... तथाच श्रुतिः—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायो... राग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्ना... त्पुरुषः । स वा एष पुरुषोऽन्नरसमयः" । "तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽ... आत्मा प्राणमयः" । "तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आ... मनोमयः" "तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः" "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः" । "सोऽकामयत ... बहु स्यां प्रजायेयेति" । "स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳ सर्वमसृजत । यदि... किंच । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्या... युक्तिस्तावद्बिमतो देह आत्मा न भवति कार्यत्वाद्घटवत् । ननु विपक्षे बाधकाभावा...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषमविषयेषु संचारिणोऽक्षा-
श्वान्द्योपदर्शनकशाभिघाततः ॥
स्वैरं संनिवर्त्य स्वान्तरश्मिभिर्धीरा
बध्नन्ति यत्र तत्त्वमसि तत्त्वम् ॥ ५० ॥

---

मकोऽयं हेतुरिति चेन्न। अकृताभ्यागमकृतविप्रणाशाख्यबाधकसद्भावात्। तथा विवादा-स्पदः प्राण आत्मा न भवति जडत्वाद्घटवत्। तथा मनोमय आत्मा न भवति विकार-त्वाद्देहवत्। तथा विज्ञानमय आत्मा न भवति विलयाद्यवस्थावत्त्वाद्घटादिवत्। तथाऽऽ-नन्दमयोऽप्यात्मा न भवति कादाचित्कत्वादभ्रवत्। तस्मादानन्द एवाऽऽत्मा भवितुमर्हति नित्यत्वात्। य आत्मा न भवति नासौ नित्यो यथा देहादिः। 'आत्मन आकाशः संभूतः' इत्यादिश्रुत्याऽऽकाशादेरनित्यत्वावगमान्नानैकान्तिकतेति। नन्वाङ्पूर्वादनास्यवि-हरणे वर्तमानाद्ददातेरात्मनेपदं स्यादित्यर्थकात् 'आङो दोऽनास्यविहरणे' इति सूत्रादा-ददत इति भवितव्यमिति चेन्न। भिक्षामाददातीति प्रयोगवदत्र ङिद्विशिष्टस्याऽऽकारस्या-ग्रहणेनाऽऽददातीति प्रयोगस्य साधुत्वात्। सूत्रे ङिद्विशिष्टाकारग्रहणस्याङिद्विशिष्टादाका-रादुत्तरस्य ददातेरात्मनेपदाभावज्ञापनार्थत्वात् ॥ ४९ ॥ [अत्रेति। अत्र तूपपदेन ज्ञानामपि कोशानां तुच्छत्वं ध्वन्यते] ॥ ४९ ॥

सर्वेन्द्रियालम्बनं तत्त्वं त्वमेवेति स्मारयन्ति—यथा विषमदेशेषु स्वैरं संचारिणोऽश्वान्क-शाभिघातेन रश्मिभिः सम्यङ्निवर्त्य शङ्कौ बध्नन्ति तथा विषमेषु विषयलक्षणेषु देशेषु स्वैरं संचारिण इन्द्रियलक्षणान्हयान्द्योपदर्शनलक्षणकशाभिघातेन मनोवृत्तिलक्षणरश्मिभिर्ध-स्मिन्परमात्मतत्त्वे धीमन्तो बध्नन्ति तत्तत्त्वं त्वमसि। तथाच श्रुतिः—

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः'

इति ॥ ५० ॥ [धीरा धियमीरयन्ति सदसद्विचारे प्रेरयन्तीति तथा विवेकेन धैर्य-वन्तः पुरुषा इत्यर्थः] ॥ ५० ॥

---

१ क. 'काङो'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यावृत्तजाग्रदादिष्वनुस्यूतं
तेभ्योऽन्यदिव पुष्पेभ्य इव सूत्रम् ॥
इति यदौपाधिकत्रयपृथक्त्वेन
विदन्ति सूरयस्तत्त्वमसि तत्त्वम् ॥ ५१ ॥
पुरुष एवेदमित्यादिवेदेषु
सर्वकारणतया यस्य ॥
सार्वात्म्यं हाटकस्येव मुकुटादितादात्म्यं
सरसमाम्नायते तत्त्वमसि तत्त्वम् ॥ ५२ ॥
यश्चाहमत्र वर्ष्मणि भामि सोऽसौ योऽसौ
विभाति रविमण्डले सोऽहमिति ॥
वेदवादिनो व्यतिहारतो यदध्यापयन्ति
यत्नतस्तत्त्वमसि तत्त्वम् ॥ ५३ ॥

---

अथ जाग्रत्स्वप्नसुषुप्त्युपाधिविलक्षणं तत्त्वं त्वमसीति स्मारयन्ति—आत्मा जाग्रदाद्युपाधिभ्योऽन्यो व्यावर्तमानेषु तेष्वनुस्यूतत्वात्पुष्पेभ्यः सूत्रमिवेत्येवमुपाधित्रयपृथक्त्वेन सूरयो जानन्ति तत्तत्त्वं त्वमसि। स्पष्टं चेदं जनकयाज्ञवल्क्यादिसंवादेन श्रुत्या प्रतिपादितम् ॥ ९१ ॥ [ सूरयः शुकादयो विद्वांसः। व्यावृत्तेति। परस्परभिन्नास्ववस्थास्वित्यर्थः ] ॥ ९१ ॥

किंच ‘ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ’ ‘ सर्वं खल्विदं ब्रह्म तज्जलान् ’ ‘ सदेव सौम्येदम् ’ ‘ एकमेवाद्वितीयम् ’ ‘ ऐतदात्म्यमिदं सर्वम् ’ ‘ यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ’ इत्यादिवेदेषु सर्वकारणतया सुवर्णस्य यथा कटकमुकुटादितादात्म्यं तथा यस्य सार्वात्म्यं सरसं यथा स्यात्तथाऽऽम्नायते ।

‘ उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्तिश्च लिङ्गान्येतानि षट्क्रमात् ’

इत्युक्तषड्विधतात्पर्यलिङ्गैः स्वारस्येनोपदिश्यते तत्त्वं त्वमसि ॥ ९२ ॥

किंच यश्चाहमस्मिन्शरीरे विभामि सोऽसौ रविमण्डलस्थोऽस्ति योऽसौ रविमण्डले विभाति सोऽहमस्मीत्येवं व्यतिहारेण वेदवादिनः प्रयत्नतो यत्तत्त्वमध्यापयन्ति तत्त्वमसि। तथाच श्रुतिः—‘तद्यत्तत्सत्यम्’। ‘ असौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ ’ इत्याद्या ॥ ९३ ॥

---

१ ख. ग. घ. °सि । ५१ । किं° । २ ख. ग. °व सोम्ये° । ३ ख. ग. °था सोम्यै° । ४ ... °कुटकादि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदानुवचनसद्दानमुखधर्मैः
श्रद्धयाऽनुष्ठितैर्विद्यया युक्तैः ॥
विविदिषन्त्यत्यन्तविमलस्वान्ता
ब्राह्मणा यद्ब्रह्म तत्त्वमसि तत्त्वम् ॥ ५४ ॥
शमदमोपरमादिसाधनैर्धीराः
स्वात्मनाऽऽत्मनि यदन्विष्य कृतकृत्याः ॥
अधिगतामितसच्चिदानन्दरूपा
न पुनरिह खिद्यन्ते तत्त्वमसि तत्त्वम् ॥ ५५ ॥
अविगीतमेवं नरपतिराकर्ण्य वर्णितात्मार्थम् ॥
विससर्ज पूरिताशानेतान्निर्ज्ञातकर्तव्यः ॥ ५६ ॥

---

किंच । वेदानुवचनसद्दानयज्ञतपोहितमितमेध्याशनादिधर्मैः श्रद्धयाऽनुष्ठितैर्विद्ययोपासनया च युक्तैरत्यन्तनिर्मलानीन्द्रियाणि येषां ते ब्राह्मणा यद्ब्रह्म विविदिषन्ति वेदितुमिच्छन्ति तत्तत्त्वं त्वमसि । तथाच श्रुतिः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' । 'यद्विद्ययोपनिषदा करोति तद्वीर्यवत्तरं भवति' । दानादेस्तत्त्वं तु भगवतोक्तम् । सात्त्विकत्ववेदानुवचनादेः प्रज्वलितार्धशिरस्कस्य जलराशिप्रवेशेच्छावदुत्कटेच्छां प्रति करणत्वं न तु सामान्येच्छां प्रति । अजागलस्तनायमानायास्तस्याः पूर्वमेव सिद्धत्वात् । यद्वाऽश्वेन जिगमिषतीत्यत्र गमनं प्रत्यश्वस्येव ज्ञानं प्रत्येव करणत्वमस्तु ॥ ५४ ॥ [ अत्यन्तेति । परमविमलमानसाः ] ॥ ५४ ॥

किंच शमदमोपरमक्षान्तिसमाधिश्रद्धालक्षणैः साधनैः स्वात्मस्वरूपेणाऽऽत्मनि बुद्धौ यदन्विष्य साक्षात्कृत्य 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिबोधितमनन्तादिस्वरूपं यैस्ते कृतकृत्याः सन्तः पुनरिह संसारे जन्ममरणादिलक्षणं खेदं नाऽऽप्नुवन्ति तत्तत्त्वं त्वमसि । तथाच श्रुतिः—'शान्तो दान्त उपरतस्तितिक्षुः समाहितो[1] भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्' इति 'श्रद्धावित्तो भूत्वा' इति च । यद्वैताः शिष्याणां पृथक्पृथगुक्तय इति बोध्यम् ॥ ५५ ॥

एवमविगीतमनिन्दितं वर्णितात्मवस्तु श्रुत्वा ।

'अर्थो विषयार्थनयोर्धनकारणवस्तुषु'

इति मेदिनी[2] । निर्ज्ञातं कर्तव्यं येन स नृपतिः पूरिता आशा येषां तानेतान्शिष्यान्विससर्ज ।

---

१ क. 'तमे' । २ क. कोशः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उद्बोधितः सदसि तैरवलम्ब्य मूर्छां
निर्गत्य राजतनुतो निजमाविवेश ॥
गात्रं पुरोदितनयेन स देशिकेन्द्रः
संज्ञामवाप्य च पुरेव समुत्थितोऽभूत् ॥ ५७ ॥

तदनु कुहरमेत्य पूर्वदृष्टं
नरपतिभृत्यविसृष्टपावकेन ॥
निजवपुरवलोक्य दह्यमानं
झटिति स योगधुरंधरो विवेश ॥ ५८ ॥

सपदि दहनशान्तये महान्तं
नरमृगरूपमधोक्षजं शरण्यम् ॥
स्तुतिभिरधिकलालसत्पदाभि-
स्त्वरितमतोपयदात्मवित्प्रधानः ॥ ५९ ॥

---

'आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ' ।

॥ ५६ ॥ [ पूरिताशानिङ्गितेनानुमोदनसूचितेनान्तःपूरितमनोरथान्पारितोषिकवित
विभूषणादिदानेन बहिरपि तथा ] ॥ ५६ ॥

सभायां तैः पद्मपादादिभिरुद्बोधितो मूर्छामवलम्ब्य पूर्वोक्तन्यायेन राजशरीरान्निर्
निजं शरीरमाविवेश । स देशिकेन्द्रः संज्ञां चेतनामवाप्य च पुनरुत्थितोऽभूत् । वसन्त
लका वृत्तम् ॥ ५७ ॥

ननु राजभृत्यविसृष्टाग्निना दह्यमानं शरीरं कथं विवेशेत्याशङ्क्याऽऽह—तस्माद्राजदे
निर्गमनात्पश्चात्पूर्वदृष्टं गुहाछिद्रमेत्य नरपतिभृत्यविसृष्टपावकेन दह्यमानं निजशरीरमव
यतो योगधुरंधरोऽतो झटिति विवेश । पुष्पिताग्रा वृत्तम् ॥ ५८ ॥ [ नरेति । पद्म
दादिभिः पूर्वोक्तरीत्या स्वगमनावसरे तत्संरक्षणार्थमवस्थापितशिष्येषु दैवादसंप्रज्ञातसमा
मवलम्ब्यैव मध्याह्ने सरम्तीरतरुच्छायादौ स्थितेषु सत्सु तत्कालमेव छिद्रमालक्ष्य राज
त्यविनिहितवह्निनेत्यर्थः ] ॥ ५८ ॥

एवमपि दहनं शमितवानित्याकाङ्क्षायामाह—सपदि तत्क्षण आत्मवित्प्र

---

१ क. निजश० ।

श्रीशंकराचार्यो दहनस्य शान्तये महान्तं शरणे साधुं नरसिंहरूपमधोक्षजमधोऽक्षजन्यं ज्ञानं यस्मात्तं विष्णुमधिकं कलाभिर्लसन्ति पदानि यासु ताभिः स्तुतिभिः शीघ्रमतोषयत्। तथाहि—

श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगीन्द्रभोगमणिराञ्जितपुण्यमूर्ते।
योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १ ॥
ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसंघट्टिताङ्घ्रिकमलामलकान्तिकान्त।
लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २
संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रवरार्दितस्य।
आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ३ ॥
संसारकूपमतिघोरनिदाघमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य
दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ४ ॥
संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य।
व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ५ ॥
संसारवृक्षमघबीजमनन्तकर्मशाखाशतं करणपत्रमनङ्गपुष्पम्।
आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ६ ॥
संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्तेः।
नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ७ ॥
संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य।
त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ८ ॥
संसारजालपतितस्य जगन्निवास सर्वेन्द्रियार्थबडिशार्थझषोपमस्य।
प्रोत्खण्डितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ९ ॥
संसारभीकरकरीशकराभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश।
प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १० ॥
अन्धस्य मे हृतविवेकमहाधनस्य चौरैः प्रभो बलिभिरिन्द्रियनामधेयैः।
मोहान्धकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ११ ॥
लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुण्ठ कृष्ण मधुसूदन पुष्कराक्ष।
ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य करावलम्बम् ॥ १२ ॥

[ नरेति। नरमृगेन्द्ररूपधरमित्यर्थः। गिरिगुहादौ सिंहवाससंभवसंस्काराद्वेत्येकरूपस्तवन-मिति तत्त्वम् ] ॥ ६९ ॥

१ ख. °णासद्° । २ घ. 'भ्रमितनि°'। ३ ग. घ. चोरैः। ४ घ. 'पयाऽत्र कृ°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नरहरिकृपया ततः प्रशान्ते
प्रबलतरे स हुताशने प्रविष्टः ॥
निरगमदचलेन्द्रकन्दरान्ता-
द्विधुरिव वक्त्रबिलाद्विधुंतुदस्य ॥ ६० ॥

तदनु शमधनाधिपो विनेयै-
श्चिरविरहादतिवर्धमानहार्दैः ॥
सनक इव वृतः सनन्दनाद्यै-
र्जिगमिषुराजनि मण्डनस्य गेहम् ॥ ६१ ॥

तदनु सदनमभेत्य पूर्वदृष्टं
गगनपथाद्गलितक्रियाभिमानम् ॥
विषयविपनिवृत्ततर्पमुच्चै-
रतनुत मण्डनमिश्रमक्षिपात्रम् ॥ ६२ ॥

तं समीक्ष्य नभश्च्युतं स च
प्राञ्जलिः प्रणतपूर्वविग्रहः ॥
अर्हणाभिरभिपूज्य तस्थिवा-
नीक्षणैरनिमिषैः पिबन्निव ॥ ६३ ॥

---

ततश्च नरहरिकृपया प्रबलतरे हुताशने प्रकर्षेण शान्ते सति तस्मिन्गुहायां ... स श्रीशंकरो गिरीन्द्रकन्दरामध्यान्निरगमत् । विधुं तुदति हिनस्तीति विधुंतुदो ... मुखलक्षणाद्बिलाच्छशीव ॥ ६० ॥

ततः पश्चाद्विरहादतिवर्धमानसौहार्दैः शिष्यैः सनन्दनाद्यैरावृतः सनक इव शमधना... मण्डनस्य गेहं गन्तुमिच्छुराजनि सम्यगभूत् ॥ ६१ ॥

तदनु गगनमार्गेण पूर्वदृष्टं मण्डनगेहमेत्य गलितक्रियाभिमानं यतो विषयलक्षणा... वृत्ताभिलाषं मण्डनमिश्रमुच्चैराक्षिपात्रमकृत ॥ ६२ ॥

आकाशादवतीर्णं तं श्रीशंकरं सम्यक्परप्रेम्णा दृष्ट्वा स च मण्डनः प्राञ्जलिः ... प्रकर्षेण नम्रीकृतः पूर्वविग्रहः शिरोभागो येन स योग्याभिः पूजाभिरभिपूज्यानिमिषैरक्षि... पिबन्निव तस्थिवान् । रथोद्धता वृत्तम् ॥ ६३ ॥ [ अनिमिषैरौत्कण्ठ्यतटस्थैः । ... वलोकनैः ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स विश्वरूपो बत सत्यवादी
पपात पादाम्बुजयोर्यतीशः ॥
गृहं शरीरं मम यच्च सर्वं
तवेतिवादी मुदितो महात्मा ॥ ६४ ॥

प्रेयसा प्रथममर्चितं मुनिं
प्राप्तविष्टरमुपस्थितं बुधैः ॥
प्रश्रयावनतमूर्तिरब्रवी-
च्छारदाऽभिवदने विशारदा ॥ ६५ ॥

ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥
ब्रह्मणोऽधिपतिर्ब्रह्मन्भवान्साक्षात्सदाशिवः ॥ ६६ ॥

सदसि मामविजित्य तथैव य-
न्मदनशासनकामकलास्वपि ॥
तदवबोधकृते कृतिमाचर-
स्तदिह मर्त्यचरित्रविडम्बनम् ॥ ६७ ॥

---

गृहं शरीरं यच्चान्यन्मदीयं तत्सर्वं तवेतिवादी । किं भयेन नेत्याह—मुदितो यतो महात्माऽक्षुद्रस्वभावः स विश्वरूपो यतीनीष्ट इति यतीट्तस्य पदकमलयोः पपात । बतेति हर्षे । उपेन्द्रवज्रा वृत्तम् ॥ ६४ ॥

एवं मण्डनकृतं सत्कारमुपवर्ण्य शारदावाक्यमुदाहर्तुमाह—अतिप्रियेण पत्या प्रथमं पूजितं प्राप्तासनं बुधैः सह समीपे स्थितं मुनिं प्रश्रयेण प्रेम्णा प्रणतमूर्तिरभिकथनेऽतिकुशला सरस्वत्यब्रवीत् । रथोद्धता वृत्तम् ॥ ६५ ॥

तदुदाहरति—'ईशानः सर्वविद्यानामीश्वरः सर्वभूताना ब्रह्माधिपतिः' इत्यादिमन्त्रप्रतिपादितः सदाशिवो हे ब्रह्मन्साक्षाद्भवानित्यर्थः ॥ ६६ ॥ [ ब्रह्मणश्चतुराननस्येत्यर्थः । एवं चेदानीं तदवतारस्यास्य मद्भर्तुः संन्यासप्रदानपूर्वकानुग्रहणकरणेऽतियोग्योऽसीति सूचितम् ] ॥ ६६ ॥

ननु कामशास्त्रोक्तकलासु त्वामपरिजित्य तद्विज्ञानार्थं यत्नं कृतवन्तं मां कथमेवं वदसीति चेत्तत्राऽऽह—सदसि मामविजित्य तथैव यत्कामशास्त्रे यास्तत्कलाः कामकलास्तास्वपि तत्कलावबोधार्थं यत्नमाचरितवानासि तन्मनुष्यचरित्रानुकरणमात्रमित्यर्थः । द्रुतविलम्बितं वृत्तम् ॥ ६७ ॥ [ हे मदनशासन कामान्तक कामकलासु विषये । मामविजित्य तथैव मत्प्रश्नानुसारेणैव ] ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वया यदावां विजितौ परात्म-
न्न तत्त्रपामावहतीड्य सर्वथा ॥
कृताऽभिभूतिर्न मयूखशालिना
निशाकरादेरपकीर्तये खलु ॥ ६८ ॥

आदावात्म्यं धाम कामं प्रयास्या-
म्यर्हस्यच्छं मामनुज्ञातुमर्हन् ॥
इत्यामन्त्र्यान्तर्हितां योगशक्त्या
पश्यन्देवीं भाष्यकर्ता बभाषे ॥ ६९ ॥

जानामि त्वां देवि देवस्य धातु-
र्भार्यामिष्टामष्टमूर्तेः सगर्भ्याम् ॥
वाचामाद्यां देवतां विश्वगुप्त्यै
चिन्मात्रामप्यात्तलक्ष्यादिरूपाम् ॥ ७० ॥

---

स्वपराजयस्त्वावयोर्लज्जाहेतुर्न भवतीत्याह—त्वया यदावां विजितौ तत्सर्वथाऽपि त्र[पां]
नाऽऽवहति । ननु ब्रह्मणा सहितायाः सरस्वत्यास्तत्त्रपावहं कथं न भवतीति चेद्ब्रह्मादि[भि]
रपि स्तुत्या त्वत्तः पराजयो न तत्कर इत्याह । हे ईड्य । तत्त्वं कुत इत्यत आह—
परात्मन्निति । तत्र दृष्टान्तमाह—यथा सहस्रभानुना दिवाकरेण कृताऽभिभूतिर्नि[शाकर]
श्चन्द्रादेरपकीर्तये न भवतीति प्रसिद्धं तद्वदित्यर्थः । उपजातिवृत्तम् ॥ ६८ ॥ [परोऽपि ।
एवं चेयं वास्तविकात्मत्वेनैव स्तुतिर्न त्वौपचारिकत्वेन वञ्चनेति व्यज्यते । नाऽऽवहति ते
संपादयतीति संबन्धः । अत एव कविसमयेऽप्युक्तम्—

'महत्परिभवः श्रेष्ठो न नीचादपि गौरवम् ।
कंसारेः पादघातेन कालीयस्य विभूषणम्' इति ] ॥ ६८ ॥

एवं स्तुत्वा ब्रह्मलोकगमनायानुज्ञां प्रार्थयते । आदौ यत्स्वच्छं स्वीयं धाम तत्का[मं]
प्रयास्यामि तस्माद्धे अर्हन्मामनुज्ञातुं योग्योऽसि । माऽदनंधामव्यावृत्त्यर्थमादावित्युक्त[म्]
इत्यामन्त्र्यान्तर्हितां देवीं योगशक्त्या पश्यन्भाष्यकारो जगाद । शालिनीवृत्तम् ॥ ६९ ॥
[ आत्म्यं मामकम् । यदाद्यावेहावतरणात्प्रागित्यर्थः ] ॥ ६९ ॥

तदाह—हे देवि त्वां जानामि । कथंभूतामित्यत आह—देवस्य धातुर्हिरण्यगर्भस्य
भार्यां तत्रापीष्टामतिप्रियां पुनश्चाष्टमूर्तेः शिवस्य सगर्भ्यां सहोदरां वाचामाद्यां देवतां चिन्मा-
त्रामपि विश्वरक्षणार्थं स्वीकृतलक्ष्म्यादिरूपामेवंभूतां त्वां जानामीत्यर्थः ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादस्मत्कल्पितेष्वर्च्यमाना
स्थानेषु त्वं शारदाख्या दिशन्ती ।
इष्टानर्थानृष्यशृङ्गादिकेषु
क्षेत्रेष्वास्स्व प्राप्तसत्संनिधाना ॥ ७१ ॥
तथेति संश्रुत्य सरस्वती सा
प्रायात्प्रियं धाम पितामहस्य ॥
अदर्शनं तत्र समीक्ष्य सर्वे
आकस्मिकं विस्मयमीयुरुच्चैः ॥ ७२ ॥
तस्या यतीशजितभर्तृयतित्वजात-
वैधव्यसंभवशुचा भुवमस्पृशन्त्याः
अन्तर्धिमेक्ष्य मुदितोऽजनि मण्डनोऽपि
तत्साधु वीक्ष्य मुमुदे यतिशेखरश्च ॥ ७३ ॥
मण्डनमिश्रोऽप्यथ विधिपूर्वं
दत्त्वा वित्तं यागे सर्वम् ॥
आत्मारोपितशोचिष्केशो
भेजे शंकरमस्तमिताशः ॥ ७४ ॥

---

एवं स्तुत्याऽभिमुखीकृत्य प्रार्थ्यमाह—तस्मादृष्यशृङ्गादिकेषु क्षेत्रेष्वस्मान्निर्मितानि यानि तव स्थानानि तेषु पूज्यमाना शारदाख्या त्वमिष्टानर्थान्दिशन्ती पुनश्च प्राप्तं सतां संनिधानं यथा तथाभूताऽस्स्व ॥ ७१ ॥

तथाऽस्त्विति प्रतिज्ञाय सा सरस्वती पितामहस्य प्रियं धाम प्रायात्तत्र संसदि तस्या अदर्शनं समीक्ष्यात्यन्तमाकास्मिकं विस्मयं प्रापुः ॥ ७२ ॥

एवं सदस्यानां मनोवृत्तं प्रदर्श्य मण्डनयतीशयोस्तदाह—यतीशेन जितस्य भर्तुर्यतित्वाज्जाताद्वैधव्यात्संभवेन शोकेन भुवमस्पृशन्त्यास्तस्याः स्वभार्याया अन्तर्धानमेक्ष्य मण्डनोऽपि मुदितोऽभून् । तत्साधु समीचीनं वीक्ष्य यतिशेखरोऽपि मुदितोऽभूत् । वसन्ततिलका वृत्तम् ॥ ७३ ॥

ततः किं वृत्तमित्यपेक्षायामाह—अथ शारदान्तर्धानाद्यनन्तरं मण्डनमिश्रोऽपि विधिपूर्वं 'तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति'।

'प्राजापत्यां निरुप्येष्टिं सार्ववेदसदक्षिणाम् ।
'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्'

---

१ क. 'स्मयमापुः । ७२ । ९' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संन्यासगृह्यविधिना सकलानि कर्मा-
ण्यह्नाय शंकरगुरुर्विदुषोऽस्य कुर्वन् ॥
कर्णे जगौ किमपि तत्त्वमसीति वाक्यं
कर्णेजपं निखिलसंसृतिदुःखहानेः ॥ ७५ ॥

संन्यासपूर्वं विधिवद्द्विभिक्षे
पश्चादुपादिक्षदथाऽऽत्मतत्त्वम् ॥
आचार्यवर्यः श्रुतिमस्तकस्थं
तदादिवाक्यं पुनराबभाषे ॥ ७६ ॥

त्वं नासि देहो घटवद्घनात्मा
रूपादिमत्त्वादिह जातिमत्त्वात् ॥
ममेति भेदप्रथनादभेद-
संप्रत्ययं विद्धि विपर्ययोत्थम् ॥ ७७ ॥

---

इत्यादिश्रुतिस्मृत्युक्तमार्गेण सर्वं वित्तं यागे दत्त्वाऽऽत्मन्यारोपितः शोचिष्केशोऽ होत्राग्निर्येनास्तमिताऽस्तं गताऽऽशा यस्य स शंकरं भेजे सेवितवान् । मात्रा वृत्तम् ॥ ७४ ॥

संन्यासप्रतिपादकगृह्यसूक्तविधिनाऽस्य विदुषः सर्वाणि कर्माण्यह्नायाञ्जसा सम्पूर्णं श्रीशंकरगुरुः सर्वस्याऽऽध्यात्मिकादिरूपस्य संसृतिदुःखस्य हानेः कर्णेजपं सूचकम् । 'कर्णेजपः सूचकः' इत्यमरः । किमपि तत्त्वमसीतिवाक्यं कर्णे जगौ । वसन्ततिलका वृत्तम् ॥ ७५ ॥ [ विदुषः पण्डितस्य । एतेनाधिकारसंपत्तिर्द्योत्यते ] ॥ ७५ ॥

मण्डनोऽपि संन्यासपूर्वकं विधिवद्भिक्षां याचितवान् । पश्चादाचार्यवर्यः श्रीशंकरः श्रुतिमस्तकस्थमात्मतत्त्वमुपदिष्टवान् । कथमिति तत्राऽऽह—तत्त्वमसिवाक्यं पुनराबभाषे अर्थसहितमुक्तवानित्यर्थः । उपजातिवृत्तम् ॥ ७६ ॥

तत्राऽऽदौ त्वंपदार्थमाह—इह देहादौ त्वं देहो नासि यस्मात्स घटवद्घनात्मा । हेतवो रूपादिमत्त्वान्मनुष्यत्वादिजातिमत्त्वात् । ममेदं शरीरमिति भेदप्रथनाच्च । आत्मा तु 'अशब्दमस्पर्शमरूपमव्ययम् । अगोत्रम्' । इत्यादिश्रुत्युक्तोऽहमितिप्रत्ययगोचरः । ननु मनुष्योऽहं स्थूलोऽहं कृशोऽहमित्यभेदसंप्रत्ययाद्देह आत्मा कुतो न स्यादिति तत्राऽऽह—अभेदसंप्रत्ययं विपर्ययादन्योन्यतादात्म्याध्यासादुत्थितं विद्धि । उपजाति वृत्तम् ॥ ७७ ॥ [ विपर्ययो भ्रमः ] ॥ ७७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोप्यो हि लोप्यव्यतिरिक्तलोपको
दृष्टो घटादिः खलु तादृशी तनुः।
दृश्यत्वहेतोर्व्यतिरेकसाधने
त्वत्तः शरीरे कथमात्मतागतिः॥ ७८॥

नापीन्द्रियाणि खलु तानि च साधनानि
दात्रादिवत्कथममीषु तवाऽऽत्मभावः॥
चक्षुर्मदीयमिति भेदगतेरमीषां
स्वप्नादिभावविरहाच्च घटादिसाम्यम्॥ ७९॥

यद्यात्मतैषां समुदायगा स्या-
देकव्ययेनापि भवेन्न तद्धीः॥
प्रत्येकमात्मत्वमुदीर्यते चे-
न्नश्येच्छरीरं बहुनायकत्वात्॥ ८०॥

---

किंच लोप्यो घटादिः स्वव्यतिरिक्तो दण्डादिर्लोपको यस्य तथाभूतो दृष्टः शरीरं च तादृशं स्वातिरिक्तलोपकमेव प्रसिद्धम्। तथाच लोप्यं यथा स्वातिरिक्तलोपकं तथा दृश्यमपि स्वातिरिक्तद्रष्टृकं ततश्च विमतं दृश्यं स्वातिरिक्तद्रष्टृकं दृश्यत्वाद्घटवद्यद्यत्कर्म तत्तत्स्वातिरिक्तकर्तृकं यथा लोप्यो घटादिः स्वातिरिक्तलोपक इत्याशयेनाऽऽह—दृश्यत्वहेतोरिति। एतस्माच्छरीराद्व्यतिरेकसाधने स्वातिरिक्तद्रष्टृकत्वसाधने तु दृश्यत्वहेतोः शरीर आत्मत्वावगतिः केनापि प्रकारेण न घटत इत्यर्थः॥ ७८॥

एवं देहादात्मानं विविच्येन्द्रियेभ्यस्तं विवेचयति—नापीन्द्रियाण्यात्मा तेषां साधनत्वाद्दात्रादिवत्तस्मादमीष्विन्द्रियेषु तवाऽऽत्मभावः केनापि प्रकारेण नोपपद्यते। तेषामनात्मत्वेऽन्यदपि हेतुद्वयमाह—चक्षुरादेर्घटादिवदनात्मत्वमेव चक्षुर्मदीयमित्यादिभेदावगतेः। स्वप्नसुषुप्त्यादौ तत्सत्त्वेऽमीषां विरहाच्च। पश्यामि शृणोमीत्यादिप्रत्ययस्तु पूर्ववद्द्रष्टव्यः। वसन्ततिलका वृत्तम्॥ ७९॥

इन्द्रियसमुदाय आत्मोत प्रत्येकमिति विकल्प्याऽऽद्यं प्रत्याह—यद्येषामिन्द्रियाणां समुदायगाऽऽत्मता स्यात्तर्ह्येकस्येन्द्रियस्य नाशे समुदायनाशादात्मताबुद्धिर्न स्यात्। द्वितीयमुत्थाप्य निराचष्टे—प्रत्येकमात्मत्वमुच्यते चेत्तर्हि बहुनायकत्वेन विरुद्धक्रियत्वावश्यंभावाच्छरीरमेव नश्येत्। इन्द्रवज्रा वृत्तम्॥ ८०॥

---

१ क. 'रुद्धादिकि°'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मत्वमन्यतमगं यदि चक्षुरादे-
श्चक्षुर्विनाशसमये स्मरणं न हि स्यात् ॥
एकाश्रयत्वनियमात्स्मरणानुभूत्यो-
र्दृष्टश्रुतार्थविषयावगतिश्च न स्यात् ॥ ८१ ॥

मनोऽपि नाऽऽत्मा करणत्वहेतो-
र्मनो मदीयं गतमन्यतोऽभूत् ॥
इति प्रतीतेर्व्यभिचारितायाः
सुप्तौ च तच्चिन्मनसोर्विविक्तता ॥ ८२ ॥

अनयैव दिशा निराकृता
न च बुद्धेरपि चाऽऽत्मता स्फुटम् ॥
अपि भेदगतेरनन्वया-
त्करणादाविव बुद्धिमुज्झ भोः ॥ ८३ ॥

---

किंच यदि चक्षुरादेरन्यतमगोचरमात्मत्वं स्यात्तर्हि चक्षुर्विनाशसमये स्मरणं न स्यात्तत्र हेतुः स्मरणानुभवयोरेकात्माश्रयत्वात् । किंच योऽहं दृष्टवान्सोऽहं शृणोमीति दृष्टश्रुतार्थविषया प्रत्यभिज्ञा च न स्यात् । तस्मादिन्द्रियाणामन्यतममप्यात्मा न भवतीति । वसन्ततिलका वृत्तम् ॥ ८१ ॥

नन्वस्तु तर्हि मन एवाऽऽत्मेति तत्राऽऽह—मनोऽप्यात्मा न भवति करणत्वहेतोर्मनो मदीयं मनोऽन्यतो गतमभूदिति भेदप्रतीतेः । सुषुप्तौ व्यभिचारितायाश्च चिन्मनसोर्विलक्षणता । उपजातिवृत्तम् ॥ ८२ ॥ [ सुप्तौ मनस इति शेषः । व्यभिचारितायाः व्यभिचारित्वात् विभिन्नतायाः लीनत्वादिति यावत् । तत्तस्माद्धेतोश्चिन्मनसोरात्ममनसोर्विविक्तता विभिन्नतेत्यर्थः ॥ ८२ ॥

उक्तन्यायं बुद्धावतिदिशति—अनयैव दिशा निराकृतत्वाद्बुद्धेरप्यात्मता स्फुटं न तथा नास्ति । स्फुटत्वमावेदयति—मदीया बुद्धिरन्यतोऽभूदिति भेदावगतेः सुषुप्तावनन्वयाच्च करणादाविव बुद्धिमप्यात्मत्वेन मैवाङ्गी कुरु । वियोगिनी वृत्तम् ॥ ८३ ॥ [ करणादाविवेन्द्रियादाविव ] ॥ ८३ ॥

---

१ घ. °च ते चिन्म° । २ ख. घ. °नसी विविक्ते । ८२ । अ° । ३ क. ख. ग. घ. °प्यात्मा° । ४ ख. ग. घ. °वतीत्य° । ५ क. उक्तं न्या° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाहंकृतिश्चरमधातुपदप्रयोगा-
त्प्राणा मदीया इति लोकवादात् ॥
प्राणोऽपि नाऽऽत्मा भवितुं प्रगल्भः
सर्वोपसंहारिणि सन्सुषुप्ते ॥ ८४ ॥
एवं शरीराद्यविविक्त आत्मा
त्वंशब्दवाच्योऽभिहितोऽत्र वाक्ये ॥
तदोदितं ब्रह्म जगन्निदानं
तथा तथैक्यं पदयुग्मबोध्यम् ॥ ८५ ॥
कथं तदैक्यं प्रतिपादयेद्वचः
सर्वज्ञसंमूढपदाभिपिक्तयोः ॥
न ह्येकता संतमसप्रकाशयोः
संहष्टपूर्वा न च दृश्यतेऽधुना ॥ ८६ ॥

---

अस्तु तर्ह्यहंप्रत्ययगोचरोऽहंकार एवाऽऽत्मेति तत्राऽऽह—अहंकृतिरहंकारोऽप्यात्मा न भवति। तत्र हेतुश्चरमेऽन्त्ये कृतिरिति धातुपदस्य प्रयोगात्। तर्हि सुषुप्तावपि लयरहितः प्राण एवाऽऽत्माऽस्त्विति तत्राऽऽह—सर्वोपसंहारिणि सुषुप्तेः सन्नपि प्राण आत्मा भवितुं न शक्तः। तत्र हेतुर्मदीयाः प्राणा इति लोकवादात्। इन्द्रवज्रा वृत्तम् ॥ ८४ ॥
[चरमेति। अहमिति नामपदादूर्ध्वं चरमभागे कृतिरिति कृञ्धातुपदस्य प्रवादादुच्चारादित्यर्थः। अयं भावः—अहंकृतिशब्दवाच्य आत्मा न भवति। अहमितिकरणमहंकृतिरिति [illegible]रस्या तस्य क्रियावाचकत्वादिति ] ॥ ८४ ॥

उपसंहरति—एवंभूतो देहादिविलक्षण आत्मा तदविविक्तस्त्वंपदवाच्यस्तत्त्वमसिवाक्येऽभिहितः। त्वंपदार्थं प्रदर्श्य तत्पदार्थमाह—तथाऽत्र वाक्ये तत्पदेन जगत्कारणं ब्रह्मोक्तम्। अखण्डार्थमाह—तथाऽत्र वाक्ये पदद्वयबोध्यमैक्यमुदितम्। उपजातिवृत्तम् ॥ ८५ ॥

तत्त्वंपदार्थयोरैक्यं वाक्यार्थं श्रुत्वा शिष्य उवाच—सर्वज्ञसंमूढपदाभिषिक्तयोस्तत्त्वंपदार्थयोस्तद्बुद्धकमैक्यं तत्त्वमसिवाक्यं कथं प्रतिपादयेत्। हि यस्मात्तमःप्रकाशयोरेकता पूर्वं नैव दृष्टा न चाधुना दृश्यते। तथाचायं प्रयोगस्तत्त्वमसिवाक्यस्थतत्त्वंपदार्थयोरैक्यं न संभवति विरुद्धधर्मवत्त्वात्तमःप्रकाशवदिति। ननु हेतुरस्तु साध्यं माऽस्तु। न च तमःप्रकाशयोरप्येकत्वापत्तिस्तयोर्भावाभावरूपतया तदनुपपत्तेस्तस्माद्भावाभावरूपोपाधिसत्त्वादप्रयोजकत्वमस्येति

---

१ ख. ग. घ. 'प्रवादाः प्रा॰'। २ क. ग. 'पि प्रगल्भः प्रा॰'। ३ क. ग. 'त्मा न भवति न'।
४ ख. घ. 'स्यस्य त॰'। ५ ख. घ. 'दार्थौ न परस्पराभिन्नौ वि॰'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यं विरोधगतिरस्ति तु वाच्यगेयं
सोऽयं पुमानितिवदत्र विरोधहानेः ॥
आदाय वाच्यमविरोधि पदद्वयं त-
ल्लक्ष्यैकबोधनपरं ननु को विरोधः ॥ ८७ ॥

चेन्न । तमसोऽपि भावरूपत्वात्तमोऽभावरूपमिति वादी प्रष्टव्यः । किमालोकाभावमात्रं तमः किं वा रूपदर्शनाभावमात्रम् । आद्येऽपि किमेकैकं तम एकैकालोकाभावः किंवा सर्वालोकाभावः । आद्येऽपि किं प्रागभाव उत प्रध्वंसाभाव आहोस्विदन्योन्याभावः । त्रितयमपि न संभवति सवितृकिरणसंतते देशे प्रदीपालोकजन्मविनाशयोः सतोस्त्रयाणां सत्त्वेऽपि तमोबुद्ध्यदर्शनात् । ननु प्रागभावाद्यवस्थासु तमोबुद्ध्यभावो विरोध्यालोकनिबन्धन इति चेत्तथाऽपि विरोध्यभावसहितप्रागभावादेस्तमोबुद्ध्यालम्बनत्वस्यावश्यवक्तव्यत्वेन विरोध्य[illegible]भावगिरा प्रागभावोक्तौ प्रध्वंसेऽनुपपत्तिः । तदुक्तौ प्रागभावे । अन्योन्याभावोक्तावर्थे[illegible] सत्त्वेऽपि तदभावस्य भावात्तमोबुद्धिः स्यात् । द्वितीयेऽपि किमस्य सर्वेषामालोकानां [illegible]धानं निवर्तकमुतैकैकस्य । आद्ये सर्वालोकमन्तरेण तन्निवृत्तिर्न स्यात् । द्वितीयेऽप्येकैकस्य सर्वालोकाभावनिवर्तकत्वाभावात्तमोबुद्ध्यापत्तिः । अन्त्येऽपि किमेकैकस्य रूपस्य दर्शनस्य उत सर्वस्य । आद्येऽपि किं रूपदर्शनमात्राभाव उत यत्र तमोबुद्धिस्तत्रत्यरूपदर्शनाभावः । नाऽऽद्यः—बहुलान्धकारसंवृतापवरकान्तरवस्थितस्यापि बहीरूपदर्शनेन सहापवरकान्तस्तमोदर्शनात् । न द्वितीयः—प्रागभावादिविकल्पासहत्वात् । ननु रूपवतो द्रव्यस्य स्पर्शवत्त्वनियमात्तद्रहितं तमः कथं रूपद्रव्यमवगम्यते । तथाच प्रयोगस्तमो नीरूपं स्पर्शविधुरत्वात् आकाशवदिति चेन्न । वायोरन्यत्र स्पर्शवद्द्रव्यस्य रूपवत्त्वनियमेऽपि रूपरहितस्य स्पर्शवतो वायोरभ्युपगमात्तथाच यत्स्पर्शवत्तद्रूपवद्यथा घटादिरिति व्याप्तेर्यथा वायौ भङ्गस्तथा यद्रूपवत्तत्स्पर्शवदिति व्याप्तेस्तमसि भङ्गः । न च प्रमाणाभावः । तमालमालाश्यामलं तम इत्युपलम्भादिति संक्षेपः ॥ ८६ ॥

एवमुक्तो गुरुराह—सत्यमियं विरोधावगतिस्तु वाच्यगाऽस्ति । एवमर्थमङ्गीकृत्यैवं कथं प्रतिपादयेदिति यदुक्तं तत्राऽऽह—सोऽयं पुमानिति वाक्यवदस्मिन्नपि विरोधहानेरविरोधिवाच्यमादाय पदद्वयं तयोर्लक्ष्यैक्यबोधनपरमेवं सति न कोऽपि विरोधः । अयमर्थः—यथा सोऽयं पुमानिति वाक्ये तच्छब्दार्थस्य तत्कालविशिष्टस्य पुंस इदंशब्दार्थस्यैतत्कालविशिष्टस्य पुंसश्चैक्यासंभवेऽपि सोऽयमिति पदद्वयं महा-

१ ख. ग. घ. आहो अ°। २ क °श्यकव°। ३ ख. ग. घ. °रोधाभा°। ४ [illegible] को द°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जहीहि देहादिगतामहंधियं
चिरार्जितां कर्मशठैः सुदुस्त्यजाम् ॥
विवेकबुद्ध्या परमेव संततं
ध्यायाऽऽत्मभावेन यतो विमुक्तता ॥ ८८ ॥
साधारणे वपुषि काकसृगालवह्नि-
मात्रादिकस्य ममतां त्यज दुःखहेतुम् ॥
तद्वज्जहीहि बहिरर्थगतां च विद्वं-
श्चित्तं बधान परमात्मनि निर्विशङ्कम् ॥ ८९ ॥

---

महल्लक्षणया विरुद्धं तत्कालैतत्कालविशिष्टत्वांशं विहाय पुरुषमविरोधिवाच्यांशमादाय तल्लक्ष्यैक्यबोधनपरं तद्वत्तत्त्वमसिवाक्यं सर्वज्ञत्वसंमूढत्वरूपस्य विरोधिनोंऽशस्य हानिं कृत्वाऽविरोधिवाच्यचिदंशमादाय पदद्वयं तल्लक्ष्यैक्यबोधनपरमिति । वसन्ततिलका वृत्तम् ॥ ८७ ॥

यस्मादेवं तस्माच्चिरार्जितां देहादिगतामहंबुद्धिं परित्यज । कया मत्येति तत्राऽऽह—उक्तविवेकबुद्ध्या यतः कर्मशठैरतिशयेन दुस्त्यजाम् । तर्ह्यहंमतिः क विधेयेति तत्राऽऽह—संततं परमात्मानमेवाऽऽत्मभावेन चिन्तय । किं तत इति चेत्तत्राऽऽह—यतः परस्यैवाऽऽत्मभावेन चिन्तनाद्विमुक्तता लभ्यत इत्यर्थः ।

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्'

इति श्रुतेः । उपजातिवृत्तम् ॥ ८८ ॥ [ परमेवाऽऽत्यन्तिकनिर्विकल्पमेव यथा स्यात्तथेत्यर्थः । यतो विमुक्तताऽऽत्मभावेनाद्वैतात्मत्वेन संततं ध्येया. ध्यातुं योग्या निदिध्यासनकालावच्छेदेनास्त्यतो देहादिगतामहंधियं जहीहि त्यजेति पूर्वार्धगतेन सह संबन्धः ] ॥ ८८ ॥

यत्र ममताऽप्ययुक्ता तत्राहंतायाः का कथेत्याशयेनाऽऽह—काकादेः साधारणत्वाद्वपुषि दुःखहेतुं ममतां त्यज । तद्बहिरर्थविषया च दुःखकारणभूतां तां परित्यज । तदुक्तम्—

'यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः'

इति । ममता दुःखहेतुभूतेति त्वं जानासीत्याशयेनाऽऽह—हे विद्वन्निति । कर्तव्यमुपदिशति—निर्विशङ्कं समस्तशङ्काकलङ्कविनिर्मुक्तं विजातीयप्रत्ययरहितं चित्तं परमात्मनि स्थापय । वसन्ततिलका वृत्तम् ॥ ८९ ॥

---

१ क. ख. घ. 'तं ध्येयाऽऽ°' । २ ख. 'जहाहि । ३ घ. 'रुद्धत°' । ४ क. ग. तावन्त एव ख.° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीरात्तीरं संचरन्दीर्घमत्स्य-
स्तीराद्भिन्नो लिप्यते नापि तेन ॥
एवं देही संचरञ्जाग्रदादौ
तस्माद्भिन्नो नापि तद्धर्मको वा ॥ ९० ॥
जाग्रत्स्वप्नसुषुप्तिलक्षणमदोऽवस्थात्रयं चित्तनौ
त्वय्येवानुगते मिथो व्यभिचरद्धीसंज्ञमज्ञानतः ॥
क्लृप्तं रज्ज्ववदमंशके वसुमतीछिद्राहिदण्डादिव-
त्तद्ब्रह्मासि तुरीयमुज्झितभयं मा त्वं पुरेव भ्रमीः ९१ ॥
प्रत्यक्क्रमं परपदं विदुषोऽन्तिकस्थं
दूरं तदेव परिमूढमतेर्जनस्य ॥
अन्तर्बहिश्च चितिरस्ति न वेति कश्चि-
च्चिन्वन्बहिर्बहिरहो महिमाऽऽत्मशक्तेः ॥ ९२ ॥

---

ननु जाग्रत्स्वप्नसंचारिणस्तदभिन्नत्वात्तद्धर्मकत्वाद्वा कथं परमात्मनोऽभेदेन चिन्त... यत्वमिति चेत्तत्राऽऽह—यथा महामत्स्यस्तीरात्तीरं संचरंस्तीराद्भिन्न एव न त्वभिन्नो न... तेन तीरेण लिप्यते। एवमाध्यासिकसंबन्धेन देह्यात्मा जाग्रदादौ संचरंस्तस्माद्भिन्न एव न... जाग्रदादिरूपधर्मवान्वा । तथाच श्रुतिः—'तद्यथा महामत्स्य उभे कूले अनुसंचरति... चापरं चायमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च' इति। शालि... वृत्तम् ॥ ९० ॥

तर्ह्यनुभूयमानं जाग्रदाद्यवस्थात्रयं कस्येति चेत्तत्राऽऽह—जाग्रदादिलक्षणमिदम... त्रयं व्यभिचारं गच्छद्बुद्धिसंज्ञकं चित्स्वरूपे त्वय्येवानुगते कल्पितम्। तत्रेन्द्रियजन्य... नावस्था जाग्रदवस्था। इन्द्रियाजन्याविषया परोक्षज्ञानावस्था स्वप्नावस्था। अविद्यायो... विद्यावृत्त्यवस्था सुषुप्त्यवस्था। अनुवृत्ते व्यावृत्तं कल्पितमित्यत्र दृष्टान्तमाह—रज्ज्वादि... नुवृत्ते व्यावृत्तं भूमिच्छिद्रसर्पदण्डादि यथा कल्पितं तद्वत्। तस्मादवस्थात्रयपरत्या... शिवं चतुर्थमित्युक्तमत एव परित्यक्तनिखिलभयं ब्रह्मासि तस्मात्पूर्ववद्भ्रमं मा का... शार्दूलविक्रीडितं वृत्तम् ॥ ९१ ॥

एवंभूतं स्वात्मानं जनः किमिति नावगच्छतीति न शङ्कनीयमात्मशक्तेर्महिम्नो... चनीयत्वादित्याशयेनाऽऽह—प्रत्यक्क्रमं प्रातिलोम्येनासज्जडदुःखात्मकाहंकारादि... णतया सच्चिदानन्दात्मत्वेनाञ्चति प्रकाशत इति प्रत्यगतिशयेन प्रत्यगिति प्रत्यक्क्रमं... पदं विदुषः समीपस्थं परिमूढमतेर्जनस्य तदेव दूरमेवंविधं चैतन्यमन्तर्बहिरस्ति न वा... कश्चनाशुद्धचित्तो बहिर्बहिश्चिन्वन्न वेत्ति। अहो आत्मशक्तेरयं महिमा। वसन्ततिलका वृत्तम् ॥ ९२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा प्रपायां बहवो मिलन्ते
क्षणे द्वितीये बत भिन्नमार्गाः ॥
प्रयान्ति तद्वद्बहुनामभाजो
गृहे भवन्त्यत्र न कश्चिदन्ते ॥ ९३ ॥
सुखाय यद्यत्क्रियते दिवानिशं
सुखं न किंचिद्बहुदुःखमेव तत् ॥
विना न हेतुं सुखजन्म दृश्यते
हेतुश्च हेत्वन्तरसंनिधौ भवेत् ॥ ९४ ॥
परिपक्कमतेः सकृच्छ्रुतं
जनयेदात्मधियं श्रुतेर्वचः ॥
परिमन्दमतेः शनैः शनै-
र्गुरुपादाब्जनिषेवणादिना ॥ ९५ ॥
प्रणवाभ्यसनोक्तकर्मणोः
करणेनापि गुरोर्निषेवणात् ॥
अपगच्छति मानसं मलं
क्षमते तत्त्वमुदीरितं ततः ॥ ९६ ॥

---

अथ तत्त्वज्ञानाव्यभिचारिसाधनाय वैराग्यायाऽऽह—यथा जलपानशालायां बहवो मिलन्ति क्षणे द्वितीये भिन्नमार्गाः प्रयान्ति तथा गृहे बहुनामभाजो भवन्त्यन्ते मरणानन्तरमत्र गृहे कोऽपि न भवति। उपेन्द्रवज्रा वृत्तम् ॥ ९३ ॥

किंच दिवानिशं सुखाय यद्यत्क्रियते ततस्ततः किंचिदपि सुखं न भवति प्रत्युत तस्माद्बहुदुःखमेव यतः पुण्यरूपं हेतुं विना सुखजन्म न दृश्यते हेतुश्च जन्मान्तरीयहेतोः संनिधौ भवेत्। 'पुण्यः पुण्येन कर्मणा' इति श्रुतेः। वंशस्थं वृत्तम् ॥ ९४ ॥

तस्मादेवंभूतसंसाराद्विमुक्तिमिच्छता श्रुतिवचसाऽऽत्मसाक्षात्कार एव संपादनीयः। स च परिपक्वमतेः सकृच्छ्रवणेन मन्दमतेस्तु गुरुपादाब्जनिषेवणादिना शनैः शनैरित्याशयेनाऽऽह—परीति। वियोगिनी वृत्तम् ॥ ९५ ॥ [ आदिनाऽहं ब्रह्मास्मीति निर्गुणाहंग्रहोपासनम् ] ॥ ९५ ॥

शनैः शनैरित्यादि विवृणोति—प्रणवाभ्यासस्योक्तस्य त्रिकालस्नानादिरूपस्य कर्मणः करणेन गुरोर्विशेषेण शुश्रूषणाच्च मानसं मलमपगच्छति ततश्च कथितं तत्त्वं क्षमते धारणाय योग्यं भवति ॥ ९६ ॥

---

१ घ. मिलन्ति। २ ख. घ. मनः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोऽनुवर्तेत दिवानिशं गुरौ
गुरुर्हि साक्षाच्छिव एव तत्त्ववित् ॥
निजानुवृत्त्या परितोषितो गुरु-
र्विनेयवक्त्रं कृपया हि वीक्षते ॥ ९७ ॥
सा कल्पवल्लीव निजेष्टमर्थं
फलत्यवश्यं किमकार्यमस्याः ॥
आज्ञा गुरोस्तत्परिपालनीया
सा मोदमानीय विधातुमिष्टा ॥ ९८ ॥
गुरूपदिष्टा निजदेवता चेत्कु-
प्येत्तदा पालयिता गुरुः स्यात् ॥
रुष्टे गुरौ पालयिता न कश्चि-
द्गुरौ न तस्माज्जनयेत कोपम् ॥ ९९ ॥

---

अथेदानीं—

' यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
' तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ' ।

गुरुप्रसादात्परमात्मलाभः ।

' तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया '

इत्यादिशास्त्रमनुसृत्य गुरुभक्तेस्तत्त्वज्ञानान्तरङ्गसाधनत्वं बोधयितुमारभते—अहर्निशं मनो गुरावनुवर्तेत । अत्यावश्यकताबोधनाय लिङ्प्रयोगः । हि यस्मात्तत्त्वविद्गुरुः साक्षा-च्छिव एव । तदुक्तम्—

' गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः पिता गुरुर्माता गुरुरेव परः शिवः '

इति । ननु शिवस्वरूपगुरोरनुवृत्तिः किमर्थं कर्तव्येति चेत्तत्राऽऽह—हि यस्मात्तत्त्व गुरोरनुवृत्त्या परितोषितो गुरुः शिष्यमुखं कृपया वीक्षते । वंशस्थं वृत्तम् ॥ ९७ ॥

किं तत इति तत्राऽऽह—सा गुरोराज्ञा सम्यक्परिपालनीया । यतः कल्पवल्लीव निजे-ष्टमर्थमवश्यं फलति किमसाध्यमस्या अतः साऽऽज्ञा मोदमानीय हर्षं प्राप्य विधातुमिष्टा। उपजातिवृत्तम् ॥ ९८ ॥

किंचिष्टदेवादपि गुरुर्गरीयानित्याशयेनाऽऽह—गुरूपदिष्टा निजदेवता कुप्येच्चेत्तदा गुरुः परिपालयिता स्यात् । रुष्टे गुरौ तु परिपालयिता कश्चिदपि नास्ति तस्माद्गुरौ कोपं कदाऽपि नोत्पादयेत् । तदुक्तं ब्रह्मवैवर्ते—

' शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ' इति ॥ ९९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुमान्पुमर्थं लभतेऽपि चोदितं
भजन्निवृत्तः प्रतिषिद्धसेवनात् ॥
विधिं निषेधं च निवेदयत्यसौ
गुरोरनिष्टच्युतिरिष्टसंभवः ॥ १०० ॥
आराधितं दैवतमिष्टमर्थं
ददाति तस्याधिगमो गुरोः स्यात् ॥
नो चेत्कथं वेदितुमीश्वरोऽय-
मतीन्द्रियं दैवतमिष्टदं नः ॥ १ ॥
तुष्टे गुरौ तुष्यति देवतागणो
रुष्टे गुरौ रुष्यति देवतागणः ॥
सदाऽऽत्मभावेन सदात्मदेवताः
पश्यन्नसौ विश्वमयो हि देशिकः ॥ २ ॥
एवं पुराणगुरुणा परमात्मतत्त्वं
शिष्टो गुरोश्चरणयोर्निपपात तस्य ॥
धन्योऽस्म्यहं तव गुरो करुणाकटाक्ष-
पातेन पातिततमा इति भाषमाणः ॥ ३ ॥

---

ननु विहितानुष्ठानात्प्रतिषिद्धवर्जनाच्चेष्टलाभोऽनिष्टनिवृत्तिश्च भविष्यत्यतः किं गुरुसेवये-त्याशङ्क्याऽऽह—यद्यपि प्रतिषिद्धसेवनान्निवृत्तो विहितं भजन्पुमान्पुमर्थं लभते तथाऽपि विधिनिषेधौ न स्वतो विज्ञातुं शक्यौ किं त्वसौ गुरुरेव विधिं निषेधं च निवेदयति । तस्माद्गुरोरेवानिष्टच्युतिरिष्टोत्पत्तिश्च । वंशस्थं वृत्तम् ॥ १०० ॥

नन्वाराधितं दैवतमेवेष्टमर्थं ददातीत्याशङ्क्याऽऽह—आराधितं दैवतमर्थं ददाति तथाऽप्यस्य दैवतस्य प्राप्तिर्गुरोरेव भवति नो चेन्नोऽस्माकमिष्टदमतीन्द्रियं दैवतमयमज्ञो वेदितुं विज्ञातुमीश्वरः समर्थः कथं स्यान्न केनापि प्रकारेणेत्यर्थः । उपजातिवृत्तम् ॥ १ ॥

देवगणस्य गुरुतुष्ट्याद्यनुतुष्ट्यादिमत्त्वात्स एव प्रयत्नेन तोषणीय इत्याशयेनाऽऽह—तुष्ट इति । हि यस्मात्सदैव सद्रूपा आत्मदेवता आत्मभावेन पश्यन्नसौ देशिको विश्वमयः ॥ २ ॥

एवं पुराणगुरुणा श्रीशंकराचार्येण परमात्मतत्त्वं प्रति शिक्षितो हे गुरो तव कटाक्षपातेन दूरीकृताज्ञानोऽहं धन्योऽस्मीति भाषमाणस्तस्य गुरोश्चरणयोर्निपपात । वसन्ततिलका वृत्तम् ॥ ३ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः समादिश्य सुरेश्वराख्यां
दिगङ्गनाभिः क्रियमाणसख्याम् ॥
सच्छिष्यतां भाष्यकृतश्च मुख्या-
मवाप तुच्छीकृतधातृसौख्याम् ॥ ४ ॥
निखिलनिगमचूडाचिन्तया हन्त याव-
त्स्वमनवधिकसौख्यं निर्विशन्निर्विशङ्कम् ॥
बहुतिथमभितोऽसौ नर्मदां नर्मदां तां
मगधभुवि निवासं निर्ममे निर्ममेन्द्रः ॥ ५ ॥
इतिवशीकृतमण्डनपण्डितः
प्रणतसत्करणत्रयदण्डितः ॥
सकलसद्गुणमण्डलमण्डितः
स निरगात्कृतदुर्मतखण्डितः ॥ ६ ॥
कुसुमितविविधपलाशभ्रमदलिकुलगीतमधुरस्वनम् ॥
पश्यन्विपिनमयासीदाशां कीनाशपालितामेषः ॥ ७ ॥

---

ततो दिगङ्गनाभिः समं क्रियमाणसख्यां सर्वदिग्व्याप्तां सुरेश्वराख्यां समादिश्य तुच्छी-
कृतं हिरण्यगर्भसौख्यं यया तां भाष्यकारस्य मुख्यां शिष्यतां चावाप । उपजातिवृत्तम् ॥
[ दिगित्यादि । ईदृशीं सुरेश्वराख्याम् । समादिश्य धातूनामनेकार्थत्वात्सुप्रसन्नाद्भाष्य-
कारात्सम्यक्संप्राप्येत्यर्थः ] ॥ ३ ॥

सुरेश्वरसंज्ञां प्राप्य वासं क कृतवानित्याकाङ्क्षायामाह—निखिलवेदान्तचिन्तया हर्ष
स्वस्वरूपमनवधिकसौख्यं निर्विशङ्कं विशङ्कारहितं निर्विशन्बहुकालं नर्मदां कौतुकदां
नर्मदां नदीमभितोऽसौ निर्ममानां ममतारहितानामिन्द्रः सुरेश्वरो मगधभूमौ वासं निर्ममे।
मालिनी वृत्तम् ॥ ९ ॥ [ ततो भगवान्भाष्यकारः सकलशिष्यैः सह माहिष्मत्यां
एव च परितः स्वच्छन्दं बहुदिवसमुवासेत्याह—निखिलेति मालिन्या ] ॥ ५ ॥

अथाऽऽचार्यवृत्तान्तमाह—इत्येवं वशीकृतो मण्डनपण्डितो येन प्रणतानां सतां
दण्डितं येन तत्र मनः प्राणायामाद्युपदेशेन वाङ्मौनोपदेशेन कर्मानीहोपदेशेन सर्वैः सद्गुण-
मण्डलैरलंकृतः कृतं दुर्मतानां खण्डितं खण्डनं येन स निरगात् । द्रुतविलम्बितं वृत्तम् ॥ ६ ॥

कामाशां प्रति निरगादित्याकाङ्क्षायामाह—कुसुमितेषु विविधपत्रेषु भ्रमद्भिर्भ्र-

---

१ क. त्स्वपदमवि' । २ घ 'रनिसान' । ३ क 'या यावत्स्वपदं सत्य मग्नो ह्ये-
दप्यधि' । ४ क. ग 'ख्यं यो नि' । ५ ख. घ 'ङ्कं श' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र महाराष्ट्रमुखे देशे ग्रन्थान्प्रचारयन्प्राज्ञतमः ॥
शमितमतान्तरमानः शनकैः सनकोपमोऽगमच्छ्रीशैलम् ॥ ८ ॥

प्रफुल्लमल्लिकावनप्रसङ्गसङ्गतामित-
प्रकाण्डगन्धबन्धुरप्रवातधूतपादपम् ।
सदामदद्विपाधिपप्रहारशूरकेसरि-
व्रजं भुजंगभूषणप्रियं स्वयंभुकौशलम् ॥ ९ ॥

कलिकल्मषभङ्गायां सोऽद्रेराराच्चलत्तरङ्गायाम् ॥
अधरीकृततुङ्गायां सस्नौ पातालगामिगङ्गायाम् ॥ १० ॥

---

उद्गीतो मधुरशब्दो यत्र तथाभूतं वनं पश्यन्यमपालितां दाक्षिणां दिशमेष श्रीशंकरोऽयासीत् ।

'आर्याशकलद्वितयं व्यस्तयरचितं भवेद्यस्याः ।
सोद्गीतिः किल कथिता तद्वद्यत्यंशभेदसंयुक्ता' ॥ ७ ॥

तस्यां यमाशायां महाराष्ट्रप्रमुखे देशे ग्रन्थान्प्रचारयन्प्राज्ञतमः शमितो मतान्तराभिमानो येन स सनकोपमः श्रीशैलं पर्वतमगमत् ।

'आर्यापूर्वार्धे यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं भवति यदीयमुदितेयमार्यागीतिः ॥ ८ ॥

[ शमितेति । शमितानि मतान्तरविषयाणि मानानि भेदसाधकप्रत्यक्षादिप्रमाणानि येन स तथा । यद्वा शमिता मतान्तरमाना अद्वैतभिन्नमताभिनिविष्टा येन स तथेत्यर्थः ॥ ८ ॥

तं विशिनष्टि—प्रफुल्लमल्लिकानां वनानां प्रसङ्गो यस्य स चासौ संगतानामसंख्यातानां प्रकाण्डानां शाखानां गन्धेन बन्धुरः सुन्दरः प्रवातस्तेन कम्पिता वृक्षा यत्र तम् । 'प्रकाण्डो विटपे शस्ते' इति विश्वप्रकाशः । सदामदाना गजाधिपानां प्रहारे शूराणां केसरिणां सिंहानां समूहो यत्र तं भुजंगभूषणस्य शिवस्य प्रियं हिरण्यगर्भस्य कौशलमित्यर्थः।

'प्रग लघुर्गुरुस्ततो भवेच्च पञ्चचामरम्' ॥ ९ ॥

अद्रेः समीपं चलन्तस्तरङ्गा यस्याः पुनश्चाधरीकृतस्तुङ्गः पर्वतो यया ।
'तुङ्गः पुंनागनगयोस्तुङ्गः स्यादुन्नतेऽन्यवत्'

---

१ ख. ग. 'क्षिणदि'। २ ग. वनस्य। ३ ग. 'नां गन्धस्तेन'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नमन्मोहभङ्गं नभोलेहिशृङ्गं
त्रुटत्पापसङ्गं रटत्पक्षिभृङ्गम् ॥
समाश्लिष्टगङ्गं प्रहृष्टान्तरङ्गं
तमारुह्य तुङ्गं ददर्शेशलिङ्गम् ॥ ११ ॥
प्रणमद्भवबीजभर्जनं
प्रणिपत्यामृतसंपदार्जनम् ॥
प्रमुमोद स मल्लिकार्जुनं
भ्रमराम्बासचिवं नतार्जुनम् ॥ १२ ॥
तीररुहैः कृष्णायास्तीरेऽवात्सीत्तिरोहितोष्णायाः ॥
आवर्जिततृष्णाया आचार्येन्द्रो निरस्तकार्ष्ण्यायाः ॥ १३ ॥
तत्रातिचित्रपदमत्रभवान्पवित्र-
कीर्तिर्विचित्रसुचरित्रनिधिः सुधीन्द्रान् ॥
अग्राहयत्कृतमसद्ग्रहनिग्रहार्थं-
मंड्यान्समग्रसुगुणान्महदग्रयायी ॥ १४ ॥

---

इति विश्वप्रकाशः । तथाभूतायां कलिकल्मषविनाशसमर्थायां पाताळगामिगङ्गायां श्रीशंकरः स्नानं कृतवान् ।

'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजंगेशः' ॥ १० ॥

तं तुङ्गमारुह्य शिवलिङ्गं ददर्श । तुङ्गं विशिनष्टि—नमतां मोहस्य भङ्गो यस्माद्... गनास्वादनशीलानि शृङ्गाणि यस्य त्रुटन्पापस्य सङ्गो यस्माद्रटन्तः पक्षिणो भ्रमरा... यस्मिन्सम्यगालिङ्गिता पाताळगामिगङ्गा येन प्रहृष्टमन्तरङ्गं मनो यस्येति जनस्य ... नस्त्वमारोप्येयमुक्तिः । क्रियाविशेषणं वा । भुजङ्गप्रयातं वृत्तम् ॥ ११ ॥

ततश्च प्रणमतां संसृतिबीजानामविद्याकामकर्मवासनानां भर्जनं पुनश्च मोक्षलक्ष... मृतस्य संपादकं भ्रमराख्याम्बासहायं नतोऽर्जुनो यस्मै तथाभूतं मल्लिकार्जुनसंज्ञं परमेश... लिङ्गं प्रणिपत्य प्रकर्षेण मोदमवाप । वियोगिनी वृत्तम् ॥ १२ ॥ [ अमृतसंपदो मोक्ष... लक्ष्म्या आर्जनमा समन्तात्संपादनं यस्मात्सः ] ॥ १२ ॥

ततश्च तीररुहैराम्रादिवृक्षैः श्यामायास्तिरोहितमुष्णं यस्यां यया वाऽऽवर्जिता तृष्णा... च यस्या निरस्तं कार्ष्ण्यं यस्यास्तथाभूताया नद्यास्तीर आचार्येन्द्रोऽवात्सीत् । ... ॥ १३ ॥ [ आवर्जिता स्वसौष्ठवप्रकटनद्वारा सुसंपादिता तृष्णा स्वविषयकाभिल... सा तथा ] ॥ १३ ॥

तत्र तस्मिंस्तीरे पवित्रकीर्तिर्विचित्राणां सुचरित्राणां निधिर्महदग्रयाय्यत्रभवान्पूज्य...

अध्यापयन्तमसदर्थनिरासपूर्वं
किंत्वन्यतीर्थयशसं श्रुतिभाष्यजातम् ॥
आक्षिप्य पाशुपतवैष्णववीरशैव-
माहेश्वराश्च विजिता हि सुरेश्वराद्यैः ॥ ११५ ॥
केचिद्विसृज्य मतमात्म्यममुष्य शिष्य-
भावं गता विगतमत्सरमानदोषाः ॥
अन्ये तु मन्युवशमेत्य जघन्यचित्ता
निन्युः क्षणं निधनमस्य निरीक्षमाणाः ॥ १६ ॥
वेदान्तीकृतनीचशूद्रवचसो वेदः स्वयं कल्पनाः
पापिष्ठाः स्वमपि त्रयीपथमपि प्रायो दहन्तः खलाः ॥
साक्षाद्ब्रह्मणि शंकरे विदधति स्पर्धानिबद्धां मतिं
कृष्णे पौण्ड्रकवत्तथा न चरमां किं ते लभन्ते गतिम् ॥ १७ ॥

---

श्रीशंकरोऽतिचित्राणि पदानि यस्मिन्नसद्ग्रहाणां दुराग्रहाणां निग्रहोऽर्थः प्रयोजनं वा यस्य तथाभूतं कृतं शारीरकादि सुधीन्द्रान्समग्राः सुगुणाः शान्तिदान्त्यादयो येषु तानग्र्यान्श्रेष्ठानग्राहयत् । वसन्ततिलका वृत्तम् ॥ १४ ॥

तिरस्कृतान्यशास्त्रयशसं श्रुतिभाष्यसमूहमसदर्थनिरासपूर्वमध्यापयन्तं भाष्यकारमाक्षिप्य स्थिताः पाशुपतादयः सुरेश्वरपद्मपादादिभिराक्षिप्य विशेषेण जिताः ॥ १५ ॥ [ अन्येति । अन्ये एवाद्वैतत्वद्वैतव्यापकत्वाभ्यां लोकविलक्षणे एव तीर्थयशसी शास्त्रकीर्तिकुले यस्य तम् । श्रीभाष्यकारमाक्षिप्य तं प्रति पूर्वपक्षं कृत्वा ये स्थिता न तु विजयमाप्ताः किंतु ते सुरेश्वराद्यैर्विजिता इत्यन्वयः ] ॥ १५ ॥

तत्र केचित्स्वीयं मतं परित्यज्य विगतमत्सरादिदोषाः सन्तोऽमुष्य श्रीशंकरस्य शिष्यत्वं प्राप्ता अन्ये तु कोपवशं गत्वा यतो मलिनचित्ता अस्य मरणं निरीक्षमाणाः कालं निन्युः ॥ १६ ॥

तथा वैवंविधा वेदान्तीकृतानि नीचानां शूद्राणां वचांसि यैः पुनश्च पापिष्ठाः स्वकल्पना एव वेदः कृतः स्वं वेदान्तप्रतिपाद्यमात्मानमपि वेदत्रयीपथमपि प्रायो दहन्तो ये खलाः साक्षाद्ब्रह्मणि शंकरे स्पर्धया निरुद्धां बुद्धिं श्रीकृष्णे मिथ्यावासुदेववद्विदधति ते तद्भक्तिमन्त्यां गतिं विनाशं मोक्षं वा न लभन्तेऽपि तु प्राप्नुवन्त्येव । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥ [ वेदान्तीकृतेति । अत एव वेदस्तु स्वयंकृताः पुरुषकृताः कल्पना एवेति वदन्तः ] ॥ १७ ॥

---

१ ख. ग. °त्तो° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाणी काणभुजी च नैव गणिता लीना क्वचित्कापिली
शैवं चाशिवभावमेति भजते गर्हापदं चाऽऽर्हतम् ॥
दौर्गं दुर्गतिमश्नुते भुवि जनः पुष्णाति को वैष्णवं
निष्णातेषु यतीशसूक्तिषु कथाकेलीकृतासूक्तिषु ॥ १८ ॥

तथागतकथा गता तदनुयायि नैयायिकं
वचोऽजनि न चोदितो वदति जातु तौतातितः ॥
विदग्धति न दग्धधीर्विदितचापलं कापिलं
विनिर्दयविनिर्दलद्विमतसंकरे शंकरे ॥ ११४८ ॥

इति श्रीमाधवीये तत्कलाज्ञत्वप्रपञ्चनम् ॥
संक्षेपशंकरजये सर्गोऽयं दशमोऽभवत् ॥ १० ॥

---

शंकरसूक्तिषु निष्णातेष्वाचार्यविनेयेषु सत्सु कथाकेलीकृतासु नर्मकथात्वं प्राप्तासु[...] मध्ये काणादी तु वाणी नैव गणिता । कापिली सा तु क्वचिल्लीना क्व गतेत्यपि न ज्ञा[...] शैवं पाशुपतानां तु वचोऽशिवत्वमाप्नोति आर्हतं च तद्गर्हापदं भजते । दौर्गं शाक्तवं[...] तद्दुर्गतिमश्नुते । वैष्णवं तत्पालयितुं समर्थः कोऽपि जनो नास्तीत्यर्थः ॥ १८ ॥ [कथेति[...] कथाक्रीडात्वमानीता आ समन्तात्सूक्तयो यैस्तादृशेषु सत्सु ] ॥ ११८ ॥

विनिर्दयं यथा स्यात्तथा विनिर्दलन्विशीर्णतां प्राप्नुवन्विरुद्धमतानां संकरो येन तस्मि[...] शंकरे सति तथागतानां सुगतानां कथा गता विलयं प्राप्ता तथा नैयायिकवचस्तद[...] तदनुगाम्यजनि तौतातितः कौमारिलश्चोदितः प्रेरितोऽपि नैव[3] च वदति । पुनश्च विदि[...] पलं कापिलं वचो दग्धा पुष्टा स्थिता वा धीर्यस्य स न विदग्धति नाभिनन्दति वै[...] पुष्णातीति वो तदपि तथैव विलयं गतम् । पृथ्वी वृत्तम् ॥ ११४८ ॥

[ इति श्रीति । तदिति । तस्य भाष्यकृतः कलाज्ञत्वस्य प्रपञ्चनं यथा स्या[...] त्यर्थः ] ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंस-
रामकुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजयडिण्डिमे
दशमः सर्गः ॥ १० ॥

---

१. °सा नै° । २ क. °नि तदपि तथैव गतम् । तौ° । ३ ग. न व° । ४ ख. ग. पु°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथैकादशः सर्गः।

तत्रैकदाऽऽच्छादितनैजदोषः
पौलस्त्यवत्कल्पितसाधुवेषः ॥
निर्मानमायं स्थितकार्यशेषः
कापालिकः कश्चिदनल्पदोषः ॥ १ ॥

असावपश्यन्मदनाद्यवश्यं
वश्येन्द्रियाश्वैर्मुनिभिर्विमृग्यम् ॥
आदिश्य माध्यं सपदि प्रशस्य-
मासीनमाश्रित्य मुनिं रहस्यम् ॥ २ ॥

दृष्ट्वेव हृष्टः स चिरादभीष्टं
निर्धार्य संसिद्धमिव स्वमिष्टम् ॥
महद्विशिष्टं निजलाभतुष्टं
विस्पष्टमाचष्ट च कृत्यशिष्टम् ॥ ३ ॥

गुणांस्तवाऽऽकर्ण्य मुनेऽनवद्या-
न्सार्वज्ञ्यसौशील्यदयालुताद्यान् ॥
द्रष्टुं समुत्कण्ठितचित्तवृत्ति-
र्भवन्तमागां विदितप्रवृत्तिः ॥ ४ ॥

---

अथोग्रभैरवनिर्जयं सपरिकरं वर्णयितुमुपक्रमते—तत्र तस्मिन्देश एकदाऽऽच्छादितस्वीयदोषः सीताहरणायाऽऽगतरावणवत्कल्पितः साधुवेषो येन स्थितः कार्यस्य शेषो यस्यानल्पा दोषा यस्मिंस्तथाभूतः कश्चिदसौ कापालिको मायामानविनिर्मुक्तं मुनिमपश्यदित्यन्वयः। इन्द्रवज्रा वृत्तम् ॥ १ ॥

मुनिं विशिनष्टि—कामक्रोधादीनां वश्यो न भवतीति तथा तं वश्येन्द्रियाश्वैर्मुनिभिर्विमृग्यं प्रशस्यं माध्यं सपद्यादिश्य रहस्यमेकान्तमाश्रित्याऽऽसीनम्। उपजातिवृत्तम् ॥ २ ॥

स कापालिकश्चिरादभीष्टं दृष्ट्वा स्वमिष्टं संसिद्धमिव निर्धार्य हृष्टो महद्यथो विशिष्टं श्रेष्ठं निजलाभेन तुष्टं कृत्यशिष्टं स्वकर्तव्यशेषं स्पष्टं यथा स्यात्तथोक्तवान् ॥ ३ ॥

तद्वचनमुदाहरति—हे मुनेऽनवद्यान्सर्वज्ञताद्यांस्तव गुणानाकर्ण्य भवन्तं द्रष्टुं सम्यगुत्कण्ठिता चित्तवृत्तिर्यस्य विदिता तव प्रवृत्तिर्येन तादृशोऽहमागतवानस्मि ॥ ४ ॥ [ विदितेति। विदिता ज्ञाता प्रवृत्तिस्त्वदीया लोकोपकारैकचेष्टा येन सः ] ॥ ४ ॥

---

१ क. 'र्वैश्यसौ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वमेक एवात्र निरस्तमोहः
पराकृतद्वैतिवचःसमूहः ॥
आभासि दूरीकृतदेहमानः
शुद्धाद्वयो योजितसर्वमानः ॥ ५ ॥
परोपकृत्यै प्रगृहीतमूर्ति-
रमर्त्यलोकेष्वपि गीतकीर्तिः ॥
कटाक्षलेशार्दितसज्जनार्तिः
सदुक्तिसंपादितविश्वपूर्तिः ॥ ६ ॥
गुणाकरत्वाद्भुवनैकमान्यः
समस्तविस्वादभिमानशून्यः ॥
विजित्वरत्वाद्गलहस्तितान्यः
स्वात्मप्रदत्वाच्च महावदान्यः ॥ ७ ॥
अशेषकल्याणगुणालयेषु
परावरज्ञेषु भवादृशेषु ॥
कार्यार्थिनः क्वाप्यनवाप्य कामं
न यान्ति दुष्प्रापमपि प्रकामम् ॥ ८ ॥

---

स्वप्रयोजनसिद्धये स्तौति—अत्र लोके निरस्तमोहस्त्वमेवैको यतः पराकृतो द्वैति... समूहो येन स्वयं दूरीकृतदेहमानो योजितः सर्वस्मै मानो येन तथाभूतस्त्वममानी ... इत्युक्तः शुद्धाद्वयः परमात्मैवाऽऽभासि । पाठान्तरे शुद्धाद्वये योजितानि सर्वाणि ... णानि येन स त्वमेकः सर्वोत्तमत्वेन प्रकाशस इति व्याख्येयम् ॥ ५ ॥

अमर्त्यलोकेष्विन्द्रादिदेवलोकेष्वपि गीता कीर्तिर्यस्य स कटाक्षलेशेनार्दिता ... सज्जनानामार्तिः पीडा येन स सदुक्तिभिः संपादिता विश्वस्य पूर्तिर्येन । उप... वृत्तम् ॥ ६ ॥ [ सदिति । सदुक्त्या संपादिता विश्वस्य सकलमनोरथस्य पूर्तिर्येन ...

विजित्वरत्वाद्विजयनशीलत्वाद्गले हरितता हस्तेन गले गृहीता अन्ये वादिनो येन ... वदान्योऽतिशयेन विश्राणनशीलः । उपजातिर्वृत्तम् ॥ ७ ॥

तथाचैवंविधेषु भवादृशेषु कार्यार्थिनोऽत्यन्तं दुष्प्रापमपि काममनवाप्य क्वापि ... दप्यवस्थायां न गच्छन्ति किंतु प्राप्यैव यान्ति ॥ ८ ॥ [ कामं मनोरथम् ] ॥ ८

---

१ ख. 'त्वाद्ग°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मान्महत्कार्यमहं प्रपद्य
निर्वर्तितं सर्वविदा त्वयाऽद्य ॥
कपालिनं प्रीणयितुं यतिष्ये
कृतार्थमात्मानमतः करिष्ये ॥ ९ ॥
अनेन देहेन सहैव गन्तुं
कैलासमीशेन समं च रन्तुम् ॥
अतोऽयं तीव्रतपोभिरुग्रं
सुदुष्करैरब्दशतं समग्रम्[1] ॥ १० ॥
तुष्टोऽब्रवीन्मां गिरिशः पुमर्थ-
मभीप्सितं प्राप्स्यसि मत्प्रियार्थम् ॥
जुहोपि चेत्सर्वविदः शिरो वा
हुताशने भूमिपतेः शिरो वा ॥ ११ ॥
एतावदुक्त्वाऽन्तरधान्महेश-
स्तदादि तत्संग्रहणे धृताशः ॥
चराम्यथापि क्षितिपो न लब्धो
न सर्ववित्तत्र मयोपलब्धः ॥ १२ ॥

---

एवं स्तुत्याऽऽचार्यमभिमुखीकृत्य कथनीयमाह—यस्मादेवं तस्मात्सर्वविदा त्वया निष्पादितं महत्कार्यमासाद्य कपालिनं भैरवं प्रीणयितुं यत्नं करिष्ये ततः कपालिप्रीणनादात्मानं कृतार्थं करिष्ये। उपजातिवृत्तम् ॥ ९ ॥

सर्वविदा त्वया निर्वर्तितमित्युक्तं तद्विवृणोति—अनेनेति। 'उग्रः कपर्दी श्रीकण्ठः' इत्यमरादुग्रं रुद्रम्। उपजातिवृत्तम् ॥ १० ॥

॥ ११ ॥ [ अमुं वक्ष्यमाणत्वेन बुद्धिस्थम्। तमेवार्थं स्फुटयति—अभीप्सितमित्यादिना ] ॥ ११ ॥

तयोः सर्वज्ञक्षितिपयोः संग्रहणे धृताऽऽशा येन तत्र तयोर्मध्ये ॥ १२ ॥ [ तदादि तदारभ्य ] ॥ १२ ॥

---

१ ख. 'रिशोऽमुम'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिष्ट्याऽद्य लोकस्य हिते चरन्तं
सर्वज्ञमद्राक्षमहं भवन्तम् ॥
इतः परं सेत्स्यति मेऽनुबन्धः
संदर्शनान्तो हि जनस्य बन्धः ॥ १३ ॥

मूर्धाभिषिक्तस्य शिरःकपालं
मुनीशितुर्वा मम सिद्धिहेतुः ॥
आद्यं पुनर्मे मनसाऽप्यलभ्यं
ततः परं तत्रभवान्प्रमाणम् ॥ १४ ॥

शिरःप्रदानेऽद्भुतकीर्तिलाभ-
स्तवापि लोके मम सिद्धिलाभः ॥
आलोच्य देहस्य च नश्वरत्वं
यद्रोचते सत्तम तत्कुरु त्वम् ॥ १५ ॥

तद्याचितुं न क्षमते मनो मे
को वेष्टदायि स्वशरीरमुज्झतु ॥
भवान्विरक्तो न शरीरमानी
परोपकाराय धृतात्मदेहः ॥ १६ ॥

---

दिष्ट्या भद्रं जातं मेऽनुबन्धः प्रकृतस्य कार्यस्यानुवर्तनं सेत्स्यति ।
' दोषोत्पादेऽनुबन्धः स्यात्प्रकृतस्यानुवर्तने '
इत्यमरः । यतो जनस्य बन्धो भवद्दर्शनावधिरेव ॥ १३ ॥

इतः परं मेऽनुबन्धः सेत्स्यतीत्युक्तेरतः परं राजा सर्वज्ञो वा भिक्षिष्यतीति [illegible] नोपादद्यादित्याशयेनाऽऽह—मूर्धेति । तस्मात्सर्वविद्भवानेव परं प्रमाणम् । [illegible] वृत्तम् ॥ १४ ॥

तस्मात्स्वस्य मम च लाभं देहस्य च नश्वरत्वमालोच्य शिरःप्रदानमुचितमे[illegible] ॥ १५ ॥ नाऽऽह—शिर इति । उपजातिवृत्तम् ॥ १५ ॥ [ सत्तम साधुश्रेष्ठ ]

नन्वेवं याचितुं मनस्ते कुतः क्षमत इत्याशङ्क्य भवतो विरक्तत्वादित्याह—[illegible] याचितुं मनो मे नोत्सहते । यत इष्टदायि स्वशरीरं को वा त्यजतु भवांस्तु शि[illegible] देहमानी । संप्रति देहधारणमपि परोपकारायैव न त्वभिमाननिमित्तमित्याह—परोप[illegible] रायेति ॥ १६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जनाः परक्लेशकथानभिज्ञा
नक्तं दिवा स्वार्थकृतात्मचित्ताः ॥
रिपुं निहन्तुं कुलिशाय वज्री
दाधीचमादात्किल वाञ्छितास्थि ॥ १७ ॥
दधीचिमुख्याः क्षणिकं शरीरं
त्यक्त्वा परार्थे स्म यशःशरीरम् ॥
प्राप्य स्थिरं सर्वगतं जगन्ति
गुणैरनर्घ्यैः खलु रञ्जयन्ति ॥ १८ ॥
वपुर्धरन्ते परतुष्टिहेतोः
केचित्प्रशान्ता दयया परीताः ॥
अस्मादृशाः केचन सन्ति लोके
स्वार्थैकनिष्ठा दयया विहीनाः ॥ १९ ॥
परोपकारं न विनाऽस्ति किंचि-
त्प्रयोजनं ते विधुतैषणस्य ॥
अस्मादृशाः कामवशास्तु युक्ता-
युक्ते विजानन्ति न हन्त योगिन् ॥ २० ॥

---

यद्यप्येवं तथाऽपि त्वं परक्लेशावहं कर्मानुष्ठातुं किमिति प्रवृत्तोऽसीत्याशङ्क्याऽऽह—सर्वेऽपि जनाः परक्लेशकथानभिज्ञा यतो दिवानिशं स्वार्थे तत्पर आत्मा देहेन्द्रियादिचित्तं च येषाम् । तत्रोदाहरणमाह—शत्रुं निहन्तुं वज्रनिर्माणायेन्द्रो दाधीचमभिलषितमस्थि स्वीकृतवान् । तथाच यदा सात्त्विकमुख्यानामियं दशा तदाऽस्मद्विधानां का कथेति भावः । उपजातिवृत्तम् ॥ १७ ॥

यदान्यैर्भवादृशैस्तु स्थिरस्य सर्वगतस्य यशःशरीरस्य प्राप्तये क्षणिकत्वाच्छरीरमपि सुत्याज्यमेवेत्याशयेनाऽऽह—दधीचिमुख्या इति । उपजातिवृत्तम् ॥ १८ ॥

तथाच केचित्प्रशान्ता दयया व्याप्ता भवादृशः परतुष्टिहेतोः शरीरं धरन्तेऽस्मादृशास्तु केचन दयया विहीनाः स्वार्थैकनिष्ठा लोके सन्ति ॥ १९ ॥

तस्मात्परोपकारिणा त्वयाऽवश्यं शिरो देयमित्याशयवानाह—परोपकारं विना किंचित्प्रयोजनं तव नास्ति । यतः पुत्रवित्तलोकैषणाविनिर्मुक्तो भवानित्याह—विधुतैषणस्येति । ननु त्वयाऽपि ममेदं युक्तं न वेति विचार्य वक्तव्यमित्याशङ्क्याऽऽह—अस्मादृशास्तु हे योगिन्कामवशत्वादहो कष्टं युक्तायुक्ते न विजानन्ति ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीमूतवाहो निजजीवदायी
दधीचिरप्यस्थि मुदा ददानः ॥
आचन्द्रतारार्कमपायशून्यं
प्राप्तौ यशः कर्णपथं गतौ हि ॥ २१ ॥
यदप्यदेयं ननु देहवद्भि-
र्मयाऽर्थितं गर्हितमेव साद्भिः ॥
तथाऽपि सर्वत्र विरागवद्भिः
किमस्त्यदेयं परमार्थविद्भिः ॥ २२ ॥
अखण्डमूर्धन्यकपालमाहुः
संसिद्धिदं साधकपुंगवेभ्यः ॥
विना भवन्तं बहवो न सन्ति
तद्वत्पुमांसो भगवन्पृथिव्याम् ॥ २३ ॥
प्रयच्छ शीर्षं भगवन्नमः स्ता-
दितीरयित्वा पतितं पुरस्तात् ॥
तमब्रवीद्वीक्ष्य सुधीरधस्ता-
त्कृपालुरावृत्तमनाः समस्तात् ॥ २४ ॥

---

स्वशरीरप्रदानसदृशं यशःसाधनं त्वन्यन्नास्त्येवेत्याह—जीमूतवाहाख्यो निजजीवद[illegible] दधीचिश्च स्वास्थिदायी द्वावपि प्रलयपर्यन्तं नाशशून्यं यशः प्राप्तौ कर्णपथं गतौ हि प्र[illegible] हि यस्मात्कर्णपथं गताविति वा ॥ २१ ॥ [ शङ्खचूडाख्यनागं विमोचयितुं [illegible] स्वप्राणप्रदो जीमूतवाहनो नागानन्दनाटकादौ सुप्रसिद्ध एव ] ॥ २१ ॥

ननु देहस्यादेयत्वं जानन्किमिदमतिनिन्दितं प्रार्थयस इत्याशङ्क्य यद्यप्येवं तथाऽपि [illegible] मार्थवित्त्वात्सर्वत्र विरागवतां भवादृशानां किमप्यदेयं नास्तीत्यालोच्य प्रार्थनां करोमीत[illegible] यद्यपीति ॥ २२ ॥

नन्वन्यः कश्चिदेवंविधोऽन्विष्य प्रार्थ्य इत्याशङ्क्य यथाविधस्य शिरो मम सि[illegible] स्तथाविधो भवानेव न त्वन्य इत्याह—साधकश्रेष्ठेभ्यः संसिद्धिदमखण्डमूर्धन्यस्मा[illegible] रेतसः कपालमाहुर्न च भवन्तं विना हे भगवंस्तथाविधवीर्यवन्तः पुमांसो बहवः [illegible] सन्ति ॥ २३ ॥

अतोऽवश्यं स्वमेव शिरः प्रयच्छ ते नमोऽस्त्वित्युक्त्वाऽग्रे पतितमधस्ताद्वीक्ष्य [illegible] कृपालुः समस्तादाकृष्टमना अब्रवीत् । उपेन्द्रवज्रा वृत्तम् ॥ २४ ॥

---

१ ग. 'जानता किमि° । २ ग. प्रार्थ्यत इ° । इ° । ३ घ. त्वदन्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नैवाभ्यसूयामि वचस्त्वदीयं
प्रीत्या प्रयच्छामि शिरोऽस्मदीयम् ॥
को वाऽर्थिसात्प्राज्ञतमो नृकायं
जानन्न कुर्यादिह बह्वपायम् ॥ २५ ॥
पतत्यवश्यं हि विकृष्यमाणं
कालेन यत्नादपि रक्षमाणम् ॥
वर्ष्मामुना सिध्यति चेत्परार्थः
स एव मर्त्यस्य परः पुमर्थः ॥ २६ ॥
वर्ते विविक्तेऽधिसमाधि सिद्धिवि-
न्मिथः समायाहि करोमि ते मतम् ॥
नाहं प्रकाशं वितरीतुमुत्सहे
शिरःकपालं विजनं समाश्रय ॥ २७ ॥
शिष्या विदन्ति यदि चिन्तितकार्यमेत-
द्योगिन्मदेकशरणा विहतिं विदध्युः ॥
को वा सहेत वपुरेतदपोहितुं स्वं
को वा क्षमेत निजनाथशरीरमोक्षम् ॥ २८ ॥

---

तद्वचनमुदाहरति—नैवेति। यत इह लोके बहुनाशनिमित्तवन्तं नृकायं जानन्को वा प्राज्ञतमोऽर्थिसान्न कुर्यादपि तु कुर्यादेव। अन्यथा तस्य प्राज्ञतमत्वमेव कुतस्त्यमित्यर्थः। इन्द्रवज्रा वृत्तम् ॥ २५ ॥ [ त्वदीयं वचः। 'असूया तु दोषारोपो गुणेष्वपि' इत्यमराद्वैव गुणापलापेन दोषदुष्टं करोमीत्यर्थः ] ॥ २५ ॥

यतो यत्नादपि रक्ष्यमाणं शरीरं कालेनाऽऽकृष्यमाणमवश्यं पतति ततोऽनेन वर्ष्मणा परप्रयोजनं सिध्यति चेत्तर्हि स एव मरणधर्मकस्य परः पुरुषार्थः। उपजातिवृत्तम् ॥ २६ ॥

तस्माद्धे सिद्धिविद्यथा विविक्तेऽहमधिसमाधि समाधौ वर्ते तथा मिथो रहसि समायाहि तेऽभिमतं करोमि यतः शिरः कपालं प्रकटं दातुमहं नोत्सहेऽतो विजनं समाश्रय ॥ २७ ॥

कुत इति चेत्तत्राऽऽह—शिष्या यद्येतच्चिन्तितं कार्यं जानन्ति तर्हि हे योगिन्विहतिं विदध्युस्तव कार्यस्य विनाशं कुर्युः। यतो मदेकशरणाः। स्वशरीरत्यागवन्निजनाथशरीरमोक्षोऽप्यसह्य इत्याह—एतत्स्वं शरीरं त्यक्तुं को वा सहेत निजनाथशरीरस्य मोक्षं च को वा क्षमेत। वसन्ततिलका वृत्तम् ॥ २८ ॥

---

१ घ. सहेत।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तौ संविदं वितनुतामिति संप्रहृष्टौ
योगी जगाम मुदितो निलयं मनस्वी ॥
श्रीशंकरोऽपि निजधामनि जोषमास
प्रोचे न किंचिदपि भावमसौ मनोगम् ॥ २९ ॥
शूली त्रिपुण्ड्री पुरतोऽवलोकी
कंकालमालाकृतगात्रभूषः ॥
संरक्तनेत्रो मदघूर्णिताक्षो
योगी ययौ देशिकवासभूमिम् ॥ ३० ॥
शिष्येषु शिष्टेषु विदूरगेषु
स्नानादिकार्याय विविक्तभाजि ॥
श्रीदेशिकेन्द्रे तु सनन्दनाख्य-
भीत्या स्वदेहं व्यवधाय गूढे ॥ ३१ ॥
तं भैरवाकारमुदीक्ष्य देशिक-
स्त्यक्तुं शरीरं व्यधित स्वयं मनः ॥
आत्मानमात्मन्युदयुङ्क्त यो जप-
न्समाहितात्मा करणानि संहरन् ॥ ३२ ॥

---

इत्येवं तौ श्रीशंकरकापालिकौ संविदं वितनुतां संभाषणं संकेतं वा कृतवन्तौ । हृष्टो योगी मनस्वी मुदितः संजगाम । श्रीशंकरोऽपि निजधामनि जोषमास तूष्णीं बभूव । मनोगं भावमसौ किंचिदपि न प्रोक्तवान् ॥ २९ ॥

कंकालानां शरीरास्थ्नां मालया कृता गात्रभूषा येन ॥ इन्द्रवज्रा वृत्तम् ॥ ३० ॥ [ पुरत इति । पुरतोऽग्रतः कश्चिच्छ्राप्यकारशिष्यादिर्मा कदाचिदवलोकयेदिति भीत्याऽवलोको यस्यास्तीति तथेत्यर्थः । मदेति । सुरापानमदेन घूर्णितानि भ्रमितान्यक्षाणि ' अथाक्षमिन्द्रिये ' इत्यमरादिन्द्रियाणि यस्य सः ] ॥ ३० ॥

श्रेष्ठेषु शिष्येषु स्नानादिकार्याय विदूरगेषु सत्सु श्रीदेशिकेन्द्रे तु सनन्दनाख्यभीत्या देहं गूढे व्यवधाय विविक्तभाजि सति ययावित्यन्वयः ॥ ३१ ॥

तं भैरवाकारं कपालिनं वीक्ष्य श्रीशंकरः शरीरं त्यक्तुं स्वयं मनो व्यधात । समाहितान्तःकरणः प्रणवं जपन्यः करणानि संहरन्नात्मानं त्वंपदार्थमात्मनि तत्पदार्थेऽयुङ्क्त । इन्द्रवंशा वृत्तम् ॥ ३२ ॥ [ आत्मानं त्वंपदलक्ष्यम् । आत्मनि तत्पदलक्ष्ये चिन्मात्रे । उदयुङ्क्तासंप्रज्ञातसमाधिविधिना योजयन्नेकत्वेनानुसंदधत्सन्नित्यर्थः ।

---

१ क. ख. ग. जयन्स° । २ ख. ग. घ. 'पु श्री° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तं भैरवोऽलोकत लोकपूज्यं
स्वसौख्यतुच्छीकृतदेवराज्यम् ॥
योगीशमासादितनिर्विकल्पं
सनत्सुजातप्रभृतेरनल्पम् ॥ ३३ ॥
जत्रुप्रदेशे चिबुकं निधाय
व्यात्तास्यमुत्तानकरौ निधाय ॥
जानूपरि प्रेक्षितनासिकान्तं
विलोचने सामि निमील्य कान्तम् ॥ ३४ ॥
आसीनमुच्चीकृतपूर्वगात्रं
सिद्धासने शेपितबोधमात्रम् ॥
चिन्मात्रविन्यस्तहृपीकवर्गं
समाधिविस्मारितविश्वसर्गम् ॥ ३५ ॥
विलोक्य तं हन्तुमपास्तशङ्कः
स्वबुद्धिपूर्वार्जिततीव्रपङ्कः ॥
प्रापोद्यतासिः सविधं स याव-
द्विज्ञातवान्पद्मपदोऽपि तावत् ॥ ३६ ॥

---

स्वसमाधिनिष्ठोऽभूदित्यन्वयः । तत्र प्रत्याहारधारणाध्यानानि हेतुत्वेन द्योतयंस्तं विशिनष्टि—समाहितेत्यादिविशेषेण ] ॥ ३२ ॥

भैरवो भैरवाकारः कापालिकः सनत्सुजातादेः सकाशादनल्पम् । आख्यानकीवृत्तम् ॥ ३३ ॥ [ सनदित्यादि । सनत्सुजातादेरप्यनल्पं महान्तमित्यर्थः ] ॥३३॥

अंससंधिप्रदेशे चिबुकमधरोष्ठाधःप्रदेशं निधाय व्यात्तास्यं विवृतमुखं जानूपर्युत्तानकरौ निधाय । साम्यर्धम् । कान्तं शोभन्तम् । उपजातिवृत्तम् ॥ ३४ ॥ [ प्रेक्षितेति । निरीक्षितनासिकाग्रमित्यर्थः ] ॥ ३४ ॥

उच्चीकृतमुच्चैः कृतं पूर्वगात्रं शिरोभागो येन । सिद्धासने ।

'मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरं च विन्यस्य सिद्धाः सिद्धासनं विदुः'

इत्युक्त आसीनं शेपितमवशेपितं चिन्मात्रं येन तत्रैव विन्यस्त इन्द्रियवर्गो येन समाधिना विस्मारितः सर्वसर्गो येन ॥ ३५ ॥

एवं तं श्रीशंकरं विलोक्यापास्तशङ्कः स्वबुद्धिपूर्वमर्जितस्तीव्रः पङ्कः पापं येन प्रोद्य-

---

१ ग. घ. °स्वात्मनो भै° । २ क. °पितं चि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिशूलमुद्यम्य निहन्तुकामं
गुरुं यतात्मा समुदैक्षतान्तः ॥
स्थितश्चुकोप ज्वलिताग्निकल्पः
स पद्मपादः स्वगुरोर्हितैषी ॥ ३७ ॥

स्मरन्नथैष स्मरदार्तिहारि
प्रैह्लादवश्यं परमं महस्तत् ॥
स मन्त्रसिद्धो नृहरेर्नृसिंहो
भूत्वा ददर्शोग्रदुरीहचेष्टाम् ॥ ३८ ॥

स तत्क्षणक्षुब्धनिजस्वभावः
प्रवृद्धरुड्विस्मृतमर्त्यभावः ॥
आविष्कृतात्युग्रनृसिंहभावः
समुत्पपाताप्रतुलितप्रभावः ॥ ३९ ॥

सटाछटास्फोटितमेघसंघ-
स्तीव्रारवत्रासितभूतसंघः ॥
संवेगसंमूर्छितलोकसंघः
किमेतदित्याकुलदेवसंघः ॥ ४० ॥

---

तत्खड्गः स कापालिको हन्तुं यावत्संनिधिमाचार्यसमीपं प्राप पद्मपादोऽपि तावद्विज्ञातवान् ॥ ३६ ॥

त्रिशूलमुद्यम्य गुरुं निहन्तुकामं कपालिनं यतात्मा मनसि समुदैक्षत । दृष्ट्वा च तत्र स्थित एव स पद्मपादो ज्वलदग्निकल्पश्चुकोप यतः स्वगुरोर्हितैषी । उपेन्द्रवज्रा वृत्तम् ॥ ३७ ॥ [ पूर्वपद्य उद्यतासिपदन तच्छिरश्छेदार्थे खड्गस्यैवोर्ध्वीकृतत्वेऽपि विद्युत् काश्चिन्मां प्रत्येव तच्छिष्योऽकस्माद्धन्तुमायास्यति चेत्तद्धननाय वामकरेण त्रिशूलमित्यादि ] ॥ ३७ ॥

अथानन्तरं स्मरतामार्तिहरणं प्रैह्लादवश्यं प्रह्लादाधीनं नृहरेस्तत्परमं स्वरूपभूतं महस्तेजः स्मरन्स एष पद्मपादो नृसिंहो भूत्वा तस्योग्रां दुरीहचेष्टां ददर्श यतो मन्त्रसिद्धः । उपजातिवृत्तम् ॥ ३८ ॥ [ उग्रेति । उग्राख्यस्य दुरीहस्य दुश्चेष्टस्य दुरभिलाषस्य कापालिकस्य चेष्टां ददर्शेत्यन्वयः ] ॥ ३८ ॥

स पद्मपादः प्रवृद्धरुट्प्रवृद्धरोषः । उपजातिवृत्तम् ॥ ३९ ॥

सटानां स्कन्धरोम्णां छटया समूहेन स्फोटितो मेघसंघो येन । तीव्रशब्देन प्राणिनः

---

१ ख. ग. प. प्रह्लाद° । २ ख. ग. घ. प्रह्लाद° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षुभ्यत्समुद्रं समुदूढरौद्रं
रटन्निशाटं स्फुटदद्रिकूटम् ॥
ज्वलद्दिशान्तं प्रचलद्भ्रमान्तं
प्रभ्रश्यदक्षं दलदन्तरिक्षम् ॥ ४१ ॥

जवादभिद्रुत्य शितस्वरूग्रै-
र्दैत्येश्वरस्येव पुरा नखाग्रैः ॥
क्षिपत्त्रिशूलस्य स तस्य वक्षो
ददार विक्षिप्तसुरारिपक्षः ॥ ४२ ॥

तत्ताद्दृगत्युग्रनखायुधाढ्यो
दंष्ट्रान्तरप्रोतदुरीहदेहः ॥
निन्ये तदानीं नृहरिर्विदीर्ण-
द्युपट्टनाट्टालिकमट्टहासम् ॥ ४३ ॥

आकर्णयंस्तं निनदं बहिर्गता
उपागमन्नाकुलचित्तवृत्तयः ॥
व्यलोकयन्भैरवमग्रतो स्थितं
ततो विमुक्तं च गुरुं सुखोपितम् ॥ ४४ ॥

---

भूतसंघो येन। संवेगेन संमूर्छितो संमोहितो लोकसंघो येन। किमेतादित्याकुलो देवसंघो यस्मात्स समुत्पपातेति पूर्वेण संबन्धः ॥ ४० ॥

क्षुभ्यत्समुद्रमित्यादि क्रियाविशेषणम्। क्षुभ्यन्समुद्रो यस्यां क्रियायां समुदूढं रौद्र-मत्यन्तमथानकं रटन्तो निशाटा राक्षसादयो यस्यां ज्वलन्तो दिशामन्ताः प्रान्तभागा यस्यां प्रचलद्भ्रमरन्तो यस्यां भ्रश्यन्त्यक्षाणि जनानामिन्द्रियाणि यस्यां दलदन्तरिक्षं यस्यां तथा जवादभिद्रुत्येति परेणान्वयः ॥ ४१ ॥

जवादभिद्रुत्य शितस्वरूग्रैः शितस्वरुस्तीक्ष्णं वज्रं तद्वदुग्रैर्नखाग्रैः पुरा दैत्येश्व-रस्य हिरण्यकशिपोरिव क्षिपत्त्रिशूलस्य तस्य कापालिकस्य वक्षः क्षिप्तः सुरारिपक्षो येन स नृसिंहो ददार ॥ ४२ ॥

ततश्च तत्ताद्दृगत्युग्रनखायुधानां सिंहानामग्र्यो दंष्ट्रान्तरे प्रोतो दुरीहस्य दुश्चेष्टस्य कापालिकस्य देहो येन स नृहरिस्तदानीं विदीर्णा द्युपट्टनानां स्वर्गनगराणामट्टालिका येन तथाभूतमट्टहासं विस्तारितवान् ॥ ४३ ॥

बहिर्गताः सर्वे विनेयास्तं शब्दमाकर्णयन्नाकुलचित्तवृत्तयः समीपमागतवन्त

---

१ क ग. घ. मूर्छितो। २ 'दंष्ट्रैव सं'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रह्लादवश्यो भगवान्कथं वा
प्रसादितोऽयं नृहरिस्त्वयेति ॥
साविस्मयैः स्निग्धजनैः स पृष्टः
सनन्दनः सस्मितमित्यवादीत् ॥ ४५ ॥

पुरा किलाहो बलभूधराग्रे
पुण्यं समाश्रित्य किमप्यरण्यम् ॥
भक्तैकवश्यं भगवन्तमेनं
ध्यायन्ननेकान्दिवसाननैषम् ॥ ४६ ॥

किमर्थमेको गिरिगह्वरेऽस्मि-
न्वाचंयम त्वं वससीति शश्वत् ॥
केनापि पृष्टोऽत्र किरातयूना
प्रत्युत्तरं प्रागहमित्यवोचम् ॥ ४७ ॥

आकण्ठमत्यद्भुतमर्त्यमूर्तिः
कण्ठीरवात्मा परतश्च कश्चित् ॥
मृगो वनेऽस्मिन्मृगयो वसन्मे
भवत्यहो नाक्षिपथे कदाऽपि ॥ ४८ ॥

---

आगत्य चाग्रतो मृतं भैरवसंज्ञं कापालिकं ततो भैरवाद्विमुक्तं च सुखेन स्थितं गुरुं दृष्टवन्तः ॥ ४४ ॥

सनन्दनः पद्मपादः सस्मितं यथा स्यात्तथेति वक्ष्यमाणमुक्तवान् ॥ ४५ ॥

तद्वचनमुदाहरति—पूर्वं खल्वहो बल्लसंज्ञस्य पर्वतस्याग्रे पुण्यं किमपि वनं समाश्रित्य भक्तैकवश्यमेनं नृहरिं भगवन्तं ध्यायन्ननेकान्दिवसानहं नीतवान् ॥ ४६ ॥

हे वाचंयमास्मिन्गिरिगह्वरे किमर्थमेकस्त्वं वससीति केनापि किरातयूना पुरा पृष्टोऽहमिति वक्ष्यमाणां प्रत्युत्तरमुक्तवान् ॥ ४७ ॥

तदाह—कण्ठपर्यन्तमत्यद्भुता नरमूर्तिर्यस्य परतश्च सिंहात्मा कश्चिन्मृगोऽस्मिन्वने वसन्हे मृगयो व्याध ममाक्षिमार्गे कदाऽपि न भवति । अहो अतिकष्टम् ॥ ४८ ॥

---

१ ख. ग. घ. प्रह्लाद° । २ ख. नृसिंहं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीरयत्येव मयि क्षणेन
वनेचरोऽयं प्रविशन्वनान्तम् ॥
निबध्य गाढं नृहरिं लताभिः
पुण्यैरगण्यैः पुरतो न्यधान्मे ॥ ४९ ॥
महर्षिभिस्त्वं मनसाऽप्यगम्यो
वनेचरस्यैव कथं वशेऽभूः ॥
इत्यद्भुताविष्टहृदा मयाऽसौ
विज्ञाप्यमानो विभुरित्यवादीत् ॥ ५० ॥
एकाग्रचित्तेन यथाऽमुनाऽहं
ध्यातस्तथा धातृमुखैर्न पूर्वैः ॥
नोपालभेथास्त्वमितीरयन्मे
कृत्वा प्रसादं कृतवांस्तिरोधिम् ॥ ५१ ॥
आकर्ण्य तां पद्मपदस्य वाणी-
मानन्दमग्नैरखिलैरभावि ॥
जगर्ज चोच्चैर्जगदण्डभाण्डं
मूर्ध्ना स्वधाम्ना दलयन्नृसिंहः ॥ ५२ ॥
ततस्तदाभाटिचलत्समाधिः
स्वात्मप्रबोधोन्मथितत्र्युपाधिः ॥
उन्मील्य नेत्रे विकरालवक्त्रं
व्यलोकयन्मानवपञ्चवक्त्रम् ॥ ५३ ॥

---

इत्येवं मयि कथयत्येव सत्ययं वनेचरो वनमध्यं क्षणमात्रेण प्रविशन्नृहरिं लताभिर्गाढं निबध्य मे पुण्यैरगण्यैर्ममाग्रे स्थापितवान् ॥ ४९ ॥

अद्भुतेनाऽऽश्चर्येणाऽऽविष्टं मनो यस्य तथाभूतेन मयेत्येवं विज्ञाप्यमानोऽसौ विभुर्नृहरिरिति वक्ष्यमाणमुक्तवान् ॥ ५० ॥

तदुदाहरति—यथाऽमुना किरातयूनैकाग्रचित्तेनाहं ध्यातस्तथा पूर्वैर्ब्रह्मादिभिरपि न ध्यातोऽतस्त्वं नोपालभेथा इति कथयन्मे प्रसादं कृत्वा तिरोधानं कृतवान् । इन्द्रवज्रा वृत्तम् ॥ ५१ ॥

पद्मपादस्य तां वाणीं श्रुत्वाऽखिलैरानन्दमग्नैरभावि सर्वेऽप्यानन्दमग्ना अभूवन् । अनन्तरं स्वतेजसा जगद्ब्रह्माण्डं दलयन्नृसिंहो जगर्ज च । उपजातिवृत्तम् ॥ ५२ ॥

ततस्तस्य गर्जनानन्तरं तस्याऽऽभटिन साहंकारनादेन चलन्समाधिर्यस्य स्वात्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चन्द्रांशुसोदर्यसटाजटालं
तार्तीयनेत्राब्जकनन्निठालम् ॥
सहोद्यदुष्णांशुसहस्रभासं
विध्यण्डविस्फोटकृदट्टहासम् ॥ ५४ ॥
नखाग्रनिर्भिन्नकपालिवक्ष-
स्थलोच्चलच्छोणितपङ्किलाङ्गम् ॥
श्रीवत्सवत्सं गलवैजयन्ती-
श्रीरत्नसंस्पर्धितदन्त्रमालम् ॥ ५५ ॥
सुरासुरत्रासकरातिघोर-
स्वाकारसारव्यथिताण्डकोशम् ॥
दंष्ट्राकरालाननिर्यदग्नि-
ज्वालालिसंलीढनभोवकाशम् ॥ ५६ ॥
स्वरोमकूपोद्गतविस्फुलिङ्ग-
प्रचारसंदीपितसर्वलोकम् ॥
जम्भद्विड्जृम्भितशंभुदम्भ-
संस्तम्भनारम्भकदन्तपेषम् ॥ ५७ ॥

---

साक्षात्कारेणोन्मथिताः कारणादित्रय उपाधयो यस्य स श्रीशंकरो नेत्रे उन्मील्य [illegible] वक्त्रं मानवपञ्चास्यं नृसिंहमलोकयत् ॥ ५३ ॥

तं विशिनष्टि—चन्द्रकिरणसदृशाभिः सटाभिर्जटालं व्याप्तं तृतीयनेत्रकमलेन [illegible] निटालं मस्तकं यस्य सहोद्यतां सूर्यसहस्राणां भा इव भा यस्य ब्रह्माण्डविस्फोटकरोऽट्टहासो यस्य तम् ॥ ५४ ॥

नखाग्रेण निर्भिन्नारकपालिवक्षस्थलादुच्चलच्छोणितस्य पङ्केन व्याप्तान्यङ्गानि यस्य [illegible] श्रीवत्सो नाम रोम्णामावर्तस्तेन युक्तं दक्षिणवक्षो यस्य तम्। ' वत्सः पुत्रादिवर्षयोः [illegible] तर्णके नोरसि क्लीवम् ' इति मेदिनी। गले वैजयन्त्या श्रीरत्नेन कौस्तुभमणिना [illegible] संस्पर्धिनी तस्य कपालिनोऽन्त्राणां माला यस्य तम् ॥ ५५ ॥

देवासुरत्रासकरस्यातिघोरस्य स्वाकारस्य सारेण बलेन व्यथितोऽण्डकोशो येन दंष्ट्रा[illegible] करालान्मुखान्निर्गच्छदग्निज्वालालिभिः संलीढः समास्वादितो नभोवकाशो येन तम्॥ ५६ ॥

स्वरोमकूपेभ्य उद्गतानां विस्फुलिङ्गानां प्रचारेण संदीपिताः सर्वलोका येन [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मा भूदकाण्डे प्रलयो महात्म-
न्कोपं नियच्छेति गृणद्भिरारात् ॥
ससाध्वसैः प्राञ्जलिभिः सगात्र-
कम्पैर्विरिञ्च्यादिभिरर्थ्यमानम् ॥ ५८ ॥
विलोक्य विद्युच्चपलोग्रजिह्वं
यतिक्षितीशः पुरतो नृसिंहम् ॥
अभीतिरैडिष्ट तदोपकण्ठं
स्थितोऽपि हर्षाश्रुपिनद्धकण्ठः ॥ ५९ ॥
नरहरे हर कोपमनर्थदं
तव रिपुर्निहतो भुवि वर्तते ॥
कुरु कृपां मयि देव सनातनीं
जगदिदं भयमेति भवद्दृशा ॥ ६० ॥
तव वपुः किल सत्त्वमुदाहृतं
तव हि कोपनमण्वपि नोचितम् ॥
तदिह शान्तिमवाप्नुहि शर्मणे
हरगुणं हरिराश्रयसे कथम् ॥ ६१ ॥

शुरविशेषं द्वेष्टीति जम्भद्विडिन्द्र उज्जृम्भित उल्लासितः शंभुर्महादेवस्तयोर्दम्भस्य क्षमापनकैतवस्य यत्संस्तम्भनं तस्याऽऽरम्भको दन्तपेषो यस्य ॥ ५७ ॥ [ दम्भो ' दम्भस्तु कैतवे कल्के ' इति मेदिन्याः संहारकालिकजगद्भयरचनकैतवविशेषः ] ॥ ५७ ॥

हे महात्मन्नसमये प्रलयो मा भूदतः कोपं नियच्छेत्येवं ससाध्वसैः सगात्रकम्पैः प्राञ्जलिभिः*राद्दरात्स्तुवद्भिर्ब्रह्मादिभिः प्रार्थ्यमानम् ॥ ५८ ॥ [ आराद्दूर एव ] ॥ ५८ ॥

विद्युद्वच्चपलोग्रजिह्वमेवंभूतं नृहरिं पुरतो विलोक्य तदा समीपं स्थितोऽपि भीतिरहितो हर्षाश्रुभिः पिनद्धः कण्ठो यस्य स यतिराजः श्रीशंकरः स्तुतवान्। उपेन्द्रवज्रा वृत्तम्॥५९॥

हे नरहरे कोपमुपसंहर। यतोऽनर्थदं यदर्थमाविष्कृतः स तु तव शत्रुर्निहतः सन्भुवि वर्ततेऽतो हे देव सनातनीं मयि कृपां कुरु। किंच भवत्कोपदृष्ट्या सर्वमिदं जगद्भयमेति। द्रुतविलम्बितं वृत्तम् ॥ ६० ॥

किंच तव विष्णोर्वपुः खलु सत्त्वमुदाहृतं हि यतस्तव कोपनमण्वपि नोचितं तत्त-

* गृणद्भिराराादित्यत्र गृणद्भिरादरादितिपाठानुरोधेनेदम्। आदर्शपुस्तकेषु तु नायमुपलभ्यते।

१ क. °काले भ°। २ क ख. घ. °स्य क्षमाप°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकलभीतिषु दैवतम स्मर-
न्सकलभीतिमपोह्य सुखी पुमान् ॥
भवति किं प्रवदामि तवेक्षणे
परमदुर्लभमेव तवेक्षणम् ॥ ६२ ॥
स्मृतवतस्तव पादसरोरुहं
मृतवतः पुरुषस्य विमुक्तता ॥
तव कराभिहतोऽमृत भैरवो
न हि स एष पुनर्भवमेष्यति ॥ ६३ ॥
दितिजसूनुममुं व्यसनार्दितं
सकृदरक्षदुदारगुणो भवान् ॥
सकलगत्वमुदीरितमस्फुटं
प्रकटमेव विधित्सुरभूत्पुरः ॥ ६४ ॥

---

स्मादस्मिन्काले सुखाय शान्तिं प्राप्नुहि । तवैतन्नोचितमिति साक्षेपमाह—रुद्रमुं ...
सत्त्वगुणो विष्णुस्त्वं कथमाश्रयसे ॥ ६१ ॥

एवं कोपशान्तिं प्रार्थयित्वा स्तौति—हे दैवतम सकलभीतिषु स्मरन्सर्वभ...
पुमान्सुखी भवति । तव दर्शने सति किं प्रवदामि स यद्भवति न तद्वक्तुं शक्यमित्...
तस्मात्तव दर्शनं परमदुर्लभमेव ॥ ६२ ॥ [ सकलेति । हे अ 'अकारो ...
स्यात्' इत्येकाक्षरकोशादपि विष्णो इत्यर्थः । दैवतं स्वस्वोपास्यपारमेश्वरलीलाविग्र...
षावच्छिन्नं हरिहरादिपदवाच्यं चैतन्यमिति यावत् ]॥ ६२ ॥

अथ कापालिकस्य विमोक्षाय व्याजेनाऽऽह—तव पादकमलं स्मृतवतो मृतवतः पु...
षस्य विमुक्तता भवति । अयं तु भैरवस्तव करेणाभिहतः सन्मृतोऽतः स एष ...
संसृतिं न प्राप्स्यतीत्यर्थः ॥ ६३ ॥

भक्तरक्षणं तद्वचनपालनं च तव स्वभाव एवेत्याह—दितिजस्य हिरण्यकशिपोः पु...
ममुं दुःखार्दितं प्रह्लादमुदारगुणो भवान्सकृदरक्षत् । कासाविति पित्रा पृष्टेन ...
सर्वत्रैवास्तीति सर्वगत्वमस्फुटं प्रकटमेव विधातुमिच्छुः पुरोऽग्रे भवान्प्रादुरभूत् ॥ ६४ ॥

---

१ ग. 'तमं स्म°। २ ख सत्त्वगुणी । ३ ग °ति । दै°। ४ ग. 'तमं त्वां स्म°। ५ ...
रन्सर्व°। ६ ग. घ. °न्सस । ७ ख. ग. 'मि य°। ८ क ख. त्वं प्रह्लादमसुमुदा°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सृजसि विश्वमिदं रजसाऽऽवृतः
स्थितिविधौ श्रितसत्त्व उदायुधः ॥
अवसि तद्धरणे तमसाऽऽवृतो
हरसि देव तदा हरसंज्ञितः ॥ ६५ ॥

तव जनिर्न गुणास्तव तत्त्वतो
जगदनुग्रहणाय भवादिकम् ॥
तव पदं खलु वाङ्मनसातिगं
श्रुतिवचश्चकितं तव बोधकम् ॥ ६६ ॥

नरहरे तव नामपरिश्रवा-
त्प्रमथगुह्यकदुष्टपिशाचकाः ॥
अपसरन्ति विभोऽसुरनायका
न हि पुरःस्थितये प्रभवन्त्यपि ॥ ६७ ॥

त्वमेव सर्गस्थितिहेतुरस्य
त्वमेव नेता नृहरेऽखिलस्य ॥
त्वमेव चिन्त्यो हृदयेऽनवद्ये
त्वामेव चिन्मात्रमहं प्रपद्ये ॥ ६८ ॥

---

त्वमेव ब्रह्मादिरूपेण सृष्ट्यादिकं करोषीत्याह—रजसाऽऽवृतो विश्वं सृजसि । स्थितिविधौ स्वीकृतसत्त्व उद्यतायुधः पालयसि । तस्य हरणसमये हे देव तमसाऽऽवृतस्तदा हरसंज्ञितो हरसि ॥ ६५ ॥

वस्तुतस्त्वजस्य जन्म निर्गुणस्य गुणाश्च नैव सन्ति । तर्हि जन्मादिकं किमर्थमित्यत आह—तव जन्मादिकं जगदनुग्रहणाय । यतस्तव पदं वाङ्मनसातिगम् 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतेः । तर्हि 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः कथं पुरुषस्य श्रुतिगम्यतेति चेत्तत्राऽऽह—श्रुतिवचश्चकितं सत्तव बोधकम् । 'अस्थूलमनणु' इत्येवं निषेधमुखेन लक्षणावृत्त्या च बोधयति । न तु साक्षादित्यर्थः ॥ ६६ ॥

यद्यपि नामरूपादिविनिर्मुक्तस्त्वं तथाऽपि हे नरहरे तव नामपरिश्रवणात्प्रमथादयोऽपसरन्ति दूरतरं गच्छन्ति । हे विभो दैत्यनायकास्तु पुरःस्थितयेऽपि समर्था न भवन्ति ॥ ६७ ॥

तथाच यतः सर्गादिहेतुर्नियन्त्रादिश्च त्वमेवातस्त्वामेव चिन्मात्रमहं प्रपद्य इत्याह—.

---

१ ख. ग. घ. 'तः । ६५ । न च ज°' । २ क. 'ति कथं श्रु°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हतो वराको हि रुषं नियच्छ
विश्वस्य भूमन्नभयं प्रयच्छ ॥
एते हि देवाः शममर्थयन्ते
निरीक्ष्य भीताः प्रतिखेदयन्ते ॥ ६९ ॥

द्रष्टुं न शक्या हि तवानुकम्पा-
हीनैर्जनैर्निह्नुतकोटिशंपाम् ॥
मूर्तिं तदात्मन्नुपसंहरेमां
पाहि त्रिलोकीं समतीतसीमाम् ॥ ७० ॥

कल्पान्तोज्जृम्भमाणप्रमथपरिवृढप्रौढलालाटवह्नि-
ज्वालालीढत्रिलोकीजनितचटचटाध्वानधिक्कारधुर्यः ॥
मध्ये ब्रह्माण्डभाण्डोदरकुहरमनैकान्त्यदुस्थामवस्थां
स्त्यानस्त्यानो ममाथं दलयतु दुरितं श्रीनृसिंहाट्टहासः ॥ ७१ ॥

---

त्वमेवेति । उपजातिवृत्तम् ॥ ६८ ॥ [ अस्य जन्यजगतः । अनन्य इति चे... निर्दोष इत्यर्थः ] ॥ ६८ ॥

एवं स्तुत्वा रोषशान्तिं पुनः प्रार्थयते—हि यस्माद्वराको हतोऽतः कोपं नियच्छ । हे भूमंस्तेन च विश्वस्याभयं प्रयच्छ । हि यस्मादेते देवाः शमं प्रार्थयन्ते । किं... भीताः प्रतिखेदं प्राप्नुवन्ति ॥ ६९ ॥ [ एत इत्यङ्गुल्या नभःसंस्थितानां प्रागुक्ता... दिदेवानां निर्देशो ध्वन्यते ] ॥ ६९ ॥

किंच हि यस्मात्तवानुकम्पा हीनैर्जनैर्द्रष्टुं न शक्या तत्तस्माद्ध आत्मन्निमां निह्नु... तकोटिविद्युतं मूर्तिमुपसंहर । तेन च भयात्समतिक्रान्तसीमां त्रिलोकीं पाहि ॥ ७० ॥

अथेदानीं श्रीनृसिंहाट्टहासं वर्णयंस्तस्माद्दुरितशमं प्रार्थयते—कल्पान्त उज्जृम्भ... माणस्य प्रमथपरिवृढस्य रुद्रस्य प्रौढो यो लालाटवह्निस्तस्य ज्वालाभिर्लीढ... त्रिलोक्यां जनितस्य चटचटाशब्दस्य धिक्कारे धुर्यः । पुनश्च मध्ये ब्रह्माण्डे... ब्रह्माण्डभाण्डात्मकपात्रजठरच्छिद्रमध्ये योऽनैकान्त्येनाव्यभिचारेण दुस्था दुर्घट... स्थितिर्यस्या अनेकरूपां जन्ममरणादिलक्षणामवस्थां प्रति स्त्यानस्त्यानोऽलसवनो ह... मूर्तिः ।

'स्त्यानं स्निग्धेऽपि च घने स्वनलालस्ययोरपि'

इति मेदिनी । एवंभूतोऽयं श्रीनृसिंहाट्टहासो मम दुरितं दलयतु । स्रग्धरा... वृत्तम् ॥ ७१ ॥

---

१ घ. °स्मादयं वरा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्येव्यानद्धवातंधयगुणवलनाधानमन्थानभूभृ-
न्मन्थेनोत्क्षोभिदुग्धोदधिलहरिमिथःस्फालनाचारघोरः ॥
कल्पान्तोन्निद्ररुद्रोच्चतरडमरुकध्वानवद्धाभ्यसूयो
घोपोऽयं कर्णघोरः क्षपयतु नृहरे रंहसां संहतिं नः ॥ ७२ ॥
क्षुन्दानो मङ्क्षु कल्पावधिसमयसमुज्जृम्भदम्भोदगुम्फ-
स्फूर्जद्दम्भोलिसंघस्फुरदुरुरटिताखर्वगर्वप्ररोहान् ॥
क्रीडाक्रोडेन्द्रघोणासरभसविसरद्घोरघूर्घोरवश्री-
र्गम्भीरस्तेऽट्टहासो हर हर नृहरे रंहसांऽहांसि हन्यात् ॥ ७३ ॥
एवं विशिष्टनुतिभिर्नृहरौ प्रशान्ते
स्वं भावमेत्य मुनिरेष बभूव शान्तः ॥
स्वप्नानुभूतमिव शान्तमनाः स्मरंस्त-
मात्मानमात्मगुरवे प्रणतिं चकार ॥ ७४ ॥

---

किंच मध्ये व्यानद्धस्य सम्यग्बद्धस्य वातंधयो वायुपो वासुकिसंज्ञः सर्पस्तल्लक्षणस्य गुणस्य वलनस्याऽऽवेष्टनस्याऽऽधानं स्थापनं यत्र स चासौ मन्थनाद्रिर्मन्दराचलस्तेन यो मन्थो मन्थनं तेन क्षोभिणः क्षीरसमुद्रस्य लहरीणां यो मिथःस्फालनाचारस्ताडनाचारस्तद्वद्घोरस्तस्माद्घोर इति वा। भृतश्च कल्पान्त उन्निद्रस्य रुद्रस्योच्चैर्डमरुकशब्देन बद्धाऽभ्यसूया येन तथाभूतोऽयं कर्णघोरो नृहरेर्घोषो नोंऽहसां पापानां समुदायं क्षपयतु ॥ ७२ ॥

किंच कल्पान्तसमये समुज्जृम्भतामम्भोपानां गुम्फे समूहे स्फूर्जतामशनीनां संघस्य स्फुरद्दुरुरटितं बृहद्गर्जनं तस्यानल्पान्गर्वप्ररोहान्मङ्क्षु क्षुन्दान आशु चूर्णीकुर्वाणः। पुनश्च क्रीडार्थं यो वराहेन्द्रस्तस्य नासायाः सरभसं सवेगं विसरन्यो घोरो घूर्घोलक्षणः शब्दस्तस्य श्रीरिव श्रीर्यस्य स गम्भीरस्ते नृहरेरट्टहासो हे हर हरेति संभ्रमे वीप्सा। वेगेन नः पापानि हन्यात् ॥ ७३ ॥

एवं विशिष्टस्तुतिभिर्नृहरौ प्रशान्ते सत्येष मुनिः पद्मपादः स्वं भावमेत्य शान्तो बभूव। ततश्च शान्तमनाः स्वप्नानुभूतमिवैतं तं स्वात्मानं स्मरन्सन्स्वगुरवे प्रकर्षेण नतिं चकार। वसन्ततिलकावृत्तम् ॥ ७४ ॥

---

१ ग. 'ल्पान्तोन्नि°'। २ ख. घ. 'व तमात्मा°'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चारित्र्यमेतत्प्रयतस्त्रिसंध्यं
भक्त्या पठेद्यः शृणुयादवन्ध्यम् ॥
तीर्त्वाऽपमृत्युं प्रतिपद्य भक्तिं
स भुक्तभोगः समुपैति मुक्तिम् ॥ १२२३ ॥
इति श्रीमाधवीये तदुग्रभैरवनिर्जयः ॥
संक्षेपशंकरजये सर्ग एकादशोऽभवत् ॥ ११ ॥

---

अथ द्वादशः सर्गः ।

अथैकदाऽसौ यतिसार्वभौम-
स्तीर्थानि सर्वाणि चरन्सतीर्थ्यैः ॥
घोरात्कलेर्गोपितधर्ममागा-
द्गोकर्णमभ्यर्णचलार्णवौघम् ॥ १ ॥

---

उक्तचारित्र्यपठनादेः फलमाह—चारित्र्यमिति । प्रयतः सावधानः । ... न्ध्यमनिष्फलम् । उपजातिवृत्तम् ॥ १२२३ ॥ [ प्रयतः पूतः सन्नित्यर्थः ] ॥ ... [ इति श्रीति । तदिति । तं श्रीशंकराचार्यं प्रत्यागतो य उग्रः शिरःसंहर... कत्वाद्भयंकर एतादृशो यो भैरवो भैरवप्रणीततन्त्रविशेषमतनिष्ठः कापालिकविशेष... नितरां निरुक्तनाशावधिर्जयः पराजयो यत्र स तथेत्यर्थः ] ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपूज्यपादशिष्यदत्तवं-
शावतंसरामकुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्य-
विजयडिण्डिम एकादशः सर्गः ॥ ११ ॥

अथ द्वादशस्य टीका ।

अथ हस्तामलकादिप्रसङ्गं सपरिकरं वर्णयितुमारभते—अथानन्तरमेकस्मिन्काले ... चक्रवर्ती श्रीशंकरः शिष्यैः सह सर्वाणि तीर्थानि चरन्घोरात्कलेर्गोपितो रक्षितो ध... । अभ्यर्णमदूरं येन तमभ्यर्णोऽविदूरस्थलः समुद्रस्यौघो रयो यस्य तं गोकर्णमागात् । इत्यनेनार्देर्निष्ठाया इण्निषेधः । उपजातिवृत्तम् ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरिञ्चिनाम्भोरुहनाभवन्द्यं
प्रपञ्चनाट्याद्भुतसूत्रधारम् ॥
तुष्टाव वामार्धवधूटिमस्त-
दुष्टावलेपं प्रणमन्महेशम् ॥ २ ॥
वपुः स्मरामि क्वचन स्मरारे-
र्बलाहकाद्वैतवदावदाश्रि ॥
सौदामनीसाधितसंप्रदाय-
समर्थनादेशिकमन्यतश्च ॥ ३ ॥
वामाङ्गसीमाङ्कुरदंशुतृण्या-
चञ्चन्मृगाञ्चत्तरदक्षपाणि ॥
सव्यान्यशोभाकलमाग्रभक्ष-
साकाङ्क्षकीरान्यकरं महोऽस्मि ॥ ४ ॥

---

गत्वा च प्रणमन्सन्महेशं तुष्टाव । कथं भूतमिति तत्राऽऽह—विरिञ्चिनेन ब्रह्मणा ।

' विरिञ्चोऽथ विरञ्ची च ब्रह्मण्यपि विरिञ्चिनः '

इति विश्वप्रकाशः । कमलनाभेन विष्णुना च वन्द्यम् । यतः प्रपञ्चलक्षणस्य नाट्यस्या-द्भुतसूत्रधारं कूटस्थत्वे सति तत्कर्तृत्वेनाऽऽश्चर्यरूपं नाटकाचार्यम् । यतो मायासचिवामि-त्याह—वामार्धे वधूटिर्वधूर्यस्य तं तथाऽप्यस्तो दुष्टानां कामक्रोधादीनामवलेपो यस्मा-त्तम् ॥ २ ॥

कामारेर्वपुः स्मरामि । क्वचन दक्षिणभागे बलाहकेन मेघेनाद्वैतस्याभेदस्य वदावदा वादिनी श्रीर्यस्मिन् । अन्यतो वामभागतश्च विद्युता साधितस्य मेघाविनाभावादिरूपस्य संप्र-दायस्य समर्थनायां देशिकं गुरुम् ॥ ३ ॥

किंच वामाङ्गलक्षणे सीम्नि क्षेत्रे ।

' सीमा घटिस्थितिक्षेत्रेष्वण्डकोशेऽपि च स्त्रियाम् '

इति मेदिनी । अङ्कुरन्त्यां रोहन्त्यां किरणलक्षणायां तृण्यायां तृणसमूहे चञ्चन्मृगेण स्फुरत्तरो दक्षिणहस्तो यस्यै तत्तथा सव्यान्यस्य दक्षिणभागस्य शोभैव कलमः सस्यम् ।

' कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च '

इति मेदिनी । तस्याग्रस्य भक्षणे साकाङ्क्षः कीरः शुकोऽन्यकरे वामहस्ते यस्य तन्महोऽहमस्मि । तत्र शिवकरे मृगः पार्वतीहस्ते शुक इति बोध्यम् ॥ ४ ॥

---

१ ग. घ. स्मरामः । २ क. ख. घ. 'दामिनी' । ३ क. 'रिञ्चिश्च ब्र' । ४ ख. 'क्षणसी' । ५ ख. ग. घ. 'स्य तथा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महीध्रकन्यागलसङ्गतोऽपि
माङ्गल्यतन्तुः किल हालहालम् ॥
यत्कण्ठदेशेऽकृत कुण्ठशक्ति-
मैक्यानुभावादयमस्मि भूमा ॥ ५ ॥
गुणत्रयातीतविभाव्यमित्थं
गोकर्णनाथं वचसाऽर्चयित्वा ॥
तिस्रः स रात्रीस्त्रिजगत्पवित्रे
क्षेत्रे मुदैष क्षिपति स्म कालम् ॥ ६ ॥
वैकुण्ठकैलासविवर्तभूतं
हरन्नताघं हरिशंकराख्यम् ॥
दिव्यस्थलं देशिकसार्वभौम-
स्तीर्थप्रवासी नचिरादयासीत् ॥ ७ ॥
भ्रमापनोदाय भिदावदाना-
मद्वैतमुद्रामिह दर्शयन्तौ ॥
आराध्य देवौ हरिशंकरौ स
द्व्यर्थाभिरित्यर्चयति स्म वाग्भिः ॥ ८ ॥

---

किंच धराधरस्य हिमाचलस्य कन्याया गलेन संलग्नोऽपि माङ्गल्यतन्तुः सौमङ्ग[...] यस्य कण्ठदेशे हालाहलं कुण्ठशक्तिमकृत । सोऽयं भूमैक्यानुभावादहमेवास्मि ॥ [...] [ हालहालमिति प्रयोगस्तु च्छन्दोनुरोधादेव ] ॥ ५ ॥

गुणातीतैर्विभाव्यं विभावनीयं गोकर्णनाथमित्थं वचसाऽर्चयित्वा तिस्रो रात्रीस्त्रिजगत्प[...] वित्रे क्षेत्रे स एष मुदा कालं क्षिपति स्म ॥ ६ ॥

ततश्च वैकुण्ठकैलासयोर्विवर्तभूतं स्वातिरिक्ताकारेण वर्तत इति विवर्तस्तद्रूपं तयो[...] न्तरं नताघं हरत् । हरिशंकराख्यं दिव्यं स्थलं तीर्थप्रवासी देशिकसार्वभौमः शंक[...] गात् ॥ ७ ॥

भेदवादिनां[2] भ्रमापनोदायास्मिँल्लोकेऽद्वैतमुद्रां दर्शयन्तौ हरिशंकरौ देवावाराध्य [...] श्रीशंकर इति वक्ष्यमाणप्रकारेण द्व्यर्थाभिर्वाग्भिरर्चयति स्म ॥ ८ ॥

---

१ ख 'भावनी°। २ घ- भेदवादीनां।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वन्द्यं महासोमकलाविलासं
गामादरेणाऽऽकलयन्ननादिम् ॥
मैनं महः किंचन दिव्यमङ्गी-
कुर्वन्विभुर्मे कुशलानि कुर्यात् ॥ ९ ॥

ता एवोदाहरति—वन्द्यं सप्तर्प्यादिभिर्वन्दनीयम् । महतः सोमस्य प्रलयाब्धिनीरस्य कलाभिरंशैः कलायां मूले वा विलासः क्रीडा यस्य ।

'सोमः कुबेरे पितृदेवतायां वसुप्रभेदे च सुधाकरे च ।
दिव्यौपधीश्यामलतासमीरकर्पूरनीरेषु च वानरे च'

इति विश्वप्रकाशः ।

'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके'

इति मेदिनी । सोमकस्य वेदापहारकस्यासुरस्य लावी नाशको लासः क्रीडा यस्येति वा । तथाभूतमनादिं सर्वकारणत्वादकारणं मैनं मात्स्यं दिव्यमप्राकृतं किंचनाचिन्त्यं तेजोऽङ्गीकुर्वन्गां नौकारूपां भूमिमादरेणाऽऽकलयन्विकर्पन्विभुरनन्तशक्तिर्व्यापको विष्णुर्मे कुशलानि कुर्यात् । तथाचोक्तम्—

'रूपं स जगृहे मात्स्यं चाक्षुपोदधिसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्' इति
'अहं त्वामृपिभिः साकं महीनावमुदन्वति ।
विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो'

इति च । अनादिभूतां गां वेदवाचमादरादाकलयन्प्रत्याहरन्निति वा । तथाचोक्तम्—

'अतीते प्रलयापाय उत्थिताय स वेधसे ।
हत्वाऽसुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः'

इति । पक्षे सोमस्य चन्द्रस्य कलाया विलासो यस्मिंस्तया सह विलासो यस्येति वा । सोमानां हिमालयोद्भवानां दिव्यौपधीनां कलाभिरिति वा । सोमस्य कर्पूरस्येति वा । अनादिभूतां गां श्रुतिमादरेणाऽऽकलयन्विचारयन् । गां वृषभमादरेण प्रेरयन्निति वा । मेनाया हिमाचलभार्याया जातं किंचन पार्वतीलक्षणं महोऽङ्गीकुर्वन्निति व्याख्येयम् । इन्द्रवज्रा वृत्तम् ॥ ९ ॥

१ ग. सप्तर्पिताद्भिर्वं । घ. समर्थादिभिर्व ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यो मन्दरागं दधदादितेया-
न्सुधाभुजः स्माऽऽतनुतेऽविषादी ॥
स्वामद्रिलीलोचितचारुमूर्ते
कृपामपारां स भवान्विधत्ताम् ॥ १० ॥
उल्लासयन्यो महिमानमुच्चैः
स्फुरद्वराहीशकलेवरोऽभूत् ॥
तस्मै विदध्मः करयोरजस्रं
सायंतनाम्भोरुहसामरस्यम् ॥ ११ ॥

---

एवं मत्स्यावतारमभिधायाथ कमठावतारं निरूपयन्नाह—यो मन्दराख्यमचलं दध... दितेयान्देवान्सुधाभुज आतनुते स्माविषादी खेदरहितः स भवानद्रेर्मन्दराचलस्य ... भ्रमणात्मविलासार्थमुचिता योग्या चारुमूर्तिर्यस्य तस्य संबोधनं हेऽद्रिलीलोचितचारु... कूर्ममूर्ते स्वामपारां कृपां विधत्ताम् । पक्षे यो मन्दरागं मन्दराख्यपादपं दधाद्विषादी ... विषभक्षको देवान्सुधाभुजो व्यातनुते स्माद्रौ कैलासे या लीला विलासस्तस्यामुचिता ... मूर्तिर्यस्येति व्याख्येयम् ।

'अगः स्यान्नगवत्पृथ्वीधरपादपयोः पुमान् ।
मन्दरस्तु पुमान्मन्थशैले मन्दारपादपे'

इति मेदिनी । उपजातिवृत्तम् ॥ १० ॥ [ सुधेति । अमृताशिन इत्यर्थः । ... मन्देति । मन्दः स्वतःशून्यत्वाल्लोकदृष्टिकारिपतत्वाच्च स्वल्पो यो रागस्तामित्यर्थः । ... रयन्सन्निति यावत् ] ॥ १० ॥

अथ वराहावतारं वर्णयन्नाह—य उच्चैर्महेर्भूमेर्मानं चित्तोन्नतिमुल्लासयन्स्फुरंन्यो ... सूकर्या ईशो वराहीशस्तत्कलेवरस्तद्विग्रहोऽभूत् । 'मानश्चित्तोन्नतौ ग्रहे' इति विश्वप्रकाशः ... पक्षे वराहीशकलेवरः शेषविग्रहस्तस्मै वराहीशो वासुकिः कलेवरे यस्येति वा ] ... र्मुकुलितपद्मसाम्यमजस्रं विदध्मः ॥ ११ [ उल्लासयन्निति ।

'वाचिः पङ्क्तिर्महिः केलिरित्याद्या ह्रस्वदीर्घयोः'

इति वाचस्पतेर्यो महेः पृथ्व्या मानं विस्तारमुच्चैरूर्ध्वम् । उल्लासयन्दंष्ट्राग्रेण ... न्सन्नित्यर्थः । सायंतनेति । सायंकालिककमलसाम्यं मुकुलितत्वेन संपुटमित्यर्थः । ... महिमानं सर्वेश्वरत्वेन माहात्म्यमित्यर्थः ] ॥ ११ ॥

---

१ क ध. 'थ वाराह' । २ ग. 'रन्त्या व' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समावहन्केसरितां वरां यः
सुरद्विपत्कुञ्जरमाजघान ॥
प्रह्लादमुल्लासितमादधानं
पञ्चाननं तं प्रणुमः पुराणम् ॥ १२ ॥
उदैत्तु बल्याहरणाभिलापो
यो वामनो हार्यजिनं वसानः ॥
तपांसि कान्तारहितो व्यतानी-
दाद्योऽवताद्वाश्रमिणामयं नः ॥ १३ ॥
येनाधिकोद्यत्तरवारिणाऽऽशु
जितोऽर्जुनः संगररङ्गभूमौ ॥
नक्षत्रनाथस्फुरितेन तेन
नाथेन केनापि वयं सनाथाः ॥ १४ ॥

---

अथ नृसिंहावतारं निरूपयन्नाह—तं पञ्चास्यं सिंहं परमात्मानं पुराणं सदैकरसं प्रणुमः । तं कमिति तत्राऽऽह—यो वरां केसरितां नृहरितां समावहन्सुरद्विषतां कुञ्जरं हिरण्यकशिपुमाजघान तं पुनः प्रह्लादमुल्लासितमादधानम् । पक्षे पञ्चमुखं सदाशिवं यः केशिरसि सरितां नदीनां मध्ये वरां श्रेष्ठां श्रीगङ्गां समावहन्सुरशत्रुं गजासुरमाजघान । प्रकर्षेणाऽऽह्लादमुल्लासितमादधानमित्यर्थः ॥ १२ ॥

अथ वामनावतारं वर्णयन्नाह—यो बलेः सकाशात्त्रैलोक्याहरणाभिलापः सुन्दरं मृगचर्म वसानो वामन उदैदुदितोऽभूत् । कान्तया रहितस्तपांसि व्यतानीत्सोऽयमाश्रमिणामाद्यो ब्रह्मचारी नोऽस्मानवतात् । पक्षे यो मनोहारि मनोज्ञमजिनं वसानो दक्षाध्वराद्बलेराहरणाभिलाप उदैत्कान्तया सत्या । उपजातिवृत्तम् ॥ १३ ॥

अथ परशुरामावतारं निरूपयन्नाह—येनाधिकं यथा स्यात्तथोद्यत्तरेण वारिणा बालकेन परशुरामेणार्जुनः कार्तवीर्यः शीघ्रं संगररङ्गभूमौ युद्धरङ्गभूमौ जितः ।

वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि वालके ।
'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः ।
मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत्'

इति मेदिनी । नक्षत्रनाथवच्चन्द्रवत्स्फुरितेन तेन केनापि नाथेन वयं सनाथाः । पक्षेऽधिकं शिरस्युद्यत्तरं वारि जलं यस्यार्जुनः पार्थः । नक्षत्रनाथेन स्फुरितोऽलंकृत इत्यर्थः॥१४॥

---

१ क. प्रह्लाद° । २ ग. °रं वर्णय° । ३ घ. 'द्विपां कु° । ४ ख. ग. घ. °यं के° । ५ क. शं म° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विलासिनाऽलीकभवेन धाम्ना
कामं द्विषन्तं स दशास्यमस्यन् ॥
देवो धरापत्यकुचोष्मसाक्षी
देयादमन्दात्मसुखानुभूतिम् ॥ १५ ॥

---

श्रीरामचन्द्रावतारं निरूपयन्नाह—अलीकमसत्यो भवः संसारो यस्मिंस्तथाभूतेन विलासिना स्वधाम्ना स्वज्योतिषा यथेष्टं द्विषन्तं रावणमस्यन्नुत्क्षिपन्नाशयन्धरा भूमिस्तस्या अपत्यं सीता तस्याः कुचयोरुष्णतायाः साक्षी साक्षाद्द्रष्टा स देवोऽमन्दसुखानुभूतिमीश्वरो ब्रह्मानन्दानुभवं देयात् । पक्षे दशेन्द्रियाणि मुखानि यस्य तथाभूतं द्विषन्तं काममस्यन्धरः पर्वतस्यापत्यं पार्वती तस्याः कुचोष्मसाक्षीति व्याख्येयम् । 'धरो गिरौ ।

कार्पासतूलके कूर्मराजे वस्वन्तरेऽपि च '

इति मेदिनी ॥ १५ ॥ [ विलासीति । विलसन्त्यमोघत्वेन सर्वदा शोभन्त इति तथा ते च ते नालीकाः शरविशेषाः—

' नालीकः शरशल्याङ्गेष्वब्जखण्डे नपुंसकम् '

इति मेदिन्याः प्रसिद्धा एव तेभ्यो भवति विश्वामित्रोपदिष्टाखिलधनुर्वेदनिखिलशस्त्रद्वारा प्रादुर्भवतीति तथा तेनेत्यर्थः । एतादृशेन धाम्ना ] [ देवो दीव्यतीति तथा विलासरसिकः क्रीडारसिकश्चेत्यर्थः । पक्षे विलासिना विशेषेण प्रकाशमानेन । दशेति ।

' चक्षूरागः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः '

इत्युक्तेश्चक्षूरागादिदशावस्थारूपाण्येव विश्वभक्षणार्थमास्यानि यस्य तमित्यर्थः । एतादृशं द्विषन्तम्—

' आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च '

इति ' ज्ञानी त्वात्मैव मे मतम् ' इति च स्मृतेर्ज्ञानिद्वेषद्वारा स्वद्वेषं कुर्वाणं कुमारसंभवादिप्रसिद्धस्वसमाधिभङ्गद्वारा साक्षादपि स्वद्रोहपरमित्यर्थः । एतादृशं मदनम् ] ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्तालकेतुः स्थिरधर्ममूर्ति-
र्हालाहलस्वीकरणोग्रकण्ठः ॥
स रोहिणीशानिशचुम्ब्यमान-
निजोत्तमाङ्गोऽवतु कोऽपि भूमा ॥ १६ ॥
विनायकेनाऽऽकलिताहितापं
निषेदुषोत्सङ्गभुवि प्रहृष्यन् ॥
यः पूतनामोहकचित्तवृत्ति-
रव्यादसौ कोऽपि कलापभूपः ॥ १७ ॥

---

अथ बलरामावतारं वर्णयन्नाह—उच्चतालकेतुः स्थिरा धर्ममयी धर्माय वा मूर्तिर्यस्य हालाहलयोः सुराहलयोः स्वीकरणः 'हाला सुरायाम्' इति मेदिनी। तथाऽपि श्रेष्ठकण्ठो रोहिणीशेन वसुदेवेनानिशं चुम्ब्यमानमुत्तमाङ्गं शिरो यस्य स कोऽपि भूमाऽवाङ्मनसगोचरः। 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' 'यो वै भूमा तत्सुखम्' इति श्रुत्युपलक्षितः परमात्माऽवतु। पक्ष उत्कृष्टताले गीतकाले केतुर्लयस्य। मोक्षधर्ममयी मोक्षधर्माय वा मूर्तिर्यस्य मोक्षधर्मस्य मूर्तिः कार्यं तत्प्राप्य इति वा। हालाहलस्य विषस्य स्वीकरणेनोग्रकण्ठो हालाहलस्वीकरणोऽपि श्रेष्ठकण्ठ इति वा। रोहिणीशश्चन्द्रः।

'ताल करतलेऽङ्गुष्ठमध्यमायां च संमिते।
गीतकालक्रियामाने करस्फाले द्रुमान्तरे।
केतुना रूक्पताकारिग्रहोत्पातेषु लक्ष्मणि।
स्थिरा भूशाल्मपर्ण्योर्ना शनौ मोक्षे बले त्रिषु'।

'मूर्तिः कार्यकाठिन्ययोः स्त्रियाम्' इति मेदिनी ॥ १६ ॥ [ उत्तालेति। उत्कटस्तालस्तालाख्यवृक्ष एव केतौ ध्वजे यस्य स तथेत्यर्थः ] ॥ १६ ॥

अथ श्रीकृष्णावतारं वर्णयन्नाह—आकलिताहितापं समासादिताहितापं यथा स्यात्तथोत्सङ्गभुवि समीपस्थाने निषेदुषा निषण्णेनोपविष्टेन विनायकेन गरुडेनोपलक्षितो यः पूतनाया मोहिका चित्तवृत्तिर्यस्य। कलापो बर्हं भूषाऽलंकारो यस्यासौ कोऽपि वर्णयितुमशक्यः प्रहृष्यन्सन्नव्यात्। संसृतिलक्षणादनर्थादवतु। पक्ष आकलिताः शुण्डया समासादिताः शिवशिरसि स्थापिता आपो यस्यां क्रियायां तथाऽङ्कस्थाने निषेदुषा विनायकेन विघ्नराजेनोपलक्षितो यः पूतं पवित्रं नाम यस्योहिकेषु स्वचिन्तकेषु चित्तवृत्तिर्यस्य तेषां चित्तवृत्तिर्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाठीनकेतोर्जयिने प्रतीत-
सर्वज्ञभावाय दयैकसीम्ने ॥
प्राय: क्रतुद्वेषकृतादराय
बोधैकधाम्ने स्पृहयामि भूम्ने ॥ १८ ॥
व्यतीत्य चेतो विषयं जनानां
विद्योतमानाय तमोनिहन्त्रे ॥
भूम्ने सदावासकृताशयाय
भूयांसि मे सन्तुतमां नमांसि ॥ १९ ॥

स्मिन्निति वा । कल्लापस्तूणं भूषा यस्यासावित्यर्थः ॥ १७ ॥ [ उत्सङ्गेति । काली-
यमर्दनकाल उत्सङ्गभुवि निकटभुवि ] [ अकलितेति । अकलितोऽज्ञातोऽहितापः सं-
विपसंतापो यथा स्यात्तथा प्रहृष्यन्सन्नित्यर्थः ] [ पक्षे कलापभूषः कला: पार्वति क-
चन्द्रः स भूषा यस्य स तथा ] ॥ १७ ॥

अथ बुद्धावतारं निरूपयन्नाह—पाठीनकेतोर्मीनकेतोः कामस्य जयिने । 'मारजित्-
कजिजिन: ' इत्यमरः । प्रतीतः प्रख्यातः सर्वज्ञभावो यस्य तस्मै दयैकसीम्ने । क्र-
क्रतुषु यज्ञेषु द्वेषो येषां तेषु कृत आदरो येन । तैः कृत आदरो यस्मिन्निति वा । तस्मै
बोधैकधाम्ने भूम्ने स्पृहयामि । एवंभूतं प्राप्तुमिच्छामि । पक्षे क्रतौ संकल्पे द्वेषो येषां ते
कृत आदरो येन । यद्वा । दक्षक्रतौ द्वेषवत्सु वीरभद्रादिषु कृतादरायेति व्याख्येयम् ।
इन्द्रवज्रा वृत्तम् ॥ १८ ॥ [ क्रत्विति । क्रतौ संकल्पे द्वेषो येषां योगिनां तैः कृ-
आदरो यत्र ] ॥ १८ ॥

कल्क्यवतारं वर्णयन्नाह—जनानां चेतो विषयं व्यतीत्य विद्योतमानायाचिन्त्यमहिमं
स्वीकृत्य प्रकाशमानाय । कल्पान्तमतमोनिहन्त्रे । सतामावासाय कृत आशयो येन स-
सत्ययुगस्येति वा । सतामावासो यस्मिंस्तथाभूते कृतयुगेऽभिप्रायो यस्येति वा । पूर्ववि-
न्नतां शातयति । भूम्ने मम भूयांसि नमांसि नमस्कारा अतिशयेन सन्तु । पक्षे चेतसो-
चरतया प्रकाशमानाय स्वयंप्रकाशायात एव चक्षुःसहकृतभानुवद्वृत्त्यारूढः संस्तमोनिहन्ते-
त्याह—अज्ञानलक्षणतमोनिहन्त्रे पुनः परिपूर्णानन्दरूपाय परब्रह्मणे । सदैव वासाय कृ-
सर्वस्याऽऽशयोऽन्तःकरणं येन । सतामावासे काश्यादौ कृतोऽभिप्रायो येनेति वा । उप-
जातिवृत्तम् ॥ १९ ॥

१ घ. 'रं वर्णय' । २ घ 'केतोः का' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृषाकपायीवरयोः सपर्यां
वाचाऽतिमोचारसयेति तन्वन् ॥
मुनिप्रवीरो मुदितात्मकामो
मूकाम्बिकायाः सदनं प्रतस्थे ॥ २० ॥
अङ्के निधाय व्यसुमात्मजातं
महाकुलौ हन्त मुहुः प्ररुद्य ॥
तदेकपुत्रौ द्विजदंपती स
दृष्ट्वा दयाधीनतया शुशोच ॥ २१ ॥
अपारमञ्चत्यथ शोकमस्मि-
न्नमूयतोच्चैरशरीरवाचा ॥
जायेत संरक्षितुमक्षमस्य
जनस्य दुःखाय परं दयेति ॥ २२ ॥
आकर्ण्य वाणीमशरीरिणीं ता-
मसाविति व्याहरति स्म विज्ञः ॥
जगत्त्रयीरक्षणदक्षिणस्य
सत्यं तवैकस्य तु शोभते सा ॥ २३ ॥

---

उपसंहरति—इत्येवमतिक्रान्तकदलीफलरसया वाचा लक्ष्मीपार्वत्यधीशयोः पूजां वितन्वन्मुदितश्चासावात्मकामश्च मुदिता आत्मकामा येनेति वा । स मुनिप्रवीरो मूकाम्बिकायाः सदनं प्रतस्थे । उपजातिवृत्तम् ॥ २० ॥

तत्र जातं वृत्तान्तमावेदयति—विगतप्राणमात्मजमङ्के निधाय । हन्तेत्यतिकष्टे । मुहुः प्ररुद्य महाव्याकुलौ यतः स एवैकः पुत्रो ययोस्तौ दंपती दृष्ट्वा स श्रीशंकरो दयाधीनतया शुशोच । उपजातिवृत्तम् ॥ २१ ॥ [ तत्र मार्गे संपन्नं कंचिद्वृत्तान्तं कथयति—अङ्क इति ] ॥ २१ ॥

एवमस्मिञ्श्रीशंकरेऽपारं शोकं गच्छति सत्युच्चैरशरीरवाचाऽमूयताशरीरिणी वागमूत् । तामुदाहरति—संरक्षितुमक्षमस्य नरस्य दया परं केवलं दुःखायैव जायेतेत्येवममूयतेत्यर्थः ॥ २२ ॥

तामशरीरिणीं वाचमाकर्ण्यासौ विज्ञः श्रीशंकर इति व्याहरति स्म । तदाह—इदं सत्यं जगत्त्रयीरक्षणकुशलस्यैवं वक्तुस्तवैवैकस्य तु सा दया शोभते । तथाच दयया सपर्येन त्वयैतयोः शोकोऽपाकरणीय इति भावः ॥ २३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीरयत्येव यतौ द्विजातेः
सुतः सुखं सुप्त इवोदतिष्ठत् ॥
समीपगैः सर्वजनीनमस्य
चारित्र्यमालोक्य विसिस्मिये च ॥ २४ ॥
रम्योपशल्यं कृतमालसाल-
रसालहिंतालतमालशालैः ॥
सिद्धिस्थलं साधकसंपदां त-
न्मूकाम्बिकायाः सदनं जगाहे ॥ २५ ॥
उच्चावचानन्दजबाष्पमुच्चै-
रुद्गीर्णरोमाञ्चमुदारभक्तिः ॥
अम्बामिहापारकृपावलम्बां
संभावयन्नस्तुत निस्तुलं सः ॥ २६ ॥
परेपरार्धं पदपद्मभाःसु
षष्ट्युत्तरं ते त्रिशतं तु भासः ॥
अविश्य वह्न्यर्कसुधामरीची-
नालोकवन्त्यादधते जगन्ति ॥ २७ ॥

---

इत्येवं यतौ कथयत्येव ब्राह्मणस्य सुतः सुखं सुप्त इवोत्थितः । सर्वस्मै जन
हितं सर्वजनीनमस्य श्रीशंकरस्य चारित्र्यमालोक्य समीपगैर्विशेषेण विस्मयश्च प्राप्तः ।
'सर्वजनाट्ठञ्खश्चेति खः' ॥ २४ ॥

कृतमालैः सालादिवृक्षविशेषै रम्यमुपशल्यं ग्रामान्तं यस्य । 'ग्रामान्त उपश
स्यात्' इत्यमरः । साधकसंपदां सिद्धिस्थलं तन्मूकाम्बिकायाः सदनं जगाहे । उप
तिवृत्तम् ॥ २५ ॥

उच्चो ब्रह्मलोकानन्दोऽवचो नीचो यस्मात्तथाभूतानन्दजन्यबाष्पमुच्चैरुद्गीर्णरोमाञ्चं
च यथा स्यात्तथोदारभक्तिः स श्रीशंकर इह लोकेऽपारकृपावलम्बामम्बां पूजयन्नि
स्तुलं निरुपमं यथा स्यात्तथा स्तुतवान् । इन्द्रवज्रा वृत्तम् ॥ २६ ॥ [ अपारेति ।
अपारकृपामनन्तानुकम्पामेवावलम्बत इति तथा तामित्यर्थः ] ॥ २६ ॥

स्तुतिमेव दर्शयति—परार्धस्य परार्धसंख्यायाः पारे तामतिक्रान्तायास्तव चरणकम
भासो मयूखास्तासु षष्ट्युत्तरं त्रिशतं तु भासो वह्निसूर्यचन्द्रानाविश्य जगन्त्यालो

---

१ ग. 'स्य चरित्रमा°' । २ ख. ग घ. नीचै°रुमा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्तश्चतुःषष्ट्युपचारभेदै-
रन्तेवसत्काण्डपटप्रदानैः ॥
आवाहनाद्यैस्तव देवि नित्य-
माराधनामादधते महान्तः ॥ २८ ॥

अम्बोपचारेष्वधिसिन्धुषष्टि
शुद्धाज्ञयोः शुद्धिदमेकमेकम् ॥
सहस्रपत्त्रे द्वितये च साधु
तन्वन्ति धन्यास्तव तोषहेतोः ॥ २९ ॥

आराधनं ते बहिरेव केचि-
दन्तर्बहिश्चैकतमेऽन्तरेव ॥
अन्ये परे त्वम्ब कदाऽपि कुर्यु-
र्नैव त्वदैक्यानुभवैकनिष्ठाः ॥ ३० ॥

---

मन्यादधते कुर्वन्ति। भासस्त्वणिमादिभिरावृतां मयूखैरित्यादि वदता श्रीनाथेनोक्ता वेदितव्याः ॥ २७ ॥

हे देवि महान्तोऽन्तर्मनस्यावाहनासनारोपणसुगन्धितैलाभ्यङ्गमज्जनशालाप्रवेशनाद्यैश्चतुःषष्ट्युपचारभेदैस्तथाऽन्तेवसत्काण्डपटप्रदानैरन्ते वसतां काण्डपटानां दूष्याद्योऽभिन्नायुसंचार्यानां पटानां प्रदानैर्हे देवि महान्तो नित्यमाराधनामादधते कुर्वन्ति। 'अपटी काण्डपटः स्यात्' इति वैजयन्ती ॥ २८ ॥

किंच हेऽम्ब चतुःषष्ट्युपचारेषु मध्य एकमेकमुपचारं शुद्धाज्ञयोर्द्वितीये सहस्रदले भ्रूमण्डलसंज्ञे पद्मे च धन्याः पुरुषास्तव तोषार्थं साधु सम्यक्तन्वन्ति विस्तारयन्ति। उपजातिवृत्तम् ॥ २९ ॥

हेऽम्ब केचित्प्राकृतास्तवाऽऽराधनं बहिरेव कुर्युरेकतमे मध्यमास्त्वन्तर्बहिश्चैवान्य उत्तमास्त्वन्तरेवापरेऽत्युत्तमास्तत्त्वविदस्तु हेऽम्ब कदाऽपि न कुर्युः। कुत इति चेत्तत्राऽऽह— यतस्त्वदैक्यानुभवैकनिष्ठास्त्वया सह स्वस्य यदैक्यं तस्यानुभवे विज्ञाने मुख्या निष्ठा येषां ते। इन्द्रवज्रा वृत्तम् ॥ ३० ॥

---

१ ख. ग. घ. °पार्यै पा°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अष्टोत्तरत्रिंशतियाः कलास्ता-
स्वर्ध्याः कलाः पञ्च निवृत्तिमुख्याः ॥
तासामुपर्यम्ब तवाङ्घ्रिपद्मं
विद्योतमानं विबुधा भजन्ते ॥ ३१ ॥
कालाग्निरूपेण जगन्ति दग्ध्वा
सुधात्मनाऽऽप्लाव्य समुत्सृजन्तीम् ॥
ये त्वामवन्तीममृतात्मनैव
ध्यायन्ति ते सृष्टिकृतो भवन्ति ॥ ३२ ॥

---

हामाधारशक्तिः १ यं धूम्रार्चिः २ रमूष्मा ३ लं ज्वलिनी ४ वं ज्वालिनी ५ इं विस्फुलिङ्गिनी ६ पं सुश्रीः ७ सं सूपाया ८ हं कविता ९ हं कव्यवाहा १० ... तपिनी ११ खंवं तापिनी १२ गंफं धूम्रा १३ घंपं मरीची १४ ङंनं ज्वालिनी १५ ... चंधं रुचिः १६ छंदं सुषुम्ना १७ जंथं भोगदा १८ झंतं विश्वा १९ ञंणं ... २० रंहं धारिणी २१ णंवं क्षमा २२ अमम्रता २३ आं मानदा २४ इं पुष्पा २५ ... ईं तुष्टिः २६ उं पुष्टिः २७ ऊं रतिः । २८ ऋं घृतिः २९ ॠं शशिनी ३० ... चन्द्रिका ३१ ऌं कान्तिः ३२ एं ज्योत्स्ना ३३ ऐं श्रीः ३४ ओंप्रीतिः ३५ ... गदा ३६ अँ पूर्णा ३७अः पूर्णाम्रता ३८ इत्येता या अष्टोत्तरत्रिंशतिकलास्तासु ... कला बोधिनीप्रमुखा निवृत्तिप्रधानाः *पराध्यर्याः श्रेष्ठास्तासामुपरि हेऽम्ब विद्योतमानं प्रकाश-मानं तव चरणारविन्दं विबुधा देवाः पण्डिताश्च भजन्ते ॥ ३१ ॥ [अष्टोत्तरत्रिंशतीति । ... अष्टोत्तरमूर्ध्वं यस्याः सैतादृशी त्रिंशतिः संख्या यथा स्यात्तथेत्यर्थः । एवं च क्रिया-... शेषणत्वेन क्लीबत्वान्नैवापप्रयागत्वापत्तिरिति बोध्यम् । अर्घ्या अर्घाय पूजाविधयेऽर्हा ... ध्यानात्मकपूजोपयोगिन्य इत्यर्थः ] ॥ ३१ ॥

यतस्त्वदीयभजनं सृष्टिकर्तृत्वादिसामर्थ्यसंपादकमित्याह—कालाग्निरूपेण जगन्ति दग्ध्वा सुधात्मनाऽऽप्लाव्य समुत्सृजन्तीममृतात्मनैव च पालयन्तीं त्वां ये ध्यायन्ति ते सृष्टिकर्तारो भवन्तीति योजना । उपजातिवृत्तम् ॥ ३२ ॥

---

* नामैकदेशे नामग्रहणमिति न्यायानुसारेणेदम् ।

---

१ घ 'स्वर्ध्याः क°' । २ ग. ये पालयन्तीं' । ३ ख यंपं । ४ क. ग. ङंनं । ५ क. ... घ. ञंतं । ६ क. ख. ग. घ. जेणं । ७ ख घ. णंठं । ८ क. पुष्पा । ९ क. ख. ... 

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ये प्रत्यभिज्ञामतपारविज्ञा
धन्यास्तु ते प्राग्विदितां गुरूक्त्या॥
सैवाहमस्मीति समाधियोगा-
त्त्वां प्रत्यभिज्ञाविषयं विदध्युः॥ ३३॥
आधारचक्रे च तदुत्तरस्मि-
न्नाराधयन्त्यैहिकभोगलुब्धाः॥
उपासते ये मणिपूरके त्वां
वासस्तु तेषां नगराद्बहिस्ते॥ ३४॥
अनाहते देवि भजन्ति ये त्वा-
मन्तः स्थितिस्त्वन्नगरे तु तेषाम्॥
शुद्धाज्ञयोर्ये तु भजन्ति तेषां
क्रमेण सामीप्यसमानभोगौ॥ ३५॥

---

तथाच ये सविशेषां त्वामेवं ध्यायन्ति त एवंभूता भवन्ति ये तु निर्विशेषां त्वामभेदेन जानन्ति ते तु धन्या एवेत्याह—ये तु गुरूक्त्याऽऽदौ विदितां समाधियोगात्सैवाहमस्मीति त्वां प्रत्यभिज्ञाविषयं विदध्युस्ते सच्चिदानन्दलक्षणं ब्रह्माहमस्मीति प्रत्यभिज्ञामतस्याद्वैतमतस्य पारं जानन्तीति ते तथाभूता धन्या इत्यर्थः। इन्द्रवज्रा वृत्तम्॥ ३३॥ [ अथैतदपेक्षयाऽप्युत्तमाधिकारिणामहंग्रहोपासनमाह—ये प्रत्यभिज्ञामतेति। तत्तेदंतोल्लेखिज्ञानं प्रत्यभिज्ञा सैवाहमित्याकारकं सगुणं वा निर्गुणं वा सततमहं ब्रह्मास्मीत्यादिवदहंग्रहोपासनाख्यमनुसंधानं तस्य यन्मतं निर्गुणाहंग्रहोपासनादेव साक्षात्कारद्वारा मोक्ष इति सिद्धान्तस्तस्य यः पारः परमोऽवधिस्तं जानन्तीति तथा ]॥ ३३॥

इदानीं तत्तच्चक्रे ध्यानस्य फलं वदन्तीति—ऐहिकभोगलुब्धा हेमनिभे चतुर्दले मूलाधारसंज्ञे चक्रे तथा तस्मादाधारचक्रादुत्तरस्मिन्षड्दले विद्रुमाभे स्वाधिष्ठानसंज्ञ आराधयन्ते ये तु दशदले धूम्रवर्णे मणिपूरकाख्ये त्वामुपासते तेषां तु वासस्तव नगराद्बहिरेव भवति। उपजातिवृत्तम्॥ ३४॥

हे देव्यनाहतसंज्ञे द्वादशदले पिङ्गलवर्णे चक्रे ये त्वां भजन्ति तेषां तु त्वन्नगरेऽन्तः स्थितिः। शुद्धे षोडशदले धूम्रवर्णे विशुद्धसंज्ञे चक्रे तु ये भजन्ति तेषां सामीप्यम्। सहस्रदले कर्पूरवर्णे आज्ञाचक्रे ये तु भजन्ति तेषां त्वत्समानो भोगो भवति॥ ३५॥

---

१ क. ये भ°। २ घ °मानभो°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सहस्रपत्रे ध्रुवमण्डलाख्ये
सरोरुहे त्वामनुसंदधानः ॥
चतुर्विधैक्यानुभवास्तमोहः
सायुज्यमम्बाश्नति साधकेन्द्रः ॥ ३६ ॥

श्रीचक्रषट्चक्रकयोः पुरोऽथ
श्रीचक्रमन्वोरपि चिन्तितैक्यम् ॥
चक्रस्य मन्त्रस्य ततस्तथैक्यं
क्रमादनुध्यायति साधकेन्द्रः ॥ ३७ ॥

---

ध्रुवमण्डलाख्ये सहस्रपत्रे कमले त्वामनुसंधानश्चतुर्विधैक्यानुभवेन निरस्तो मोहो य सोऽत एव साधकेन्द्रो हेऽम्ब सायुज्यं प्राप्नोति ॥ ३६ ॥ [ अत्र साधकेन्द्र इत्ये वचनं साधकश्रेष्ठत्वकथनं च तावत्पर्यन्तं वायुसंरोधपूर्वकमनःसंरोधस्यातिदुर्लभत्वप्र थमेव ] ॥ ३६ ॥

अनुभवस्य चातुर्विध्यं विवृणोति—पुर आदौ ।

" बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च श्रीचक्रमेतदुदितं परदेवतायाः ॥
चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥
बिन्दुश्चाष्टदलं पद्मं तथा षोडशपत्रकम् ।
चतुरस्रं चतुर्द्वारं शिवचक्राण्यनुक्रमात् ॥
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनास्रके ॥
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसंबन्धं यो जानाति स चक्रवित् ॥
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः सदाशिवः ।
अविनाभावसंबन्धं तस्माद्बिन्दुत्रिकोणयोः ॥
एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत् ।
न तत्फलमवाप्नोति ललिता वा न तुष्यति " ॥

इत्यादिवचनैरुक्तस्य श्रीचक्रस्योक्तचक्रषट्कस्य च चिन्तितं योगिभिः स्व

---

१ ख. °युज्यमाप्नो° । २ क. ग घ. °द्दशसं° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति तां वचनैः प्रपूज्य भैक्षौ-
दनमात्रेण स तुष्टिमान्कृतार्थः ॥
बहुसाधकसंस्तुतः कियन्तं
समयं तत्र निनाय शान्तचेताः ॥ ३८ ॥
श्रयति स्म ततोऽग्रहारकं श्री-
वलिसंज्ञं स कदाचन स्वशिष्यैः ॥
अनुगेहहुताग्निहोत्रदुग्ध-
प्रसरत्पावनगन्धलोभनीयम् ॥ ३९ ॥
यतोऽपमृत्युर्बहिरेव याति
भ्रान्त्वा प्रदेशं शनकैरलब्ध्वा ॥
दृष्ट्वा द्विजातींन्निजकर्मनिष्ठा-
न्दूरान्निषिद्धं त्यजतोऽप्रमत्तान् ॥ ४० ॥
यस्मिन्सहस्रद्वितयं जनाना-
मग्न्याहितानां श्रुतिपाठकानाम् ॥
वसत्यवश्यं श्रुतिचोदितासु
क्रियासु दक्षं प्रथितानुभावम् ॥ ४१ ॥

---

साधकेन्द्रोऽनुध्यायति । अथानन्तरं श्रीचक्रमन्त्रयोरपि चिन्तितैक्यमनुध्यायति । ततस्तदनन्तरं चक्रस्य तवैक्यं मन्त्रस्य चैक्यमित्येवं क्रमादनुध्यायति ॥ ३७ ॥

उपसंहरति—इतीति । कियन्तं समयं कालं निनाय नीतवान् ।

'विषमे ससजा गुरू समे चेत्सभरा यश्च वसन्तमालिका सा' ॥ ३८ ॥

ततः कदाचित्स्वशिष्यैः सह स श्रीशंकरः श्रीवलीति संज्ञा यस्य तं द्विजग्रामकं श्रयति स्म । तं विशिनष्टि—प्रतिगृहं हुतादग्निहोत्रदुग्धात्प्रसरता पावनेन गन्धेन लोभनीयं प्रार्थ्यम् ॥ ३९ ॥

पुनस्तमेव वर्णयति—शनकैर्भ्रान्त्वा निजकर्मनिष्ठान्दूरान्निषिद्धं त्यजतः प्रमादशून्या-न्द्विजातीन्नरान्दृष्ट्वा प्रदेशमलब्ध्वाऽपमृत्युर्यस्माद्बहिरेव याति । उपजातिवृत्तम् ॥ ४० ॥ [ प्रदेशं ग्रामनिवसज्जनकृतदुराचारजन्यं स्वावस्थानस्थलमित्यर्थः ] ॥ ४० ॥

यस्मिन्नाहिताग्नीनां वेदपाठकानां जनानां द्विसहस्रमवश्यं वेदविहितासु क्रियासु दक्षं प्रथितप्रभावं वसति ॥ ४१ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्ये वसन्यस्य करोति भूषां
पिनाकपाणिर्गिरिजासहायः ॥
हारस्य यष्टेस्तरलो यथा वै
रात्रेरिवेन्दुर्गगनाधिरूढः ॥ ४२ ॥
तत्र द्विजः कश्चन शास्त्रवेदी
प्रभाकराख्यः प्रथितानुभावः ॥
प्रवृत्तिशास्त्रैकरतः सुबुद्धि-
रास्ते क्रतून्मीलितकीर्तिवृन्दः ॥ ४३ ॥
गावो हिरण्यं धरणी समग्रा
सद्बान्धवा ज्ञातिजनाश्च तस्य ॥
सन्त्येव किं तैर्न हि तोष एभिः
पुत्रो यदस्याजनि मुग्धचेष्टः ॥ ४४ ॥
न वक्ति किंचिन्न शृणोति किंचि-
द्ध्यायन्निवाऽऽस्ते किल मन्दचेष्टः ॥
रूपेषु मारो महसा महस्वा-
न्मुखेन चन्द्रः क्षमया महीसमः ॥ ४५ ॥

---

किंच गिरिजासहायः पिनाकपाणिर्मध्ये वसन्यस्य भूषां करोति । तत्र दृष्टान्त-यमाह—यथा हारस्य यष्टेर्लतिकायास्तरलो मध्यमणिर्भूषां करोति ।

' तरलश्चञ्चले पिङ्गे भास्करेऽपि त्रिलिङ्गकः ।
हारमध्यमणौ पुंसि '

इति मेदिनी । यथा वा गगनाधिरूढश्चन्द्रो रात्रेर्भूषां करोति तद्वत् ॥ ४२ ॥

तत्र तस्मिन्ग्रामे शास्त्रज्ञः प्रभाकरसंज्ञः कश्चनाऽऽस्ते स्म । तं विशिनष्टि—प्रवृत्तीति । क्रतुभिरुन्मीलितं कीर्तिवृदं येन सः ॥ ४३ ॥

तैः सद्भिः किं न किमपि । हि यस्मादेभिः सर्वैस्तोपो नास्ति । तोषाभावे हेतुर्यस्मादस्य पुत्रो मुग्धचेष्टोऽजनि । इन्द्रवज्रा वृत्तम् ॥ ४४ ॥ [ मुग्धेति । मुग्धचेष्टा यस्य स तथा ] ॥ ४४ ॥

तदीयां तां चेष्टामेव दर्शयति—नेति । तदीयं[1] रूपं वर्णयति—रूपेषु मारः कन्द-... महसा तेजसा महस्वान्सूर्यः । उपजातिवृत्तम् ॥ ४५ ॥ [ महीसमः पृथ्वीतुल्य इत्यर्थः ] ॥ ४५ ॥

---

१ ख. ग. घ. 'यं स्वरू' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहग्रहात्किं जडवद्विचेष्टते
किंवा स्वभावादुत पूर्वकर्मणः ॥
संचिन्तयंस्तिष्ठति तत्पिताऽनिशं
समागतान्प्रष्टुमना बहुश्रुतान् ॥ ४६ ॥

शिष्यैः प्रशिष्यैर्बहुपुस्तभारैः
समागतं कंचन पूज्यपादम् ॥
शुश्राव तं ग्राममनिन्दितात्मा
निनाय सूनुं निकटं स तस्य ॥ ४७ ॥

न शून्यहस्तो नृपमिष्टदैवं
गुरुं च यायादिति शास्त्रवित्स्वयम् ॥
सोपायनः प्राप गुरुं व्यशिश्रण-
त्फलं ननामास्य च पादपङ्कजे ॥ ४८ ॥

अनीनमत्तं च तदीयपादयो-
र्जडाकृतिं भस्मनिगूढवह्निवत् ॥
स नोदतिष्ठत्पतितः पदाम्बुजे
प्रायः स्वजाड्यं प्रकटं विधित्सति ॥ ४९ ॥

---

अधुना तत्पितृचेष्टां दर्शयति—तत्पितेत्येवमनिशं संचिन्तयन्समागतान्बहुश्रुतान्प्रष्टुमना-स्तिष्ठति स्म ॥ ४६ ॥ । ग्रहेति ।

' ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।
सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः '

इति मेदिन्याः प्रकृते ग्रहः पूतनादिः पिशाचविशेष एव तत्कर्तृकत्वात्तस्य यो ग्रहो ग्रहणं तस्माद्धेतोरित्यर्थः ॥ ४६ ॥

ततः कदाचिद्बहुपुस्तकभारैः शिष्यैः सह तं ग्रामं प्रति समागतं कंचन पूज्यपादं शुश्राव । ततश्चानिन्दितात्मा स प्रभाकरस्तस्य पूज्यपादस्य निकटं पुत्रं नीतवान् । आख्यानकी वृत्तम् ॥ ४७ ॥

किं शून्यहस्त एव गतो नेत्याह—शून्यहस्त इति ।

' रिक्तहस्तस्तु नोपेयाद्राजानं दैवतं गुरुम् '

इति शास्त्रवित्स्वयं सोपायनो गुरुं श्रीशंकरं प्राप । ।किं तदुपायनमित्यपेक्षायामाह- फलं व्यशिश्रणत्प्रायच्छत् । अस्य गुरोः पादकमले ननाम च । उपजातिवृत्तम् ॥ ४८ ॥

भस्मनीति भिन्नं पदम् । भस्मना निगूढवह्निवज्जडतुल्याकृतिं तं पुत्रं च तदीयपादयोरनीनमत् । स पुत्रः प्रायः स्वजाड्यं प्रकटं विधातुमिच्छति ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपात्तहस्तः शनकैरवाङ्मुखं
तं देशिकेन्द्रः कृपयोदतिष्ठिपत् ॥
उत्थापिते स्वे तनये पिताऽब्रवी-
दिदं प्रभो जाड्यममुष्य किंकृतम् ॥ ५० ॥
वर्षाण्यतीयुर्भगवन्नमुष्य
पञ्चाष्ट जातस्य विनाऽवबोधम् ॥
नाध्यैष्ट वेदानलिखच्च नार्णा-
नचीकरं चोपनयं कथंचित् ॥ ५१ ॥
क्रीडापरः क्रोशति बालवर्ग-
स्तथाऽपि न क्रीडितुमेष याति ॥
बालाः शठा मुग्धमिमं निरीक्ष्य
संताडयन्तेऽपि न रोषमेति ॥ ५२ ॥
भुङ्क्ते कदाचिन्न तु जातु भुङ्क्ते
स्वेच्छाविहारी न करोति चोक्तम् ॥
तथाऽपि रुष्टेन न ताड्यतेऽयं
स्वकर्मणा वर्धत एव नित्यम् ॥ ५३ ॥

---

उपात्तो गृहीतस्तदीयहस्तो येन स देशिकेन्द्रः श्रीशंकर उदतिष्ठिपदुत्थापितवान् ॥ ५० ॥ [ अवाङ्मुखमधोमुखम् । कृपया । शनकैः । उदतिष्ठिपत् । उत्थापितवानित्यन्वयः । अथैतत्पिता तं प्रति तज्जाड्यकारणं पप्रच्छेत्याह—उत्थापित इति ] ॥ ५० ॥

तज्जाड्यमेव वर्णयति—वर्षाणीति । पञ्चाष्ट त्रयोदश । नाध्यैष्ट नैवाधीतवान् । अर्णान्वर्णान् । यथाकथंचिदुपनयं कृतवानस्मि ॥ ५१ ॥ [ अवबोधं विना व्यावहारिकज्ञानं विनेत्यर्थः । भगवन्निति संबुद्ध्यैतत्तत्त्वं त्वद्दतेऽन्यः कोऽपि न वेत्तीति सूच्यते ] ॥ ५१ ॥

एवं जाड्यं प्रदर्श्याद्भुतां तस्य चेष्टां वर्णयति-क्रीडापर इति द्वाभ्याम् ॥ ५२ ॥ [ तत्र केचिद्दुष्टाः शिशवस्तु मुग्धमिमं श्रुत्वा यद्यपि संताडयन्ते तथाऽप्येष नैव रोषमेतीत्याह—बाला इति ] ॥ ५२ ॥

यद्यप्येवं तथाऽपि रुष्टेन मयाऽयं न ताड्यते ॥ ५३ ॥ [ किंच भोजनेऽप्यस्याग्रहः साह एव यदा तदा कैताऽन्यवार्तेत्याह—भुङ्क्त इति । रुष्टेन मयेति शेषः । स्वकर्मणा नित्यं वर्धत एवायमिति संबन्धः ] ॥ ५३ ॥

---

१ ग. घ एष ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीरयित्वोपरते च विप्रे
पप्रच्छ तं शंकरदेशिकेन्द्रः ॥
कस्त्वं किमेवं जडवत्प्रवृत्तः
स चाब्रवीद्बालवपुर्महात्मा ॥ ५४ ॥

नाहं जडः किंतु जडः प्रवर्तते
मत्संनिधानेन न संदिहे गुरो ॥
षडूर्मिषड्भावविकारवर्जितं
सुखैकतानं परमस्मि तत्पदम् ॥ ५५ ॥

ममेव भूयादनुभूतिरेषा
मुमुक्षुवर्गस्य निरूप्य विद्वन् ॥
पद्यैः परैर्द्वादशभिर्बभाषे
चिदात्मतत्त्वं विधुतप्रपञ्चम् ॥ ५६ ॥

---

इत्येवं कथयित्वा प्रभाकर उपरते सति तं शंकरदेशिकेन्द्रः पप्रच्छ ॥ ५४ ॥

कस्त्वमिति प्रश्नस्योत्तरं वक्तुमादौ किमेवं जडवत्प्रवृत्त इत्यत्राऽऽह—नाहं जडः किंतु मत्संनिधानेन जडः प्रवर्तते हे गुरोऽस्मिन्नर्थेऽहं न संदिहे तस्माच्छोकमोहक्षुधापिपासाजरा-मृत्युलक्षणषडूर्मिभिर्जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्युक्तषड्भावविकारैश्च रहितं सुखैकतानं परं सर्वोत्तमं तत्पदमहमस्मि । परं देहेन्द्रियाद्यतिरिक्तं प्रत्यक्चैतन्यं तत्पदं शोधिततत्पदार्थाभिन्नमिति वा ॥ ५५ ॥ [ सुखेति । आनन्दैकरसमित्यर्थः ] ॥ ५५ ॥

हे विद्वन्ममेवैषाऽनुभूतिर्मुमुक्षुवर्गस्य भूयादिति निरूप्यान्यैर्द्वादशभिः पद्यैर्विधुतप्रपञ्चं चिदात्मतत्त्वं बभाषे तथा हि—

निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १ ॥
यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि ।
प्रवर्तन्त आश्रित्य निष्कम्पमेकं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ २ ॥
मुखाभासको दर्पणे दृश्यमानो मुखत्वात्पृथक्त्वेन नैवास्ति वस्तु ।
चिदाभासको धीषु जीवोऽपि तद्वत्स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥
यथा दर्पणाभाव आभासहानौ मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकाशयन्ते परमात्मतत्त्वं
करस्थधात्रीफलवद्यदेकम् ॥
श्लोकास्तु हस्तामलकाः प्रसिद्धा-
स्तत्कर्तुराख्याऽपि तथैव वृत्ता ॥ ५७ ॥
विनोपदेशं स्वत एव जातः
परात्मबोधो द्विजवर्यसूनोः ॥
व्यस्मेष्ट संप्रेक्ष्य स देशिकेन्द्रो
न्यधात्स्वहस्तं कृतयोत्तमाङ्गे ॥ ५८ ॥

---

मनश्चक्षुरादेर्वियुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यस्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ५ ॥
य एको विभाति स्वतः शुद्धचेताः प्रकाशस्वरूपोऽपि नानेव धीषु ।
शरावोदकस्थो यथा भानुरेकः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ६ ॥
यथाऽनेकचक्षुःप्रकाशो रविर्न क्रमेण प्रकाशी करोति प्रकाश्यम् ।
अनेका धियो यस्तथैकप्रबोधः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ७
विवस्वत्प्रभातं यथारूपमक्षं प्रगृह्णाति नाऽऽभातमेवं विवस्वान् ।
तथा भात आभासयत्येकमक्षं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ८ ॥
यथा सूर्य एकोऽप्यनेकश्चलासु स्थिरास्वप्सु चैकोऽप्यनान्यस्वरूपः ।
चलासु प्रभिन्नः स्वधीष्वेक एव स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ९ ॥
घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १० ॥
समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि वस्तूनि यं न स्पृशन्ति ।
वियद्वत्सदा शुद्धमच्छस्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११ ॥
उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि ।
यथा चन्द्रिकाणां जले चञ्चलत्वं तथा चञ्चलत्वं तवापीह विष्णो ॥ १२ ॥

इति । उपजातिवृत्तम् ॥ ५६ ॥

यदेकं परमात्मतत्त्वं तत्करस्थामलकफलवत्प्रकाशयन्तेऽतस्ते श्लोकास्तु हस्तामलकाः प्रसिद्धास्तेषां कर्तुराख्याऽपि तथैव हस्तामलक इति वृत्ता प्रवृत्ता। उपजातिवृत्तम् ॥ ५७ ॥

उपदेशं विना स्वत एव द्विजवर्यसूनोः परात्मबोधो जात इति संप्रेक्ष्य [illegible]

---

१ ग. 'विमुक्तः । २ क. घ. 'षु स एवो° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुते निवृत्ते वचनं बभाषे
स देशिकेन्द्रः पितरं तदीयम् ॥
वस्तुं न योग्यो भवता सहायं
न तेऽमुनाऽर्थो जडिमास्पदेन ॥ ५९ ॥
पुराभवाभ्यासवशेन सर्वं
स वेत्ति सम्यङ्न च वक्ति किंचित् ॥
नोचेत्कथं स्वानुभवैकगर्भ-
पद्यानि भाषेत निरक्षरास्यः ॥ ६० ॥
न सक्तिरस्यास्ति गृहादिगोचरा
नाऽऽत्मीयदेहे भ्रमतोऽस्य विद्यते ॥
* तादात्म्यताऽन्यत्र ममेति वेदनं
यदा न सा स्वे किमु बाह्यवस्तुषु ॥ ६१ ॥
इतीरयित्वा भगवान्द्विजात्मजं
ययौ गृहीत्वा दिशमीप्सितां पुनः ॥
विप्रोऽप्यनुव्रज्य ययौ स्वमन्दिरं
कियत्प्रदेशं स्थिरधीर्बहुश्रुतः ॥ ६२ ॥

---

प्राप्तो देशिकेन्द्रो द्विजवर्यसूनोः शिरसि स्वहस्तं न्यधात् ॥ ५८ ॥ [ स्वहस्तं निजदक्षिणपाणिम् ] ॥ ५८ ॥

उदाहृतपद्यान्युक्त्वा सुते निवृत्ते सति देशिकेन्द्रस्तदीयं पितरं वचनं बभाषे । तदाह—भवता सहायं वस्तुं योग्यो न भवति । किंचामुना जडतास्पदेन तव किंचित्प्रयोजनं नास्ति ॥ ५९ ॥

नन्वेवंभूतेन तवापि किं प्रयोजनमित्याशङ्क्याऽऽह—पुराभवस्य पूर्वजन्मनोऽभ्यासस्य वशेन स तव पुत्रः सर्वं जानाति ॥ ६० ॥

न वस्तुं योग्यो भवता सहायमित्यत्र हेतुमाह—अस्य गृहादिविषया सक्तिरासक्तिर्नास्ति । तथाऽऽत्मीयदेहे भ्रमात्तादात्म्यताऽस्य न विद्यते । तथा देहादन्यत्र ममेति ज्ञानमस्य न विद्यते । सा तादात्म्यता तु यदा स्वे देहे नास्ति तदा बाह्यवस्तुषु सा नास्तीति किमु वक्तव्यम् ॥ ६१ ॥ [ भ्रमतोऽनाद्यविद्यादिभ्रमेणेत्यर्थः ] ॥ ६१ ॥

इतीरयित्वा भगवान्द्विजात्मजं गृहीत्वा पुनरीप्सितां दिशं ययौ । प्रभाकरसंज्ञो

---

* स्वार्थव्ययऽन्त्रातद्द ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः शतानन्दमहेन्द्रपूर्वैः
सुपर्ववृन्दैरुपगीयमानः ॥
पद्माङ्घ्रिमुख्यैः सममाप्तकाम-
क्षोणीपतिः शृङ्गगिरिं प्रतस्थे ॥ ६३ ॥
यत्राधुनाऽप्युत्तममृष्यशृङ्ग-
स्तपश्चरत्यात्मभृदन्तरङ्गः ॥
संस्पर्शमात्रेण वितीर्णभद्रा ।
विद्योतते यत्र च तुङ्गभद्रा ॥ ६४ ॥
अभ्यागतार्चालिपतकल्पशाखा-
कूलंकषाधीतसमस्तशाखाः ॥
इज्याशतैर्यत्र समुल्लसन्तः
शान्तान्तराया निवसन्ति सन्तः ॥ ६५ ॥

---

विप्रोऽपि कियत्प्रदेशमनुव्रज्य स्वमन्दिरं ययौ । ननु स्वपुत्रवियोगे व्याकुलतां किं न प्रापेत्याशङ्क्याऽऽह—स्थिरधीर्यतो बहुश्रुतः ॥ ६२ ॥

ततस्तदनन्तरं विष्णुप्रमुखैर्देववृन्दैरुपगीयमानः पद्मपादादिभिः सहाऽऽप्तकामानां [illegible] शृङ्गगिरिं प्रतस्थे ।

' शतानन्दो मुनेर्भेदे देवकीनन्दनेऽपि च

इति मेदिनी ॥ ६३ ॥ [ आप्तेति । ' योऽकाम आप्तकाम आत्मकामः ' [illegible] श्रुतेर्ब्रह्मनिष्ठचक्रवर्तिवर इत्यर्थः ] ॥ ६३ ॥

यस्मिञ्शृङ्गगिरावधुनाऽप्यात्मभृतामन्तरङ्ग ऋष्यशृङ्ग उत्तमं तपश्चरति यत्र [illegible] संस्पर्शमात्रेण वितीर्णं समर्पितं भद्रं कल्याणं यया सा तुङ्गभद्राख्या नदी [illegible] तं शृङ्गगिरिं प्रतस्थे ॥ ६४ ॥ [ अत्र पद्यद्वयेऽपि यच्छब्दानुरोधात्पूर्वपद्ये तं शृङ्गगिरिं [illegible] तच्छब्दाध्याहारो बोध्यः । आत्मेति । आत्मन्यद्वैतब्रह्मण्येव धृतमन्तरङ्ग[illegible] योगमहिम्ना येन स तथेत्यर्थः । अधुनाऽपि कलावपि ] ॥ ६४ ॥

तत्र ये सन्तो वसन्ति तान्विशिनष्टि—अभ्यागतानां पूजयाऽलीकृतानां [illegible] वृक्षशाखाना कूलंकषा अधीताः सर्वशाखा यैरिज्याशतैः सम्यगुल्लसन्तः शान्तान्त[illegible] रायाः शान्तविघ्नाः । इन्द्रवज्रा वृत्तम् ॥ ६५ ॥

---

१ ख. घ. 'त्मधृतान्त' । २ ग 'भृतान्त' । ३ ख. ग. घ. 'स्मिन्गिरा' । ४ ख. घ. यत्र ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अध्यापयामास स भाष्यमुख्या-
न्ग्रन्थान्निजांस्तत्र मनीषिमुख्यान् ॥
आकर्णनप्राप्यमहापुमर्था-
नादिष्ट विद्याग्रहणे समर्थान् ॥ ६६ ॥
मन्दाक्षनम्रं कलयन्नशेषं
पराणुदत्प्राणितमांस्यशेषम् ॥
निरस्तजीवेश्वरयोर्विशेषं
व्याचष्ट वाचस्पतिनिर्विशेषम् ॥ ६७ ॥
प्रकल्प्य तत्रेन्द्रविमानकल्पं
प्रासादमाविष्कृतसर्वशिल्पम् ॥
प्रवर्तयामास स देवतायाः ।
पूजामजाद्यैरपि पूजितायाः ॥ ६८ ॥
या शारदाम्बेत्यभिधां वहन्ती
कृतां प्रतिज्ञां प्रतिपालयन्ती ॥
अद्यापि शृङ्गेरिपुरे वसन्ती
प्रद्योततेऽभीष्टवरान्दिशन्ती ॥ ६९ ॥

---

तस्मिन्पर्वते मनीषिमुख्याञ्श्रवणमात्रेण प्राप्यो महापुरुषार्थो मोक्षो यैस्तानुपादिष्ट विद्याग्रहणे समर्थान्स श्रीशंकरो भाष्यप्रमुखान्निजान्ग्रन्थानध्यापयामास । आकर्णनेन प्राप्यो महापुमर्थो येभ्यस्तान्ग्रन्थानिति वा ॥ ६६ ॥

शेषमनन्तं मन्दाक्षनम्रं लज्जया नम्रं कलयन्कुर्वन्निवाशेषं यथा स्यात्तथा प्राणितमांस्यज्ञानानि पराणुदद्पाकरोत् । यतो वाचस्पतिना निर्विशेषं यथा भवति तथा निरस्तजीवेश्वरयोर्विशेषं व्याचष्ट । उपजातिवृत्तम् ॥ ६७ ॥

ततश्च तस्मिन्पर्वत इन्द्रविमानसदृशमाविष्कृतसर्वशिल्पं प्रासादं प्रकल्प्याजाद्यैरपि पूजिताया देवतायाः पूजां स प्रवर्तयामास । अत्र प्राञ्चः— मठं कृत्वा तत्र विद्यापीठनिर्माणं कृत्वा भारतीसंप्रदायं निजशिष्यं चकार ।

'यस्त्वद्वैतमते स्थित्वा भारतीपीठनिन्दकः ।
स याति नरकं घोरं यावदाभूतसंप्लवम्' ।

कंचिच्छिष्यं सुरेश्वराख्यं पीठाध्यक्षमकरोदिति ॥ ६८ ॥

सा देवता केत्याकाङ्क्षायामाह—येति ॥ ६९ ॥

---

१ घ. 'ज्ञां खलु पा'। २ घ. महापुरुषार्थो । ३ घ 'रुदंपा'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्तानुवर्ती निजधर्मचारी
भूतानुकम्पी तनुवाग्विभूतिः ॥
कश्चिद्विनेयोऽजनि देशिकस्य
यं तोटकाचार्यमुदाहरन्ति ॥ ७० ॥
स्नात्वा पुरा क्षिपति कम्बलवस्त्रमुख्यै-
रुच्चासनं मृदु समं स ददाति नित्यम् ॥
संलक्ष्य दन्तपरिशोधनकाष्ठमग्र्यं
बाह्यादिकं गतवते सलिलादिकं च ॥ ७१ ॥
श्रीदेशिकाय गुरवे तनुमार्जवस्त्रं
विश्राणयत्यनुदिनं विनयोपपन्नः ॥
श्रीपादपद्मयुगमर्दनकोविदश्च
च्छायेव देशिकमसौ भृशमन्वयाद्यः ॥ ७२ ॥
गुरोः समीपे न तु जातु जृम्भते
प्रसारयन्नो चरणौ निषीदति ॥
नोपेक्षते वा बहु वा न भाषते
न पृष्ठदर्शी पुरतोऽस्य तिष्ठति ॥ ७३ ॥

---

अथ तत्र यद्वृत्तं तद्दर्शयितुमारभते—चित्तानुवर्तीति । तन्वी सूक्ष्मा वाग्विभूति-र्यस्य समन्दभाषण इत्यर्थः । देशिकस्य कश्चिच्छिष्योऽजन्यभूत् ॥ ७० ॥

स सदैव गुरुशुश्रूषणपर इत्याह—पुरा गुरुस्नानात्पूर्वं स्नात्वा कम्बलवस्त्रप्रमुखैरुच्चा… मृदु कोमलं समं समानं क्षिपति करोति तं तं कालं संलक्ष्यैव न त्वाज्ञप्तो नित्यं दन्तपरि… शोधनकाष्ठमग्र्यं शास्त्रोक्तं ददाति । बाह्यादिकं गतवते जलमृत्तिकादिकं च ददाति । वसन्ततिलका वृत्तम् ॥ ७१ ॥

विश्राणयति प्रयच्छति स्म । योऽसौ देशिकं छायेवान्वगच्छत् ॥ ७२ ॥ [ श्रीति । श्रियं योगैश्वर्यसंपदं दिशन्ति तत्साधनयुक्त्युपदेशद्वारा कथयन्तीति श्रीदेशिका योगिनः… स्तेषामयः शुद्धद्वैतात्मैक्यविषयकदृढापरोक्षप्रबोधलक्षणः शुभावहो विधिर्येभ्यो ब्रह्मविद… स्तेषां गुरुः प्रथमसंप्रदायप्रवर्तकस्तस्मा इत्यर्थः । तन्विति । तनोः शरीरस्य … मार्जस्तस्य वस्त्रमित्यर्थः ] ॥ ७२ ॥

वक्तव्यं नोपेक्षते वा बहु वा न भाषते । वंशस्थेन्द्रवंशामिश्रितत्वादुपजातिः । '… किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम' इत्युक्तत्वात् ॥ ७३ ॥

---

१ क. ख घ 'जनि ॥ ७० ॥ २ क. 'दि च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिष्ठन्गुरौ तिष्ठति संप्रयाते
गच्छन्ब्रुवाणे विनयेन शृण्वन् ॥
अनुच्यमानोऽपि हितं विधत्ते
यच्चाहितं तच्च तनोति नास्य ॥ ७४ ॥
तस्मिन्कदाचन विनेयवरे स्वशाटी-
प्रक्षालनाय गतवत्यपवर्तनीगाः ॥
व्याख्यानकर्मणि तदागममीक्षमाणो
भक्तेषु वत्सलतया विललम्ब एषः ॥ ७५ ॥
शान्तिपाठमथ कर्तुमसंख्ये-
पूद्यतेषु स विनेयवरेषु ॥
स्थीयतां गिरिरपि क्षणमात्रा-
देष्यतीति समुदीरयति स्म ॥ ७६ ॥
तां निशम्य निगमान्तगुरूक्तिं
मन्दधीरनधिकार्यपि शास्त्रे ॥
किं प्रतीक्ष्यत इति स्म ह भित्तिः
पद्मपादमुनिना समदर्शि ॥ ७७ ॥

---

किंच गुरौ तिष्ठति सति तिष्ठंस्तस्मिन्संप्रयाते गच्छन्ब्रुवाणे विनयेन शृण्वन्ननु-च्यमानोऽपि हितं विधत्ते यच्चास्य गुरोरहितं तच्च न विस्तारयति । उपजाति-वृत्तम् ॥ ७४ ॥

एवंभूते तस्मिञ्शिष्यवरे कदाचित्स्वशाटीप्रक्षालनायापवर्तनीगा नदीजलानि प्रति गतवति सति तस्याऽऽगमनमीक्षमाणो भक्तेषु वत्सलतया व्याख्यानाख्ये कर्माणि विललम्बे ।

'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् ।
स्त्री सौरभेयीदृग्बाणदिग्वाग्भूम्यप्सु भूम्नि च'

इति मेदिनी । वसन्ततिलका वृत्तम् ॥ ७५ ॥

अथानन्तरमसंख्यातेषु शिष्यवरेषु शान्तिपाठं कर्तुमुद्यतेषु सत्सु स देशिकेन्द्रः स्थीयतां गिरिरपि क्षणमात्रादेष्यतीति गिरति स्म । स्वागता वृत्तम् ॥ ७६ ॥

तां वेदान्तरूपां गुरूक्तिं निशम्य भेदबुद्धित्वाद्भित्तिः कुड्यतुल्यो जडः शास्त्रेऽन-धिकार्यपि किमर्थं प्रतीक्ष्यत इति स्म ह पद्मपादमुनिना समदर्शि । इति सूचनार्थं

---

१ क. 'म्य मन्दबु' । २ क. ख. ग. 'र्शि' । ॥ ७७ ॥ अ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य गर्वमपहर्तुमखर्वं
स्वाश्रयेषु करुणातिशयाच्च ॥
व्यादिदेश स चतुर्दश विद्याः
सद्य एव मनसा गिरिनाम्ने ॥ ७८ ॥
सोऽधिगम्य तदनुग्रहमग्र्यं
तत्क्षणेन विदिताखिलविद्यः ॥
ऐष्ट देशिकवरं परतत्त्व-
व्यञ्जकैर्ललिततोटकवृत्तैः ॥ ७९ ॥

---

भित्तिः समदर्शितेति वा ॥ ७७ ॥ [ इति स्म हेत्येवाभिप्रायेणेत्यर्थः । पंक्तेति । कि... समदार्शी चक्षुरादिचेष्टया प्रदर्शितेत्यन्वयः ] ॥ ७७ ॥

अखर्वमनल्पं तस्य पद्मपादस्य गर्वमपाकर्तुं स्वयमेवाऽऽश्रयो येषां तथाभूतेषु स्वभक्ते... करुणाया अतिशयाच्च स श्रीशंकरस्तत्क्षण एव गिरिनाम्ने चतुर्दश विद्या मनसाऽऽ... दिदेश ॥ ७८ ॥

स गिरिरग्र्यं तस्य गुरोरनुग्रहमधिगम्य तत्क्षणेन विदिताखिलविद्यः ।

*भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ॥ १ ॥
विनिवर्त्य रतिं विषये विषमां परिमुच्य शरीरनिबद्धमतिम् ।
परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममते ॥ २ ॥
विसृजान्नमयादिषु पञ्चसु तामहमस्मि ममेति मतिं सततम् ।
दृशिरूपमनन्तमजं विगुणं हृदयस्थमवेहि सदाऽहमिति ॥ ३ ॥
जलभेदकृता बहुतेव रवेर्घटिकादिकृता नभसोऽपि यथा ।
मतिभेदकृता तु तथा बहुता तव बुद्धिदृशोऽविकृतस्य सदा ॥ ४ ॥
दिनकृत्प्रभया सदृशेन सदा जनचित्तगतं सकलं स्वचिता ।
विदितं भवताऽविकृतेन सदा यत एवमतोऽसि सदैव सदा ॥ ५ ॥

---

* अग्रिमं पद्यद्वयं 'घ' पुस्तके " भगवन्नुदधौ " इत्यादिश्लोकपञ्चकात्प्राग्...

" सकलं मनसा क्रियया जनितं समवेक्ष्य विनाशितया तु जगत् ।
निरविंषत कश्चिदतो निखिलादविनाशिकृते यतितव्यमिति ॥ १ ॥
प्रतिपित्सुरसावविनाशिपदं यतिधर्मरतो यतिमेव गुरुम् ।
विदितात्मकलं समुपेत्य कविः प्रणिपत्य निवेदितवान्स्वमतम् " ॥ २ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमद्देशिकपादपङ्कजयुगीमूला तदेकाश्रया
तत्कारुण्यसुधावसेकसहिता तद्भक्तिसद्वल्लरी ॥
हृद्यं तोटकवृत्तवृन्तरुचिरं पद्यात्मकं सत्फलं
लेभे मोक्तुमनोतिसत्तमशुकैरास्वाद्यमानं मुहुः ॥ ८० ॥
येनौन्नत्यमवापिता कृतपदा कामं क्षमायामियं
निःश्रेणिः पदमुन्नतं जिगमिषोर्व्योम स्पृशन्ती परम् ॥
वंश्या काऽप्यधरीकृतत्रिभुवनश्रेणी गुरूणां कथं
सेवा तस्य यतीशितुर्न विरलं कुर्वीत गुर्वी तमः ॥ ८१ ॥

---

इत्यादिभिर्गुरुशिष्यसंवादेन परतत्त्वव्यञ्जकैः 'इह तोटकमम्बुधिसैः प्रथितम्' इत्युक्तलक्षणैस्तोटकवृत्तैः सह देशिकवरं श्रीशंकरं प्रत्यागतवानित्यर्थः । स्वागता वृत्तम् ॥ ७९ ॥

श्रीमद्देशिकस्य पादपङ्कजयुगलं मूलं यस्याः स श्रीशंकर एवैक आश्रयो यस्यास्तस्य कारुण्यसुधावसेकेन सहिता तस्य गिरेर्भक्तिलक्षणा सद्वल्लरी तोटकवृत्तलक्षणेन वृन्तेन प्रसबन्धेन हृद्यं सुन्दरं मोक्तुं मनो येषां तैः सत्तमलक्षणैः शुकैर्मुहुरास्वाद्यमानं पद्यात्मकं फलं लेभे । शार्दूलविक्रीडितं वृत्तम् ॥ ८० ॥

अत्र विस्मयो न कार्य इत्याशयेनाऽऽह—येनौन्नत्यं प्रापिता सती भूमौ यथेष्टं कृतपदा लब्धास्पदा । अधरीकृतत्रिभुवनपङ्क्तिः । गुर्वी श्रेष्ठा गुरूणां सेवोन्नतं परं पदं मोक्षं गन्तुमिच्छोः काऽपि वंशोद्भवा निःश्रेणिरधिरोहणी तस्य यतीशितुर्गिरेस्तमोऽज्ञानं विरलं कथं न कुर्वीत ॥ ८१ ॥ [ क्षमायां भूमौ पक्षे परापराधसहिष्णुतायामित्यर्थः । काममत्यन्तम् । कृतपदा कृतावलम्बेति यावत् । उन्नतमुच्चतमं पदं स्थानं पक्षेऽद्वैतं ब्रह्मेत्यर्थः । जिगमिषोर्गन्तुमिच्छोः पक्षे मुमुक्षोः । परमुत्कटं पक्षेऽद्वैतब्रह्माख्यम् । व्योम नभः पक्षे चिदाकाशम् । स्पृशन्त्यवलम्बमाना सतीति यावत् । काऽमूल्यगुणा । वंश्या वंशाज्जाता वेणुविशेषसंभवेत्यर्थः । पक्षे ब्रह्मविद्यावंशपरम्परा संजातेति यावत् । अत एव । अधरीकृतेति । अधरीकृता नीचतां नीता त्रिभुवनश्रेणी त्रैलोक्यपङ्क्तिरपि यया सा तथेत्यर्थः । कथं न विरलं कुर्वीतापि तु विनाशयेदेवेति योजना ] ॥ ८१ ॥

---

१ म. °सवृषफ°। २ ग. व °युगुलं। ३ क ख वृत्तेन। ४ क. ख. प्रबन्धेन।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तोटकवृत्तपद्यजातै-
रयमज्ञातसुपर्वसूक्तिकोऽपि ॥
दययैव गुरोस्त्रयीशिरोर्थं
स्फुटयन्नैक्षि विचक्षणः सतीर्थ्यैः ॥ ८२ ॥
अथ तस्य बुधस्य वाक्यगुम्फं
निशमय्यामृतमाधुरीधुरीणम् ॥
जलजाङ्घ्रिमुखाः सतीर्थ्यवर्याः
स्मयमन्वस्य सविस्मया बभूवुः ॥ ८३ ॥
भक्त्युत्कर्षात्प्रादुरासन्यतोऽस्मा-
त्पद्यान्येवं तोटकाख्यानि सन्ति ॥
तस्मादाहुस्तोटकाचार्यमेनं
लोके शिष्टाः शिष्टवंश्यं मुनीन्द्रम् ॥ ८४ ॥
अद्यापि तत्प्रकरणं प्रथितं पृथिव्यां
तत्संज्ञया लघु महार्थमनल्पनीति ॥
शिष्टैर्गृहीतमतिशिष्टपदानुविद्धं
वेदान्तवेद्यपरतत्त्वनिवेदनं यत् ॥ ८५ ॥

---

अथानन्तरमयमज्ञाताः सुप्रस्तावा यासु तथाभूताः सूक्तयो येन तथाभूतोऽपि ।

'पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे'

इति मेदिनी । गुरोर्दययैव तोटकवृत्तपद्यजातैस्त्रयीशिरसामर्थं स्फुटयन्सतीर्थ्यैर्गुरोः शि
विचक्षण ऐक्षि दृष्टः । माल्भारिणी वृत्तम् ॥ ८२ ॥ [ अज्ञातेति ; अकलि
भागीत्यर्थः ] ॥ ८२ ॥

अथानन्तरं तस्य वाक्यानां संदर्भममृतमाधुरीधुरीणं निशम्य पद्मपादप्रमुखाः सर्व
गर्वं परित्यज्य सविस्मया बभूवुः ॥ ८३ ॥

तोटकाख्यपद्यप्रादुर्भाव एव तदाख्याप्रवृत्तिनिमित्तमित्याह—भक्तीति । यतोऽस्मा
सन्ति समीचीनानि तोटकसंज्ञानि पद्यानि प्रादुरासंस्तस्मादेनं शिष्टवंशप्रसूतं शिष्टा
ररतास्तोटकाचार्यमाहुः । शालिनी वृत्तम् ॥ ८४ ॥

वेदान्तवेद्यपरतत्त्वनिवेदनं यत्तत्प्रकरणमद्यापि पृथिव्यां तत्संज्ञया प्रथितम् । त
शिनष्टि—लघु सन्महान्तोऽर्था यस्मिन्ननल्पा नीतयो युक्तयो यस्मिन्नतिश्रेष्ठ
पिद्धं युक्तं तदत एव शिष्टैर्गृहीतम् । वसन्ततिलका वृत्तम् ॥ ८५ ॥ [
श्लोकात्मकत्वाल्लघुत्वम् । चतुर्लक्षण्यखिलशास्त्रार्थसारसंग्राहकत्वान्महार्थत्वम् । शि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तोटकाह्वयमवाप्य महर्षेः
ख्यातिमाप स दिशासु तदादि ॥
पद्मपादसदृशप्रतिभावा-
न्मुख्यशिष्यपदवीमपि लेभे ॥ ८६ ॥

पुमर्थाश्चत्वारः किमुत निगमा ऋक्प्रभृतयः
प्रभेदा वा मुक्तेर्विमलतरसालोक्यमुखराः ॥
मुखान्याहो धातुश्चिरमिति विमृश्याथ विबुधा
विदुः शिष्यान्हस्तामलकमुखराञ्शंकरगुरोः ॥ ८७ ॥

स्फारद्वारप्रघाणद्विरदमदसमुल्लोलकल्लोलभृङ्गी-
संगीतोल्लासभङ्गीमुखरितहरितः संपदोऽकिंपचानैः ॥
निष्ठीव्यन्तेऽतिदूरादधिगतभगवत्पादसिद्धान्तकाष्ठा-
निष्ठासंपद्विजृम्भन्निरवधिसुखदस्वात्मलाभैकलोभैः ॥८८॥

---

नारम्भकप्रथमश्लोकोपन्यासमात्रेणैव पूर्वोत्तरकाण्डयोः साधनादिभावलक्षणसंगतिसूचकत्वादन-र्थनीतिस्त्वमपीति ध्येयम् ] ॥ ८५ ॥

महर्षेः श्रीशंकरात्तोटकाख्यामवाप्य तदारभ्याऽऽशासु ख्यातिमाप । स्वागता वृत्तम् ॥ ८६ ॥ [ दिशासु । भागुरिमतेन टाप् ॥ ८६ ॥

हस्तामलकपद्मपादसुरेश्वरतोटकाख्येष्वाचार्यशिष्येषु विबुधकृतविमर्शं दर्शयति—धर्मार्थ-काममोक्षाख्याश्चत्वारः किमुतर्ग्यजुःसामाथर्वणाख्या वेदाः किंवा सालोक्यप्रमुखाः सालो-क्यसामीप्यसारूप्यसायुज्याख्या मुक्तेर्भेदा आहोस्विद्ब्रह्मणो मुखानीति विबुधा देवाः पण्डिता वा चिरं विमृश्य विचार्य हस्तामलकादीञ्शंकरगुरोः शिष्यान्विदुः । शिखरिणी वृत्तम् ॥ ८७ ॥ [ हस्तामलकस्याऽऽद्यत्वं त्वनुपदिष्टब्रह्मविद्यावत्त्वेऽपि श्रीमद्भाष्यकार-दर्शन एव प्रकटितस्वानुभवत्वादेवेति बोध्यम् ] ॥ ८७ ॥

स्फारद्वाराणां विस्तीर्णद्वाराणां प्रघाणेषु बाह्यप्रकोष्ठेषु द्विरदानामैरावतप्रभृतीनां गजानां मदस्य समुल्लोलेष्वातिचञ्चलेषु कल्लोलेषु या भृङ्ग्यस्तासां संगीतस्योल्लासभङ्ग्या मुखरिता मुखरीकृता ध्वनिता हरितो दिशो यासु ताः स्वर्गसंपदोऽधिगता या भगवत्पादसिद्धान्त-काष्ठा तस्यां निष्ठायाः संपद उल्लसन्निरवधिकसुखदस्य स्वात्मनो लाभस्यैको मुख्यो लोभो येषां तैरकिंपचानैरत्युदारैर्निष्ठीव्यन्ते थूत्क्रियन्ते । स्रग्धरा वृत्तम् ॥ ८८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समिन्धानो मन्थाचलमथितसिन्धूदरभव-
त्सुधाफेनाभेनामृतरुचिनिभेनाऽऽत्मयशसा ॥
निरुन्धानो दृष्ट्या परमहह पन्थानमसतां
पराधृष्यैः शिष्यैररमत विशिष्यैप मुनिराट् ॥ १३१२ ॥

इति श्रीमाधवीये तद्धस्तधात्र्यादिसंश्रयः ।
संक्षेपशंकरजये सर्गोऽयं द्वादशोऽभवत् ॥ १२ ॥

अथ त्रयोदशः सर्गः ।

ततः कदाचित्प्रणिपत्य भक्त्या
सुरेश्वरार्यो गुरुमात्मदेशम् ॥
शारीरकेऽत्यन्तगभीरभावे
वृत्तिं स्फुटं कर्तुमना जगाद ॥ १ ॥

---

मन्थाचलेन मथितात्सिन्धोर्भवन्त्याः सुधायाः फेनस्याऽऽभावदाभा यस्यामृतरुचि...
तत्तुल्येन स्वयशसा देदीप्यमानः स्वदृष्ट्याऽपरं निकृष्टं परमन्यं वाऽसतां पन्थानं नि-
न्धानः परैरधृष्यैः शिष्यैः सह मुनिराट्श्रीशंकरो विशेषेणारमत ॥ शिखरिणी वृत्तम्
॥ १३१२ ॥ [ अमृतेति । पीयूषकिरणसदृशेनेति यावत् । यद्वा । अमृते ब्रह्म-
विषये रुचिः प्रीतिर्नितरां भाति प्रस्फुरति येन तत्तथा तेनेत्यर्थः ] ॥ ८९ ॥

[ इति श्रीति । तद्धस्तेति । तस्य भगवत्पादस्य हस्तधात्र्यादेर्हस्तामलका-
दिना तोटकाचार्यः संश्रयोऽवलम्बो यत्र स तथेत्यर्थः ] ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबाल्गोपालतीर्थश्रीपादशिष्यदत्तवं-
शावतंसरामकुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविज-
यडिण्डिमे द्वादशः सर्गः ॥ १२ ॥

अथ वार्तिकान्तब्रह्मविद्याप्रवृत्तिं सपरिकरां निरूपयितुमारभते— ततः कदाचिदिति ।
...शारं यद्वाऽऽत्मदानामशिं गुरुं भक्त्या प्रणिपत्य सुरेश्वरार्योऽत्यन्तं गंभीरो भावो ...
तथाभूते शारीरकभाष्ये वृत्तिं स्फुटं यथा स्यात्तथा कर्तुमना बभाषे । उपजातिवृत्तम् ॥ १ ॥

---

१ घ. ॰श्वराचार्यो । २ ख. ग. घ. ॰म्भीरो ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मम यत्करणीयमस्ति ते
त्वमिमं मामनुशाध्यसंशयम् ॥
तदिदं पुरुषस्य जीवितं
यदयं जीवति भक्तिमान्गुरौ ॥ २ ॥
इतीरिते शिष्यवरेण शिष्यं
प्रोचे गरीयानतिहृष्टचेताः ॥
मत्कस्य भाष्यस्य विधेयमिष्टं
निबन्धनं वार्तिकनामधेयम् ॥ ३ ॥
द्रष्टुं सतर्कं भवदीयभाष्यं
गम्भीरवाक्यं न ममास्ति शक्तिः ॥
तथाऽपि भावत्ककटाक्षपाते
यते यथाशक्ति निबन्धनाय ॥ ४ ॥
अस्त्वेवमित्यार्यपदाभ्यनुज्ञा-
मादाय मूर्ध्ना स विनिर्जगाम ॥
अथाम्बुजाङ्घ्रेर्दयिताः सतीर्थ्या-
स्तं चित्सुखाद्या रहसीत्थमूचुः ॥ ५ ॥

---

यदुवाच तदाह—मम यत्ते करणीयमस्ति तत्त्वमिमं मामसंशयमनुशाधि आज्ञापय । यतो यदयं गुरौ भक्तिमान्सञ्जीवति तदिदमेव पुरुषस्य जीवितम् । वियोगिनी वृत्तम् ॥ २ ॥

मत्कस्य मदीयस्य भाष्यस्य वार्तिकनामधेयमिष्टं निबन्धनं त्वया विधेयम् । उपजाति-वृत्तम् ॥ ३ ॥ [ वार्तिकेति ।

‘ उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ’

इति पाराशरपुराणोक्तलक्षणवार्तिकसंज्ञकमित्यर्थः ] ॥ ३ ॥

इत्युक्तः शिष्य उवाच—तर्कयुक्तं गम्भीरवाक्यं भवदीयभाष्यं द्रष्टुमपि मम शक्ति-र्नास्ति तद्वार्तिकविधानसामर्थ्यं तु दूरान्निरस्तम् । यद्यप्येवं तथाऽपि भवदीयकटाक्षपाते सति यथाशक्ति निबन्धनार्थं यत्नं कुर्वे ॥ ४ ॥ [ सतर्कम् । अनेकविधभेदवाद्युन्मूलकै-स्तर्कैः प्रमाणानुग्राहकैर्व्याप्यारोपेण व्यापकारोपयुक्तिविशेषैः सहितमित्यर्थः ] ॥ ४ ॥

अस्त्वेवमित्यार्यपादाभ्यनुज्ञां मूर्ध्नाऽऽदाय स सुरेश्वरो विनिर्जगाम । अथानन्तरं

---

१ ख. °वाचं । २ ग °वाचं भ° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योऽयं प्रयत्नः क्रियते हिताय
हिताय नायं विफलस्त्वनर्थम् ॥
प्रत्येकमेवं गुरवे निवेद्य
बोद्धा स्वयं कर्मणि तत्परश्च ॥ ६ ॥
यः सार्वलौकिकमपीश्वरमीश्वराणां
प्रत्यादिदेश बहुयुक्तिभिरुत्तरज्ञः ॥
कर्मैव नाकनरकादिफलं ददाति
नैवं परोऽस्ति फलदो जगदीशितेति ॥ ७ ॥
प्रत्येकमस्य प्रलयं वदन्ति
पुराणवाक्यानि स तस्य कर्ता ॥
व्यासो मुनिर्जैमिनिरस्य शिष्य-
स्तत्पक्षपाती प्रलयावलम्बी ॥ ८ ॥

---

पद्मपादस्य प्रियाः सतीर्थ्याः शिष्याश्चित्सुखाद्यास्तं श्रीशंकराचार्यं रहस्यनेन वक्ष्यमाण-
प्रकारेणोचुः ॥ ५ ॥

योऽयं प्रयत्नो हिताय क्रियतेऽयं हिताय न भवति । किं त्वयमनर्थं विशेषेण ...
स्त्विति संभावनायां लोट् । इत्येवं प्रत्येकं गुरवे निवेद्योचुरित्यन्वयः । तदुदाहरति—...
विद्वान्कर्मणि तत्परश्च य इति परेण संबन्धः ॥ ६ ॥ [ प्रयत्नः सुरेश्वराचार्यद्वारा वार्ति-
रचनरूपः । श्रीमद्भिरित्यार्थिकम् । हिताय क्रियते । यद्यपि सकलजिज्ञासुसंशयापनुत्ति-
द्वारा मोक्षसिद्ध्यर्थमनुष्ठीयते तथाऽप्यसौ हिताय न भवति ] ॥ ६ ॥

यो मण्डनः सार्वलौकिकं सर्वलोकप्रसिद्धमीश्वराणां ब्रह्मादीनामीश्वरमपि बहुयुक्तिभि-
रुत्तरज्ञः प्रत्याख्यातवान् । एवंविधेन क्रियत इति व्यवहितेनान्वयः । कथमित्याकाङ्क्षा-
यामाहुः—कर्मैव स्वर्गनरकादिफलं ददाति । न त्वेवंविधोऽन्यो जगदीशिताऽस्तीति
प्रत्यादिदेश । वसन्ततिलका वृत्तम् ॥ ७ ॥ [ नाकेति । 'स्वर्गनाक' इत्यमरात्स्वर्ग-
नरकादीत्यर्थः । आदिना मनुष्यशरीरादेर्ग्रहः ] ॥ ७ ॥

ननु तस्य को दोषो जैमिनेरेवाभिप्रायस्य तथाविधत्वादित्याशङ्क्याऽऽहुः—अस्य
प्रत्यक्षादिभिः संनिधापितस्य जगतः प्रलयं प्रत्येकं पुराणवाक्यानि वदन्ति तस्य पुराण-
वाक्यजातस्य स प्रसिद्धो व्यासो मुनिः कर्ता जैमिनिरस्य शिष्योऽतस्तत्पक्षपातित्वादवश्यं
भावेन प्रलयावलम्बीत्यवश्यमभ्युपगन्तव्यम् । उपजातिवृत्तम् ॥ ८ ॥

---

१ क. °यते तुभ्यं हि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरोश्च शिष्यस्य च पक्षभेदे
कथं तयोः स्याद्गुरुशिष्यभावः ॥
तथाऽपि यद्यस्ति स पूर्वपक्षः
सिद्धान्तभावस्तु गुरूक्त एव ॥ ९ ॥
आ जन्मनः स खलु कर्मणि योजितात्मा
कुर्वन्नवस्थित इहानिशमेव कर्म ॥
ब्रूते परांश्च कुरुतावहिताः प्रयत्ना-
त्स्वर्गादिकं सुखमवाप्स्यथ किं वृथाध्वे ॥ १० ॥
एवंविधेन क्रियते निबन्धनं
यदि त्वदाज्ञामवलम्ब्य भाष्यके ॥
भाष्यं परं कर्मपरं स योक्ष्यते
मा च्यावि मूलादपि वृद्धिमिच्छता ॥ ११ ॥
संन्यासमप्येष न बुद्धिपूर्वकं
व्यधत्त वादे विजितो वशो व्यधात् ॥
तस्मान्न विश्वासपदं विभाति नो
मा चीकरोऽनेन निबन्धनं गुरो ॥ १२ ॥

---

विपक्षे बाधकमाहुः—गुरोश्च शिष्यस्य च पक्षभेदे सति तयोर्गुरुशिष्यभावः कथं स्यात् । अङ्गीकृत्याप्याहुः—यदि पक्षभेदोऽस्ति तथाऽपि स शिष्यपक्षः पूर्वपक्षः सिद्धान्तत्वं तु गुरूक्ते गुरुप्रतिपादिते पक्ष एवेत्यर्थः ॥ ९ ॥

किंच स खलु मण्डन आ जन्मनः कर्मणि योजितात्माऽनिशमिह लोके कर्म कुर्वन्नेवावस्थितः समाहिताः प्रयत्नात्कर्म कुरुत स्वर्गादिकं सुखं प्राप्स्यथ व्यर्थमार्गे ।किमिति परांश्च ब्रूते । वसन्ततिलका वृत्तम् ॥ १० ॥ [ वृथाध्वे वृथा व्यर्थो योऽध्वा मार्गस्तस्मिन्नित्यर्थः ] ॥ १० ॥

तथाचैवंविधेन त्वदाज्ञामवलम्ब्य भाष्यके यदि निबन्धनं क्रियते तर्हि स भाष्यं केवलं कर्मपरं योक्ष्यते तस्माद्वृद्धिमिच्छता त्वया मूलादपि मा च्यावि । प्रच्युतिर्न विधेयेत्यर्थः । उपजातिवृत्तम् ] ॥ ११ ॥

नन्विदानीं तु स्वीकृतसंन्यास इयं संभावना नास्तीत्याशङ्क्याऽऽहुः—संन्यासमपीति । तस्मान्नोऽस्माकं विश्वासस्थानं न विभाति तथाच हे गुरोऽनेन निबन्धनं मा चीकरो नैव कारय ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

य: शक्नुयात्कर्म विधातुमीप्सितं
सोऽयं न कर्माणि विहातुमर्हति ॥
यद्यस्ति संन्यासविधौ दुराग्रहो
जात्यन्धमूकादिरमुष्य गोचरः ॥ १३ ॥
एवं सदा भट्टमतानुसारिणो
ब्रुवन्त्यसौ तन्मतपक्षपातवान् ॥
एवं स्थिते योग्यमदो विधीयतां
न नोऽस्ति निर्बन्धनमत्र किंचन ॥ १४ ॥
पुरा किलास्मासु सुरापगायाः
पारे परस्मिन्विचरत्सु सत्सु ॥
आकारयामास भवानशेषा-
न्भक्तिं परिज्ञातुमिवास्मदीयाम् ॥ १५ ॥
तदा तदाकर्ण्य समाकुलेषु
नावर्थमस्मासु परिभ्रमत्सु ॥
सनन्दनस्त्वेष वियत्तटिन्या
झरीमभिप्रस्थित एव तूर्णम् ॥ १६ ॥

---

भाट्टमतपक्षपातित्वाद्यं योग्य एवेत्याहुः—ईप्सितं कर्म विधातुं यः शक्नुयात्सोऽयं कर्माणि त्यक्तुं नार्हति यदि संन्यासविधौ दुराग्रहोऽस्ति तर्ह्यमुष्य संन्यासविधेर्जात्यन्धादिर्विषय इत्येवं भट्टमतानुसारिणो वदन्ति । असावपि भट्टमतपक्षपातवान् । एवं स्थिते यद्योग्यं तद्विधीयतामस्माकं त्वत्र किंचन निर्बन्धनमाग्रहो नास्तीत्यर्थः । तथा चोक्तं भट्टैः—

' तत्रैवं शक्यते वक्तुं येऽन्ये पङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्यन्ते[1] कर्तुं तेषामयं विधिः ॥
नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि च ।
तैरवश्यं ग्रहीतव्या तेनाऽऽदावेतदुच्यते ' ॥

इत्यादि । इन्द्रवंशा वृत्तम् ॥ १३ ॥ १४ ॥

केन तर्हि वृत्तिर्विधेयेत्यपेक्षायां पद्मपादेनेति वक्तुं तद्योग्यतामाविष्कुर्वन्ति—पुरेति । सुरापगाया देवनद्या गङ्गायाः ॥ १५ ॥

तस्मिन्काले तदाकारणमाकर्ण्य समाकुलेषु नौकार्थमितस्ततः परिभ्रमत्स्वस्मासु सनन्दनस्तु वियन्नद्या झरीमाश्वभिप्रस्थित एव ॥ १६ ॥ [ झरीं प्रवाहसरणिम् ] ॥ १६ ॥

---

[1] क. ग. शक्यन्ते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनन्यसाधारणमस्य भाव-
माचार्यवर्ये भगवत्यवेक्ष्य ॥
तुष्टा त्रिवर्त्मा कनकाम्बुजानि
प्रादुष्करोति स्म पदे पदे च ॥ १७ ॥
पदानि तेषु प्रणिधाय युष्म-
त्सकाशमागाद्यदयं महात्मा ॥
ततोऽतितुष्टो भगवांश्चकार
नाम्ना तमेनं किल पद्मपादम् ॥ १८ ॥
स एव युष्मच्चरणारविन्द-
सेवाविनिर्धूतसमस्तभेदः ॥
आजानसिद्धोऽर्हति सूत्रभाष्ये
वृत्तिं विधातुं भगवन्नगाधे ॥ १९ ॥
यद्वाऽयमानन्दगिरिर्यदुग्र-
तपःप्रसन्ना परमेष्ठिपत्नी ॥
भवत्प्रबन्धेषु यथाभिसंधि-
व्याख्यानसामर्थ्यवरं दिदेश ॥ २० ॥
कर्मैकतानमतिरेष कथं गुरो ते
विश्वासपात्रमवपद्यत विश्वरूपः ॥
भाष्यस्य पद्मपद एव करोतु टीका-
मित्यूचिरे रहसि योगिवरं विधेयाः ॥ २१ ॥

---

त्रिवर्त्मा त्रिमार्गा गङ्गा ॥ १७ ॥ [ भगवतीति । दीर्घच्छेदे गङ्गाविशेषणं ह्रस्वच्छेदे त्वाचार्यवर्यविशेषणमिति बोध्यम् । प्रादुष्करोति स्म प्रादुर्भावयामास ] ॥ १७ ॥

तेषु तुष्टया त्रिपथगया प्रादुष्कृतेषु वरकमलेषु पदानि संस्थाप्य भवत्सकाशं यतोऽयं महात्माऽऽगतवांस्ततोऽतिसंतुष्टो भवांस्तमेनं नाम्ना खलु पद्मपादं चकार ॥ १८ ॥

आजानसिद्धः स्वभावत एव सिद्धः ॥ १९ ॥

यद्वाऽयमानन्दगिरिः सूत्रभाष्ये वृत्तिं विधातुमर्हति । यतो यस्योग्रतपसा प्रसन्ना सरस्वती भवदभिप्रायानुसारिव्याख्यानसामर्थ्यवरं दिदेश ॥ २० ॥

हे गुरो कर्मैकतानमतिरेष विश्वरूपस्तव कथं विश्वासपात्रमवपद्यत तत्पात्रभूतो जातोऽतः कर्मैकतानमतेर्विश्वरूपस्याविश्वसनीयत्वाद्भाष्यस्य पद्मपाद एव टीकां करोत्विति रहसि योगिवरं श्रीशंकरं शिष्या ऊचिरे । वसन्ततिलका वृत्तम् ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्रान्तरेऽभ्यर्णगतः स तूर्णं
सनन्दनो वाक्यमुदाजहार ॥
आचार्य हस्तामलकोऽपि कल्पो
भवत्कृतौ वार्तिकमेष कर्तुम् ॥ २२ ॥
यतः करस्थामलकाविशेषं
जानाति सिद्धान्तमसावशेषम् ॥
अतोऽह्यमुष्मै भवतैव पूर्व-
मदायि हस्तामलकाभिधानम् ॥ २३ ॥
वाणीं समाकर्ण्य सनन्दनस्य
सांमिस्मितं भाष्यकृदावभाषे ॥
नैपुण्यमन्यादृशमस्य किंतु
समाहितत्वान्न बहिः प्रवृत्तिः ॥ २४ ॥
अयं तु बाल्ये न पपाठ पित्रा
नियोजितः सादरमक्षराणि ॥
न चोपनीतोऽपि गुरोः सकाशा-
दध्यैष्ट वेदान्परमार्थनिष्ठः ॥ २५ ॥

---

अत्रान्तरे समीपमागतः स सनन्दनः शीघ्रं वाक्यं समुदाजहार । तदाह—हे आचार्य भवत्कृतौ वार्तिकं कर्तुमेष हस्तामलकोऽपि समर्थः । आख्यानकी वृत्तम् ॥ २२ ॥ [ अपिना सुरेश्वरे त्वौदासीन्यमात्रं सूचितम् । न तु चित्सुखादिवत्सर्वथाऽनर्हत्वम् ] ॥ २२ ॥

यतः करस्थामलकसदृशं सर्वं सिद्धान्तमेष जानाति । अत एवामुष्मै भवतैव हस्तामलकाभिधानमदायि । उपजातिवृत्तम् ॥ २३ ॥

सनन्दनस्य वाचं समाकर्ण्यार्धस्मितं यथा स्यात्तथा भाष्यकारो जगाद । तदाह—अस्य हस्तामलकस्य नैपुण्यमनुपमं परं तु समाहितत्वादस्य बहिः प्रवृत्तिर्न भवति । उपजातिवृत्तम् ॥ २४ ॥

समाहितत्वादित्याद्युक्तं विवृणोति—अयं तु बाल्ये पित्रा सादरं नियोजितोऽप्यक्षराणि न पपाठ । तेनोपनीतोऽपि गुरोः सकाशात्परमार्थनिष्ठो वेदांश्च चाधीतवान् । उपजातिवृत्तम् ॥ २५ ॥

---

१ ग. 'दानैवाधी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बालैर्न चिक्रीड न चान्नमैच्छन्न-
चारुवाचं ह्यवदत्कदाऽपि ॥
निश्चित्य भूतोपहतं तमेन-
मानिन्यिरेऽस्मन्निकटं कदाचित् ॥ २६ ॥
अस्मानवेक्ष्यैव मुहुः प्रणम्य
कृताञ्जलौ तिष्ठति बालकेऽस्मिन् ॥
इमामपूर्वां प्रकृतिं विलोक्य
विसिष्मिये तत्र जनः समेतः ॥ २७ ॥
कस्त्वं शिशो कस्य सुतः कुतो वेत्य-
स्माभिराचष्ट किलैष पृष्टः ॥
आत्मानमानन्दघनस्वरूपं
*विस्मापयन्वृत्तमयैर्वचोभिः ॥ २८ ॥
तदा कदाऽप्यश्रुतिगोचरं त-
दाकर्ण्य वाग्वैभवमात्मजस्य ॥
पिता प्रपद्यास्य परं प्रहर्षं
सप्रश्रयां वाचमुवाच विज्ञः ॥ २९ ॥

न चिक्रीड क्रीडां न चकार ॥ २६ ॥ [ बालैः सहायं न चिक्रीड कदाऽपीति सर्वत्र योज्यम् । क्वचिदपि देशे काले वा नैव क्रीडामकरोदित्यर्थः । भूतोपहतं पिशाचग्रस्तम् । निश्चित्य निर्णीय ] ॥ २६ ॥

प्रकृतिं स्वभावम् । तत्र तस्मिन्स्थाने । समेतः संमिलितः ॥ २७ ॥

'कस्त्वं शिशो कस्य कुतोऽसि गन्ता किं नाम ते त्वं कुत आगतोऽसि ।
एतन्मयोक्तं वद चार्भक त्वं मत्प्रीतये प्रीतिविवर्धनोऽसि' ।

इत्यस्माभिः पृष्टः पद्यमयैर्वचोभिर्विस्मापयन्नात्मानमानन्दघनस्वरूपमाचष्ट । इन्द्रवज्रा वृत्तम् ॥ २८ ॥

तस्मिन्काले कदाऽप्यश्रुतिगोचरं पुत्रस्य तद्वाग्वैभवमाकर्ण्यास्य पिता परं प्रहर्षं प्राप्य विज्ञः सप्रश्रयां वाचमुवाच । उपजातिवृत्तम् ॥ २९ ॥

* एवं ह्यत्र प्रक्रिया पूर्वं वचसां प्रयोजकत्वमाश्रित्य णिजनन्तरं तेषां प्रयोज्यत्वमाश्रित्येत-दंशस्य च प्रयोजकत्वमाश्रित्य पुनर्णिच् ततः शतृप्रत्ययः । एतेन शतृपुकोरसंगतिः प्रत्युक्ता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जनैर्जडत्वेन विनिश्चितोऽपि
ब्रवीति यद्येष परात्मतत्त्वम् ॥
प्रज्ञोन्नतानामपि दुर्विभाव्यं
किं वर्ण्यतेऽर्हन्भवतः प्रभावः ॥ ३० ॥
आ जन्मनः संसृतिपाशमुक्तः
शिष्योऽस्त्वयं विश्वगुरोस्तवैव ॥
प्रफुल्लराजीववने विहारी
कथं रमेत क्षुरके मरालः ॥ ३१ ॥
विज्ञाप्य तस्मिन्निति निर्गतेऽसौ
तदाप्रभृत्यत्र वसत्युदारः ॥
आ शैशवादात्मविलीनचेताः
कथं प्रवर्तेत महाप्रबन्धे ॥ ३२ ॥
श्रुत्वेति पप्रच्छुरमुं विनेयाः
स्वामिन्विनैव श्रवणाद्युपायैः ॥
अलब्ध विज्ञानमयं कथं वा
भवानिदं साधु विदांकरोतु ॥ ३३ ॥
तानब्रवीत्संयमिचक्रवर्ती
कश्चित्पुरा यामुनतीरवर्ती ॥
बभूव सिद्धः किल साधुवृत्तः
सांसारिकेभ्यः सुतरां निवृत्तः ॥ ३४ ॥

---

तामुदाहरति—जनैरिति । प्रज्ञयोन्नतानामपि दुर्विभाव्यं परमात्मतत्त्वं [illegible] स्वत्समीपमागतो ब्रवीति तर्हि हेऽर्हन्भवतः प्रभावः किं वर्ण्यते । उपजातिवृत्तम् ॥ ३० ॥

तस्मादा जन्मनो जन्मप्रभृति संसृतिपाशमुक्तोऽयं विश्वगुरोस्तवैव शिष्योऽस्तु । प्रफुल्लपद्मवने विहारी हंसः क्षुरके वने कथं रमेत ॥ ३१ ॥

इति विज्ञाप्य तस्मिन्प्रभाकरे निर्गते सति ॥ ३२ ॥

अयं विज्ञानं कथं लब्धवानिदं भवान्साधु सम्यग्बोधयतु ॥ ३३ ॥

एवं पृष्ट आचार्यस्तस्य प्राग्भवीयं वृत्तान्तमुक्तवानित्याह—तानिति ॥ ३४ ॥

---

१ ख. ग. घ आलब्ध ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यान्तिके काचन विप्रकन्या
द्विहायनं जातु निवेश्य बालम् ॥
क्षणं प्रतीक्षस्व शिशुं द्विजेति
स्नातुं सखीभिः सह निर्जगाम ॥ ३५॥
अत्रान्तरे दैववशात्स बाल-
श्चङ्क्रम्यमाणो निपपात नद्याम् ॥
मृतं तमादाय शिशुं तदीया-
श्चक्रन्दुरुच्चैः पुरतो महर्षेः ॥ ३६ ॥
आक्रोशमाकर्ण्य मुनिः स तेषा-
मत्यन्तखिन्नो निजयोगभूम्ना ॥
प्राविक्षदङ्गं पृथुकस्य तस्य
स एष हस्तामलकस्तपस्वी ॥ ३७ ॥
तस्मादयं वेद विनोपदेशं
श्रुतीरनन्ताः सकलाः स्मृतीश्च ॥
सर्वाणि शास्त्राणि परं च तत्त्व-
मज्ञातमेतेन न किंचिदस्ति ॥ ३८ ॥
तत्तादृगात्मा न बहिः प्रवृत्तौ
नियोगमर्हत्ययमत्र वृत्तौ ॥
स मण्डनस्त्वर्हति बुद्धतत्त्वः
सरस्वतीसाक्षिकसर्वविस्त्वः ॥ ३९ ॥

जातु कदाचित्तस्य सिद्धस्य समीपे काचन विप्रकन्या द्विवर्षं बालकं संस्थाप्य हे द्विज क्षणमात्रं बालं प्रतीक्षस्वेत्युक्त्वा सखीभिः सह स्नातुं निर्जगाम ॥ ३५ ॥

महर्षेः पुरतश्चक्रन्दुराक्रोशं चक्रुः ॥ ३६ ॥

तस्य पृथुकस्य बालस्याङ्गं शरीरं प्रविवेश स तपस्व्येष हस्तामलकः ॥ ३७ ॥ [निजेति । स्वयोगैश्वर्यमहिम्नेत्यर्थः ॥ ३७ ॥

यस्मादेवं तस्मादयमुपदेशं विनैवानन्ताः श्रुतीः सकलाः स्मृतीश्च सर्वाणि च शास्त्राणि परं च तत्त्वं जानाति किं बहुनाऽनेनाज्ञातं किंचिदपि नास्ति ॥ ३८ ॥

तत्तस्मात्तादृगात्माऽयं हस्तामलको बहिः प्रवृत्तावत्र माण्ये वृत्तौ नियोगं नार्हति । स मण्डनस्त्वर्हति । यतो बुद्धतत्त्वः सरस्वतीसाक्षिकं सर्वज्ञत्वं यस्य सः ॥ ३९ ॥

प्रयत्नाल्लब्ध एवंविधः स न रोचेत चेत्तर्हि तथाविधोऽन्यो न दृश्यते । आख्यानकी-

१ ख. एष । २ घ. 'स्येव ह'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्ताद्वृशात्युज्ज्वलकीर्तिराशिः
समस्तशास्त्रार्णवपारदर्शी ॥
आसादितो धर्महितः प्रयत्ना-
त्स चेन्न रोचेत न दृश्यतेऽन्यः ॥ ४० ॥
अहं बहूनामनभीष्टकार्यं
न कारयिष्ये हि महानिबन्धे ॥
किंचात्र संशीतिरभून्ममातो
यदेककार्ये बहवः प्रतीपाः ॥ ४१ ॥
भवन्निदेशाद्भगवन्सनन्दनः
करिष्यते भाष्यनिबन्धमीप्सितम् ॥
स ब्रह्मचर्यादुररीकृताश्रमो
मतिप्रकर्षो विदितो हि सर्वतः ॥ ४२ ॥
सनन्दनो नन्दयिता जनानां
निबन्धमेकं विदधातु भाष्ये ॥
न वार्तिकं तत्तु परप्रतिज्ञं
व्यधात्प्रतिज्ञां स हि नूत्नदीक्षः ॥ ४३ ॥

---

वृत्तम् ॥ ४० ॥ [ तत्ताद्वृशेति । एतेन लोकशास्त्रोभयप्रवृत्तिचातुर्यमपि तत्र सूचि-
तम् ] ॥ ४० ॥

ननु भवदभीष्टं चेत्तर्हि कारयितव्यमिति तत्राह—अहमिति । महानिबन्धे बहूना-
नभीष्टं कार्यं न कारयिष्ये किंच यत एकस्मिन्कार्ये बहवः प्रतिकूला अतोऽत्र संशी-
ममोत्पन्न इत्यर्थः । उपजातिवृत्तम् ॥ ४१ ॥ [ संशीतिः किमिदं निर्विघ्नं स्यान्न वेति
संदेहः ] ॥ ४१ ॥

एवमुक्ता विनेया न दृश्यतेऽन्य इत्युक्तमसहमाना ऊचुः—हे भगवन्भवदाज्ञातः सन-
न्दन ईप्सितं भाष्ये निबन्धं करिष्यति । यतः स ब्रह्मचर्यादङ्गीकृताश्रमो मतेः प्रकर्षो यस्य
स सर्वतो विज्ञातश्च । वंशस्थं वृत्तम् ॥ ४२ ॥

एवमुक्त आचार्य उवाच—जनानां नन्दयिता सनन्दनो भाष्ये निबन्धमेकं विदधातु । स
तु वार्तिकं तत्तु परप्रतिज्ञं परस्य प्रतिज्ञा यस्मिन् । हि यतः, नूत्नदीक्षः सुरेश्वरः प्रतिज्ञां
व्यधात् । उपेन्द्रवज्रा वृत्तम् ॥ ४३ ॥ [ नूत्नेति । नूत्ना नवीना दीक्षा संन्यासदीक्षा
यस्य स तथा । एतादृशः स सुरेश्वरः ] ॥ ४३ ॥

---

१ क 'दृशोऽन्यु' । २ क. घ. 'स्य सर्वं' । ३ क. ख ग. यतः स्वीकृतदी' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदिश्येत्थं शिष्यसंघं यतीन्द्रः
प्रोवाचेत्थं नूत्नभिक्षुं रहस्तम् ॥
भाष्ये भिक्षो मा कृथा वार्तिकं त्वं
नेमे शिष्याः सेहिरे दुर्विदग्धाः ॥ ४४ ॥
तात्पर्यं ते गेहिधर्मेषु दृष्ट्वा
तत्संस्कारं सांप्रतं शङ्कमानाः ॥
भाष्ये कृत्वा वार्तिकं योजयेत्स
भाष्यं प्राहुः स्वीयसिद्धान्तशेषम् ॥ ४५ ॥
नास्त्येवासावाश्रमस्तुर्य इत्थं
सिद्धान्तोऽयं तावको वेदसिद्धः ॥
द्वारि द्वास्थैर्वारिता भिक्षमाणा
वेश्मान्तस्ते न प्रवेशं लभन्ते ॥ ४६ ॥
इत्याद्यां तां किंवदन्तीं विदित्वा
तेषां नाऽऽसीत्प्रत्ययस्त्वय्यनल्पे ॥
स्वातन्त्र्यात्त्वं ग्रन्थमेकं महात्म-
न्कृत्वा मह्यं दर्शयाध्यात्मनिष्ठम् ॥ ४७ ॥

---

इत्थं शिष्यसंघमादिश्य यतीन्द्रो रहसि स्थितं नूत्नभिक्षुं सुरेश्वरं वक्ष्यमाणप्रकारेण प्रोवाच । हे भिक्षो भाष्ये त्वं वार्तिकं मा कृथा यतो दुर्विदग्धत्वादिमे शिष्या न सेहिरे । शालिनी वृत्तम् ॥ ४४ ॥

शङ्कमानैस्तैर्यदुक्तं तद्दर्शयति—गेहिधर्मेषु तव तात्पर्यं वीक्ष्य सांप्रतं तत्संस्कारं शङ्कमानाः प्राहुः । भाष्ये वार्तिकं कृत्वा स्वीयसिद्धान्तशेषं भाष्यं स योजयेत् । संभावनायां लिङ् । शालिनी वृत्तम् ॥ ४५ ॥ [ स्वीयेति । स्वीयसिद्धान्तः पूर्वमीमांसा वार्तिककृत्कुमारिलभट्टाचार्यशिष्यत्वेन स्वस्य तदेकसंमतो यः सिद्धान्तः स शेषोऽङ्गं यस्य तत्तया । अथवा स्वीयसिद्धान्तस्य शेषमङ्गीभूतमित्यर्थः ] ॥ ४५ ॥

किंच तुर्याश्रमो वेदे सिद्धो नास्त्येवेति माण्डनः सिद्धान्तो भिक्षमाणा द्वारि द्वास्थैर्वार्यमाणास्ते मण्डनस्य वेश्मान्तः प्रवेशं न लभन्त इत्याद्यां किंवदन्तीं जनश्रुतिं विदित्वा तेषामनल्पेऽक्षुद्रेऽपि त्वयि प्रत्ययो नाऽऽसीत् । तर्हि मया किं कर्तव्यमिति चेत्तत्राऽऽह—स्वातन्त्र्यात्त्वमध्यात्मनिष्ठमेकं ग्रन्थं कृत्वा मह्यं दर्शय ॥ ४६ ॥ [ भिक्षमाणाः संन्यासिन इत्यर्थः ] ॥ ४६ ॥ ४७ ॥

---

१ घ. ॰हस्थम् । २ क. ॰दग्धा इमे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्वन्यद्वत्प्रत्ययः स्यादमीषां
शिष्याणां नो ग्रन्थसंदर्शनेन ॥
इत्युक्त्वेमं वार्तिकं सूत्रभाष्ये
नाभूद्धाहेत्याप खेदं च किंचित् ॥ ४८ ॥

शिष्योक्तिभिः शिथिलितात्ममनोरथोऽसा-
वेनं स्वतन्त्रकृतिनिर्मितये न्ययुङ्क्त ॥
नैष्कर्म्यसिद्धिमचिराद्विदधत्स चेत्थं
न्याय्यामविन्दत सुरेश्वरदेशिकाख्याम् ॥ ४९ ॥

नैष्कर्म्यसिद्धिमथ तां निरवद्ययुक्तिं
निष्कर्मतत्त्वविषयावगतिप्रधानाम् ॥
आद्यन्तहृद्यपदबन्धवतीमुदारा-
माद्यन्तमैक्षततरां परितुष्टचेताः ॥ ५० ॥

ग्रन्थं दृष्ट्वा मोदमानो मुनीन्द्रस्तं
चान्येभ्यो दर्शयामास हृद्यम् ॥
तेषां चाऽऽसीत्प्रत्ययस्तद्वदस्मि-
न्यद्वच्चान्यस्तत्त्वविद्यः स नेति ॥ ५१ ॥

---

हे विद्वन्यथा ग्रन्थसंदर्शनेन नोऽस्माकममीषां शिष्याणां प्रत्ययः स्यादिति सुरेश्वरमुक्त्वा हाहा सूत्रभाष्ये वार्तिकं नाभूदिति किंचित्खेदं प्राप ॥ ४८ ॥

एवं शिष्योक्तिभिः शिथिलितः स्वमनोरथो यस्यासौ श्रीशंकर एनं सुरेश्वरं स्वतन्त्रकृतिनिर्मितये न्ययुङ्क्त । स च नियुक्तोऽचिरादेव नैष्कर्म्यसिद्धिं विदधदित्थं न्याय्यां सुरेश्वरदेशिकाख्यामविन्दत । वसन्ततिलका वृत्तम् ॥ ४९ ॥ [ शिथिलितेति । शिथिलितो विशकलित आत्मविद्याप्रदवार्तिकविषयको मनोरथः सुरेश्वरेणैवाद्वैतब्रह्मसूत्रभाष्य एव वार्तिकं कर्तव्यमिति संकल्परूपमनोवृत्तिविशेषो यस्य स तथेति यावत् । एवंभूतः सन् । यावत्स्वतन्त्रकृतिनिर्मितये न्ययुङ्क्त तावदेव सोऽपि । चशब्दोऽप्यर्थः ] ॥ ४९ ॥

निष्कर्मतत्त्वविषयाऽवगतिः प्रधानं यस्यामाद्यादन्तपर्यन्तं मनोज्ञपदबन्धवतीमेवंभूतां तां परितुष्टचेता आचार्य आद्यन्तं सम्यगैक्षत ॥ ५० ॥

यथा योऽस्मादन्यः स एवं तत्त्वविन्नास्तीति तथा तेषामस्मिन्प्रत्ययश्चाऽऽसीत् । शालिनी वृत्तम् ॥ ५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्राद्यापि श्रूयते मस्करीन्द्रै-
र्निष्कर्माऽऽत्मा यत्र नैष्कर्म्यसिद्धिः ॥
तन्नाम्नाऽयं ववृधे ग्रन्थवर्य-
स्तन्माहात्म्यात्सर्वलोकादृतोऽभूत् ॥ ५२ ॥
आचार्यवाक्येण विधित्सितेऽस्मि-
न्विघ्नं यदन्ये व्यधुरुत्ससर्ज ॥
शापं कृतेऽस्मिन्कृतमप्युदारै-
स्तद्वार्तिकं न प्रसरेत्पृथिव्याम् ॥ ५३ ॥
नैष्कर्म्यसिद्ध्याख्यनिबन्धमेकं
कृत्वाऽऽत्मपूज्याय निवेद्य चाऽऽप्त्वा ॥
विश्वासमुक्त्वाऽथ पुनर्बभाषे
स विश्वरूपो गुरुमात्मदेवम् ॥ ५४ ॥
न ख्यातिहेतोर्न च लाभहेतो-
र्नाप्यर्चनायै विहितः प्रबन्धः ॥
नोल्लङ्घनीयं वचनं गुरूणां
नोल्लङ्घने स्याद्गुरुशिष्यभावः ॥ ५५ ॥

---

यत्र ग्रन्थेऽद्यापि यतीन्द्रैर्निष्कर्माऽऽत्मा श्रूयते । यत्र नैष्कर्म्यस्य मोक्षस्य सिद्धिः । तस्मान्नैष्कर्म्यसिद्धेर्नाम्नाऽयं ग्रन्थवर्यो ववृधे । तस्मान्माहात्म्यात्सर्वलोकैरादृतोऽभूत् ॥ ५२ ॥ [ निष्कर्मा 'कर्मण्यकर्म यः पश्येत्' इति स्मृतेः कर्मशब्दितदृश्यशून्य इत्यर्थः ] ॥ ५२ ॥

आचार्यैर्यद्वविष्यमालक्ष्य ह्याहेत्युक्तं तद्दर्शयति—आचार्यवाक्येणास्मिन्वार्तिके विधातुमिष्टे सति यतोऽन्ये विघ्नं व्यधुरस्मिन्कृतेऽस्मान्निमित्तात्सुरेश्वरः शापमुत्ससर्ज । सूत्रभाष्यस्य वार्तिकमुदारैः कृतमपि पृथिव्यां न प्रसरेत् । इन्द्रवज्रा वृत्तम् ॥ ५३ ॥

विश्वासं च प्राप्याऽऽचार्येत्याद्युक्त्वाऽथ पुनरुवाच—उपजातिवृत्तम् ॥ ५४ ॥

यदुवाच तदाह—नेति । इन्द्रवज्रा वृत्तम् ॥ ५५ ॥ [ अर्चनायै पूजायै ] तर्हि किमर्थं विहितोऽयं प्रबन्ध इत्यत्राऽऽह—नेति । तत्र हेतुमाह—नेति ॥ ५५ ॥

---

१ ग. 'य चोक्त्वा । वि° । २ ग. °समाप्याप्य पु° । ३ घ. नो लङ्घ° । ४ घ. नो लङ्घ° । ५ घ. ॥ ५३ ॥ उक्त्वा तं ग्रन्थं निवेद्य च विश्वासं प्राप्याथ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्वं गृहित्वेऽपि न तत्स्वभावो
न बाल्यमन्वेति हि यौवनस्थम् ॥
न यौवनं वृद्धमुपैति तद्व-
द्व्रजन्हि पूर्वस्थितिमोज्झ्य गच्छेत् ॥ ५६ ॥
अहं गृही नात्र विचारणीयं
किं ते न पूर्वं मन एव हेतुः ॥
बन्धे च मोक्षे च मनो विशुद्धो
गृही भवेद्वाऽप्युत मस्करी वा ॥ ५७ ॥
नास्त्येव चेदाश्रम उत्तमाऽऽदिः
कथं च तत्प्राप्तिनिवृत्तिगामिनौ ॥
प्रतिश्रवौ नौ कथमल्पकालौ
न हि प्रतिज्ञा भगवन्निरुद्धा ॥ ५८ ॥

---

तात्पर्यं ते गेहिधर्मेषु दृष्टेत्युक्तं तत्राऽऽह—पूर्वं गृहित्वेऽपि तत्स्वभावो गृहि- भावो न भवामि । हि यतो यौवनस्थं बाल्यं नान्वेति । तथा वृद्धं पुरुषं यौवनं नैति । तद्वत्तथा व्रजन्गमनं कुर्वन्पूर्वस्थितिं परित्यक्त्वैव गच्छेदित्यर्थः । उपजातिवृत्तम् ॥ ५६ ॥

किंचात्रास्मिँल्लोकेऽहं गृहीति न विचारणीयम् । यतस्ते किं पूर्वमिह जन्मनि जन्मान्तरे वा गृहिणो न बभूवुरपि त्वासुरेव । तस्माद्गृहित्वे यतित्वे वा मन एव हेतुः । न केवलं तावदेवापि तु बन्धे च मोक्षे च मन एव हेतुः ।

' मन एव मनुष्याणां कारणं बन्धमोक्षयोः '

इत्युक्तत्वात् । तस्माद्विशुद्धो गृही भवेद्वा मस्करी वा भवेदुभयथाऽपि न्यूनाधिक्यं नास्तीत्यर्थः ॥ ५७ ॥

नास्त्येवासावाश्रमस्तुर्य इत्यभित्युक्तं तत्राऽऽह—नास्त्येवेति । हे उत्तमाऽऽदिरीतान्तं नास्त्येव चेत्तत्प्राप्तिनिवृत्तिगामिनौ नावावयोः प्रतिश्रवावहं पराजितः संन्यासं प्राप्स्यामि त्वं पराजितस्त्वं हास्यामीत्येवंरूपौ कथं स्तस्तत्राप्यल्पकालौ यदि तुर्याश्रमो ममाभिमतो न स्यात्तर्हि प्रतिज्ञा मया निरुद्धाऽभूदित्याशयेनाऽऽह—न हीति ॥ ५८ ॥ [ अल्पौ ] अल्पः सद्यः कृतत्वाददीर्घः कालो ययोस्तावित्यर्थः ] [ निरुद्धा त्यक्ता स्यात्संन्यासाश्रमस्यै तुरीयाश्रमस्यैवाभावात्तद्विषयकप्रतिज्ञाऽपि वन्ध्यापुत्रीविवाहकरणप्रतिज्ञावत्त्यक्तैव स्यादि- त्याशयः ] ॥ ५८ ॥

---

१ ख. ग. घ. 'मिना' । २ ग. 'भानुम' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संभिक्षमाणा न लभन्त एव चे-
द्गृहप्रवेशं गुरुणा प्रवेशनम् ॥
कथं हि भिक्षा विहिता ननूत्तमा
को नाम लोकस्य मुखापिधायकः ॥ ५९ ॥
तत्त्वोपदेशाद्विदितात्मतत्त्वो
व्यधामहं संन्यसनं कृतात्मा ॥
विरागभावान्न पराजितस्तु
वादो हि तत्त्वस्य विनिर्णयाय ॥ ६० ॥
पुरा गृहस्थेन मया प्रबन्धा
नैयायिकादौ विहिता महार्थाः ॥
इतः परं मे हृदयं चिकीर्षु
त्वदङ्घ्रिसेवां न विलङ्घ्य किंचित् ॥ ६१ ॥
अद्धामद्वैतबद्धादरबुधपरिषच्छेमुषीसंनिषण्णा-
मर्वाग्दुर्वादिगर्वानलविपुलतरज्वालमालावलीढाम् ॥
सिक्त्वा सूक्तामृतौघैरहह परिहसञ्जीवयस्यद्य सद्यः
को वा सेवापटुः स्याद्गणतरणविधौ सद्गुरोर्नैव जाने ॥ ६२ ॥

---

*च द्वारि द्वास्थैरित्याद्युक्तं तत्राऽऽह—संभिक्षमाणा इति । गुरुणा भगवता प्रवेशनं कथं विहितं कथं च मद्गृहे ननूत्तमा भिक्षा विहिता । यदपि किंवदन्तीत्याद्युक्तं *त्रो*प्याह—लोकस्य मुखस्यापिधायकः को नाम न कोऽप्यस्तीत्यर्थः ॥ ५९ ॥

यत्तु संन्यासमप्येष न बुद्धिपूर्वमित्याद्युक्तवन्तस्तत्राऽऽह—पूर्वं कृतात्मा पश्चात्तत्त्वोपदेशाद्विदितात्मतत्त्वोऽहं वैराग्यात्संन्यसनं व्यधां न तु पराजितो हि यस्माद्वादस्तत्त्वविनिर्णयाय ॥ ६० ॥ [ यतोऽहं पूर्वं कृतात्मा कृत आत्मा शास्त्रसंस्कारसंस्कृता बुद्धि*र्येन* स तथेत्यर्थः । पश्चात्तत्त्वोपदेशाच्छ्रीमद्भिः कृताद्ब्रह्मात्मैक्योपदेशात् । विदितेति ] [विरागेति । द्वैतस्य मृगाम्बुवन्मिथ्यात्वेन तत्र विषये वैराग्याद्धेतोरिति यावत् ]॥६०॥

यत्तु माध्ये कृत्वेत्यादि तत्राऽऽह—पुरेति । इतः परं मे हृदयं त्वदङ्घ्रिसेवां विलङ्घ्य न किंचित्कर्तुमिच्छु ॥ ६१ ॥ [ नैयायिकादौ नैयायिकादेः खण्डनविषय इत्यर्थः । *ए*तेन शास्त्रवासनाक्षयशालित्वं सूचितम् । अत एव । इतः परमिति ] ॥ ६१ ॥

तथाचैवंविधस्य सद्गुरोस्तव सेवा केनापि कथमपि कर्तुं न शक्येत्याह—अद्वैते बद्ध

---

१ ख. 'त्राऽऽह ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्त्वोपरते सुरेश्वरगुरौ तेनैव शारीरके
नो संभाव्यहहात्र वार्तिकमिति प्रौढं शुगग्निं शनैः ॥
धीराग्र्यः शमयन्विवेकपयसा देवेश्वरेण त्रयी-
भाष्ये कारयितुं स वार्तिकयुगं बद्धादरोऽभून्मुनिः ॥ ६३ ॥

भावानुकारिमृदुवाक्यनिवेशितार्थं
स्वीयैः पदैः सह निराकृतपूर्वपक्षम् ॥
सिद्धान्तयुक्तिविनिवेशिततत्स्वरूपं
दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥ ६४ ॥

---

आदरो यैस्तथाभूतबुधपरिपच्छेमुष्यां संनिपण्णाम् । अद्वैतबद्धादरा या बुधसुहृत् बुद्धिस्तस्यां सम्यक्स्थितामिति वा । अर्वाचीनानां दुर्वादिनां गर्वलक्षणस्यानलस्य विस्फु- रज्वालालक्षणया मालया विपुलतरया ज्वालामालयेति वा । अवलीढामास्वादितां भ... सूक्तामृतौघैः सिक्त्वाऽहहाद्य सद्यः परिहसञ्जीवयसि । ततो रणतरणविधानसदृशादर्दे... भूतस्य सद्गुरोस्तव सेवायां को वा पटुः स्यात् । स्रग्धरा वृत्तम् ॥ ६२ ॥ [ सूक्तेति । ... सूत्रभाष्यादिरूपाणि यान्युक्तानि भाषणानि तान्येवामृतानि तेषामोघाः संघातैस्तैः सिक्त्वा संसिच्य । हे भगवन्भाष्यकार त्वमद्य सद्य एव परिहसन्नेव जीवयसि यतस्त्व... सद्गुरो * ऋणतरणविधावानृण्यसंपादनप्रकारे विषये । सेवापटुः को वा स्यादित्यहं नैव जान इति योजना ] ॥ ६२ ॥

इत्युक्त्वा सुरेश्वरगुरावुपरते सति । अहहेत्यत्यन्तखेदे । तेन सुरेश्वरेणैवात्र शारीरके वार्तिकं नो संभावीति प्रौढं शोकाग्निं धीराग्र्यः श्रीशंकरो विवेकपयसा शनैः शमयन्देवे... भाष्ये सुरेश्वरेण वार्तिकद्वयं कारयितुं स मुनिर्बद्धादरोऽभूत् । शार्दूलविक्रीडितं वृत्तम् ॥ ६३ ॥ [ त्रयीति । तैत्तिरीयबृहदारण्यकनृसिंहपूर्वतापिनीयोपनिषत्त्रयीभाष्योपरीत्यर्थः । ... श्रीशंकराचार्यः । वार्तिकत्रयमित्यार्थिकम् । तथा । वार्तिकेति । पञ्चीकरणवार्तिकं ... दक्षिणामूर्तिस्तोत्रवार्तिकं चेति वार्तिकद्वयमित्यर्थः । एवं च वार्तिकपञ्चकमिति ... ] ॥ ६३ ॥

भावानुसारिभिर्मृदुभिर्वाक्यैर्विनिवेशितोऽर्थो यत्र । स्वीयैः पदैर्निराकृतः पूर्वपक्षो यत्र । सिद्धान्तयुक्तिभिर्विनिवेशितं तस्य सिद्धान्तस्य स्वरूपं यत्र । तं तदीयं ग्रन्थं दृष्ट्वाऽभिनन्द्य स श्रीशंकरः परितोषवशादवोचत् । वसन्ततिलका वृत्तम् ॥ ६४ ॥

---

* मूले स्याद्रणतरणविधावित्यत्र स्यादृणतरणविधाविति पाठानुरोधेनेदम् ।

---

१ ख. °णमा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यं यदात्थ विनयिन्मम याजुषी या
शाखा तदन्तगतभाष्यनिबन्ध इष्टः ॥
तद्वार्तिकं मम कृते भवता प्रणेयं
सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥ ६५ ॥

तद्वत्त्वदीया खलु काण्वशाखा
ममापि तत्रास्ति तदन्तभाष्यम् ॥
तद्वार्तिकं चापि विधेयमिष्टं
परोपकाराय सतां प्रवृत्तिः ॥ ६६ ॥

तत्रोभयत्र कुरु वार्तिकमार्तिहारि
कीर्तिं च याहि जितकार्तिकचन्द्रिकाभाम् ॥
मा शङ्कि पूर्वमिव दुःशठवाक्यरोधो
मद्वाक्यमेव शरणं व्रज मा विचारीः ॥ ६७ ॥

इत्थं स उक्तो भगवत्पदेन
श्रीविश्वरूपो विदुषां वरिष्ठः ॥
चकार भाष्यद्वयवार्तिके द्वे
ह्याज्ञा गुरूणां ह्यविचारणीया ॥ ६८ ॥

---

तदाह—हे विनयिंस्त्वं यदुक्तवानसि तत्सर्वं सत्यमतो मम या याजुषी तैत्तिरेयी शाखा तस्या अन्तगतो यो भाष्यलक्षणो ममेष्टो निबन्धस्तस्य वार्तिकं मदर्थं भवता प्रणेयम् । यतः सतां चेष्टितं परहितैकफलं प्रसिद्धम् ॥ ६५ ॥

तद्वत्त्वदीया खलु या काण्वशाखा तत्रापि मम तदन्तभाष्यमस्ति तस्य वार्तिकमपीष्टं विधेयम् । यतः सतां प्रवृत्तिः परोपकारायेत्यर्थः ॥ ६६ ॥

आवश्यकताबोधनाय पुनराह—तत्रोभयत्र तापत्रयनिबर्हणं वार्तिकं कुरु । जिता कार्तिकचन्द्रिकाया आभा यया तथाभूतां कीर्तिं च प्राप्नुहि । ननु पूर्ववदधुनाऽपि विनयवाक्यै रोधस्यावश्यंभावित्वात्किमर्थं तत्करणे मया दीक्षा स्वीकार्येति शङ्का त्वया न कर्तव्येत्याह—मा शङ्कीति । कुत इति चेत्तत्राऽऽह—मद्वाक्यमेव शरणमतस्तत्करणार्थं गच्छ विचारं मा कुरु । वसन्ततिलका वृत्तम् ॥ ६७ ॥

इत्थं भगवत्पदेन श्रीशंकरेणोक्तो विदुषां वरिष्ठः स श्रीसुरेश्वरो भाष्यद्वयस्य वार्तिके द्वे चकार । हि यस्माद्गुरूणामाज्ञाऽविचारणीयैव । उपजातिवृत्तम् ॥ ६८ ॥ [ भगवदिति । भगवत्यैश्वर्यवती पदे चरणौ यस्य स तथा तेनेत्यर्थः । यद्वा भगवन्तो विद्यावक्तारत्वेनैश्वर्यवन्तः पद्मपादाचार्यादयः शिष्याः पदयोर्यस्येत्यादि ] ॥ ६८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आज्ञा गुरोरनुचरैर्न हि लङ्घनीये-
त्युक्त्वा तयोर्निगमशेखरयोरुदारम् ॥
निर्माय वार्तिकयुगं निजदेशिकाय
निःसीमनिस्तुलनधीरुपदां चकार ॥ ६९ ॥

सनन्दनो नाम गुरोरनुज्ञया
भाष्यस्य टीकां व्यधितेरितः पराम् ॥
यत्पूर्वभागः किल पञ्चपादिका
तच्छेषगा वृत्तिरिति प्रथीयसी ॥ ७० ॥

व्यासर्षिसूत्रनिचयस्य विवेचनाय
टीकाभिधं विजयडिण्डिममात्मकीर्तेः ॥
निर्माय पद्मचरणो निरवद्ययुक्ति-
दृब्धं प्रबन्धमकरोद्गुरुदक्षिणां सः ॥ ७१ ॥

आलोचयन्नथ तदा नु गतिं ग्रहाणा-
मूचे सुरेश्वरसमाह्वमुपह्वरे सः ॥
पञ्चैव वत्स चरणाः प्रथिता इह स्यु-
स्तत्रापि सूत्रयुगलद्वयमेव भूम्ना ॥ ७२ ॥

---

एतदेव विवृणोति—गुरोराज्ञाऽनुचरैर्न हि लङ्घनीयेत्युक्त्वा वेदान्तयोरै[illegible]
बृहदारण्यसंज्ञयोस्तयोर्भाष्ययोरुदारं वार्तिकद्वयं निर्माय सीमारहिता निरुपमा [illegible]
स सुरेश्वरो निजदेशिकायोपदां चकारोपायनभूतं कृतवान् । वसन्ततिलकावृत्तम् ॥ ६९ ॥

सनन्दनो नाम गुरोरनुज्ञया प्रेरितः परां भाष्यस्य टीकां व्यधात् । यस्य [illegible]
भागः पञ्चपादिकेति प्रसिद्धः । तच्छेषभागगा वृत्तिरिति प्रथीयसी प्रख्याता ॥ ७० ॥

व्यासाख्यर्षिसूत्रकदम्बस्य विवेचनायाऽऽत्मकीर्तेर्विजयडिण्डिमं यतो निरव[illegible]
क्तिभिर्ग्रथितं टीकासंज्ञं प्रबन्धं निर्माय स पद्मपादो गुरुदक्षिणामकरोत् । वसन्तति[illegible]
लका वृत्तम् ॥ ७१ ॥

अथानन्तरं सूर्यादिग्रहाणां गतिमालोचयन्सुरेश्वरसमाख्यमेकान्ते स [illegible]
बभाषे । हे वत्सेह लोके पञ्चैव चरणाः प्रथिताः स्युरिह टीकायामिति वा । [illegible]
बाहुल्येन सूत्रचतुष्टयमेव प्रथितं स्यात् ॥ ७२ ॥

---

१ क. 'क्तिस्यूतं प्र°' । ख. 'क्तिदृब्धं प्र°' । २ क. 'षगा' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रारब्धकर्मपरिपाकवशात्पुनस्त्वं
वाचस्पतित्वमधिगम्य वसुंधरायाम् ॥
मन्व्यां विधास्यसितमां मम भाष्यटीका-
माभूतसंप्लवमधिक्षिति सा च जीयात् ॥ ७१ ॥
इत्येवमुक्त्वाऽथ यतीश्वरोऽसा-
वानन्दगिर्यादिमुनीन्स हूत्वा ॥
कुरुध्वमद्वैतपरान्निबन्धा-
नित्यन्वशान्निर्ममसार्वभौमः ॥ ७४ ॥
ते सर्वेऽप्यनुमतिमाप्य देशिकेन्दो-
रानन्दाचलमुखरा महानुभावाः ॥
आतेनुर्जगति यथास्वमात्मतत्त्वा-
म्भोजार्कान्विशदतरान्बहून्निबन्धान् ॥ १३८७ ॥
इति श्रीमाधवीये तद्वार्तिकान्तप्रवर्तनः ॥
संक्षेपशंकरजये पूर्णः सर्गस्त्रयोदशः ॥ १३ ॥

---

एवं तद्दत्तशापस्य सार्थक्यं प्रदर्श्य सूत्रभाष्यवृत्तिकरणसंकल्पस्यापि तत्त्वमाह— प्रारब्धेति । भूमौ वाचस्पतित्वं प्राप्य मन्व्यां मम भाष्यटीकां सम्यग्विधास्यसि सनन्द- नकृतटीकासाम्यं वारयति । प्रलयपर्यन्तं क्षितौ सा च जीवनं प्राप्नुयादिति वरप्रदानम् ॥७३॥

इत्येवं सुरेश्वरमुक्त्वाऽथानन्तरमसौ यतीश्वर आनन्दगिर्यादिमुनीनाहूयाद्वैतपरान्निबन्धा- न्कुरुध्वमिति स निर्ममचक्रवर्त्यन्वशिष्टवान् । उपजातिवृत्तम् ॥ ७४ ॥

ते सर्वेऽप्यानन्दगिरिमुख्या महानुभावा देशिकेन्दोरनुमतिमाप्य स्वमात्मानमनतिक्रम्य यथामत्यात्मतत्त्वाम्भोजार्कान्विशदतरान्निबन्धाना समन्ताद्विस्तारितवन्तः । प्रहर्षणी वृत्तम् ॥ ॥ १३८७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसराम- कुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजयडिण्डिमे त्रयोदशः सर्गः ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ चतुर्दशः सर्गः ।

अथाब्जपात्कर्तुमनाः स तीर्थ-
यात्रामयाचिष्ट गुरोरनुज्ञाम् ॥
देया गुरो मे भगवन्ननुज्ञा
देशान्दिदृक्षे बहुतीर्थयुक्तान् ॥ १ ॥
स क्षेत्रवासो निकटे गुरोर्यो
वासस्तदीयाङ्घ्रिजलं च तीर्थम् ॥
गुरूपदेशेन यदात्मदृष्टिः
सैव प्रशस्ताऽखिलदेवदृष्टिः ॥ २ ॥
शुश्रूषमाणेन गुरोः समीपे
स्थेयं न नेयं च ततोऽन्यदेशे
विशिष्य मार्गश्रमकर्शितस्य
निद्राभिभूत्या किमु चिन्तनीयम् ॥ ३ ॥
द्विधा हि संन्यास उदीरितोऽयं
विबुद्धतत्त्वस्य च तद्बुभुत्सोः ॥
तत्त्वंपदार्थैक्य उदीरितोऽयं
यत्नात्त्वमर्थः परिशोधनीयः ॥ ४ ॥

अथ पद्मपादकृतां तीर्थयात्रां निरूपयितुमुपक्रमते—अथानन्तरं स पद्मपादस्तीर्थ[यात्रां]
कर्तुमना गुरोरनुज्ञामयाचिष्ट । याच्ञामेवाऽऽह–हे भगवन्गुरोऽनुज्ञा देया बहुतीर्थयुक्तान्दे-
शान्द्रष्टुमिच्छामि । उपजातिवृत्तम् ॥ १ ॥

एवं प्रार्थितो गुरुरुवाच—गुरोर्निकटे यो वासः स एव क्षेत्रवासः ॥ २ ॥

यस्माद्गुरुसमीपे स्थितस्य देशान्तरगमनप्राप्यं समस्तं प्राप्तमेवाभूत् । शुश्रूषमाणेन
शिष्येण गुरोः समीपे स्थेयं गुरुसमीपादन्यदेशो नैव गन्तव्यम् । यतोऽन्यत्र ...
संन्यासधर्मदौर्लभ्यं दुःखबाहुल्यादिस्वतिरिच्यत इत्याशयेनाऽऽह—अतिशयेन मार्गश्रम-
कर्शितस्य निद्राभिभूत्या किमपि त्वंपदादिचिन्तनीयं न संभवति ॥ ३ ॥

अयं संन्यासश्च द्विधा । विद्वत्संन्यासो विविदिषासंन्यासश्चेति द्विप्रकारक उक्तः ...
विबुद्धतत्त्वस्य विक्षेपनिवृत्त्यां जीवन्मुक्तिसुखार्थं आद्यस्तत्त्वबुभुत्सोस्तत्त्वंपदैक्ये तदर्थं ...
भवदादिभिराश्रितो द्वितीय उक्तः । तस्मात्तदर्थं त्वमर्थः प्रयत्नाच्छोधनीयो न तु तत्त्व[बोधान्तरं]
तकं तीर्थाटनादि कर्तव्यमिति भावः ॥ ४ ॥

१ घ. 'कार उ' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संभाव्यते क्व च जलं क्व च नास्ति पाथः
शय्यास्थलं क्वचिदिहास्ति न च क्व चास्ति॥
शय्यास्थलीजलनिरीक्षणसक्तचेताः
पान्थो न शर्म लभते कलुषीकृतात्मा ॥ ५ ॥
ज्वरातिसारादि च रोगजालं
बाधेत चेत्तर्हि न कोऽप्युपायः॥
स्थातुं च गन्तुं च न पारयेत
तदा सहायोऽपि विमुञ्चतीमम्॥ ६ ॥
स्नानं प्रभाते न च देवतार्चनं
क्व चोक्तशौचं क्व च वा समाधयः॥
क्व चाशनं कुत्र च मित्रसंगतिः
पान्थो न शाकं लभते क्षुधातुरः॥ ७ ॥
नास्त्युत्तरं गुरुगिरस्तदपीह वक्ष्ये
सत्यं यदाह भगवान्गुरुपार्श्ववासः॥
श्रेयानिति प्रथमसंयमिनामनेका-
न्देशानवीक्ष्य हृदयं न निराकुलं मे ॥ ८ ॥

---

तीर्थयात्रायास्तदभिघातकत्वं स्फुटयन्नाह—संभाव्यत इति। पाथो जलम्। इह मार्गे। वसन्ततिलका वृत्तम् ॥ ५ ॥

किंच यदि चेज्ज्वरातिसारादिरोगजालं बाधेत तर्हि कोऽप्युपायो नास्ति। न पारयेत नैव शक्नुयात्। उपजातिवृत्तम् ॥ ६ ॥ [ अपिनाऽन्यो विमुञ्चतीति कैमुत्यसिद्धमेव ] ॥ ६ ॥

न च क्व चेति वा मध्यमणिन्यायेनोभयत्र संबन्धनीयम् ॥ ७ ॥ [ प्रभाते प्रातःकाले स्नानं न भवति। चः समुच्चये देवतामानसार्चनं यद्यपि भस्मस्नानं विधायापि कर्तुं शक्यमथापि तदपि तदा जिगमिषाक्षिप्तचित्तत्वान्नैव भवतीत्यर्थः ] ॥ ७ ॥

एवमुक्तः पद्मपाद उवाच—यद्यपि गुरुवचस उत्तरं नास्ति[१] तथाऽपीहोत्तरं वक्ष्ये। एवं प्रतिज्ञां विधाय यत्स क्षेत्रवास इत्याद्युक्तं तत्राऽऽह—सत्यमिति। गुरुसमीपवासः श्रेयानिति भगवान्यदाह तत्सत्यं तथाऽप्याद्या ये संयमिनस्तेषामनेकान्देशानवीक्ष्य मे हृदयमव्याकुलं न भवति। हे संयमिनां प्रथमेति वा। वसन्ततिलका वृत्तम् ॥ ८ ॥

---

१ ख. 'चनस्योत्त'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वत्र न क्वापि जलं समस्ति
पश्चात्पुरस्तादथ वा विदिक्षु ॥
मार्गो हि विद्येत न सुव्यवस्थः
सुखेन पुण्यं क्व नु लभ्यतेऽधुना ॥ ९ ॥
जन्मान्तरार्जितमघं फलदानहेतो-
र्व्याध्यात्मना जनिमुपैति न नो विवादः ॥
साधारणादिह च वा परदेशके वा
कर्म ह्यभुक्तमनुवर्तत एव जन्तुम् ॥ १० ॥
इह स्थितं वा परतः स्थितं वा
कालो न मुञ्चेत्स्वसमयागतश्चेत् ॥
तद्देशगत्याऽमृत देवदत्त
इत्यादिकं मोहकृतं जनानाम् ॥ ११ ॥
मन्वादयो मुनिवराः खलु धर्मशास्त्रे
धर्मादि संकुचितमाहुरतिप्रवृद्धम् ॥
देशाद्यवेक्ष्य न तु तत्सरणिं गतानां
शौचाद्यतिक्रमकृतं प्रभवेदघं नः ॥ १२ ॥

---

संभाव्यत इत्यादि यदुक्तं तत्राप्याह—सर्वत्रेति । न विद्यते सुव्यवस्था यस्य [illegible]
यद्यप्येवं तथाऽप्यधुना सुखेन पुण्यं क्वापि न लभ्यतेऽतस्तदर्थं दुःखमपि सोढव्यमित्यर्थः।
उपजातिवृत्तम् ॥ ९ ॥ [ सर्वत्र क्वापि जलं सम्यङ्नैवास्तीत्यर्थः ] ॥ ९ ॥

यदपि ज्वरातिसारादीत्युक्तं तत्राप्याह—जन्मान्तरार्जितं पापं फलदानार्थं रोगात्म[illegible]
जन्मोपैतीत्यत्रास्माकं विवादो नास्ति तथाऽपीह वा परदेशके वा साधारणा[illegible]
हि यस्मादभुक्तं कर्म जन्तुमनुवर्तत एव । वसन्ततिलका वृत्तम् ॥ १० ॥

कालो मृत्युः स्वसमय आगतश्चेदिह स्थितं परदेशे स्थितं वा नैव मुञ्चेत् । यत्तु दे-
शगमनेन देवदत्तोऽमृत मृतवानित्यादिकं जनानां वचस्तत्त्वविवेककृतमित्याह—तद्देश[illegible]
त्येति । उपजातिवृत्तम् ॥ ११ ॥ [ समयेति । समये प्रारब्धपरिसमाप्तिस्तस्य आग[illegible]
समयागत इत्यर्थः ] ॥ ११ ॥

यत्तु स्नानमित्याद्युक्तं तत्राऽऽह—मनुपराशरादयो मुनिवराः किल धर्मशास्त्रे देशा[illegible]
वेक्ष्यातिप्रवृद्धं धर्मादि संकुचितमाहुः[1] । तथाच स्मृतिः—

---

१ क. 'दत्तो मृतवा' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दैवेऽनुकूले विपिनं गतो वा
समाप्नुयाद्वाञ्छितमन्नमेषः ॥
ह्रियेत नश्येदपि वा पुरस्थं
तस्मिन्प्रतीपे तत एव सर्वम् ॥ १३ ॥

गृहं परित्यज्य विदेशगो ना
सुखं समागच्छति तीर्थदृश्वा ॥
गृहं गतो याति मृतिं पुरस्ता-
त्तदागमादत्र च किं निमित्तम् ॥ १४ ॥

देशे कालेऽवस्थितं तद्विमुक्तं
ब्रह्मानन्दं पश्यतां तत्र तत्र ॥
चित्तैकाग्र्ये विद्यमाने समाधिः
सर्वत्रासौ दुर्लभो नेति मन्ये ॥ १५ ॥

---

'देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं समारभेत्' ॥

इत्याद्या। तथाच देशाद्यवेक्ष्य तेषां सरणिं गतानामस्माकं शौचाद्यतिक्रमनिमित्त-मघं न प्रभवेत्। वसन्ततिलका वृत्तम् ॥ १२ ॥

यत्तु क्व चाशनं पान्थो न शाकं लभते क्षुधातुर इत्युक्तं तत्राऽऽह—दैव इति। तस्मिन्दैवे। प्रतीपे प्रतिकूले। अतस्तत एव प्रतीपादनुकूलाद्वा दैवादेव। उपजातिवृत्तम् ॥ १३ ॥

किंच गृहं परित्यज्य विदेशगस्तीर्थदृश्वा ना पुमान्सुखं यथा स्यात्तथा समागच्छति गृहे स्थितस्तदागमात्पूर्वमेव मरणं यातीत्यत्र च किं निमित्तं तस्य परदेशगमनाभावात्। उपेन्द्रवज्रा वृत्तम् ॥ १४ ॥ [तीर्थेति। तीर्थं पश्यतीति तीर्थदृश्वा। एतादृशः सन्] ॥ १४ ॥

यत्तु किमु चिन्तनीयं क्व च वा समाधय इत्युक्तं तत्राऽऽह—देश इति। वस्तुतस्ताभ्यां देशकालाभ्यां विमुक्तं ब्रह्मानन्दं पश्यतां तत्र तत्र देशे काले चित्तैकाग्र्ये विद्यमाने सति सर्वत्रासौ समाधिर्दुर्लभो नेति मन्ये। शालिनी वृत्तम् ॥ १५ ॥

---

१ ग. घ. 'ले च स्थि'। २ क. 'भो नैव म'। ३ ख. 'ले सति तत ए'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्तीर्थसेवा मनसः प्रसादिनी
देशस्य वीक्षा मनसः कुतूहलम् ॥
क्षिणोत्यनर्थान्सुजनेन संगम-
स्तस्मान्न कस्मै भ्रमणं विरोचते ॥ १६ ॥

अदाध्यमानोऽपि विदेशसंगतिं ।
लभेत विद्वान्विदुषाऽभिसंगतिम् ॥
बुधो बुधानां खलु मित्रमीरितं
खलेन मैत्री न चिराय तिष्ठति ॥ १७ ॥

समीपवासोऽयमुदीरितो गुरो-
र्विदेशगो यद्धृदयेन धारयेत् ॥
समीपगोऽप्येष न संस्थितोऽन्तिके
न भक्तिहीनो यदि धारयेद्धृदि ॥ १८ ॥

सुजनः सुजनेन संगतः
परिपुष्णाति मतिं शनैः शनैः ॥
परिपुष्टमतिर्विवेकवा-
ञ्शनकैर्हेयगुणं विमुञ्चति ॥ १९ ॥

---

किंच सत्तीर्थसेवा मनसो विशोधिनी देशस्यापूर्वस्य दर्शनं मनसः कुतूहलं सुजने सङ्गोऽनर्थान्नाशयति । तस्मादेवंविधं भ्रमणं कस्मै विशेषेण न रोचते । उपमा... ॥ १६ ॥ [ सत्तीर्थेति । एवं च बहुगुणत्वात्सर्वस्मा अपि तीर्थयात्रार्थं भ्रमणं रोच... एवेति भावः ] ॥ १६ ॥

यदपि कुत्र च मित्रसंगतिरित्युक्तं तत्राप्याह—विदेशे सम्यग्गतिमप्यमानः ... णोऽपि विद्वान्विदुषाऽभिसंगतिं लभेत । बुधानां बुध एव खलु मित्रं कथितम् । ... खलेन मैत्री चिराय न तिष्ठति । वंशस्थं वृत्तम् ॥ १७ ॥

यत्तु गुरोः समीपे स्थेयमित्याद्युक्तं तत्राऽऽह—गुरोः समीपे वासोऽयं कथितः ... विदेशगो यदि हृदयेन गुरुं धारयेत् । समीपगोऽप्येष समीपे न स्थितो यदि भक्ति... हीनो हृदि तं न धारयेत् ॥ १८ ॥

सुजनसमागमोऽपि सुजनस्यैव फलतीत्याह—सुजनः सुजनेन संगतः शनैः ... स्तत्सङ्गेन बुद्धिं वर्धयति । परिपुष्टमतिर्विवेकवान्सन्हेयं गुणं दुःखादि रजआदि ... विमुञ्चति । वियोगिनी वृत्तम् ॥ १९ ॥ [ हेयस्त्याज्यो यो गुणो रजआदिस्त... स्यर्थः । विमुञ्चति क्षोभादित्यागेन जहातीत्यर्थः ] ॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्याग्रहोऽस्ति तव तीर्थनिषेवणायां
विघ्नो मयाऽत्र न खलु क्रियते पुमर्थे ॥
चित्तस्थिरत्वगतये विहितो निषेधो
मा भूद्विशेषगमनं त्वतिदुःखहेतुः ॥ २० ॥

नैको मार्गो बहुजनपदक्षेत्रतीर्थानि यातां
चौराध्वानं परिहर सुखं त्वन्यमार्गेण याहि ॥
विप्राग्र्याणां वसतिविततिर्यत्र वस्तव्यमीष-
न्नो चेत्सार्धं परिचितजनैः शीघ्रमुद्दिष्टदेशम् ॥ २१ ॥

सद्भिः सङ्गो विधेयः स हि सुखनिचयं सूयते सज्जनाना-
मध्यात्मैक्ये कथास्ता घटितबहुरसाः श्राव्यमाणाः प्रशान्तैः ॥
कायक्लेशं विभिद्युः सततभयभिदः श्रान्तविश्रान्तवृक्षाः
स्वान्तश्रोत्राभिरामाः परिमृषिततृषः क्षोभितक्षुत्कलङ्काः ॥ २२ ॥

---

एवमुक्तो गुरुरुवाच—यदीति । अत्र तीर्थसेवारूपे पुरुषार्थे चित्तस्थैर्यावगतये मया निषेधो विहित एवमनुज्ञाप्य शिक्षणं करोति—अतिदुःखहेतुर्विशेषगमनं मा भूत् । वसन्ततिलका वृत्तम् ॥ २० ॥

किंच यतो बहुजनपदक्षेत्रतीर्थानि गच्छतामेको मार्गो न भवत्यतश्चौराध्वानं परित्यज सुखं यथा स्यात्तथा त्वन्यमार्गेण गच्छ । किंच विप्राणां वसतिविततिर्निकेतनपङ्क्तिर्यत्र तत्र वस्तव्यम् । तत्रापीषन्न तु बहुकालम् । विप्राणां वसतिविततिर्नास्ति चेत्परिचितजनैः सहोद्दिष्टं देशं शीघ्रं याहि । मन्दाक्रान्ता वृत्तम् ॥ २१ ॥ [ उद्दिष्टदेशं संकेतितक्षेत्रादिदेशम् ] ॥ २१ ॥

किंच सद्भिः सङ्गो विधेयो हि यस्मात्स सङ्गः सज्जनानां सुखनिचयं जनयति । कुत इत्यत आह—यतस्तैः प्रशान्तैः श्राव्यमाणा अध्यात्मैक्ये कथाः कायक्लेशं विभिद्युः । ता विशिनष्टि—घटितो बहुरसो यासु । सततं यद्भयं संसृतिलक्षणं तद्भिन्दन्तीति तथा । सततं भयं भिन्दन्तीति वा । तथा संसृतिमार्गे श्रान्तानां विश्रामवृक्षाः पुनश्च मनःश्रोत्राभिरामाः परिमार्जिता तृष्णा पिपासा च याभिः । क्षोभितः क्षुल्लक्षणः कलङ्को याभिस्ताः । स्रग्धरा वृत्तम् ॥ २२ ॥ [ अध्यात्मैक्ये विषये ] ॥ २२ ॥

---

१ ख. ग. घ 'तां चोरा' । २ ख ग. घ. 'तश्चोरा' । ३ क तृड्गच्छा पि' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्सङ्गोऽयं बहुगुणयुतोऽप्येकदोषेण दुष्टो
यत्स्वान्तेऽयं तपति च परं सूयते दुःखजालम् ॥
खल्वासङ्गो वसतिसमये शर्मदः पूर्वकाले
प्रायो लोके सततविमलं नास्ति निर्दोषमेकम् ॥ २३ ॥
मार्गे यास्यन्न बहुदिवसान्पाथसः संग्रही स्या-
त्तस्माद्दोषो जिगमिषुपदप्राप्तिविघ्नस्ततः स्यात् ॥
प्राप्योद्दिष्टं वस निरसनं तत्र कार्यस्य सिद्धे-
र्मूलाद्भ्रंशोऽभिलषितपदप्राप्त्यभावोऽन्यथा हि ॥ २४ ॥
मार्गे चोरा निकृतिवपुषः संवसेयुः सहैव
च्छन्नात्मानो बहुविधगुणैः संपरीक्ष्याः प्रयत्नात् ॥
देवान्यस्त्रं लिखितमथ वा दुर्विधा नेतुकामा
विश्वासोऽतोऽपरिचितनृषु प्रोज्झनीयो न कार्यः ॥ २५ ॥
मध्येमार्गं योजनाभ्यन्तरे वा
तिष्ठेयुश्चेद्भिक्षवस्तेऽभिगम्याः ॥
पूज्याः पूज्यास्तद्व्यतिक्रान्तिरुग्रा
श्रेयस्कार्यं निष्फलीकर्तुमीशाः ॥ २६ ॥

---

यत्स्वस्यान्तेऽयं सङ्गस्तपति संतापयति । चो हेतौ । यतो दुःखजालं प्रसूयते । दशे वियोगात्पूर्वकाले वाससमये सङ्गः सुखदः प्रसिद्धस्तथाच लोक एकमपि वस्तु सततविमलं निर्दोषं प्रायो नास्ति । मन्दाक्रान्ता वृत्तम् ॥ २३ ॥

किंच बहुदिवसान्मार्गे यास्यन्नल्पमात्रस्यापि संग्रही न स्याद्यतस्तस्मात्संग्रहात्सर्वेक्ष- णरूपो दोषः स्यात्ततस्तस्माद्दोषाद्गन्तुमिच्छोरभिलषितपदप्राप्तिविघ्नः स्यात् । किंचोद्दिष्टं देशं प्राप्य तत्र वस वासं कुरु । अन्यथा मध्ये वासे क्रियमाणे कार्यस्य निरसनं का सिद्धेर्मूलाद्भ्रंशोऽभिलषितपदप्राप्त्यभावश्च स्यात् ॥ २४ ॥

किंच मार्गे मायया साधुवपुषो बहुगुणैराच्छादितस्वस्वरूपा दुर्विधाः खलाश्चोराः सहै वसेयुः । ते प्रयत्नात्सम्यक्परीक्ष्या यतस्ते दुष्टा देवान्यस्त्रं पुस्तकं वा नेतुकामाः । अतोऽप- रिचितनरेषु प्रकर्षेण हेयो विश्वासः कदाऽपि न कर्तव्यः ॥ २५ ॥

किंच मार्गस्य मध्ये ततो बहिर्योजनाभ्यन्तरे वा भिक्षवश्चेत्तिष्ठेयुस्तर्हि तेऽभिगम्या द्र- पूज्याः पूजायोग्याः पूजनीया यतस्तेषां व्यतिक्रान्तिरुग्रा यतः श्रेयस्कार्यं निष्फलीकर्तुं समर्थाः । शालिनी वृत्तम् ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदापदपदं सदा यतिवर स्थितं वस्तु त-
न्मतं भज मितंपचान्मनसि मा कृथाः प्राकृतान् ॥
कषायकलुषाशयक्षतिविनिर्वृतः सन्मतः
सुखी चर सुखे चिरात्स्फुरति संततानन्दता ॥ २७ ॥

इत्थं गुरोर्मुखगुहोदितवाक्सुधां ता-
मापीय हृष्टहृदयः स मुनिः प्रतस्थे ॥
प्रस्थाप्य तं गुरुवरोऽथ सुरेश्वराद्यैः
कालं कियन्तमनयत्सह शृङ्गकुध्रे ॥ २८ ॥

अधिगम्य तदाऽऽत्मयोगशक्ते-
रनुभावेन निवेद्य चाऽऽश्रवेभ्यः ॥
अवलम्बिततारकापथोऽसा-
वचिरादन्तिकमाससाद मातुः ॥ २९ ॥

तत्राऽऽतुरां मातरमैक्षतासौ
ननाम तस्याश्चरणौ कृतात्मा ॥
सा चैनमुद्वीक्ष्य शरीरतापं
जहौ निदाघार्त इवाम्बुदेन ॥ ३० ॥

---

उपदेशसारमाह—हे यतिवराऽऽपदामपदं सर्वानर्थशून्यं वस्तु यस्मिन्स्थितं तन्मतं सदा भज मितंपचान्कदर्यान्पामरान्मनसि मा कृथाः । पुनश्च कषायेण कलुषस्याऽऽशयस्य क्षत्या विशेषेण निर्वृतः सन्मतं यस्य तथाभूतः सुखी चर । यतः सुखे चिरात्संततानन्दता स्फुरति । पृथ्वी वृत्तम् ॥ २७ ॥ [ कषायेति । कषायेण प्राकृतजनचिन्तनजन्यरज-आदिदोषे विशेषेण यत्कलुषं 'कलुषं वृजिनं' इत्यमरात्पापं तस्य याऽऽशयादन्तःकरणा-त्क्षतिर्ध्वंसिस्तया विनिर्वृतः संप्रहृष्टोऽत एव सन्मतः सतां मान्यः सन्सुखी चरेति संबन्धः] [ संततानन्दता चिरादखण्डं स्फुरति स्वात्मत्वेन भातीत्यर्थः ] ॥ २७ ॥

इत्थं गुरोर्मुखलक्षणाया गुहाया उदितां वाक्सुधां तामापीय हृष्टहृदयः स मुनिः पद्मपादः प्रतस्थे । तं प्रस्थाप्य गुरुवरोऽथानन्तरं सुरेश्वराद्यैः सह कियन्तं कालमृष्यशृङ्गाख्ये भूधरेऽनयत् । वसन्ततिलका वृत्तम् ॥ २८ ॥

तदाऽऽत्मयोगशक्तेरनुभावेन मातृवृत्तान्तमधिगम्याऽऽश्रवेभ्यो वचनस्थितेभ्यो यतिभ्यो विनिवेद्य तं वृत्तान्तं विज्ञाप्य चावलम्बितस्तारकामार्गो गगनमार्गो येनासौ श्रीशंकरोऽचिरान्मातुः समीपमाससाद । मालभारिणी वृत्तम् ॥ २९ ॥

निदाघेन ग्रीष्मसंतापेनाऽऽर्तः संतप्तः । आख्यानकी वृत्तम् ॥ ३० ॥ [ कृतेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असावसङ्गोऽपि तदाऽऽर्द्रचेता-
स्तामाह मोहान्धतमोपहर्ता ॥
अम्बायमस्त्यत्र शुचं जहीहि
* ब्रवीहि किं ते करवाणि कृत्यम् ॥ ३१ ॥
दृष्ट्वा चिरात्पुत्रमनामयं सा
हृष्टान्तरात्मा निजगाद मन्दम् ॥
अस्यां दशायां कुशली मया त्वं
दिष्ट्याऽसि दृष्टः किमतोऽस्ति कृत्यम् ॥ ३२ ॥
इतः परं पुत्रक गात्रमेत-
द्वोढुं न शक्नोमि जरातिशीर्णम् ॥
संस्कृत्य शास्त्रोदितवर्त्मना त्वं
सद्वृत्त मां प्रापय पुण्यलोकान् ॥ ३३ ॥
सुतानुगां सूक्तिमिमां जनन्याः
श्रुत्वाऽथ तस्यै सुखरूपमेकम् ॥
मायामयाशेषविशेषशून्यं
मानातिगं स्वप्रभमप्रमेयम् ॥ ३४ ॥

---

ब्रह्मवित्सार्वभौमोऽपि लोकसंग्रहार्थं तस्या मातुश्चरणौ ननामेति संबन्धः । तदुक्तं स्कान्दे—
'संन्यस्ताखिलकर्माऽपि पितुर्वन्द्यो हि मस्करी ।
'सर्ववन्द्येन यतिना प्रसूर्वन्द्या प्रयत्नतः ' इति ] ॥ ३० ॥
हेऽम्बायं तव पुत्रोऽस्ति शुचं शोकं त्यज । उपजातिवृत्तम् ॥ ३१ ॥
आमयरहितं पुत्रं चिराद्दृष्ट्वा । इन्द्रवज्रा वृत्तम् ॥ ३२ ॥
आनुषङ्गिकं कृत्यमप्याह—इत इति । ननु नेदं सतां वृत्तमिति चेत्तत्राऽऽह—हे
सद्वृत्त तवातितेजस्वित्वादेतावता सद्वृत्तताभङ्गो नास्तीत्याशयः । उपजाति वृत्तम् ॥ ३३ ॥
एवमुक्तः श्रीशंकरोऽन्तर्भूतसर्वलोकसुखं ब्रह्मानन्दं प्रापयितुं प्रवृत्त इत्याह सुखेति

---

* इदं चिन्त्यम् । ईड्गुणयोः प्रवृत्तेर्दुःसाधत्वात् । आदर्शपुस्तकेषु तु सर्वैर्विद्वद्भिरेवोपलब्धे।
मां गृहीत्यादि तु तत्र पठितुं युक्तम् ।

---

१ ग. घ सुतमनुसृतां न ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपादिशद्ब्रह्म परं सनातनं
न यत्र हस्ताङ्घ्रिविभागकल्पना ॥
अन्तर्बहिः संनिहितं यथाऽम्बरं
निरामयं जन्मजरादिवर्जितम् ॥ ३५ ॥
सौम्यागुणे मे रमते न चित्तं
रम्यं वद त्वं सगुणं तु देवम् ॥
न बुद्धिमारोहति तत्त्वमात्रं
यदेकमस्थूलमनण्वगोत्रम् ॥ ३६ ॥
निशम्य मातुर्वचनं दयालु-
स्तुष्टाव भक्त्या मुनिरष्टमूर्तिम् ॥
वृत्तैर्भुजंगोपपदैः प्रसन्नः
प्रस्थापयामास स च स्वदूतान् ॥ ३७ ॥

यां न तु दाहादिसंस्कृत्यनधिकारिणीत्यनुगां जनन्याः सूक्तिं श्रुत्वाऽनन्तरं तस्यै सुखरूप-मेकं परं ब्रह्मोपादिशदिति परेणान्वयः। तद्विशिनष्टि—मायेति। अत एव प्रत्यक्षादि-प्रमाणातीतम्। तर्हि कथं भातीति चेत्तत्राऽऽह—स्वप्रभं स्वप्रकाशम्। अत एवाप्रमेयं दृश्याप्यभावात् ॥ ३४ ॥ ३५ ॥ [उपादिशदिति। अम्बरमाकाशम्। तथा चाऽऽम्नायते—'आकाशवत्सर्वगतश्च नित्यः' इति] ॥ ३५ ॥

एवमुपदिष्टा जनन्युवाच—हे सौम्य निर्गुणे मे चित्तं न रमतेऽतो रम्यं सगुणं तु देवं त्वं वद। कुतो न रमत इति चेत्तत्राऽऽह—यदेकं स्थूलत्वादिनिर्मुक्तं तत्त्वमात्रं तद्बुद्धिं नाऽऽरोहति। यद्यस्मादिति वा ॥ ३६ ॥

एवं मातुर्वचनं निशम्य दयालुर्मुनिः श्रीशंकराचार्योऽष्टमूर्तिं महादेवं 'भुजंगप्रयातं भवेद्यैश्चतुर्भिः' इत्युक्तलक्षणैर्भुजंगप्रयाताख्यैः पद्यैर्भक्त्या तुष्टाव। तथाहि—

अनाद्यन्तमाद्यं परं तत्त्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम्।
हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महः शैवमीडे ॥ १ ॥
स्वशक्त्यादिशक्त्यन्तसिंहासनस्थं मनोहारिसर्वाङ्गरत्नादिभूषम्।
जटाचन्द्रगङ्गास्थिसंपर्कमौलिं पराशक्तिमित्रं नुमः पञ्चवक्त्रम् ॥ २ ॥
शिवेशानतत्पूरुषाघोरवामादिभिर्ब्रह्मभिर्हृन्मुखैः षड्भिरङ्गैः।
अनौपम्यषट्त्रिंशतं तत्त्वविद्यामतीतं परं त्वां कथं वेत्ति को वा ॥ ३ ॥
प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिश्रीमहःश्याममर्धम्।
गुणस्यूतमेकं वपुश्चैकमन्तः स्मरामि स्मरापत्तिसंपत्तिहेतुम् ॥ ४ ॥

१ क. °न्मतदादि°। २ क. °थां ज°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विलोक्य ताञ्शूलपिनाकहस्ता-
न्नैवानुगच्छेयमिति ब्रुवत्याम् ॥
तस्यां विसृज्यानुनयेन शैवा-
नस्तौदथो माधवमादरेण ॥ ३८ ॥

---

स्वसेवासमायातदेवासुरेन्द्रानमन्मौलिमन्दारमालाभिषिक्तम् ।
नमस्यामि शंभो पदाम्भोरुहं ते भवाम्भोधिपोतं भवानीविभाव्यम् ॥ ५ ॥
जगन्नाथ मन्नाथ गौरीश नाथ प्रपन्नानुकम्पिन्विपन्नार्तिहारिन् ॥
महःस्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥ ६ ॥
महादेव देवेश देवादिदेव स्मरारे पुरारे यमारे हरेति ।
ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद ॥ ७ ॥
विरूपाक्ष विश्वेश विश्वाधिकेश त्रयीमूल शंभो शिव त्र्यम्बक त्वम् ।
प्रसीद स्मैर त्राहि पश्यावपुण्य क्षमस्वाऽऽप्नुहीतीक्ष पाहि क्षिपामः ॥ ८ ॥
त्वदन्यः शरण्यः प्रपन्नस्य नेति प्रसीद स्मरन्नोऽवहन्यास्तु दैन्यम् ।
न चेत्ते भवेद्भक्तवात्सल्यहानिस्ततो मे दयालो दयां संनिधेहि ॥ ९ ॥
अयं दानकालस्त्वहं दानपात्रं भवान्नाथ दाता त्वदन्यं न याचे ।
भवद्भक्तिमेव स्थिरां देहि मह्यं कृपाशील शंभो कृतार्थोऽस्मि तस्मात् ॥ १० ॥
पशुं वेत्सि चेन्मां त्वमेवाधिरूढः कलङ्कीति वा मूर्ध्नि धत्से त्वमेव ।
द्विजिह्वः पुनः सोऽपि ते कण्ठभूषा त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः ॥ ११ ॥
न शक्नोमि कर्तुं परद्रोहलेशं कथं प्रीयसे त्वं न जाने गिरीश ।
तथा हि प्रसन्नोऽसि कस्यापि कान्तासुतद्रोहिणो वा पितृद्रोहिणो वा ॥ १२ ॥
स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन्महेशावलम्बे ।
त्रसन्तं सुतं त्रातुमग्रे मृकण्डोर्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥ १३ ॥
अकण्ठेकलङ्कादनङ्गेभुजंगादपाणौकपालादभालेनलाक्षात् ।
अमौलौशशाङ्कादवामेकलत्रादहं देवमन्यं न मन्ये न मन्ये ॥ १४ ॥

इति । स च महादेवः स्तुत्या प्रसन्नः स्वदूतान्प्रेषयामास ॥ ३७ ॥

शूलपिनाकहस्तांस्ताञ्शिवदूतान्दृष्ट्वाऽहं नैवानुगच्छेयमिति ब्रुवत्यां तस्यां जनन्यां ततः
शिवदूताननुनयेन विसृज्य लक्ष्मीपतिं स्तुतवान् ॥ ३८ ॥

---

१ ग. स्मरंस्त्राहि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भुजगाधिपभोगतल्पभाजं
कमलाङ्कस्थलकल्पिताङ्घ्रिपद्मम् ॥
अभिवीजितमादरेण नीला-
वसुधाभ्यां चलमानचामराभ्याम् ॥ ३९ ॥
विहिताञ्जलिना निषेव्यमाणं
विनतानन्दकृताऽग्रतो रथेन ॥
धृतमूर्तिभिरस्त्रदेवताभिः
परितः पञ्चभिराञ्चितोपकण्ठम् ॥ ४० ॥
महनीयतमालकोमलाङ्गं
मुकुटीरत्नचयं महार्हयन्तम् ॥
शिशिरेतरभानुशीलिताग्रं
हरिनीलोपलभूधरं हसन्तम् ॥ ४१ ॥
तत्तादृशं निजसुतोदितमम्बुजाक्षं
चित्ते दधार मृतिकाल उपागतेऽपि ॥
चित्तेन कंजनयनं हृदि भावयन्ती
तत्याज देहमबला किल योगिवत्सा ॥ ४२ ॥

---

माधवं विशिनष्टि—भुजगाधिपस्य शेषस्य भोगात्मकं देहात्मकतल्पं शय्यां भजतीति तथा तं कमलाया लक्ष्म्या अङ्कस्थल उत्सङ्गस्थले कल्पिते स्थापिते चरणकमले येन तं नीलावसुधाख्याभ्यां स्वभार्याभ्यां चलमानाभ्यां चामराभ्यां वीजितम् । वसन्तमालिका वृत्तम् ॥ ३९ ॥ [ आदरेण प्रेम्णा ] ॥ ३९ ॥

विहिताञ्जलिना विनतानन्दकृता गरुडेन रथेनाग्रतो निषेव्यमाणं धृतमूर्तिभिः पञ्चभिः शङ्खचक्रगदाधनुष्खड्गाख्यास्त्रदेवताभिः परितोऽञ्चितोपकण्ठं स्फुरत्समीपम् ॥४०॥ [विनतेति । विनताया अमृतप्रदानद्वारा कद्रूदास्यात्सकाशान्निर्मोचनेन परमहर्षकर्त्रा ] ॥ ४० ॥

पूजनीयं तमालवत्कोमलमङ्गं यस्य मुकुटीकृतं रत्नसमुदायं महार्हयन्तमत एव शिशिरेतरभानुरुष्णगुः सूर्यस्तेन शीलिताग्रं शोभिताग्रमिन्द्रनीलमणिभूधरं हसन्तम् ॥ ४१ ॥ [ महार्हयन्तं स्वमुकुटस्थितत्वादतुलशोभाशालिनं कल्पयन्तमिति यावत् ] ॥ ४१ ॥

तत्तादृशं निजसुतोदितं कमलनयनं माधवं चित्ते दधार । मृतिकाल उपागते चित्तेन तं हृदि भावयन्ती साऽबला योगिवद्देहं तत्याज । वसन्ततिलका वृत्तम् ॥ ४२ ॥

---

१ ग. 'धाभ्यां स्व' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः शरच्चन्द्रमरीचिरोचि-
र्विचित्रपारिप्लवकेतनाढ्यम् ॥
विमानमादाय मनोज्ञरूपं
प्रादुर्बभूवुः किल विष्णुदूताः ॥ ४३ ॥
वैमानिकांस्तान्नयनाभिरामा-
नवेक्ष्य हृष्टा प्रशशंस पुत्रम् ॥
विमानमारोप्य विराजमान-
मनायि तैः सा बहुमानपूर्वम् ॥ ४४ ॥
इयमर्चिरहर्वलक्षपक्षा-
न्षडुदङ्मासमानिलार्कचन्द्रान् ॥
चपलावरुणेन्द्रधातृलोका-
न्क्रमशोऽतीत्य परं पदं प्रपेदे ॥ ४५ ॥
स्वयमेव चिकीर्षुरेप मातु-
श्चरमं कर्म समाजुहाव बन्धून् ॥
क्किमिहास्ति यते तवाधिकारः
क्कितवेत्येनममी निनिन्दुरुच्चैः ॥ ४६ ॥
अनलं बहुधाऽर्थिताऽपि तस्मै
यत नाऽऽदत्त च बन्धुता तदीया ॥
अथ कोपपरीवृतान्तरोऽसा-
वखिलांस्तानशपच्च निर्भभेन्द्रः ॥ ४७ ॥

---

[ अम्बुजेति । अम्बुजायाः कमलाया अक्षिणी नेत्रे यस्मिन्स तथा तमित्यर्थः । ए-
परमसुन्दरत्वं तत्र सूच्यते ] ॥ ४२ ॥

विचित्रैः कम्पमानैर्ध्वजैराढ्यम् । उपजातिवृत्तम् ॥ ४३ ॥

विराजमानं विमानमारोप्य सा तैर्बहुमानपूर्वमानीता ॥ ४४ ॥

अर्चिरग्निरहर्दिनं वलक्षपक्षः शुक्लपक्षः षडुदङ्मासा उत्तरायणमासाः समा
स्सरः । इयं सत्यर्चिराद्यभिमानिदेवता वायुसूर्यचन्द्रविद्युद्वरुणादिलोकांश्च क्रमशः
तीत्य परं पदं वैकुण्ठं प्रपेदे । वसन्तमालिका वृत्तम् ॥ ४५ ॥

मातुरन्त्यं दाहादिकर्म स्वयमेव कर्तुमिच्छुर्बन्धून्समाहूतवान् । हे यते किम
कास्मिन्कर्मणि तवाधिकारः किमस्तीत्येवममी बन्धव उच्चैर्निनिन्दुः ॥ ४६ ॥

न केवलं निन्दामेव कृतवन्तोऽपि तु बहुधा प्रार्थिताऽपि तदीया बन्धुता । ए

---

१ ख. ग घ. °स्तीत्यमी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संचित्य काष्ठानि सुशुष्कवन्ति
गृहोपकण्ठे धृततोयपात्रः ॥
स दक्षिणे दोष्णि ममन्थ वह्निं
ददाह तां तेन च संयतात्मा ॥ ४८ ॥

न याचिता वह्निमदुर्यदस्मै
शशाप तान्स्वीयजनान्सरोपः ॥
इतः परं वेदबहिष्कृतास्ते
द्विजा यतीनां न भवेच्च भिक्षा ॥ ४९ ॥

गृहोपकण्ठेषु च वः श्मशान-
मद्यप्रभृत्यस्त्विति ताञ्शशाप ॥
अद्यापि तद्देशभवा न वेद-
मधीयते नो यमिनां च भिक्षा ॥ ५० ॥

तदाप्रभृत्येव गृहोपकण्ठे-
ष्वासीच्छ्मशानं किल हन्त तेषाम् ॥
महत्सु धीपूर्वकृतापराधो
भवेत्पुनः कस्य सुखाय लोके ॥ ५१ ॥

---

ति खेद आश्चर्ये वा । अग्निं नाऽऽदत्त । अथानन्तरं कोपव्याप्तान्तःकरणोऽसौ निर्म-
पेन्द्रः श्रीशंकरस्तान्सर्वान्बन्धूनशपत् ॥ ४७ ॥

गृहसमीपे सुशुष्कवन्ति काष्ठानि संचित्य घृतं जलपात्रं येन स मातुर्दक्षिणे बाहौ
वह्निं ममन्थ तेन च तां मातरं संयतात्मा ददाह । उपजातिवृत्तम् ॥ ४८ ॥

अशपदित्युक्तं विवृणोति—यद्यस्माद्याचिता वह्निमस्मै नादुस्तस्मात्सरोपस्तान्स्वीयजना-
ञ्शशाप । इतः परं ते द्विजा वेदबहिष्कृता भवन्तु यतीनां भिक्षा चैषां गृहेषु न भवेत् ।
उपेन्द्रवज्रा वृत्तम् ॥ ४९ ॥

यो युष्माकं गृहसमीपे चाद्यप्रभृति श्मशानमस्त्वित्येवं ताञ्शशाप । ग्रन्थकृदाह—
अद्यापि तद्देशभवा वेदाध्ययनं न कुर्वन्ति । यतीनां भिक्षा च नास्ति । उपजातिवृ-
त्तम् ॥ ५० ॥

अत्र विस्मयो न कार्यो यतो महत्सु बुद्धिपूर्वकं कृतोऽपराधो लोके पुनः कस्यापि
सुखाय न भवति ॥ ५१ ॥

---

१ क. 'हे न।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शान्तः पुमानिति न पीडनमस्य कार्यं
शान्तोऽपि पीडनवशात्क्रुधमुद्वहेत्सः ॥
शीतः सुखोऽपि मथितः किल चन्दनद्रु-
स्तीव्राहुताशजनको भवति क्षणेन ॥ ५२ ॥
यद्यप्यशास्त्रीयतया विभाति
तेजस्विनां कर्म तथाऽप्यनिन्द्यम् ॥
विनिन्द्यकृत्यं किल भार्गवस्य
ददुः स्वपुत्रान्कतिचिद्वृकाय ॥ ५३ ॥
इति स्वजननीमसौ मुनिजनैरपि प्रार्थितां
पुनः पतनवर्जितामतनुसौख्यसंदोहिनीम् ॥
यतिक्षितिपतिर्गतिं वितमसं स नीत्वा तत-
स्ततोऽन्यमतशातने प्रयतते स्म पृथ्वीतले ॥ ५४ ॥

---

महत्सु बुद्धिपूर्वमपराधो न कार्य इति बोधितमथ शान्तोऽपि न पीडनीय इत्या-
शान्तः पुमानिति विश्रम्भेणास्य शान्तस्य पीडनं न कार्यम्। क्रुधं क्रोधम्। तत्र दृष्टान्त-
शीत इति। चन्दनद्रुश्चन्दनद्रुमस्तीव्रस्याऽऽसमन्ताद्धुताशस्याग्नेर्जनकः ॥ ५२ ॥

नन्वशास्त्रीयमेतत्कर्म किमित्याचार्यैरनुष्ठितमित्याशङ्क्याऽऽह—यद्यप्यशास्त्रीयतया
विभाति तथाऽपि तेजस्विनां कर्म निन्द्यं न भवति। तदुक्तम्—

'धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा'।

भार्गवस्य परशुरामस्य विनिन्द्यं कृत्यं समातृकभ्रातृहननरूपम्। यथाच केचिन्मुनयो
वृकाय पुत्रान्ददुः। भृगुवंश्यस्य कस्यचिन्मुनेः कृत्यं प्रार्थिताप्रदानरूपं विनिन्द्य ददुरि-
वा। उपजातिवृत्तम् ॥ ५३ ॥ [भार्गवस्य परशुरामस्य विनिन्द्यकृत्यमपि मातृवधरूपं
गृह्यं कर्मापि यथा तेजस्वित्वादनिन्द्यं तद्वदित्यर्थः। यद्वा भार्गवस्य जमदग्नेः शापेन पुत्र-
यहननरूपं विनिन्द्यकृत्यमप्यत्र तेजस्वित्वादनिन्द्यं किलेति योजना। तद्विनिन्द्यत्वमेव व्यति-
रेकमुखेण प्रथयति ददुरित्यादिश्लेषेण। अत्र कतिचिदपि लोकाः स्वपुत्रान्वृकाय हिंस-
कस्माद्भक्षकाय मृत्यवे ददुः किमपि तु नैव ददुरिति संबन्धः। अनेन तु तदपि दाक्षं
कृतमित्यस्य कर्मणस्तथात्वमित्याशयः] ॥ ५३ ॥

इत्येवं मुनिजनैरपि प्रार्थितां पुनः पतनवर्जितामनल्पसौख्यस्य संदोहिनीं तामेव

---

१ क. 'द्रुम'। २ क. 'स्याऽऽहुता'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तत्सहायजलजाङ्घ्र्युपागमे-
च्छुरमीप्सितेऽत्र विललम्ब एषकः ॥
जलजाङ्घ्रिरप्यथ पुरा निजाज्ञया
कृतवानुदीच्यबहुतीर्थसेवनम् ॥ ५५ ॥
आससाद शनकैर्दिशं मुने-
र्यस्य जन्म वसुधाघटी स्मृता ॥
सा श्रुतिः सकलरोगनाशिनी
योऽपिबज्जलधिमेकबिन्दुवत् ॥ ५६ ॥
अद्राक्षीत्सुभगाहिभूषिततनुं श्रीकालहस्तीश्वरं
लिङ्गे संनिहितं दधानमनिशं चान्द्रीं कलां मस्तके ॥
पार्वत्या करुणारसार्द्रमनसाऽऽश्लिष्टं प्रमोदास्पदं
देवैरिन्द्रपुरोगमैर्जय जयेत्याभाष्यमाणं मुनिः ॥ ५७ ॥

---

हितां गतिं योऽसौ यतिराजः स्वजननीं नीत्वा पृथ्वीतले ततस्ततोऽन्यमतनिर्हर्णे प्रयत्नं कृतवान् । पृथ्वी वृत्तम् ॥ ५४ ॥

अथ तस्मिन्नन्यमतशातने सहायस्य पद्मपादस्योपागमनमिच्छुरभिलषिते तस्मिन्नेव श्रीशंकरो विलम्बं चक्रे । अथ जलजाङ्घ्रिरपि निजाज्ञया पूर्वं प्रथममुदीच्यबहुतीर्थसेवनं कृतवान् । 'सजसा जगौ भवति मञ्जुभाषिणी ॥ ५५ ॥

मुनेरगस्त्यस्य दिशं दक्षिणां वसुधाघटी मृत्कुम्भी यस्य सा प्रसिद्धा श्रुतिः श्रवणम् । सकलरोगनाशिनी । यच्छ्रुतिरिति वा पाठः । यः समुद्रमेकबिन्दुवदपिबत् । रथोद्धता वृत्तम् ॥ ५६ ॥ [ यस्य मुनेर्जन्म । वसुधेति । मृत्कुम्भीत्यर्थः ] ॥ ५६ ॥

तस्य दिशि लिङ्गे संनिहितं श्रीकालहस्तीश्वरं मुनिरद्राक्षीत् । तं विशिनष्टि—सुभगेनाहिना भूषिता तनुर्यस्यानिशं चान्द्रीं कलां मस्तके दधानं करुणारसेनाऽऽर्द्रं मनो यस्यास्तया पार्वत्याऽऽलिङ्गितं प्रमोदस्थानमिन्द्रप्रमुखैर्देवैर्जय जयेत्याभाष्यमाणम् । शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥ [ करुणेति । ब्रह्मविद्यया मयाऽयं परमात्मरूपः परशिवोऽनालिङ्गितश्चेत् 'शिवमद्वैतं चतुर्थं मन्यते' इति श्रुतेरद्वैतचिन्मात्रादस्मात्कथं मुमुक्षूणामविद्याविनिवृत्तिः स्यादिति दयावच्छिन्नरसशब्दितब्रह्मात्मैक्यानन्दस्निग्धचित्तयेत्यर्थः । मुनिः श्रीपद्मपादाचार्यः ] ॥ ५७ ॥

---

१ ख. ग घ पृथिवीत° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नात्वा सुवर्णमुखरीसलिलाशयेऽन्त-
र्गत्वा पुनः प्रणमति स्म शिवं भवान्या ॥
आनर्च भावकुसुमैर्मनसा नुनाव
स्तुत्वा च तं पुनरयाचत तीर्थयात्राम् ॥ ५८ ॥
लब्ध्वाऽनुज्ञां तज्ज्ञराट्कालहस्ति-
क्षेत्रात्काञ्चीक्षेत्रमागात्पवित्रम् ॥
संसाराब्धिं संतितीर्षोः प्रसिद्धं
वृद्धाः प्राहुर्यद्धि लोके ह्यमुष्मिन् ॥ ५९ ॥
तत्रैकाम्राधीश्वरं विश्वनाथं
नत्वा गम्यं स्वीयभाग्यातिशीत्या ॥
देवीं धामान्तर्गतामन्तकारे-
र्हार्दं रुद्रस्येव जिज्ञासमानाम् ॥ ६० ॥
कैल्लालेशं द्राक्ततो नातिदूरे
लक्ष्मीकान्तं संवसन्तं पुराणम् ॥
कारुण्यार्द्रस्वान्तमन्तादिशून्यं
दृष्ट्वा देवं संतुतोषैकभक्त्या ॥ ६१ ॥

---

सुवर्णमुखर्या नद्याः सलिलाशयेऽन्तः स्नात्वा पुनर्गत्वा भवान्या सहितं शिवं प्रणनाम
स्म । भावपुष्पैरर्चयित्वा मनसा स्तुतिं चकार । वसन्ततिलका वृत्तम् ॥ ५८ ॥

॥ ५९ ॥ [ तज्ज्ञेति । ब्रह्मवित्सार्वभौमः श्रीपद्मपादाचार्य इत्यर्थः । यत्काञ्चीक्षेत्रं
अमुष्मिन्निति । परलोके । संसारेति । मुमुक्षोर्मरणाद्द्वारा । प्रसिद्धं साधनं वृद्धाः
प्राहुरित्यध्याहृत्य योजना ] ॥ ५९ ॥

स्वीयभाग्यातिशयेन प्राप्यं धामान्तर्गतामन्तकस्यारे रुद्रस्य हार्दं जिज्ञासमानामिव
स्थितां देवीं च नत्वा ततो झटिति नातिदूरे संवसन्तं कैल्लालेशाख्यं लक्ष्मीकान्तं देवं दृष्ट्वै-
कभक्त्या तुतोषेति परेणान्वयः । शालिनी वृत्तम् ॥ ६० ॥ [ तत्रैकाम्रेश्वरं कामाक्षीं च
प्रणम्य तन्निकटस्थं कल्लालग्रामनायकं लक्ष्मीकान्तमपि वीक्ष्यास्तौदित्याह—तत्रेत्यादि
युग्मेन ] ॥ ६० ॥

स्वान्तं मनः । आद्यन्तरहितमाद्यन्तादिसर्वविकारशून्यम् ॥ ६१ ॥

---

१ क. 'कान्त्यार्धी°' । २ ग. कृष्णालेश° । ३ ग. कृष्णालेशाख्यं° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्डरीकपुरमाययौ मुनि-
र्यत्र नृत्यति सदाशिवोऽनिशम् ॥
वीक्षते प्रकृतिरादिमा हृदा
पार्वतीपरिणतिः शुचिस्मिता ॥ ६२ ॥
ताण्डवं मुनिजनोऽत्र वीक्षते
दिव्यचक्षुरमलाशयोऽनिशम् ॥
जन्ममृत्युभयभेदि दर्शना-
न्नेत्रमानसविनोदकारकम् ॥ ६३ ॥
किंचात्र तीर्थमिति भिक्षुगणेन कश्चि-
त्पृष्टोऽब्रवीच्छिवपदाम्बुजसक्तचित्तः ॥
संप्रार्थितः करुणयाऽस्मरदत्र गङ्गां
देवोऽथ संन्यधित दिव्यसरित्सुतीर्थम् ॥ ६४ ॥
शिवाज्ञयाऽभूदिति तीर्थमेत-
च्छिवस्य गङ्गां प्रवदन्ति लोके ॥
स्नानादमुष्यां विधुतोरुपापाः
शनैः शनैस्ताण्डवमीक्षमाणाः ॥ ६५ ॥

---

आदिमाऽऽद्या प्रकृतिः पार्वतीरूपेण परिणता नृत्यन्तं शिवं सदा वीक्षते । रथोद्धता वृत्तम् ॥ ६२ ॥ [ अथास्य व्याघ्रपुरगमनमाह—पुण्डरीकेति ] ॥ ६२ ॥

जन्ममृत्युभयभेदकं दर्शनान्नेत्रमानसविनोदकारकं ताण्डवं दिव्यचक्षुरमलाशयो मुनिजनोऽत्रानिशं वीक्षते । जन्ममृत्युभयभेदि यद्दर्शनं तस्मादिति वा ॥ ६३ ॥

किं चात्र तीर्थमिति पद्मपादादिभिक्षुगणेन पृष्टः कश्चिच्छैवपदाम्बुजसक्तचित्तोऽब्रवीत् । संप्रार्थितो महादेवोऽत्र गङ्गां सस्माराथ स्मरणानन्तरं दिव्यसरित्सुतीर्थं संनिधापितवती । वसन्ततिलका वृत्तम् ॥ ६४ ॥

एतत्तीर्थं शिवाज्ञयाऽभूदिति हेतोरेतत्तीर्थं शिवगङ्गेति लोके प्रवदन्ति । ये प्रवदन्ति तानाह—अमुष्यां गङ्गायां स्नानाद्विधुतोरुपापाः शनैः शनैस्ताण्डवमीक्षमाणाः । उपजातिवृत्तम् ॥ ६५ ॥

---

१ ख. ग. घ. °श्यपात्रा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिवस्य नाट्यश्रमकर्शितस्य
श्रमापनोदाय विचिन्तयन्ती ॥
शिवेति गङ्गापरिणामगाऽभू-
त्ततोऽथ वैतत्प्रथितं तदाख्यम् ॥ ६६ ॥

नृत्यत्तीरहतस्खलज्जलगतेः पर्यापतद्बिन्दुकं
पार्श्वे स्वावसतेर्विनोदवशतो यज्जह्नुकन्यापयः ॥
नृत्यं तन्वति धूर्जटौ विगलितं प्रेङ्खज्जटामण्डला-
त्तेनैतच्छिवजाह्नवीति कथयन्त्यन्ये विपश्चिज्जनाः ॥ ६७ ॥

स्नायं स्नायं तीर्थवर्येऽत्र नित्यं
वीक्षं वीक्षं देवपादाब्जयुग्मम् ॥
शोधं शोधं मानसं मानवोऽसौ
वीक्षेतेदं ताण्डवं शुद्धचेताः ॥ ६८ ॥

शुद्धं महद्वर्णयितुं क्षमेत
पुण्यं पुरारिः स्वयमेव तस्य ॥
निमज्ज्य शंभुद्युसरित्यमुष्यां
दाक्षायणीनाथमुदीक्षते यः ॥ ६९ ॥

---

शिवगङ्गानाम्न्यन्यत्प्रवृत्तिनिमित्तमाह—नाट्यश्रमकर्शितस्य शिवस्य श्रमापनोदं विचिन्तयन्ती शिवा पार्वती गङ्गेति परिणामगाऽभूत्ततोऽथवा शिवगङ्गाख्यमेतत्तीर्थं प्रथितम् । उपेन्द्रवज्रा वृत्तम् । ॥ ६६ ॥ [ विचिन्तयन्तीति हेतोः शिवा गौर्येव । गङ्गारूपेण यः परिणामस्तं गच्छतीति तथेत्यर्थः ] ॥ ६६ ॥

यज्जह्नुकन्यापयो धूर्जटौ नृत्यति सति प्रेङ्खतश्चलतो जटामण्डलाद्गलितं तेनैतच्छिव... विपश्चिज्जनाः शिवजाह्नवीति कथयन्ति । प्रेङ्खज्जटामण्डलं विशिनष्टि—नृत्यता ... हतस्य स्खलतो जलस्य गतिर्यस्मिन् । स्वस्याऽऽवसतेर्निकेतनात् । पयो विशिनष्टि— ... पर्यापतन्तो बिन्दुका बिन्दवो यस्य । शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥ [ विनो... देति । ताण्डवविलासवशात इत्यर्थः ॥ ६७ ॥

तस्मादस्मिंस्तीर्थवर्ये स्नात्वा स्नात्वा देवपादाब्जयुग्मं दृष्ट्वा दृष्ट्वा मनः शोधयि... शोधयित्वाऽसौ शुद्धचित्तो मानव इदं ताण्डवं वीक्षेत । शालिनी वृत्तम् ॥ ६८ ॥

एतच्छुद्धं पुण्यं वर्णयितुं शिवातिरिक्तो न क्षम इत्याशयेनाऽऽह—शुद्धमिति । योऽमुष्यां शंभुद्युसरिति निमज्ज्य दाक्षायणीनाथं वीक्षते तस्य । उपजातिवृत्तम् ॥ ६९ ॥

---

१ घ. °स्य । स्वनिकेतनस्य पार्श्वे इति वा । शा° । २ ख. ग. घ. शिवधुसरिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीरितः शंकरयोजितात्मा
केनापि भिक्षुर्मुदितो जगाहे ॥
तीर्थं तदाप्लुत्य ननाम शंभो-
रङ्घ्रिं जितात्मा भुवनस्य गोप्तुः ॥ ७० ॥

रामसेतुगमनाय संदधे
मानसं मुनिरनुत्तमः पुनः ॥
वर्त्मनि प्रयतमानसो व्रज-
न्संददर्श सरितं कवेरजाम् ॥ ७१ ॥

यत्पवित्रपुलिनस्थलं पयः-
सिन्धुवासरसिकाय विष्णवे ॥
अभ्यरोचत हिरण्यवाससे
पद्मनाभमुखनामशालिने ॥ ७२ ॥

सह्यपर्वतसुतातिनिर्मला-
म्भोभिषिक्तभगवत्पदाम्बुजे ॥
आकलय्य बहुशिष्यसंवृतः
प्रास्थिताभिरुचितस्थलाय सः ॥ ७३ ॥

गच्छन्गच्छन्मार्गमध्येऽभियातं
गेहं भिक्षुर्मातुलस्याऽऽजगाम ॥
दृष्ट्वा शिष्यैस्तं चिरेणाभियातं
मोदं प्रापन्मातुलः शास्त्रवेदी ॥ ७४ ॥

---

इत्येवं केनापि कथितः शंकरे योजितमन्तःकरणं येन स भिक्षुः पद्मपादो मुदितो जगाहेऽवगाहनं कृतवान् ॥ ७० ॥

पुनरनुत्तमो मुनिः पद्मपादो रामसेतुगमनाय मनो दधे । प्रयतं मनो येन स पथि गच्छन्कवेरजां कावेरीं नदीं ददर्श । रथोद्धता वृत्तम् ॥ ७१ ॥

यस्याः पवित्रपुलिनस्थलं क्षीरसमुद्रवासरसिकायापि व्यापकायापि हिरण्यवाससे पद्मनाभादिनाम्ना शोभमानायाभ्यरोचत ॥ ७२ ॥ [ हिरण्येति । पीताम्बराय ] ॥ ७२ ॥

सह्यपर्वतसुताया अतिनिर्मलेनाम्भसाऽभिषिक्ते भगवत्पदाम्बुजे आकलय्य ध्यात्वा बहुशिष्यसंवृतः सोऽभिरुचितस्थलाय प्रास्थित प्रस्थानं कृतवान् । रथोद्धता वृत्तम् ॥ ७३ ॥

शिष्यैः सहितम् । शालिनी वृत्तम् ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुश्राव तं बन्धुजनः सशिष्यं
स्वमातुलागारमुपेयिवांसम् ॥
आगत्य दृष्ट्वा चिरमागतं तं
जहर्ष हर्षातिशयेन साश्रुः ॥ ७५ ॥
रुरोद कश्चिन्मुमुदेऽत्र कश्चि-
ज्जहास पूर्वाचरितं बभाषे ॥
कश्चित्प्रमोदातिशयेन किंचि-
द्वचः स्खलद्गीः प्रणनाम कश्चित् ॥ ७६ ॥
ऊचेऽथ तं ज्ञातिजनः प्रमोदी
दृष्ट्वा चिरायाक्षिपथं गतोऽमूः ॥
दिदृक्षते त्वां जनताऽतिहार्दा-
त्तथाऽपि शक्नोषि न वीक्षणाय ॥ ७७ ॥
पुत्राः समित्रा न न बन्धुवर्गो
न राजबाधा न च चोरभीतिः ॥
कृतार्थतामूलपदं यतित्वं
प्रसूनवन्तं फलितं महान्तम् ॥ ७८ ॥
शाखोपशाखाञ्चितमेव वृक्षं
बाधन्त आगत्य न तद्विहीनम् ॥
यथा तथा वा धनिनं दरिद्रा
बाधन्त आगत्य दिने दिने स्म ॥ ७९ ॥

---

आख्यानकी वृत्तम् ॥ ७५ ॥ ७६ ॥ [ शुश्रावेति । बन्धुजनः पूर्वाश्रम... जनः ] ॥ ७५ ॥

अथान्तरं तं दृष्ट्वा प्रमोदी ज्ञातिजन ऊचे—यतश्चिरकालात्त्वमाक्षिमार्गं प्राप्तो... जनताऽतिस्नेहात्त्वां दिदृक्षते तथाऽपि त्वं वीक्षणाय न शक्नोषि । तथाच ... नास्तीत्यर्थः ॥ ७७ ॥

किंच सर्वबाधाविनिर्मुक्तत्वात्कृतार्थतामूलपदं यतित्वमेवेत्याह—पुत्रा इति । ... भावे तत्कृता बाधा नास्तीत्यर्थः । धनिनामेव बाधा न तु निष्किंचनानामिति ... माह—पुष्पवन्तं फलितं महान्तम् । वृक्षमिति परेणान्वयः ॥ ७८ ॥

शाखोपशाखाभिरञ्चितं व्याप्तमलंकृतं वा । तथा वा तथैव ॥ ७९ ॥ [ शाखो... पक्ष्यादय इति शेषः ] ॥ ७९ ॥

---

१ ग. °त्कृतबा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुटुम्बरक्षागतमानसाना-
मायाति निद्राऽपि सुखं न जातु ॥
क्व देवतार्चा क्व च तीर्थयात्रा
क्व वा निषेवा महतां भवेन्नः ॥ ८० ॥
अथौष्म संन्यासकृतं भवन्तं
विप्रात्कुतश्चिद्गृहमागतान्नः ॥
कालोऽत्यगात्ते बहुरद्य देवा-
त्तीर्थस्य हेतोर्गृहमागतस्त्वम् ॥ ८१ ॥
यथा शकुन्ताः परवर्धितान्द्रुमा-
न्समाश्रयन्ते सुखदांस्त्यजन्त्यपि ॥
परप्रक्लृप्तान्मठदेवतागृहा-
न्यतिः समाश्रित्य तथोज्झति ध्रुवम् ॥ ८२ ॥
यथा हि पुष्पाण्यभिगम्य षट्पदाः
संगृह्य सारं रसमेव भुञ्जते ॥
तथा यतिः सारमवाप्नुवन्सुखं
गृहाद्गृहादोदनमेव भिक्षते ॥ ८३ ॥

---

किंच कुटुम्बरक्षागतमानसानामस्माकं सुखं यथा भवति तथा कदाचिन्निद्राऽपि नाऽऽयाति । तथाचैवंविधानां नः क्व देवतार्चादि ॥ ८० ॥ [ कुटुम्बेति । भवादृशामिति महतामित्यत्र विशेष्यमार्थिकम् ॥ ८० ॥

कस्माच्चिद्देशान्नो गृहमागतास्कस्माच्चिद्विप्रादिति वा । इन्द्रवज्रा वृत्तम् ॥ ८१ ॥ तीर्थस्य हेतोस्त्वं गृहमागतोऽसि न तु ममतावशाद्यतः स्वीयत्वेन गृहपरिग्रहाभावादिं-त्याशयेन सदृष्टान्तमाह—यथा शकुन्ताः पक्षिणः परवर्धितान्वृक्षान्सुखदान्समाश्रयन्ते त्यज-न्त्यपि । असुखदांस्तांस्त्यजन्त्यपीति वा । तथा यतिः परप्रक्लृप्तान्मठान्देवतागृहांश्च सुख-

दान्समाश्रित्य ध्रुवमुज्झत्यपि । वंशस्थं वृत्तम् ॥ ८२ ॥

तत्रापि तत्तद्गृहे यतेर्गमनं भ्रमरवत्पीडाकरं न भवतीत्याह—यथेति । सुखं यथा स्यात्तथा । उपजातिवृत्तम् ॥ ८३ ॥

---

१ क. 'सानां नाऽऽया' । २ क. 'खं न भ' । ३ क. ख 'पि । त' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतेर्विरज्यात्मगतिः कलत्रं
देहं गृहं संयतमेव सौख्यम् ॥
विरक्तिभाजस्तनयाः स्वशिष्याः
किमर्थनीयं यतिनो महात्मन् ॥ ८४ ॥
मनोरथानां न समाप्तिरिष्यते
पुनः पुनः संतनुते मनोरथान् ॥
दारानभीप्सुर्यतते दिवानिशं
तान्प्राप्य तेभ्यस्तनयानभीप्सति ॥ ८५ ॥
अनाप्नुवन्दुःखमसौ सुतीव्रं
प्राप्नोति चेष्टेन वियुज्यते पुनः ॥
सर्वात्मना कामवशस्य दुःखं
तस्माद्विरक्तिः पुरुषेण कार्या ॥ ८६ ॥
विरक्तिमूलं मनसो विशुद्धिं
तन्मूलमाहुर्महतां निषेवाम् ॥
भवादृशास्तेन च दूरदेशे
परोपकाराय रसामटन्ति ॥ ८७ ॥

---

किंच यतेः किमपि प्रार्थनीयं नास्तीत्याह—यतेर्विरज्यया ऽऽत्मावगतिः सैव कलत्रं ...
महात्मन् ॥ ८४ ॥ [ यतेरिति । विरज्य वैराग्यं संपाद्य याऽऽत्मगतिर्नाम द्वैतविर...
स्वानुभवपूर्विकाऽद्वैतत्वेनाऽऽत्मप्राप्तिरित्यर्थः । सैव कलत्रं भार्येति यावत् । 'कायो देहः
क्लीबपुंसोः' इत्यमरः । संयतमेव संयमनमेव । 'त्रयमेकत्र संयमः' इति पातञ्जलसूत्राद्धारणा-
ध्यानसमाध्यभिधसाधनत्रयजन्यं जीवन्मुक्तिविलसनमेव सौख्यं भवतीत्यर्थः ] ॥ ८४ ॥

कामवशस्य तु दुःखमेवेत्याह—मनोरथानामिति द्वाभ्याम् । तेभ्यो दारेभ्यः ॥ ८५ ॥

दारादीननाप्नुवन्दुःखमेव सुतीव्रं प्राप्नोति पुनरिष्टेन च वियुज्यते ॥ ८६ ॥

विरक्तिश्च भवद्विधानां महतां सेवया शुद्धचेतसो भवतीत्याह—मनसो विशुद्धिं विर-
क्तेर्मूलमाहुः । तस्या विशुद्धेर्मूलं महतां निषेवामाहुस्तेन कारणेन च भवादृशाः परोपकाराय
दूरदेशे भूमिमटन्ति ॥ ८७ ॥

---

१ क. °तां सेवा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्ञातगोत्रा विदितात्मतत्त्वा
लोकस्य दृष्ट्या जडवद्विभान्तः ॥
चरन्ति भूतान्यनुकम्पमानाः
सन्तो यदृच्छोपनतोपभोग्याः ॥ ८८ ॥
चरन्ति तीर्थान्यपि संग्रहीतुं
लोकं महान्तो ननु शुद्धभावाः ॥
शुद्धात्मविद्याक्षपितोरुपापा-
स्तज्जुष्टमम्भो निगदन्ति तीर्थम् ॥ ८९ ॥
वस्तव्यमत्र कतिचिद्दिवसानि विद्वं-
स्त्वद्दर्शनं वितनुते मुदितादि भव्यम् ॥
एष्यद्वियोगचकिता जनतेयमास्ते
दुःखं गतेऽत्र भवितेति भवत्यसङ्गे ॥ ९० ॥
कोशं क्लेशमलस्य लास्यगृहमप्युद्वंहसामालयं
पैशुन्यस्य निशान्तमुत्कटमृपामापाविशेषाश्रयम् ॥
हिंसामांसलमाश्रिता घनधनाशंसानृशंसा वयं
वर्ज्यं दुर्जनसंगमं करुणया शोध्या यतीन्द्रो त्वया ॥ ९१ ॥

---

यदृच्छयोपनतं समीपे प्राप्तं भोग्यं येभ्यस्ते ॥ ८८ ॥

तीर्थान्यपि लोकसंग्रहार्थं चरन्ति न तु स्वशुद्ध्यर्थम् । यतः शुद्धभावा यतः शुद्धात्मविद्याक्षपितोरुपापाः । तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ' इति न्यायात् । तथाचैवंविधैस्तैर्जुष्टं जलं तीर्थं निगदन्ति । तेषां तत्र गमनं लोकसंग्रहार्थमेवेत्यर्थः ॥८९॥ [ निगदन्ति शास्त्रज्ञा इति शेषः ] ॥ ८९ ॥

एवं स्तुत्याऽभिमुखीकृत्य प्रार्थयते—हे विद्वन्नत्र कतिचिद्दिवसानि वस्तव्यं यतो भव्यं शुभं योग्यं वा भवद्दर्शनं मुदितादि वितनुते । इयं जनता त्वसङ्गे भवति त्वयि गते सत्यत्र दुःखं भविष्यतीति विचार्याधुनैव भविष्यद्दुःखेन चकिताऽऽस्ते । वसन्ततिलका वृत्तम् ॥ ९० ॥

अत्र निवासं विधाय वयं त्वया संशोध्या इति त्वन्वयः साक्रोशमाहुः—क्लेशमलस्य कोशं पात्रमपि चोत्कटंहसामतिसाहसानामालयं पैशुन्यस्य परदोषसूचकताया निशान्तमोकः ।

---

१ ख. ग. 'भ्यदुःखे' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संयुनक्ति वियुनक्ति देहिनं
दैवमेव परमं मनागपि ॥
इष्टसंगतिनिवृत्तिकालयो-
र्निर्विकारहृदयो भवेन्नरः ॥ ९२ ॥

मध्याह्नकाले क्षुधितस्तृषार्तः
क्व मेऽन्नदातेति वदन्नुपैति ॥
यस्तस्य निर्वापयिता क्षुधार्तेः
कस्तस्य पुण्यं वदितुं क्षमेत ॥ ९३ ॥

सायं प्रातर्वह्निकार्यं वितन्व-
न्मज्जंस्तोये दण्डकृष्णाजिनी च ॥
नित्यं वर्णी वेदवाक्यान्यधीय-
न्क्षुद्बुध्वा शीघ्रं गेहिनो गेहमेति ॥ ९४ ॥

---

'निशान्तस्त्रिषु शान्ते स्यात्क्लीबं तु भवनोपसोः'

इति मेदिनी । उत्कटमृषाभाषणस्य विशेषेणाऽऽश्रयं भाषाविशेषाणामिति च । ... हिंसया मांसलं व्याप्तं त्यक्तुं योग्यं दुर्जनानां संगमो यत्र तथाभूतं स्फुरद्दृह... अत एव घनीभूतया घनतृष्णया क्रूराः । घना दृढा धनाशंसा येषामिति भिन्नं वा ... घनघनस्याऽऽशंसा येषामिति वा समासः । एवंभूता वयं हे यतीन्द्रो त्वया करुणया ... इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ९१ ॥

एवमुक्तः पद्मपाद उवाच—परमं ब्रह्मादिकं क्षुद्रं स्तम्बादिकमपि देहिनं ... मेव संयुनक्ति वियुनक्ति च । तस्मादिष्टसंगतिनिवृत्तिकालयोर्नरो निर्विकार... भवेत् ॥ ९२ ॥

यत्तु प्रसूनवन्तमित्याद्युक्तं तत्राऽऽह—मध्याह्नकाल इति । उपजातिवृत्तम् ॥ ९३ ॥ [ मध्याह्नेति । यत्यादिरित्यार्थिकम् ] ॥ ९३ ॥

किंचाऽऽश्रमत्रयोपजीव्यत्वादपि पुण्यभाग्गृहस्थ इत्याशयेन ब्रह्मचारिण... भीवकतामाह—सायमिति । दण्डकृष्णाजिने अस्य स्त इति तथाभूतो वर्णी ब्र... चारी नित्यं वेदवाक्यानि पठन्क्षुद्बुध्वा क्षुधां प्राप्य शीघ्रं गेहिनो गेहमेति । शालिनी वृत्तम् ॥ ९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उच्चैः शास्त्रं भाषमाणोऽपि भिक्षु-
स्तारं मन्त्रं संजपन्वा यतात्मा ॥
मध्येघस्रं जाठराग्नौ प्रदीप्ते
दण्डी नित्यं गेहिनो गेहमेति ॥ ९५ ॥

यदन्नदानेन निजं शरीरं
पुष्णंस्तपोऽयं कुरुते सुतीव्रम् ॥
कर्तुस्तदर्धं ददतोऽन्नमर्ध-
मिति स्मृतिः संववृतेऽनवद्या ॥ ९६ ॥

पुण्यं गृहस्थेन विचक्षणेन
गृहेषु संचेतुमलं प्रयासात् ॥
विनाऽपि तत्कर्तृनिषेवणेन
तीर्थादिसेवा बहुदुःखसाध्या ॥ ९७ ॥

गृही धनी धन्यतरो मतो मे
तस्योपजीवन्ति धनं हि सर्वे ॥
चौर्येण कश्चित्प्रणयेन कश्चि-
द्दानेन कश्चिद्बलतोऽपि कश्चित् ॥ ९८ ॥

---

अथ यतेस्तामाह—उच्चैरिति । तारं प्रणवं घस्रस्य दिनस्य मध्ये । इन्द्रवज्रा वृत्तम् ॥ ९५ ॥

वानप्रस्थस्य तामाह—यस्यान्नदानेन निजं शरीरं पुष्णन्नयं तपस्वी सुतीव्रं तपः कुरुते तपः कर्तुस्तस्य तपसोऽर्धं तस्यान्नं ददतोऽर्धमिति स्मृतिः प्रववृते । उपजाति-वृत्तम् ॥ ९६ ॥ [ संववृते संप्रवृत्ताऽस्तीत्यर्थः ] ॥ ९६ ॥

नन्वेवमपि गृहव्यग्रस्य गृहस्थस्य तीर्थादिसेवाजन्यं पुण्यं तु दुर्लभमेवेति चेत्त-त्राऽऽह—विचक्षणेन गृहस्थेन प्रयासाद्विनाऽपि प्रयासकर्तृनिषेवणेन पुण्यं संचेतुमलं शक्यते । तीर्थादिसेवायाः प्रयाससाध्यत्वं प्रसिद्धमेवेत्याह—तीर्थादीति ॥ ९७ ॥

न केवलं ब्रह्मचार्यादय एव गृहस्थमुपजीवन्त्यपि तु सर्व एवेत्याह—गृहीति । हि यस्मात् ॥ ९८ ॥ [ बलं परचक्रम् ] ॥ ९८ ॥

---

१ ख. °श्चिच्छल° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संतोषयेद्वेदविदं द्विजं यः
संतोषयत्येष स सर्वदेवान् ॥
तद्वेदविप्रे निवसन्ति देवा-
इति स्म साक्षाच्छ्रुतिरेव वक्ति ॥ ९९ ॥
स्वधर्मनिष्ठा विदिताखिलार्था
जितेन्द्रियाः सेवितसर्वतीर्थाः ॥
परोपकारव्रतिनो महान्त
आयान्ति सर्वे गृहिणो गृहाय ॥ १०० ॥
गृही गृहस्थोऽपि तदश्नुते फलं
यत्तीर्थसेवाभिरवाप्यते जनैः ॥
तत्तस्य तीर्थं गृहमेव कीर्तितं
धनी वदान्यः प्रवसेन्न कश्चन ॥ १ ॥
अन्तः स्थिता मूषकमुख्यजीवा
बहिःस्थिता गोमृगपक्षिमुख्याः ॥
जीवन्ति जीवाः सकलोपजीव्य-
स्तस्माद्गृही सर्ववरो मतो मे ॥ २ ॥
शरीरमूलं पुरुषार्थसाधनं
तच्चान्नमूलं श्रुतितोऽवगम्यते ॥
तच्चान्नमस्माकमभीषु संस्थितं
सर्वं फलं गेहपतिद्रुमाश्रयम् ॥ ३ ॥

किंच यो वेदविदं विप्रं संतोषयेत्स एष सर्वान्देवान्संतोषयति । तद्वेदविप्रे [illegible] ब्राह्मणे ॥ ९९ ॥

ननु तथाऽपि स्वयमेव प्रवासं कृत्वा पुण्यं कुतो न संपादनीयमिति चेत्तत्राऽऽह स्वेतिद्वाभ्याम् ॥ १०० ॥

तत्तस्मात्तस्य गृहमेव तीर्थं कीर्तितमतो धनी वदान्यो दाता स्यान्न तु कश्चन प्रवासं कुर्यादित्यर्थः ॥ १ ॥

गृहिणः सर्वश्रेष्ठत्वं पुनरुपपादयति—अन्तःस्थिता इति ॥ २ ॥

किंच शरीरं मूलं यस्य तथाविधं पुरुषार्थसाधनं तच्च शरीरमन्नं मूलं यस्य तदन्नमूलं [illegible]

१ ख. ग. घ. 'स्थितं मू°'। २ ख. ग. घ. 'स्थितं गो°'। ३ ख. ग. घ. 'स्थितमिति'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रवीमि भूयः शृणुताऽऽदरेण वो
गृहागतं पूजयताऽऽतुरातिथिम् ॥
संपूजितो वोऽतिथिरुद्धरेत्कुलं
निराकृतात्किं भवतीति नोच्यते ॥ ४ ॥

विनाऽभिसंधिं कुरुत श्रुतीरितं
कर्म द्विजा नो जगतामधीश्वरः ॥
तुष्येदिति प्रार्थनयाऽपि तेन
स्वान्तस्य शुद्धिर्भविताऽचिरेण वः ॥ ५ ॥

ससंरम्भश्लिष्यत्सुफणितिवधूटीकुचतटी-
पटीवत्पाटीरागरवनवपङ्काङ्कितहृदः ॥
तथाऽप्येते पूता यतिपतिपदाम्भोजभजन-
क्षणक्षीणक्लेशाः सदयहृदयाभाः सुकृतिनः ॥ ६ ॥

---

'अन्नाद्देव खल्विमानि भूतानि जायन्ते' इति श्रुतेरवगम्यते ॥ ३ ॥ [ गेहेति । गेह-पतिर्गृहस्थ एव द्रुमः कल्पद्रुमस्तदाश्रयमस्तीत्यर्थः ] ॥ ३ ॥

एवमुक्त्वा पुनः परमहितोपदेशाय ससाधनतामापादयति—ब्रवीमीति । युष्माकं गृहानागतमातुरमतिथिमादरेण पूजयतेत्यादरपदमत्राप्यनुषञ्जनीयम् । किमत इति चेत्त-त्राऽऽह—संपूजितोऽतिथिर्वः कुलमुद्धरेत् । निराकृतात्तस्मात्किं भवतीति चेत्तदत्यन्तम-निष्टत्वान्मया नोच्यते ॥ ४ ॥

किंच श्रुतिचोदितं नित्यादिकर्म फलाभिसंधिं विना कुरुत हे द्विजा जगतामधीश्वरस्तु-ष्येदिति प्रार्थनयाऽपि नो कुरुत तेन तथाभूतेन निष्कारणकर्मणा वोऽन्तःकरणस्य शुद्धिर-चिरादेव भविष्यति ॥ १०५ ॥ [ अभिसंधिं विना फलेच्छां विनैव ] ॥ ५ ॥

यदपि भवादृशा इत्याद्युक्तं तत्राप्याह—ससंरम्भं यथा भवति तथा श्लिष्यन्त्यो याः सुफणितिवधूट्यः प्रियवादिन्यो वध्वस्तासां कुचतट्याः पटीवदाचरता पाटीरेण चन्दनमये-नाऽऽगरवेणागरुमयेन च नवेन पङ्केनाङ्कितमन्तर्बहिश्चान्तःकरणं येषां यद्यप्येवंभूता एते वयं तथाऽपि यतिपतेः श्रीशंकरस्य पदकमलयोर्भजनोत्सवेन क्षीणाः क्लेशा येषां भजनक्षण इति च । 'कालविशेषोत्सवयोः क्षणः' इत्यमरः । शिखरिणी वृत्तम् ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संदिश्येत्थं बन्धुतां भिक्षुराजो
भिक्षां चक्रे मातुलस्यैव गेहे ॥
पप्रच्छैनं मातुलो मुक्तवन्तं
किं स्विच्छन्नं पुस्तकं शिष्यहस्ते ॥ ७ ॥
टीका विद्वन्भाष्यगेति ब्रुवाणं
तां देहीति प्रोचिषे दत्तवांश्च ॥
अद्राक्षीत्तां मातुलस्तस्य बुद्धिं
दृष्ट्वाऽऽनन्दीत्खेदमापच्च किंचित् ॥ ८ ॥
प्रबन्धनिर्माणविचित्रनैपुणीं
दृष्ट्वा प्रमोदं स विवेद किंचित् ॥
मतान्तराणां किल युक्तिजालै-
र्निरुत्तरं बन्धनमालुलोचे ॥ ९ ॥
गुरोर्मतं स्वाभिमतं विशेषा-
न्निराकृतं तत्र समत्सरोऽभूत् ॥
साधुर्निबन्धोऽयमिति ब्रुवाण-
स्तं साभ्यसूयोऽपि कृताभिनन्दः ॥ १० ॥
सेतुं गच्छाम्यालये पुस्तभारं
ते न्यस्येमं वर्तते मेऽत्र जीवः ॥
विद्वन्यद्वद्गोगृहाद्यौ परेषां
प्रीतिः पूर्णा नस्तथा पुस्तभारे ॥ ११ ॥

उपसंहरति—संदिश्येति । शालिनी वृत्तम् ॥ ७ ॥

एवं श्रुत्वा भाष्यगा टीकेति ब्रुवाणं पद्मपादं तां टीकां देहीति मातुलः प्रोवाच । प[द्म]-
पादो दत्तवांश्च । किंचित्खेदं च प्रापत् ॥ ८ ॥

तस्येत्यादि विवृणोति—प्रेति । विवेद प्राप । खेदमित्यादि [१]स्फोटयति—मता[न्त]-
राणामिति । उपजातिवृत्तम् ॥ ९ ॥ [ नैपुणीं निपुणत्वम् ] ॥ ९ ॥

किंच स्वाभिमतं प्रभाकरमतं विशेषात्तत्र निबन्धे निराकृतमालोकितवान् । अ[तः]
तत्रेति पदद्वयं मध्यमणिन्यायेनोभयत्रापि संबन्धनीयम् । यत एवमतस्तत्र निबन्धे स[मत्स]-
रोऽभूत् । साधुर्निबन्धोऽयमिति तं ब्रुवाणः साभ्यसूयोऽपि कृताभिनन्दोऽभूत् ॥ १० ॥

अथ पद्मपाद उवाचेमं पुस्तकभारं तवाऽऽलये न्यस्य सेतुं गच्छामीत्य[र्धे]...

१ ख. घ स्फोटय ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्त्वा तैर्मातुलं मस्करीशः
शिष्यैर्द्रष्टुं यन्सेतुमेष प्रतस्थे ॥
प्रस्थातुः श्रीपद्मपादस्य जातं
कष्टं चैष्यत्सूचनायै निमित्तम् ॥ १२ ॥

वामं नेत्रं गन्तुरस्पन्दतैव
बाहुः पुस्फोरापि वामस्तथोरुः ॥
चुक्षावोच्चैर्हन्त कश्चित्पुरस्ता-
त्तत्सर्वं द्राग्ज्ञोऽगणित्वा जगाम ॥ १३ ॥

गतेऽत्र मेने किल मातुलोऽस्य
ग्रन्थे स्थितेऽस्मिन्गुरुपक्षहानिः ॥
दग्धेऽत्र जायेत महान्प्रचारो
नोक्त्या निराकर्तुमपि प्रभुत्वम् ॥ १४ ॥

पक्षस्य नाशाद्गृहनाश एव नो
वरं गृहेणैव दहामि पुस्तकम् ॥
एवं निरूप्य न्यदधाद्धुताशनं
चुक्रोश चाग्निर्दहतीति मे गृहम् ॥ ११५ ॥

र्पते । स्थापनस्य रक्षार्थत्वात्सम्यक्त्वया[1] रक्षा कार्येत्याशयेनाऽऽह—हे विद्व-न्निति । तवेदं विदितमिति संबोधनाशयः । शालिनी वृत्तम् ॥ ११ ॥

भविष्यत्सूचनाय कष्टं निमित्तं जातम् ॥ १२ ॥

किं तदित्यपेक्षायामाह—अस्य गन्तुर्वामं नेत्रमस्पन्दत । तथैव[2] वामो बाहुरपि पुस्फोर । तथा च वाम ऊरुरपि । हन्त खेदे । कश्चित्पुरस्तादुच्चैश्चुक्षाव क्षुतं कृत-वान् । तत्सर्वं सोऽगणयित्वा झटिति जगाम ॥ १३ ॥

अस्मिन्पद्मपादे गते सति । अत्रास्मिन्ग्रन्थे दग्धे सति गुरुपक्षस्य महान्प्रचारः । ननु वाचैतन्मतं निराकर्तव्यमित्याशङ्क्याऽऽह—उक्त्या निराकर्तुं तु प्रभुत्वं नास्ति । इदमसंगतमित्युक्त्याऽपीति वा । उपजातिवृत्तम् ॥ १४ ॥ [ गुरुः प्रभाकरः ] ॥११५॥

तस्मात्स्वगृहेण सहैव पुस्तकं दहामि यतः स्वपक्षनाशाद्गृहनाश एव नोऽस्माकं परमिति स्वमनसि विचार्य गृहे वह्निं स्थापितवान्मे गृहमग्निर्दहतीति चुक्रोश ॥ ११५ ॥

१ क. ख. ग. 'तैव वा' । २ ख. स्वपक्षना° । ३ क. 'थैव वा° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऐतिह्यमाश्रित्य वदन्ति चैवं
तदेव मूलं मम भाषणेऽपि ॥
यावत्कृतं तावदिहास्य कर्तुः
पापं ततः स्याद्द्विगुणं प्रवक्तुः ॥ १६ ॥
गच्छन्नसौ फुल्लमुनेर्जगाम
तमाश्रमं यत्र च रामचन्द्रः ॥
अश्वत्थमूले न्यधित स्वचापं
स्वयं कुशानामुपरि न्यषीदत् ॥ १७ ॥
तीर्त्वा समुद्रं जनकात्मजायाः
संदर्शनोपायमनीक्षमाणः ॥
वसुंधरायां प्रवणाः प्लवंगा
न वारिराशौ प्लवनं क्षमन्ते ॥ १८ ॥
संचिन्तयन्निति कुशासनसंनिविष्टो
ज्योतिस्तदैक्षत विदूरगमेव किंचित् ॥
संव्याप्नुवज्जगदिदं सुखशीतलं य-
त्संप्रार्थनीयमनिशं मुनिदेवताभिः ॥ १९ ॥
आगच्छदात्माभिमुखं निरीक्ष्य
सर्वे तदुत्तस्थुरुदारवीर्याः ॥
ततः पुमाकारमदृश्यतैत-
न्महाप्रभामण्डलमध्यवर्ति ॥ १२० ॥

---

न तु गुप्तमेव मया प्रकाशितं यतो यावत्कृतं तावदेवेह कर्तुः पापं स्यात्प्रवक्तुस्तु ... कर्तुः सकाशाद्द्विगुणं स्यात् । अप्रकाशितप्रकाशकं कथनं द्विगुणपापावहमिति ... [ ननु त्वयेदं कथं ज्ञातं तत्राऽऽह—ऐतिह्यमिति ] ॥ १६ ॥ ... प्रशब्दः ॥ १६ ॥

गच्छन्नसौ पद्मपादः फुल्लमुनेस्तं प्रसिद्धमाश्रमं जगाम । यत्र च रामचन्द्रोऽश्वत्थ... चापं न्यधित स्वयं कुशानामुपरि न्यषीददुपविष्टवान् । आख्यानकी वृत्तम् ॥ १७ ॥

समुद्रं तीर्त्वा जानक्या यद्दर्शनं तत्रोपायमनीक्षमाणः प्लवंगा वानरा भूमौ प्रवणाः प्लवनशीला वारिराशौ प्लवनं न क्षमन्त इति संचिन्तयन्कुशासनसंनिविष्टः श्रीरामचन्द्र... स्तदा विदूरगमेव किंचिज्ज्योतिरैक्षत । तद्विशिनष्टि—संव्याप्नुवदिति । उभयत्र वसन्ततिलके वृत्ते ॥ १८ ॥ १९ ॥

एतज्ज्योतिः । उपजातिवृत्तम् ॥ १२० ॥

---

१ ख. ग. घ. 'तः प्रभाका° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्येप्रभामण्डलमैक्षताश्चितं
शिवाकृतिं सर्वतपोमयं पुनः ॥
लोपादिमुद्रासहितं महामुनिं
प्राबोधि कुम्भोद्भवमादराज्जनैः ॥ २१ ॥

अगस्त्यदृश्वा रघुनन्दनस्ततः
स खेदमन्तःकरणोत्थमत्यजत् ॥
प्रायो महद्दर्शनमेव देहिनां
क्षिणोति खेदं रविवन्महातमः ॥ २२ ॥

समार्यमर्घ्यादिभिरर्चयित्वा
रामस्तदङ्घ्रिं शिरसा ननाम ॥
तूष्णीं मुहूर्तं व्यसनार्णवस्थो
धृतिं समास्थाय पुनर्बभाषे ॥ २३ ॥

दृष्ट्वा भवन्तं पितृवत्प्रमोदे
यन्मामगा दुःखमहार्णवस्थम् ॥
मन्ये ममाऽऽत्मानमवाप्तकामं
वंशो महान्मे तपनात्प्रवृत्तः ॥ २४ ॥

---

प्रभामण्डलस्य मध्ये स्फुरच्छिवाकृतिं तपोमयं ज्योतिरैक्षत । पुनर्लोपाऽऽदिर्यस्यास्तया-भूतया मुद्रया लोपामुद्रयेति यावत्तया सहितं कुम्भोद्भवमगस्त्यं जनैः सह प्राबोधि । जनैः करणैरिति वा ॥ २१ ॥

अगस्त्यदृश्वाऽगस्त्यं दृष्टवान् । ततो दर्शनानन्तरमन्तःकरणोत्थं खेदमत्यजत् ॥२२॥

दुःखसागरस्थो मुहूर्तं तूष्णीं भूत्वा धृतिं समास्थाय पुनरुवाच ॥ २३ ॥ [ अङ्घ्रि-मित्येकवचनं समः समविभक्ताङ्ग इति महारामायणादिमसर्गे श्रीरामवर्णनरीत्या सकलपुरुषोत्तमलक्षणसंपत्तिसूचकात्यन्तसाम्याभिप्रायमेव ] ॥ २३ ॥

पितृवद्भवन्तं दृष्ट्वा प्रमोदे यस्माद्दुःखमहार्णवस्थं मां त्वमगा आगतवानसि । अहमात्मानं प्राप्तकामं मन्ये । एवं मुनिमभिमुखीकृत्य स्वदुःखमावेदयति । मे महान्वंशस्तपनादादित्यात्प्रवृत्तो न तत्रेति परेणान्वयः । इन्द्रवज्रावृत्तम् ॥ २४ ॥ [ 'तपनः सविता रविः' इत्यमरः ] ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तत्र मादृग्जनिता न जातः
पदच्युतोऽहं प्रथमं समार्यः ॥
सलक्ष्मणोऽरण्यमुपागतश्च
मारीचमायानिहतान्तरङ्गः ॥ १२५ ॥
तत्रापि भार्यामहृत च्छलेन
स रावणो राक्षसपुंगवो मे ॥
सा चाधुनाऽशोकवने समास्ते
कृशा वियोगात्त्वत एव तन्वी ॥ २६ ॥
तीर्त्वा समुद्रं विनिहत्य दुष्टं
बलेन सीतां महता हरामि ॥
यथा तथोपायमुदाहर त्वं
न मे त्वदन्योऽस्ति हितोपदेष्टा ॥ २७ ॥
इतीरितो वाचमुवाच विद्वा-
न्मा राम शोकस्य वशं गतो भूः ॥
वंशद्वये सन्ति नृपा महान्तः
संप्राप्य दुःखं परिमुक्तदुःखाः ॥ २८ ॥

---

तस्मिन्वंशे मम सदृशो नोत्पत्स्यते नाप्यजनिष्ट । कुत इति चेदेवंविधत्वान्ममेत्याह— आदौ समार्यः पदाद्राज्यात्प्रच्युतस्तत्राप्ययोध्यायां न स्थितः किंतु सलक्ष्मणो वनमुपगतः तत्रापि मारीचमायया निहतान्तःकरणः । उपजातिवृत्तम् ॥ २५ ॥

तत्रापि राक्षसपुंगवो रावणो मे भार्यां छलेनाहृत । तन्वी कृशाङ्गी ॥ २६ ॥ [ अशोकेति च्छेदः । श्लेषाच्छोकारण्य इत्यर्थः । समा मया स्वधर्मप्रमया सहिता समाऽ-च्युतपातिव्रत्येत्यर्थः ] ॥ २६ ॥

॥ २७ ॥ [ तीर्त्वेति । दुष्टं महापराधिनं रावणमित्यार्थिकम् ] ॥ २७ ॥

॥ २८ ॥ [ ततः स किमकरोत्तदाह— इतीत्यादिपञ्चभिः । ईरितः स्वदुःखनिवेदन-पूर्वकं प्रार्थनया प्रेरितः । एतादृशो विद्वानगस्त्यः । वंशद्वये सूर्यचन्द्रोभयवंशयोरित्यर्थः । नृपा हरिश्चन्द्रनलादयः । एतेन न ह्यत्र मादृगिति समाहितं बोध्यम् ] ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वमग्रणीर्दाशरथे धनुर्भृतां
तवानुजस्यापि समो न लक्ष्यते ॥
प्लवंगमानामधिपस्य कोटिशो
मा मुञ्च मा मुञ्च वचो विनार्थम् ॥ २९ ॥
सहायसंपत्तिरियं तवास्ति
हितोपदेष्टाऽप्यहमस्मि कश्चित् ॥
वारां निधिः किं कुरुते तवायं
स्मराधुना गोष्पदमात्रमेनम् ॥ १३० ॥
पुरेव चार्वब्धिमहं पिबामि
शुष्केऽत्र तेन प्रतियाहि लङ्काम् ॥
एवं मया कीर्तिरुपार्जिता स्याद्बद्धे
तु वार्धौ तव साऽर्जिता स्यात् ॥ ३१ ॥
सेतुं वार्धौ बन्धयित्वा जहि त्वं
दुष्टं चौर्याद्येन सीता हृताऽऽसीत् ॥
प्राप्नोषि त्वं कीर्तिमाचन्द्रतारं
तेनात्राब्धिं बन्धय त्वं कपीन्द्रैः ॥ ३२ ॥
इत्थं यत्र प्रेरितोऽगस्त्यवाचा
सेतुं रामो बन्धयामास वार्धौ ॥
तुङ्गैः शृङ्गैर्वानरैस्तेन गत्वा
तं हत्वाऽऽजौ जानकीमानिनाय ॥ ३३ ॥

यदुक्तं न तत्र माहागीति तत्राऽऽह—त्वमिति । तस्माद्विनार्थमनाथं दीनं वचो मा मुञ्च मा मुञ्चेति संभ्रमे वीप्सा ॥ २९ ॥ [ त्वमिति प्लवंगमानामित्यादि । सुग्रीवस्यापि समः कोटिशो विचारे कृतेऽपि न लक्ष्यत इति संबन्धः ]॥ २९ ॥

जलानां निधिः समुद्रः ॥ १३० ॥ [ सहायेति । कश्चिदित्यात्मनामाग्रहणधर्मपरिपालनार्थं चिदाभासस्यानिर्वचनीयत्वसूचनेनाऽऽत्मासङ्गत्वज्ञापनार्थं च ॥ १३० ॥

चारुः सुन्दरश्चासावब्धिश्च तं चारु यथा स्यात्तथेति वा । तेन पानेनास्मिन्समुद्रे शुष्के सति । सा कीर्तिः ॥ ३१ ॥ [ उपार्जिता संपादिता ] ॥ ३१ ॥

यस्मादेवं तस्मात्समुद्रे सेतुं बन्धयित्वा दुष्टं जहि । येन चौर्यात्सीता हृताऽऽसीत् । शालिनी वृत्तम् ॥ ३२ ॥

तुङ्गैरुच्छ्रितैस्तेन सेतुना तं रावणमाजौ सङ्ग्रामे ॥ ३३ ॥ [वानरैः सह ]॥ ३३ ॥

१ ग 'धिपाश्च को' । २ क. 'थवत् ॥ २९ ॥ ३ क. 'थवदनाथवद्दीनं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्ताहृक्षे तत्र तीर्थे स भिक्षुः
स्नात्वा भक्त्या रामनाथं प्रणम्य ॥
तत्र श्रद्धोत्पत्तये मानुषाणां
शिष्येभ्यस्तद्भैमवं सम्यगूचे ॥ ३४ ॥

तन्माहात्म्यं वर्णयन्तं मुनिं तं
पप्रच्छैनं कश्चिदेवं विपश्चित् ॥
रामेशाख्या किंसमासोपपन्ना
पृष्टश्चेधाऽवोचदेवं समासम् ॥ ३५ ॥

रघूद्वहस्तत्पुरुषं परं जगौ
शिवो बहुव्रीहिसमासमैरयत् ॥
रामेश्वरे नामनि कर्मधारयं
परं समाहुः स्म सुरेश्वरादयः ॥ ३६ ॥

एवं निश्चित्योदितं तत्समासं
श्रुत्वा तत्रत्यो बुधो योऽभ्यनन्दत् ॥
अम्भोजाङ्घ्रिस्तैरथ स्तूयमानः
कंचित्कालं तत्र योगीडनैषीत् ॥ ३७ ॥

तस्मादार्यः प्रस्थितोऽभूत्सशिष्य-
स्तीर्थस्नानोपात्तचित्तामलत्वः ॥
पश्यन्देशान्मातुलीयं जगाहे
गेहं दाहं तस्य पुस्तेन सार्धम् ॥ ३८ ॥

---

॥ ३४ ॥ [ यत्रेत्याकाङ्क्षितं पूरयति—तदिति । तादृक्षे तादृशे महा... त्यर्थः । स पद्मपादाचार्याख्यः ] ॥ ३४ ॥

केन समासेनोपपन्ना ॥ ३५ ॥

रामस्येश इति तत्पुरुषं केवलं श्रीरामचन्द्रो जगौ । शिवस्तु राम ईशो यस्येति ब... हिसमासं केवलमुक्तवान् । 'इन्द्रादयस्तु रामश्चासावीश्वरश्चेति कर्मधारयं परं समाहुः ... उपजातिवृत्तम् ॥ ३६ ॥

तस्या रामेशाख्यायाः समासं तत्रत्यो विपश्चित्समुदायः । योगीड्योगीन्द्रः । ... वृत्तम् ॥ ३७ ॥ [ उदितं कथितम् ] ॥ ३७ ॥

स्नानेनोपात्तं चित्तनिर्मलत्वं येन स तस्य गृहस्य पुस्तकेन सह दाहं ... णान्वयः ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्वा किंचित्खेदमापेदिवान्स
मत्वा मत्वा धैर्यमापेदिवान्सः ॥
श्रावं श्रावं मातुलीयस्य तीव्रं
दाहं गेहस्यानुकम्पां व्यधत्त ॥ ३९ ॥

विश्वस्य मां निहितवानसि पुस्तभारं
तं चादहद्धुतवहः पतितः प्रमादात् ॥
तावान्न मे सदनदाहकृतोऽनुतापो
यावांस्तु पुस्तकविनाशकृतो मम स्यात् ॥ ४० ॥

इत्थं ब्रुवन्तं तमथो न्यगादी-
त्पुस्तं गतं बुद्धिरवस्थिता मे ॥
उक्त्वा समारब्ध पुनश्च टीकां
कर्तुं स धीरो यतिवृन्दवन्द्यः ॥ ४१ ॥

दृष्ट्वा बुद्धिं मातुलस्तस्य भूयो
भीतः प्रास्यद्भोजने तन्मनोघ्नम् ॥
किंचिद्द्रव्यं पूर्ववन्नाक्षमिष्ट
टीकां कर्तुं केचिदेवं ब्रुवन्ति ॥ ४२ ॥

अत्रान्तरेऽन्यैर्निजवच्चरद्भिः
स्वैस्तीर्थयात्रां दयितैः सतीर्थ्यैः ॥
अर्थादुपेत्याऽऽश्रमतः कनिष्ठै-
र्ज्ञातः सखेदैः स मुनिः समैक्षि ॥ ४३ ॥

---

मत्वा मत्वा पदार्थस्वरूपं ज्ञात्वा ज्ञात्वा धैर्यमाप्नुवन्मातुलसंबन्धिनो गेहस्य तीव्रं दाहं श्रुत्वा श्रुत्वा करुणां विहितवान् । तं मातुल आहेति शेषः । एवंभूतः पद्मपादो विश्वस्येत्येवमादिप्रकारेण ब्रुवन्तं मातुलमिति वा संबन्धः । इन्द्रवज्रा वृत्तम् ॥ ३९ ॥

निहितवानसि स्थापितवानसि । वर्तमानसामीप्ये लट् । तं च प्रमादात्पतितो हुताशोऽदहत् । वसन्ततिलका वृत्तम् ॥ १४० ॥

न्यगादीदुक्तवान् । टीकां कर्तुमारम्भं कृतवान् । इन्द्रवज्रा वृत्तम् ॥ ४१ ॥

प्रास्यत्प्राक्षिपत् । नाक्षमिष्ट समर्थो नाभूत् । शालिनी वृत्तम् ॥ ४२ ॥

अत्रान्तरे स्ववत्तीर्थयात्रां चरद्भिर्दयितैः स्वीयैः सतीर्थ्यैराश्रमात्कनिष्ठैर्यदृच्छयोपेत्य ज्ञातः सखेदैः स मुनिः समैक्षि संदृष्टः । इन्द्रवज्रा वृत्तम् ॥ ४३ ॥

---

१ म. 'नु । इ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्ट्वा पद्माङ्घ्रिं क्रमात्ते प्रणेमु-
स्तत्पादाम्भोजीयरेणून्दधानाः
अन्योन्यं द्रागाददुस्ते ददुश्चा-
नेकानेहोयोगजैक्यान्नमांसि ॥ ४४ ॥
वाणीनिर्जितपन्नगेश्वरगुरुमाचेतसा चेतसा
बिभ्राणा चरणं मुनेर्विरचितव्यापल्लवं पल्लवम् ।
धुन्वन्तं प्रमया निवारिततमाशङ्कापदं कामदं
रेजेऽन्तेवसतां समष्टिरसुहृत्तत्याहितात्याहिता ॥ ४५ ॥
शुश्राव साऽन्तेवसतां समष्टिः
स्वदेशकीयां सुखदां सुवार्ताम् ॥
अर्थात्समीपागततः कुतश्चि-
द्द्विजेन्द्रतः सेवितसर्वतीर्थात् ॥ ४६ ॥

---

अनेककालायोगजन्यादैक्याज्झटित्यन्योन्यं नमांसि नमस्कारान्ददुराददुश्च । शालिनी वृत्तम् ॥ ४४ ॥ [ दधाना मस्तके धारयन्तः सन्त इत्यर्थः ] ॥ ४४ ॥

वाण्या निर्जिताः शेषगुरुत्वालभीकयो यया सा चेतसा मुनेः श्रीशंकरस्य ... बिभ्राणा रेजे । चरणं. विशिनष्टि—विरचितव्यं भवितव्यमापल्लवं पल्लववद्धुन्वन्तं ... निवारिततममतिशयेन निवारितमाशङ्कानां परमाश्रयभूतमज्ञानं येन पुनश्च कामदं पुरुषार्थ-चतुष्टयप्रदम् । शिष्याणां समष्टिं विशिनष्टि—असुहृतां प्राणहृतां क्षुत्पिपासादीनां ... पङ्क्त्या निमित्तभूतयाऽऽहितं स्वीकृतमत्याहितं जीवनापेक्षं कर्म यया सा । ... कामादीनां बाह्यानां च पङ्क्त्यावाहितं स्थापितमत्याहितं महाभयं ययेति वा ।

' अत्याहितं महाभीतौ जीवनापेक्षकर्मणि '

इति मेदिनी । शार्दूलविक्रीडितम् ॥ ४५ ॥ [ असुहृदिति । एतेन शमादि... भेदवादिविदलनशक्तिश्च सूचिता ] । चरणमित्येकवचनं तु प्रागुक्तया शतोपरि ... शतिश्लोके रामस्तदङ्घ्रिमित्यङ्घ्रिशब्दैकवचनव्याख्यानरीत्या सर्वोत्तमत्वसूचकत्व... म्याभिप्रायमेवेति ज्ञेयम् ] ॥ ४५ ॥

साऽन्तेवसतां समष्टिः कुतश्चिद्देशादर्थात्समीपमागतात्सेवितसर्वतीर्थाद्द्विजात्स्वदेश... सुखदां सुवार्तां शुश्राव । आख्यानकी वृत्तम् ॥ ४६ ॥

---

१ क ख. घ. सा । अत्याहितं महाभी° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ गुरुवरमनवेक्ष्य नितान्तं
व्यथितहृदो मुनिवर्यविनेयाः ॥
कथमपि विदिततदीयसुवार्ताः
समधिगताः किल केरलदेशान् ॥ ४७ ॥

अत्रान्तरे यतिपतिः प्रसुवोऽन्त्यकृत्यां
कृत्वा स्वधर्मपरिपालनसक्तचित्तः ॥
आकाशलङ्घिवरकेरमहीरुहेषु
श्रीकेरलेषु मुनिरास्त चरन्विरक्तः ॥ ४८ ॥

विचरन्नथ केरलेषु विष्वङ्-
निजशिष्यागमनं निरीक्ष्य मौनी ॥
विनयेन महासुरालयेशं
विनमन्नस्तुत निस्तुलानुभावः ॥ ४९ ॥

सदसत्त्वविमुक्तया प्रकृत्या
चिदचिद्रूपमिदं जगद्विचित्रम् ॥
कुरुषे जगदीश लीलया त्वं
परिपूर्णस्य न हि प्रयोजनेच्छा ॥ १५० ॥

---

अथानन्तरं गुरुवरं श्रीशंकरमनवेक्ष्यात्यन्तं व्यथितं हृद्येषां कथमपि विदिता भगवत्पादाः केरलेषु सन्तीति गुरुसंबन्धिनी सुवार्ता यैस्ते मुनिवर्यशिष्याः केरलाख्यदेशान्संप्राप्ताः । 'नवमे भवति गुरावुपचित्रा' ॥ ४७ ॥

आकाशलङ्घिनोऽत्यन्ततुङ्गाः श्रेष्ठाः केराख्यवृक्षा येषु तेषु केरलेषु मुनिश्चरन्नास्त स्थितः । वसन्ततिलका वृत्तम् ॥ ४८ ॥ [ प्रसुवः 'जनयित्री प्रसूर्माता' इत्यमरात्पूर्वाश्रमजनन्या इत्यर्थः । अन्त्येति । अन्त्येष्टिमित्यर्थः । श्रीति । श्रीभाष्यकारचरणस्पर्शाच्छ्रीमन्तः शोभाशालिनस्ते च ते केरान्केरसंज्ञकान्वृक्षविशेषाँल्लान्त्याददते ते च ते तथा तेष्वित्यर्थः ] ॥ ४८ ॥

अथानन्तरं विष्वङ्सर्वगो निरुपमः प्रभावो यस्य श्रीशंकरः केरलेषु विचरन्सन्निजशिष्यागमनं निरीक्ष्य मौनी तैर्भाषणमकुर्वाणो महासुराख्यसद्मेशं श्रीविष्णुं विनयेन नमस्कुर्वन्स्तुतिं कृतवान् । वसन्तमालिका वृत्तम् ॥ ४९ ॥

स्तुतिमुदाहरति—हे जगदीश सत्त्वासत्त्वाभ्यां विमुक्तयाऽनिर्वाच्यया प्रकृत्या मायया जडचेतनात्मकमिदं विचित्रं जगल्लीलया त्वं कुरुषे । हि यस्मात्परिपूर्णत्वात्तव

---

१ ग. घ. °पु वस° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजसा सृजसीश सत्त्ववृत्ति-
स्त्रिजगद्रक्षसि तामसः क्षिणोषि ॥
बहुधा परिकीर्त्यसे च स त्वं
विधिवैकुण्ठशिवाभिधाभिरेकः ॥ ५१ ॥

विविधेषु जलाशयेषु सोऽयं
सवितेव प्रतिबिम्बितस्वभावः ॥
बहुरूपमिदं प्रविश्य विश्वं
स्वयमेकोऽपि भवान्विभात्यनेकः ॥ ५२ ॥

इति देवमभिष्टुवन्विशिष्ट-
स्तुतितोऽसौ सुरसङ्घसंनिविष्टः ॥
चिरकालवियोगदीनचित्तैः
शिरसा शिष्यगणैरथो ववन्दे ॥ ५३ ॥

गुरुणा कुशलानुयोगपूर्वं
सदयं शिष्यगणेषु सान्त्वितेषु ॥
अतिदीनमनाः शनैरवादी-
दजहद्गद्गदिकं स पद्मपादः ॥ ५४ ॥

---

प्रयोजनेच्छा नास्ति लोकवत्तु लीला कैवल्यमिति न्यायात् ॥ १९० ॥ सदसत्त्वेति ।
द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यत इति न्यायात्सत्त्वासत्त्वाभ्यां शून्यो
यावत् ] ॥ ५० ॥

ननु ब्रह्मा सर्वं जगत्कुरुत इति चेत्तत्राऽऽह—हे ईश त्वमेव ब्रह्मा सन्रजसा सृजसि
सत्त्ववृत्तिर्विष्णुः संस्तमसा शिवः सन् । अतश्च स त्वमेवैको विध्यादिसंज्ञाभिर्बहुधा
परिकीर्त्यसे ॥ ५१ ॥

न केवलमेतावदेवापि तु स्वयमेकोऽपि भवान्बहुरूपमिदं विश्वं प्रविश्यानेको विभासि
सदृष्टान्तमाह—विविधेषु जलाशयेषु यथा सूर्यः प्रतिबिम्बितस्वभावस्तथाऽऽशयेषु प्रतिबि-
म्बितस्वभावः सोऽयं भवानित्यन्वयः । तथाच श्रुतिः—' यथा ह्ययं ज्योतिरात्मा विव-
स्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा'
इति ॥ ५२ ॥

ववन्द इति कर्मणि लिट् । ते तं शिरसा ववन्दिर इत्यर्थः ॥ ५३ ॥ [ अत्र
श्रीशंकराचार्यः ] ॥ ५३ ॥

कुशलिनो भवन्त इति कुशलप्रश्नपूर्वकं सदयं यथा स्यात्तथा सान्त्वितेषु शिष्यगणेषु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवन्नभिगम्य रङ्गनाथं
पथि पद्माक्षमहं निवर्तमानः ॥
बहुधाविहितानुनीतिनीतो
बत पूर्वाश्रममातुलेन गेहम् ॥ १५५ ॥
अहमस्य पुरो भिदावदेन्दो-
रपि पूर्वाश्रमवासनानुबन्धात् ॥
अपठं भवदीयभाष्यटीका-
मजयं चात्रकृतानुयोगमेनम् ॥ ५६ ॥
दुग्धमुद्रमुखमुद्रणमन्त्रै-
र्ध्वस्ततर्कगुरुकापिलतन्त्रैः ॥
वर्मितो निगमसारसुधाक्तै-
र्मातुलं तमजयं तव सूक्तैः ॥ ५७ ॥
खड्गाखड्गिविहारकल्पितरुजं काणादसेनामुखे
शस्त्राशस्त्रिकृतं श्रमं च विषमं पश्यत्पदानां पदे ॥
यष्टीयष्टिभवं च कापिलबले खेदं मुने तावकैः
सूक्तैर्यौक्तिकवंशमौक्तिकमयैर्नाऽऽपद्यते वर्मितः ॥ ५८ ॥

---

यथे स पद्मपादोऽजहद्गद्गदिकं यथा स्यात्तथाऽवादीत् ॥ ५४ ॥ [ गद्गदेति बाष्पाक्लिन्नकण्ठध्वन्यनुकरणमेव ] ॥ १५४ ॥

पूर्वाश्रममातुलेन स्वगेहं प्रति बहुधाविहितानुनयेन नीतो बतेत्यत्यन्तखेदे ॥ १५५ ॥ [ रङ्गनाथं पद्माक्षं विष्णुम् ] ॥ १५५ ॥

भेदवादीन्दोरप्यस्याग्रे मम मातुलोऽयमिति पूर्ववासनानुबन्धादहं भवदीयभाष्यटीकामपठमस्यां टीकायां कृतोऽनुयोगश्चोद्यं येन तमजयं च ॥ ५६ ॥

अजयमित्यनेन प्राप्तं गर्वं वारयति—तव सूक्तैर्वर्मतुल्यै रक्षितस्तमजयं न तु स्वसामर्थ्येनेति भावः । तानि विशिनष्टि—दग्धा तप्ता चक्रादिमुद्रा येषां तेषां मुखपिधायकमन्त्रैः । पुनश्च ध्वस्तानि गौतमादिशास्त्राणि यैर्वेदसारलक्षणसुधयाऽक्तैः । स्वागता वृत्तम् ॥ ५७ ॥ [ दुग्धेति । दग्धेव मुद्राऽऽकृतिर्यस्य यथा दग्धा काष्ठव्यक्तिः सद्यः परमारुणकान्तिरतिसंतप्ता भवति तादृशं मुखं स्वमतमर्दनरोषादतिसंतप्तत्वादस्यां वदने येषां भेदवादिनां तेषां यन्मुद्रणं मूकीकरणं तस्य मन्त्रा इव संपादकानि यैरित्यर्थः । वर्मितो वर्म कवचं संजातं यस्य ] ॥ १५७ ॥

किंच हे मुने यौक्तिकलक्षणवंशमौक्तिकमयैस्तव सूक्तैर्वर्मितः कवचैरिव रक्षितः काणा-

---

१ क. ख. घ. गेहे ॥ ५५ ॥ २ ख. 'थाऽब्रवीद् । ३ क 'सुधाक्तैः' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ गूढहृदो यथापुरं मा-
ममिनन्द्याऽऽहितसत्क्रियस्य तस्य ॥
अधिसद्म निधाय भाष्यटीका-
महमस्याऽऽयमशङ्कितो निशायाम् ॥ ५९ ॥

युगपर्ययनृत्यदुग्रफाल-
ज्वलनज्वालकरालकीलजालः ॥
दहनोऽधिनिशीथमस्य धाम्ना
बत टीकामपि भस्मसादकार्षीत् ॥ १६० ॥

अदहत्स्वगृहं स्वयं हुताशो
विमतग्रन्थमसौ विदग्धुकामः ॥
मतिमान्द्यकरं गरं च भैक्षे
व्यधितास्येति विजृम्भते स्म वार्ता ॥ ६१ ॥

---

दसेनामुखे खड्गाखड्गिविहारेण कल्पितं रुजं नाऽऽपद्यते । तथाऽक्षपादानां गौतमानां ... शस्त्राशस्त्रिकृतं श्रमं च नाऽऽपद्यते । तथा कापिलसैन्ये यष्टीयष्टिजन्यं खेदं च नाऽऽपद्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥ [ पदे 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तु' इत्यभिधानाद्युद्धाख्यव्यापारविशेष इत्यर्थः । विषमं दुःसहम् ] ॥ १५८ ॥

अथ पराजयानन्तरं यथापुरं मामभिनन्द्य संपादितसत्क्रियस्य गूढहृदयस्यास्य ... भाष्यटीकां निधायाहमशङ्कित आयं गतवान् । निशायामित्यस्य परेणान्वयः । ... रिणी वृत्तम् ॥ ५९ ॥ [ गूढहृदः कपटिनः । अस्य मातुलस्याशङ्कित एतत्संबन्धि... मकरणशङ्काशून्य एव सन्नित्यर्थः । निशायामेव सेतुदिदृक्षात्वरयाऽरुणोदय एव शौचा... दिनित्यकृत्यं संपाद्य सूर्योदयात्पूर्वमेवेत्यर्थः । आयं गतवानित्यन्वयः ] ॥ १५९ ॥

निशायामधिनिशीथमर्धरात्रावग्निरस्य धाम्ना सह टीकामपि भस्मसादकार्षीत् । ... दहनं विशिनष्टि—युगपर्यये प्रलयकाले नृत्यत उग्रस्य महारुद्रस्य फाले ललाटे ... ज्वलनो वह्निस्तस्य शिखावद्भयंकरं शिखाजालं यस्य सः ॥ ६० ॥ [ अधिनिशीथं मध्यरात्र एव । द्वितीयदिनस्येत्यार्थिकम् ] ॥ १६० ॥

हता कुत्सिताऽऽशा यस्य सः । इत्येवमस्य वार्ता विजृम्भते स्म विलासं प्र... ॥ ६१ ॥ [ हताशोऽहमेतत्खण्डनं विधाय स्वाभिमतप्राभाकरमतसंस्थापनमन्यग्रन्थ... रचनेन करिष्यामीति नष्टाऽऽशा यस्य स तथेत्यर्थः । गरं विषसमानं कोद्रवकुस्तु... तुण्डीफलादिदुरन्नमित्यर्थः । व्यधित नियोजयामासेत्यर्थः । इत्यस्य मातुलस्य ] ॥ ६१ ॥

---

१ ख. 'मभाल'। २ क. प्रलये। ३ ख भाले। ४ क. ख. सः ॥ ६० ॥ इ'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधुना धिषणा यथापुरं नो
विधुनाना विशयं प्रसादमेति ॥
विषमा पुनरीदृशी दृशा नः
किमु युक्ता भवदङ्घ्रिकिंकराणाम् ॥ ६२ ॥
गुरुवर तव या भाष्यवरेण्ये
त्वरचि मया ललिता किल वृत्तिः ॥
निरतिशयोज्ज्वलयुक्तियुता सा
पथि किल हा विननाश कृशानौ ॥ ६३ ॥
प्रयतेऽहं पुनरेव यदा तां
प्रविधातुं बहुधाकृतयत्नः ॥
न यथापूर्वमुपक्रमते ताः
पटुयुक्तीर्भगवन्मम बुद्धिः ॥ ६४ ॥
कृपापारावारं तव चरणकोणाग्रशरणं
गता दीना दूनाः कति कति न सर्वेश्वरपदम् ॥
गुरो मन्तुर्नन्तुः क इव मम पापांश इति चे-
न्मृषा मा भाषिष्ठाः पदकमलचिन्तावधिरसौ ॥ ६५ ॥

गरप्रभावश्च ज्ञात इत्याह—अधुना नो बुद्धिर्दैवेन यथापुरं संशयरहितं प्रसादं नाऽऽप्नोति। विषमा पुनरीदृशी दृशा भवदङ्घ्रिकिंकराणामस्माकं किमु युक्ताऽपि तु नैव युक्तेत्यर्थः ॥ ६२ ॥

अतिदुःखितः साक्रोशं पुनराह—गुरुवरेति। उपचित्रा वृत्तम् ॥ ६३ ॥

ननु पुनस्तथैव रचनीयेत्याशङ्क्याऽऽह—यदा बहुधाकृतप्रयत्नस्तां विधातुमहं प्रयते हे भगवंस्तदा यथापूर्वं ताः पटुयुक्तीर्मम बुद्धिर्नोपक्रमते ॥ ६४ ॥

कृपासमुद्रं तव चरणकोणाग्रशरणं गताः पूर्वं दीना अपि दूनाः खिन्ना अपि सर्वेश्वरपदं के के न प्राप्ता अपि तु सर्वेऽपि प्राप्ताः। गता इत्यस्य देहलीदीपकन्यायेनोभयत्र संबन्धः। हे गुरो नमनं[1] कर्तुर्मम क इव मन्तुरपराधः। 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति मेदिनी। पापांश इति चेत्तर्ह्यसौ[2] पापांशो गुरुपदकमलचिन्तनमेवावधिर्यस्येति मृषा मा भाषिष्ठाः। शिखरिणी वृत्तम् ॥ ६५ ॥

१ क. 'नं गुरोः क°। २ ख. चेन्न ह्यसौ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति वादिनमेनमार्यपादः
करुणापूरकरम्भितान्तरङ्गः ॥
अमृताब्धिसखैरपास्तमोहै-
र्वचनैः सान्त्वयति स्म वल्गुबन्धैः ॥ ६६ ॥

विषमो बत कर्मणां विपाको
विषमोहोपमदुर्निवार एषः ॥
विदितः प्रथमं मयाऽयमर्थः
कथितश्चाङ्ग सुरेशदेशिकाय ॥ ६७ ॥

पूर्वं शृङ्गक्ष्माधरे मत्समीपे
प्रेम्णा याऽसौ वाचिता पञ्चपादी ॥
सा मे चित्तान्नापयात्यद्य शोको
याताच्छीघ्रं तां लिखेत्याख्यदार्यः ॥ ६८ ॥

आश्वास्येत्थं जलजचरणं भाष्यकृत्पञ्चपादी-
माचख्यौ तां कृतिमुपहितां पूर्ववैवाऽऽनुपूर्व्या ॥
नैतच्चित्रं परमपुरुषेऽव्याहतज्ञानशक्तौ
तस्मिन्मूले त्रिभुवनगुरौ सर्वविद्याप्रवृत्तेः ॥ ६९ ॥

---

करुणापूरकेणाऽऽश्लिष्टमन्तरङ्गं यस्य स आर्यपादः श्रीशंकराचार्य इत्येवं वादिनं [illegible]
पद्मपादं पीयूषसमुद्रतुल्यैरपास्तो निराकृतो मोहो यैर्वल्गुः सुन्दरो बन्धो कथनं प्रबन्धो [illegible]
तैर्वचोभिः सान्त्वयति स्म । वसन्तमालिका वृत्तम् ॥ ६६ ॥

बतेति खेदे । विषजन्ममोहतुल्यश्चासौ दुर्निवारश्चैष कर्मणां विपाको विषमोऽस्ति प्रथम-
मेव मयाऽयमर्थो ज्ञातः सुरेश्वराचार्याय कथितश्च ॥ ६७ ॥

अतोऽद्य ते शोको यातादपगच्छतु शीघ्रं तां लिखेत्यार्थः श्रीशंकरोऽवोचत् । [illegible]
वृत्तम् ॥ ६८ ॥ [ शृङ्गक्ष्माधरे शृङ्गगिराविस्यर्थः ] ॥ ६८ ॥

अमुना प्रकारेण पद्मपादमाश्वास्य भाष्यकारस्तां पञ्चपादीं कृतिं पूर्ववैवाऽऽनु[illegible]
युक्तामाचख्यौ । चित्रं मन्वानान्प्रत्याह—अव्याहता ज्ञानशक्तिर्यस्य तस्मिन्[illegible]
सर्वविद्याप्रवृत्तेर्मूले महापुरुषे तच्चित्रं न भवति । मन्दाक्रान्ता वृत्तम् ॥६९॥ [ सर्व[illegible]
मूले निदाने । अत एव त्रिभुवनगुरौ । तथा च तैत्तिरीयाः समामनन्ति 'ईशानः [illegible]
विद्यानाम्' इत्यादि ] ॥ ६९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसभं स विलिख्य पञ्चपादीं
परमानन्दभरेण पद्मपादः ॥
उदतिष्ठदतिष्ठदभ्यरोदी-
त्पुनरुद्गायति तु स्म नृत्यति स्म ॥ ७० ॥

कविताकुशलोऽथ केरलक्ष्मा-
कमनः कश्चन राजशेखराख्यः ॥
मुनिवर्यममुं मुदं वितेने
निजकोटीरनिघृष्टपन्नखाड्यैः ॥ ७१ ॥

प्रथते किमु नाटकत्रयी से-
त्यमुना संयमिना ततो नियुक्तः ॥
अयमुत्तरमाददे प्रमादा-
दनले साऽऽहुतितामुपागतेति ॥ ७२ ॥

मुखतः पठितां मुनीन्दुना तां
विलिखन्नेप विसिष्मियेऽथ भूपः ॥
वद किं करवाणि किंकरोऽहं
वरदेति प्रणमन्व्यजिज्ञपच्च ॥ ७३ ॥

---

स पद्मपादः प्रसभं हठेन पञ्चपादीं विलिख्य परमानन्दातिशयेनोदतिष्ठदूर्ध्वमतिष्ठत्पुनः सममतिष्ठत्पुनरभ्यरोदीदानन्दाश्रूण्यमुञ्चत्पुनरुद्गायति स्म तु पुनर्नृत्यति स्म । वसन्तमालिका वृत्तम् ॥ ७० ॥

कमनो रञ्जको निजकोटीरैः किरीटसंबन्धिरत्नैर्निघृष्टं पादनखाड्यं येन सोऽमुं मुनिं मुदं वितेने । माल्यभारिणी वृत्तम् ॥ ७१ ॥ [ मुदा हर्षेण । अमुं प्रकृतम् । मुनिवर्यं श्रीशंकराचार्यम् । निजेति । एतादृशं वितेने विस्तारितवांस्तं प्रति प्रणनामेति यावत् ] ॥१७१॥

एवं प्रसादितेनामुना संयमिना सा नाटकत्रयी किं प्रथत इति ततो नियुक्तः प्रमादादग्नौ साऽऽहुतितामुपागतेतीदमुत्तरमुपाददे ॥ ७२ ॥

तां नाटकत्रयीम् । हे वरद किंकरोऽहं किं करवाणीति प्रणमन्विज्ञापितवान् ॥ ७३ ॥

---

१ क. ख. ग मुदा । २ क. भ्यम् ॥ ७१ ॥ प्र° । ३ ग. स्म पु° । ४ क. 'भ्यं यस्य स तादृशममुं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नृप कालटिनामकाग्रहारा
द्विजकर्मानधिकारिणोऽद्य शप्ताः ॥
भवताऽपि तथैव ते विधेया
यत पापा इति देशिकोऽशिषत्तम् ॥ ७४ ॥

पद्माङ्घ्रौ प्रतिपद्य नष्टविवृतिं तुष्टे पुनः केरल-
क्ष्मापालो यतिसार्वभौमसविधं प्राप्य प्रणम्याञ्जसा ॥
लब्ध्वा तस्य मुखात्स्वनाटकवराण्यानन्दपाथोनिधौ
मज्जंस्तत्पदपद्मयुग्ममनिशं ध्यायन्प्रतस्थे पुरीम् ॥ १५६ ॥

इति श्रीमाधवीये तत्तीर्थयात्राटनार्थकः ॥
संक्षेपशंकरजये सर्गोऽजनि चतुर्दशः ॥ १४ ॥

---

एवं राजशेखरेण विज्ञापितो देशिकः श्रीशंकरो हे नृप कालटिनामकोऽग्रहारो देवं द्विजकर्मानधिकारिण इत्यद्येदानीं शप्ता भवताऽपि तथैव विधेया यतः पापा इति राजान-शिषत् ॥ ७४ ॥

उपसंहरति—पद्मपादे नष्टविवृतिं प्रतिपद्य तुष्टे सति पुनः केरलभूपालो यतिसार्वभौम-सविधं समीपं प्राप्याञ्जसा झटिति प्रणम्य तस्य मुखात्स्वनाटकवराणि लब्ध्वाऽऽनन्दसागरे मज्जंस्तस्य चरणकमलयुग्ममनिशं ध्यायन्पुरीं प्रतस्थे । शार्दूलविक्रीडितं वृत्तम् ॥ १५६ ॥ [ नष्टेति । नष्टा या विवृतिर्भाष्यटीका तामित्यर्थः । प्रतिपद्य प्राप्य ] ॥ १७५ ॥

[ इति श्रीति । तदिति । तस्य पद्मपादस्य या तीर्थयात्रा तीर्थार्थं गमनं तदे-यदटनमितस्ततः परिभ्रमणं तदेवार्थो यस्य स तथेत्यर्थः ] ॥ १४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतं-
सरामकुमारसूनुधनपतिसूरिकृते श्रीशंकराचार्यविजय-
डिण्डिमे चतुर्दशः सर्गः ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ पञ्चदशः सर्गः ।

अथ शिष्यवरैर्युतः सहस्रै-
रनुयातः स सुधन्वना च राज्ञा ॥
ककुभो विजिगीषुरेष सर्वाः
प्रथमं सेतुमुदारधीः प्रतस्थे ॥ १ ॥

अभवत्किल तस्य तत्र शाक्तै-
र्गिरिजार्चाकपटान्मधुप्रसक्तैः ॥
निकटस्थवितीर्णभूरिमोद-
स्फुटरिङ्खत्पटुयुक्तिमान्विवादः ॥ २ ॥

---

अथ दिग्विजयकौतुकं सपरिकरं निरूपयितुमुपक्रमते—अथानन्तरं पद्मपादहस्तामलकसमित्पाणिचिद्विलासज्ञानकन्दविष्णुगुप्तशुद्धकीर्तिभानुमरीचिकृष्णदर्शनबुद्धिवृद्धिविरिञ्चिपादशुद्धानन्तानन्दगिरिप्रमुखैः सहस्रैः शिष्यवरैर्युतः सुधन्वना राज्ञा चानुयातः सर्वा दिशो विजिगीषुः स एष उदारधीः श्रीशंकराचार्यः प्रथमं सेतुं प्रति प्रतस्थे । वसन्तमालिका वृत्तम् । अत्र प्राचीनानुरोधेन मध्यार्जुनं प्राप्य ततः सर्वाः ककुभो विजिगीषुः प्रथमं सेतुं प्रति प्रतस्थ इति व्याख्येयम् । तथाहि—"श्रीशंकराचार्यो मध्यार्जुनं नाम शिवाविर्भूतिस्थलविशेषं प्राप । 'मध्यार्जुनेशानमदृष्टपूर्वं विद्यादिभिः पूजितपादपद्मम् । बुद्धोपचारैरमरेशं निष्पापतां प्राप फलैकपात्रम्' । तत्र किल भगवाञ्श्रीशंकराचार्यः सदाशिवमेवमब्रवीत्स्वामिन्मध्यार्जुन सर्वोपनिषदर्थोऽसि सर्वज्ञोऽसि तस्मान्निगमादितात्पर्यगोचरो द्वैतमद्वैतं वेति संशयस्य सर्वेषां पश्यतां निवृत्तिं कुर्विति प्रार्थितो मध्यार्जुनेशो लिङ्गात्सावयवरूपेण निष्क्रम्य मेघवद्गम्भीरया गिरा दक्षिणहस्तमुद्यम्य सत्यमद्वैतं सत्यमद्वैतं सत्यमद्वैतमिति त्रिरुक्त्वा लिङ्गाग्रेऽन्तर्दधे । पश्यतां नराणां महदद्भुतमासीत्तद्भक्ताश्च तद्देशस्थिताः श्रीशंकरमेव सद्गुरुं कृत्वोमागणपतीशार्काच्युतार्चापराः प्रातःस्नानादिविशुद्धाः पञ्चयज्ञपरायणाः श्रुतिसंचोदिताचारगाः शुद्धाद्वैतपरायणा बभूवुः । एवं तद्देशस्थानद्वैतवादिनः कृत्वा प्रमथैः शंकर इव शिष्यसमेतो रामेश्वरं प्रति जगाम" इति ॥ १ ॥ [सहस्रैर्विपुलैः] [सुधन्वना प्रागिन्द्रावतारत्वेन वर्णितेन सुधन्वाभिधेनेत्यर्थः] [सर्वाः ककुभो दिशो रक्षणया तत्स्थभेदवादिनः प्रतीत्यर्थः] ॥ १ ॥

तत्र किल तस्य शाक्तैर्विवादोऽभवत् । तान्विशिनष्टि—गिरिजार्चाकपटान्मधुप्रसक्तैः । विवादं विशिनष्टि—निकटस्थेभ्यो वितीर्णो दत्तो बहुमोदो याभिस्ताश्च ताः स्फुटं यथा स्यात्तथा रिङ्खन्त्यः स्फुरन्त्यो याः पट्व्यश्चतुरा युक्तयस्तद्वान् । पदेति क्वचित्पाठः ।

---

१ घ. °णिवि° । २ क. घ. °भूतस्थ° । ३ °स्थेषु वि° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथाहि । " तत्रस्था गुरुशेखरं यतिवरं मूर्ध्नाऽभिवाद्योचिरे स्वामिन्नस्मदिदं मतं शृणु कि
चित्रं परं पावनम् । आद्या शक्तिरशेषकार्यजननी शंभोर्गुणेभ्यः परा यस्माद
महत्प्रमुखं सर्वं जगज्जायते ॥ १ ॥ तस्या वागाद्यगम्यत्वात्सेवायोग्यत्वहेतुतः । सं
शाया भवान्यास्तु पादसेवापरा वयम् ॥ २ ॥ स्वर्णनिर्मिततत्पादैर्बद्धग्रीवाः सुखाश्रयाः ।
जीवन्मुक्तिर्यतो विद्योपासकानां फलं श्रुतम् ॥ ३ ॥ विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ४ ॥ तस्मात्कटाक्षलेशेन मुक्तिदा या मुमु
क्षुभिः । सेवनीया प्रयत्नेन प्रकृतिः सेशरूपिणी ॥ ५ ॥ प्रकृतिश्चेश्वरश्चेति श्रुतिस्म
ृता । सदेवेत्यादिवाक्यानि तत्पराणि मतानि तु ॥ ६ ॥ अकारादर्थथोत्पत्तिः प्रणवस्य
संमता । तच्छक्तीनां भवानीलक्ष्म्यादिकानां तथाऽस्ति सा ॥ ७ ॥ सिद्धान्तः सर्वेषां
कारणस्य प्रभोः परा । चन्द्रस्य चन्द्रिकावद्या रुद्रोद्बोधकरूपिणी ॥ ८ ॥ स्वाधीनवल्ल
त्युक्ता शक्ती रुद्रस्य भो यते । सैवास्तीयं भवानीति निश्चयेन युता वयम् ॥ ९ ॥ न
व्याघ्रैर्भवद्भिश्च कृत्वा तच्चिह्नधारणम् । सैवोपास्या सतो माता मुक्तिदा परमेश्वरी ॥ १०
इत्युक्त आचार्यवरो महेशः संप्राह तान्सत्यमिदं तथाऽपि । श्रेष्ठस्य बोधात्पुरुषस्य मुक्तेः
संप्रोदितत्वात्सकलेऽपि शास्त्रे ॥ ११ ॥ आत्मानमात्मना ध्यात्वा मुक्तो भवति नान्यथा ।
तमेवेत्यादिवाक्यानि प्रमाणान्यत्र कोटिशः ॥ १२ ॥ अजामित्यादिमन्त्रेऽजात्वरूपि
धाय वै । ततस्तत्त्वं परेशस्य मुक्त्यर्थं संप्रकाशितम् ॥ १३ ॥ किंचापि सांख्यैः प्रक
परस्य विकारहीनस्य सुबोधतः सा । उक्ताऽत ईशस्य सुखैकधाम्नो ज्ञानाद्विमुक्तिः
परमस्य भूम्नः ॥ १४ ॥ ऐक्यं चोक्तं ब्रह्मणा ज्ञानिनो हि ब्रह्मज्ञो ब्रह्मैव नान्योऽस्ति
कश्चित् । ब्रह्मेत्यादौ वेदवाक्येऽत एव ज्ञानं सम्यक्साधनीयं भवद्भिः ॥ १५ ॥ विद्याख्या
भवानी यां संप्रोक्ताऽद्वैतबोधिनी । तस्याः संसेवनादाशु चित्तशुद्धिर्विजायते ॥ १६
तस्मात्कुङ्कुमपुण्ड्रादि परित्यज्य तथैव च । हैमपादादिचिह्नानि विद्यायां रतिमागताः ॥ १७
ब्रह्माहमितिरूपायां मुक्ता भवथ नान्यथा । एवमुक्तास्त्यक्तचिह्नाः सर्वे नत्वा परं गुरुम्
॥ १८ ॥ स्नानसंध्यापरैः पञ्चपूजादिनिरतास्तथा । शुद्धाद्वैतकृतश्रद्धाः सच्छिष्यत्वमुपागताः
॥ १९ ॥ महालक्ष्म्या भक्ताः परमपुरुषं शंकरमथो समेत्योच्चैर्नत्वा निखिलफलदा
ननी । महालक्ष्मीराद्या प्रकृतिरसदित्यादिनिगमैः सदेवेतिश्रुत्योक्तपरपुरुषस्यामलतनोः ॥ २०
ब्रह्मादयोऽपि जायन्ते यस्या यस्यां परेशितुः । अप्यन्तर्भाव एवास्ति सैव

---

१ क. °म् ॥ ९ ॥ निरवयैर्भ° । २ क. सर्वमा° । ३ घ. °स्य ज्ञानात्पु° । ४ ग. घ.
५ क. °क्ये नदेर । ६ क. °या° प्रोक्ता सा हृ° । ७ ग. घ. °स्याः सुसे° । ८ ग. घ.
पू° । ९ क. °श्रुत्या परमपु° । १० ग. यस्यां ।

मुमुक्षुभिः ॥ २१ ॥ लक्ष्म्याः समाराधनतत्पराणां पद्माक्षमालाभिरलंकृतानाम् । बाह्वोश्च पद्माङ्कविभूषितानां सुकुङ्कुमेनाङ्कितमस्तकानाम् ॥ २२ ॥ हस्तस्थिता मुक्तिरतो भवद्भिरुपासनीया सकलेश्वरेश्वरी । इत्युक्त आहाद्भुतमेतदुक्तं मतं भवद्भिः शृणुतापि तत्त्वम् ॥ २३ ॥ यथा परात्मा न तु कश्चिदन्य एकोऽद्वितीयः सदसत्स्वरूपः । तत्त्वं स आत्मेति निबोधितः श्रुतावानन्दरूपः स तु वर्तते सदा ॥ २४ ॥ प्रकृतेस्तदधीनाया मोचकत्वं न सङ्गतम् । अहं ब्रह्मेति यो ध्याता तस्य मुक्तिः करे स्थिता ॥ २५ ॥ अनित्योपासकानां तु लोकावाप्तिस्तथाविधा । अतो यूयं परित्यज्य पद्मकुङ्कुमधारणम् ॥ २६ ॥ शुद्धामद्वैतविद्यां वै समाश्रित्य सुसाधवः । मुक्ता भविष्यथेत्युक्ताः शिष्यतां समुपागताः ॥ २७ ॥ तत आगत्य चाऽऽचार्यं शारदोपासने रताः । पुस्तपुण्ड्रकचिह्नेन युक्ता नत्वा बभाषिरे ॥ २८ ॥ स्वामिन्वेदस्य नित्यत्वाच्छारदा नित्यरूपिणी । कारणं सर्वलोकानां परात्परतरा मता ॥ २९ ॥ सप्तकर्त्रीति नित्या वागिति च श्रुतिवाक्यतः । सैवाऽऽत्मब्रह्मविष्ण्वादिशब्दजालैरुदाहृता ॥ ३० ॥ गुणातीतस्वरूपा च सेव्या सर्वैर्मुमुक्षुभिः । वागुपासनमेवातः कुरुध्वं सुप्रयत्नतः ॥ ३१ ॥ नावेदेत्यादिवाक्येन वेदार्थज्ञानवर्जितः । तत्परं वाक्स्वरूपं ना न वेदेति प्रकाशनात् ॥ ३२ ॥ वाक्स्वरूपानुसंधानं सर्वदा निश्चयेन हि । वेदार्थज्ञानपूर्वं वै प्रकर्तव्यं द्विजातिना ॥ ३३ ॥ इत्युक्तो भगवानाह कण्ठताल्वादिसंगमात् । समुद्भूतस्य वेदस्य नित्यता कथमुच्यते ॥ ३४ ॥ वर्णमात्रस्य नित्यत्वं वर्णानां संततेरुत । नाऽऽद्यः सर्वलये तेषां लयसंभवहेतुतः ॥ ३५ ॥ यस्य निःश्वसितं वेदा इति जन्यत्वदर्शनात् । यज्जन्यं तदनित्यं चेति प्रमाणान्न चान्तिमः ॥ ३६ ॥ महर्षिभ्यो रविः प्राह सृष्टिकालेऽखिलप्रभुः । युगान्ते प्रलयं यातं वेदमङ्गसमन्वितम् ॥ ३७ ॥ इत्युक्तं सूर्यसिद्धान्ते वेदराशेः प्रवर्तनम् । गतस्य प्रलयं सूर्याच्छारदानित्यता कुतः ॥ ३८ ॥ अनित्यत्वेऽपि देवानां ब्रह्मणो नित्यता मता । नित्या सा शारदाऽनश्वैव रम्यमिदं यतः ॥ ३९ ॥ आद्यस्य जीवस्य चतुर्मुखस्य नित्यत्वशून्यस्य मुखे स्थितायाः । अनित्यतायां खलु शारदाया न संशयो बुद्धिमतोऽस्ति कश्चित् ॥ ४० प्रकृतिः परमा सरस्वती या महदादेः सकलस्य कारणं सा । इति चेन्न समञ्जसं यतोऽस्ति परमात्मव्यतिरेकिणो मृषात्वम् ॥ ४१ ॥ वागातीतः पर एव भूमा सदादिबोध्यः प्रकृतिर्न वाच्या । सदादिशब्दैरत एव तस्य ज्ञानं सुसम्यक्परिसाधनीयम् ॥ ४२ ॥ ज्ञात्वा तमेव खलु मुक्तिपदं प्रयाति मार्गो न चान्य इति वेद उदाजहार । शुद्धाद्वये सततमेव रता भवन्तः ज्ञानादिकर्मपरमार्थविबोधशुद्धिमन्तः ॥ ४३ ॥ कुर्वन्ननेकदुरितान्यपहाय दूरं शुद्धिं गताः सुखघनस्य. विबो-

---

१ ग. घ. तु । २ घ. किंचित् । ३ क. यतो वै प° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स हि युक्तिभरैर्विधाय शाक्ता-
न्प्रति वाग्व्याहरणेऽपि तानशक्तान् ॥
द्विजजातिबहिष्कृताननार्यान-
करोल्लोकहिताय कर्मसेतुम् ॥ ३ ॥

---

घतो वै । मुक्ता भविष्यथ कदाऽपि न चान्यथा हीत्युक्ता बभूवुरखिला यमिनः सुशिष्याः
॥ ४४ ॥ वामाचाराः समेत्याहुस्ततो ज्ञानवतां वरम् । संवित्स्वरूपमज्ञात्वा वृथावेशो
भवान् ॥ ४५ ॥ निरतोऽद्वैतविज्ञाने वन्ध्यापुत्रसमे यतः । लयेऽपि भेदसत्तातोऽद्वैतं नैव
कदाचन ॥ ४६ ॥ ईश्वरेऽपि विमर्शोऽयं पृथगेवास्ति सर्वदा । यया विना परेशस्य क्रिया
स्वल्पाऽपि दुर्लभा ॥ ४७ ॥ सा शक्तिरस्तीह सदा स्वतन्त्रा जगद्विधात्री च शिवस्य
बीजम् । विद्यात्मिका तत्र रतिं गतानां मुक्तिः करस्था किल नेतरेषाम् ॥ ४८ ॥ विमर्श-
संज्ञमव्यक्तं ब्रह्म भृग्वादयो जगुः । तत्परात्तत्त्वतोऽस्त्यन्यत्ततो यद्यत्तु तद्वशम् ॥ ४९ ॥
तस्याः सेवानिरतमनसां नो निषेधेऽधिकारो नास्त्येवैवं विहितकरणे सिद्धतामागतानाम् ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधो भृग्वादीनाममलमनसां नः प्रवृत्तिः
मानम् ॥ ५० ॥ तस्माद्भवन्तोऽपि विहाय सर्वं विद्यां परामाश्रयताऽऽत्ममुक्त्यै । इत्युक्त
आचार्य उवाच मैवं यत्रेति वेदेन हि बोधकाले ॥ ५१ ॥ आत्मातिरिक्तस्य निषेध एव
कृतस्तदानीं न विमर्शदेशः । न ह्यस्ति सत्यत्वमनात्मनो नो मुक्तिस्त्वनित्यप्रकृतेरुपास्त्या
॥ ५२ ॥ मायाभिरिन्द्रः पुरुरूप ईयत इत्येवमस्या बहुरूपता श्रुता । तस्माच्चिदात्मा
प्रकृतेः परः प्रभुर्ज्ञेयोऽस्ति मोक्षाय मुमुक्षुभिर्मुदा ॥ ५३ ॥ ईशानो भूतभव्यस्येत्यादि
कश्रुतिबोधिते । अकिंचित्कर इत्युक्तिर्मौढ्यादेव न चान्यथा ॥ ५४ ॥ कलञ्जादनशी-
लानां सुरापानादि कुर्वताम् । ब्राह्मण्यं नास्ति युष्माकं कुरुतातो विनिष्कृतिम् ॥ ५५ ॥
भृगुणा ताडितो विष्णुः कुम्भजेन सरित्पतिः । पीतः कथं न भवतामस्ति शक्तिस्तथाविधा
॥ ५६ ॥ तस्माद्विमूढतां त्यक्त्वा भ्रष्टैर्ब्राह्मणजातितः । प्रायश्चित्तमनुष्ठेयमित्युक्तास्ते तं
गुरुम् ॥ ५७ ॥ नत्वा प्रायश्चित्तमेवाऽऽशु कृत्वा शुद्धाद्वैते संरताः साधुवृत्ताः । स्वध-
र्मस्थाः पञ्चपूजापरास्ते जाताः शिष्याः सर्वपापैर्विहीनाः " ॥ ५८ ॥ २ ॥

एतत्सर्वं संग्रहेण दर्शयति—स हि श्रीशंकरस्ताञ्शाक्तान्प्रति वाग्व्याहरणेऽपि युक्ति-
तिशयैरशक्तान्विधाय कर्मसेतुमकरोत् । तान्विशिनष्टि—द्विजेति । आचार्यस्य वि-
योऽपि न स्वल्यात्याग्र्यमित्याह—लोकहितायेति ॥ ३ ॥

---

१ ग. द्राक् । २ क 'र्शो वै पृ' । ३ ग. 'ति श्रुत्या हि । ४ क. 'र्वसंदूरहि'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिपूज्य स तत्र रामनाथं
सह पाण्ड्यैः स्ववशे विधाय चोलान् ॥
द्रविडांश्च ततो जगाम काञ्चीं
नगरीं हस्तिगिरेर्नितम्बकाञ्चीम् ॥ ४ ॥

---

एवं सेतुं प्रति प्रस्थितेन तत्र प्रस्थाने तुलामवानीनिकटस्थानां पराजयं संक्षेपेण प्रदर्श्य रामेश्वरप्रान्तदेशस्थानां तं संग्रहेण वर्णयितुमाह—अभिपूज्येति। रामेश्वरं वक्ष्यमाणप्रकारेणाभिपूज्य पाण्ड्यैः सह चोलान्देशविशेषान्द्रविडांश्च वशे विधाय। ततो हस्तिसंज्ञकस्य पर्वतस्य कटिमेखलाभूतां काञ्चीं नगरीं जगाम। इदमत्रावधेयम्। "रामेश्वरं रामकृतप्रतिष्ठं रामेश्वरीभूषितवामभागम्। महेन्द्रनीलोज्ज्वलदुत्किरीटं भीमेश्वरं त्वामिह पूजयामि ॥ १ ॥ इति गङ्गाजलैः शुद्धैरर्चयामास शंकरः। सुबिल्वैः पङ्कजैः पुष्पैर्वन्यैर्वन्यफलैस्तथा ॥ २ ॥ तत्र मासद्वयं वासं कृतवत्यार्य आगताः। अद्वैतद्रोहिणः शैवा लिङ्गाङ्कितभुजद्वयाः ॥ ३ ॥ पार्श्वे शूलाङ्किता रौद्रा भक्ता लिङ्गेन चिह्निताः। डमर्वङ्कधरा बाहुद्वये तूम्रास्तथा हृदि ॥ ४ ॥ कण्ठे शिरसि लिङ्गं च धारिणो जङ्गमास्तथा। ललाटे हृदये नाभौ बाह्वोः शूलेन चिह्निताः ॥ ५ ॥ गुरुं पाशुपता नत्वा प्रोचुः कारणमीश्वरः। शिवोऽतश्चिह्नसंयुक्तैः सेवनीयः प्रयत्नतः ॥ ६ ॥ ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥ ७ ॥ द्यौर्मूर्धानं यस्य वेदा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशः श्रोत्रे वाग्विवृत्ताश्च वेदास्तं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ८ ॥ इत्यादिवचनैरुक्ते लिङ्गे भक्तिमतां यते। तस्य लोके भवेद्वासः शिवचिह्नाङ्कितात्मनाम् ॥ ९ ॥ किंच कारणचिन्तायां शंभुराकाशमध्यगः। प्रोक्तस्तथा सुरैः पृष्टः कस्त्वमित्याह शंकरः ॥ ११ ॥ अहमेकः पुरा देवा आसं मत्तो न चापरः। इदानीमहमेवास्मि सद्वयो जगदीश्वरः ॥ ११ ॥ इति तस्माच्छिवः कर्ता सामान्यैरप्युदीरितः। सद्ब्रह्मात्मादिकैः शब्दैरुपादानतया प्रभुः ॥ १२ ॥ वासुदेवः पुरा ह्यासीन्न ब्रह्मा न च शंकरः। इत्यत्र वासुदेवाख्यो महादेव ईरितः ॥ १३ ॥ वसत्यस्मिञ्जगत्सर्वं वासुस्तेन प्रकीर्तितः। स चासौ देव इत्युक्तो जगत्कर्ता महेश्वरः ॥ १४ ॥ शं सुखं जीवनं योऽसौ करोत्यस्य स शंकरः। पालको विष्णुराख्यातः स नाऽऽसीत्प्राकृते लये ॥ १५ ॥ पाल्यस्याभावतोऽस्त्यत्र प्रमाणं कृष्णमापितम्। रुद्राणां शंकरश्चास्मीत्येवं शिवरहस्यके ॥ १६ ॥ महादेवस्य वाक्यानि मुनिं दुर्वाससं प्रति। सावधानतया तानि श्रोतव्यानि यतीश्वर ॥ १७ ॥ अहमेकाक्षरः कर्ता परात्परतरः शिवः। सदात्मा ब्रह्मविष्ण्वोश्च लोकानामादिकारणम् ॥ १८ ॥ पुराणः पूर्वगः पूर्वश्रेष्ठः श्रेष्ठोऽहमद्वयः। मदिच्छारूपिणी शक्तिर्जगत्संहारकारिणी ॥ १९ ॥ लीना मय्येव सा सृष्टा पुनः सृष्टौ मयाऽनघ। सा महत्तत्त्वमुत्पाद्य त्रिगुणाङ्कुरकारणम् ॥ २० ॥

---

१ ग घ. °कृप। २ क ग. तुला।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहंकारं समुत्पाद्य त्रैगुण्यं पूर्वतत्त्वतः । गुणत्रयात्मिकान्कृत्वा रुद्रानेकादशाव्ययात् ॥ २१ ॥
राजसान्सृष्टिकर्मार्थे कारयामास सादरम् । सात्त्विकान्पालनपरांस्तामसान्प्रलये
॥ २२ ॥ क्रमादवर्णात्संजाता उवर्णाच्च मवर्णतः । तेषु मुख्यतया ब्रह्मविष्णुरुद्रा
त्रिधा ॥ २३ ॥ अन्ये तदनुवृत्तिस्था एवमेकादशेश्वराः । तेषां विभूतयः सर्वे ते
लोकाश्चराचराः ॥ २४ ॥ पृथक्पृथङ्नामगतास्तत्तत्कर्मानुसारतः । ते सर्वे प्रलये ब्रह्मलोके
लयं गताः ॥ २५ ॥ राजसे रक्तवर्णे च स तु ब्रह्मा समस्तभृत् । कृष्णे नारायणे
तेजस्यस्तोऽभवत्पुरा ॥ २६ ॥ रुद्रस्य शुक्लवर्णे तु ह्यस्तो नारायणः स्वयम् । स तु
प्रकृत्यन्तर्गतः शुक्लेन तेजसा ॥ २७ ॥ मदिच्छाशुक्लवर्णा सा मय्येव विलयं गता ।
अतोऽस्म्यनन्तः सर्वार्थवेदैरपि न गोचरः ॥ २८ ॥ वेत्ति कश्चिन्न मन्मायां जन्मभीति
यावहाम् । अतो रुद्रार्चनपरा रुद्रसूक्तजपाश्रिताः ॥ २९ ॥ पञ्चाक्षरीजपपरा रुद्राक्ष
णैर्युताः । भूतिभूपितसर्वाङ्गाः सदा ध्यानपरायणाः ॥ ३० ॥ ईश्वरं रुद्रमव्यक्तं
रूपं जगत्त्रये । येऽर्चयन्ति नरश्रेष्ठास्तेषां मुक्तिः करे स्थिता ॥ ३१ ॥ अतस्त्वं भूतिरु
क्षधारणं कुरु सर्वदा । कुरु नित्यं महादेवपूजनं भक्तिसंयुतः । दुर्वाससे मुनीन्द्राय हेतुना
सदाशिवः ॥ ३२ ॥ अन्तर्दधे तदाचारसक्तोऽभून्मुनिसत्तमः ! इत्यतः परमात्मासौ सेव्यते
मुमुक्षुभिः ॥ ३३ ॥ नारायणोऽकामयताद्वितीयः प्रजाः सृजामीति ततो महान्ति । भूतानि
जायन्त तथा विधाता प्रजापतिश्चापि जनिं प्रयातौ ॥ ३४ ॥ अत्रापि नारायणशब्द
महेश एवास्ति यतस्तु नारम् । ब्रह्मेन्द्रविष्ण्वादिनृणां समूहः स्थानं तदस्यास्ति
गस्य ॥ ३५ ॥ अस्यैवांशा विश्वदेवाः प्रमाणं त्वस्मिन्नर्थे वेद एवास्ति योऽसौ ।
भूम्यादौ सन्ति रुद्रा नतिस्तेभ्यः सर्वेभ्योऽस्त्वेवमाहातियत्नात् ॥ ३६ ॥ कारणं
त्वं तथा प्राह कनिष्ठताम् । कार्यात्मना यतो जातास्त्रिदेवा इति च श्रुतिः ॥ ३७ ॥
ज्ञानमनन्तं यो गुहायां निहितं प्रभुम् । वेदेत्यादिश्रुतिप्रोक्तस्ततो देवो महेश्वरः ॥ ३८ ॥
निर्गुणोऽप्येष एवेशश्चिन्तयित्वाऽचिरं पुरा । सृजामीत्यात्मनस्तेजः सूर्याकारेण
॥ ३९ ॥ मनश्चन्द्रं तथा सत्त्वं भौमं सौम्यं तु वाङ्मयम् । सुखज्ञानमयं देवगुरुं
सितम् ॥ ४० ॥ क्लेशात्मकं शनिं चैव चकार परमेश्वरः । सूर्यादिमण्डलान्यीशः
भान्ति न स्वतः ॥ ४१ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा
भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभान्ति सर्वे तस्य भासा सर्वमिदं
॥ ४२ ॥ इति श्रुतेस्ततो देवान्नारायणपदास्पदात् । ब्रह्मा प्रजायते विष्णुः
पालनकृत्तथा ॥ ४३ ॥ आसीन्नारायणः पूर्वं नेशानो न विधिस्तथा ।
श्रुतौ विष्णुरुक्त ईशानो न महेश्वरः ॥ ४४ ॥ सर्वाभावेऽपि नामावः परेशस्य

१ ग. °रूपज° । २ ग. °पलयम । येऽ° । ३ घ. मयातः । ४ °शुक्ल°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्कारणभूतस्य वेदवाक्यप्रमाणतः ॥ ४५ ॥ कर्मणा जायते लोकः कर्मणैव हि लीयते ।
इति वाक्याज्जगद्बीजं कर्मैवास्त्विति नोचितम् ॥ ४६ ॥ ईशं विना जडं कर्म फलदाने क्षमं
न हि । ब्रह्माभावविदो निन्दा वेद उक्ता ततो न सः ॥ ४७ ॥ असन्नेव स भवति
असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥ ४८ ॥ इति तस्मा-
ज्जगत्कर्तुर्महेशस्य परात्मनः । उपासनं तथा तस्य चिह्नानां धारणं सुसत् ॥ ४९ ॥
इत्युक्त आचार्यवरो बभाषे सृष्टिं स्थितिं नाशमथैक एव । ब्रह्मादिरूपेण करोति देवो
देवार्थं एषोऽभिमतो ममापि ॥ १ ॥ मूलहीनं तु लिङ्गादेर्धारणं त्याज्यमेव हि । सर्वदेवा-
श्रयस्यास्य तापः श्रेयस्करो न हि ॥ २ ॥ नाभेरूर्ध्वं सोमपास्तु नाभ्यधस्तादसोमपाः ।
देवास्तिष्ठन्ति विप्रेन्द्रे वेदवेदाङ्गपारगे ॥ ३ ॥ शिखां शिरो ललाटं च कर्णौ घ्राणं कपो-
लकम् । जिह्वाग्रं च तथा चौष्ठौ चिबुकं कण्ठमेव च ॥ ४ ॥ अंसद्वयं भुजद्वंद्वं बाहुहस्त-
युगं तथा । वक्षो नाभिं कटिं लिङ्गं वृषणं चोरुजानुकम् ॥ ५ ॥ गुल्फौ पादौ समाश्रित्य
संस्थिताः सर्वदेवताः । पितरो मुनयश्चैव स्नानाद्याहारभिश्रितैः ॥ ६ ॥ नित्यादिकर्मभिस्तृप्ता
यान्ति नात्र संशयः । इत्येवं प्रोक्तवान्ब्रह्माऽरुणकेतुं प्रतीश्वरः ॥ ७ ॥ श्रुतिस्तथोचे
सकला हि देवा वसन्ति देहे खलु भूसुरस्य । ततोऽस्य तापे तु कृते सुरास्ते पला-
यन्ति शरीरतोऽस्य ॥ ८ ॥ एनं शप्त्वा पलायन्ते देवाः शीर्षादिवासिनः । पतितोऽयं
भवत्येव शूद्रवच्चितिकाष्ठवत् ॥ ९ ॥ व्याधिं विना कर्मयोग्यविभाङ्गे चिह्नमीक्ष्य* च ।
योऽकेश्वरं +मानुमीक्षेदथ वा हृदमाविशेत् ॥ १० ॥ इत्यादिवाक्यानि बहूनि सन्ति योऽ-
स्मामितीयं श्रुतिरेव साक्षात् । उपासनं भेदयुतं विनिन्द्यं ब्रूते तथाऽन्या श्रुतिरेवमाह॥ ११॥
देवान्हि सर्वान्खलु कर्मणा चितान्नित्यत्वहीनानवलोक्य भूसुरः । निर्वेदमायान्न कृतेन
लभ्यते मोक्षोऽत आत्मज्ञमनन्यमानसः ॥ १२ ॥ वेदार्थज्ञं ब्रह्मबोधाय गच्छेदित्येवं तस्मा-
न्मोक्षाय बोध्यम् । ब्रह्मैवान्यच्चिह्नसंधारणं तु व्यर्थं मुक्तिः केवलज्ञानतोऽस्ति ॥ १३ ॥
तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो
हर्षशोकौ जहाति ॥ १४ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ १५ ॥ अशरीरं शरीरे-
ष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ १६ ॥ यदा चर्म-
वदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ १७ ॥

---

* आर्षत्वात्साधुत्वम् । + अनुदात्तत्वलक्षणात्मनेपदस्यानित्यत्वादिना साध्यम् ।

---

१ क. °देवमय° । २ ग. घ. चबुकं । ३ क. °बद्धं ज्ञा° । ४ हनुं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादुपाश्रित्य परात्मविद्यां प्राप्तां गुरोरेव कृपाकटाक्षात् । अभेदवादामृतपानतृप्तो स्वं
संश्रुत्य गुरोर्मुखाज्जनात् ॥ १८ ॥ विद्वेषनीरनामा वै कश्चिल्लिङ्गभृदग्रणीः । उवाच प्र-
प्रीतः स्वामिनं परमं गुरुम् ॥ १९ ॥ स्वामिंस्त्वमेव शरणं मम सर्वदाऽसि संसारसर्प-
दष्टतनुं नयाऽऽशु । मामद्य युष्मदतिनिर्मलवेदवाक्यैर्नष्टा भिदाऽस्मि शिव एव जगति-
हम् ॥ २० ॥ महादेवस्य पूजायाः फलं त्वमसि सत्तम । अद्वैतामृतदाता त्वं स्वरू-
त्तमोत्तमः ॥ २१ ॥ इत्येवं स्तुतिपात्रं तं स्तुत्वा नत्वा मुहुर्मुहुः । पीत्वा पादोदकं प्र-
क्तदुक्ताचारतत्परः ॥ २२ ॥ स्वकुलग्रामदेशस्थान्सर्वानद्वैतवर्तिनः । कृत्वा गुरुं क-
सुखमाप स शंकरम् ॥ २३ ॥ ततोऽन्ये भूतिरुद्राक्षधारिणो लिङ्गचिह्निताः । प्रोचुः शै-
शूलाद्या दृष्ट्वा स्वामिनमद्भुतम् ॥ २४ ॥ मायावेषधरः कस्त्वं प्रामाणिकमतादमुम् । श्रं
कृत्वाऽधुना गन्तुं प्रवृत्तोऽस्यतिवञ्चकः ॥ २५ ॥ ब्राह्मण्यादुत्तमं प्रोक्तं वैराग्यं श्रुतिस्
वैष्णव्यादधिकं शैव्यमित्यजः प्राह नारदम् ॥ २६ ॥ तस्मादारूढपतनं किमर्थं प्र-
कृतम् । नमस्त इति वेदेन स्तुतः सम्यङ्महेश्वरः ॥ २७ ॥ सर्वाननशिरोग्रीवः सर्व-
गुहाशयः । सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः॥ २८ ॥ इति श्वेताश्वतर्यां पुंस्
मुक्त्वोपसंहृतम् । ततस्तेनापि सर्वात्मा शिव एव निरूपितः ॥ २९ ॥ पत्न्यौ ते ह्रीः
लक्ष्मीश्च पार्श्वेऽहोरात्रके मते । इति वाक्यद्वयेनापि शिव एव निरूपितः ॥ ३० ॥ प-
ह्रीः पार्वती लक्ष्मीस्तत्पतिः शिव ईरितः । स्कान्दे च यामले चैव तद्व्याख्यानं इ-
शृणु ॥ ३१ ॥ हिमाद्रावपतन्मौलौ गङ्गा रुद्रस्य वेगतः । तदीयभारसंभ्रान्तो हिमवान्
सदाशिवः ॥ ३२ ॥ ह्रीमती भव नास्युच्चैर्वर्तसे प्राप्य मामिह । पुरुषं पुरुषश्रेष्ठं स-
त्त्वादिकारणम् ॥ ३३ ॥ सा तं नत्वा महादेवं तदाप्रभृति भक्तितः । ह्रिया तं दृ-
मिलिता ह्रीरिति प्रोच्यते बुधैः ॥ ३४ ॥ तस्याङ्कमधुनाऽऽरूढा शक्तिर्माहेश्वरी प-
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥ ३५ ॥ तस्यास्तेजःकणाज्जाता द-
कोटयः पुरा । शिवतेजःसमुद्भूता हरिब्रह्मादिकोटयः ॥ ३६ ॥ क्रियन्ते पुन-
तत्र तत्र लयानुगाः । इति तस्माच्छिवस्यैव तत्पतित्वं सुनिश्चितम् ॥ ३७ ॥
शुद्धस्फटिकसंकाशे दक्षिणे पार्श्वके मतम् । दिनत्वं रात्रिता वामे
देव्या मता यतः ॥ ३८ ॥ श्यामवर्णाऽपि चाथर्ववेदे सर्वात्मरूपताम् । शि-
नित्योऽहमित्यादिनाऽऽह स्वस्य सुराधिपः ॥ ३९ ॥ जगत्कारणभूतस्य तथा शि-
रहस्यके । ध्येयत्वादिकमाख्यातं शिवस्य परमात्मनः ॥ ४० ॥ ध्येयते
साक्षिणो मुनिगणा ज्ञानप्रदत्वे शुको वेद्यत्वे निगमाः स्वभक्तविमतक्रान्तौ कृतान्ता-

---

१ घ. °नतुष्टो भ°। २ घ. °भो मतः ॥ २१ ॥ ३ ग. घ. °तद्वाचिनः। ४ घ. °र्वां°।
५ ग. घ. °न्दे या°। ६ ग. घ. मलके चै°। ७ क. °तत्वं त°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यत्वे भगवन्पितामहशिरःस्रग्वृन्दमाद्यन्तयोः शून्यत्वे च वराहहंसवपुषौ पद्माक्षपद्मासनौ ॥ ४१ ॥ एवं श्रुतिषु सर्वत्र जगत्कारणमीश्वरः । रुद्र उक्त इति ज्ञेयं न चैवान्यो विवेकिभिः ॥ ४२ ॥ तप्तलिङ्गादिरुद्राक्षविभूत्यादिकधारणात् । पीठाद्यर्चनया चैव रुद्राध्यायजपेन च ॥ ४३ ॥ सर्वपापविनिर्मुक्तः प्राप्नोति शिवरूपताम् । रुद्रकाण्डेऽयमर्थो हि सम्यक्त्वेन निरूपितः ॥ ४४ ॥ स्तेयं कृत्वा गुरुदारांश्च गत्वा सुरां पीत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ ४५ ॥ कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते । बहुनाऽत्र किमुक्तेन यस्य भक्तिः शिवे दृढा ॥ ४६ ॥ महापापौघपापौघकोटिग्रस्तोऽपि मुच्यते । इत्युक्तं शिवगितासु पुनस्तत्र च कीर्तितम् ॥ ४७ ॥ धर्मार्थकाममोक्षाणां पारं यास्यथ येन वै । मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम् ॥ ४८ ॥ कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारणम् । जप्यतां वेदसाराख्यं शिवनामसहस्रकम् । संत्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ । ततः प्रसन्नो भगवाञ्शंकरो लोकशंकरः ॥ ५० ॥ भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति । इति कालाग्निरुद्रोपनिषद्यपि निरूपितम् ॥ ५१ ॥ अवश्यं ब्राह्मणैर्धार्या विभूतिरिति विस्तृतम् । अतो विभूतिमाहात्म्यं प्रवक्तुं केन शक्यते ॥ ५२ ॥ शीर्षे कण्ठे कर्णयोश्च बाह्वो रुद्राक्षधारणात् । नीलकण्ठो भवेन्मर्त्यो ब्राह्मणश्चेत्परात्परः ॥ ५३ ॥ इत्यगस्त्यस्य संप्रोक्तं संहितायां यतीश्वर । अतप्तात्मतनुर्नैव तद्धामेतीति मानतः ॥ ५४ ॥ लिङ्गाङ्कनमवश्यं वै कर्तव्यं मोक्षकाङ्क्षिभिः । इत्युक्त आह नैवात्र वाहितापो विवक्षितः ॥ ५५ ॥ किंतु कृच्छ्रादिकं तापः कृच्छ्रचान्द्रायणैः कृशः । इत्युक्तेर्नारदीयेन विरोधादवृहता तथा ॥ ५६ लिङ्गाङ्किततनुं दृष्ट्वा शङ्खचक्राङ्कितं तथा । स्नानमेव तदा कार्यमथ वा सूर्यं वीक्षयेत् ॥ ५७ ॥ पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथापि वा । वाङ्मात्रेणापि नार्चेत पाषण्डाचारतत्परम् ॥ ५८ ॥ शूद्रवत्स परित्याज्यो जीवञ्शवसमाकृतिः । तस्मै दत्तं च हव्यं च कव्यं चापि वृथा भवेत् ॥ ५९ ॥ तद्दर्शनात्परित्याज्यमन्नं मन्त्राभिमन्त्रितम् । अपि शूद्रेक्षणाद्भुङ्क्ते लिङ्गचक्राङ्कितं विना ॥ ६० ॥ अपि चेन्निगमाचाररतो वेदाङ्गतत्परः । लिङ्गचक्राङ्कमात्रेण स सद्यः पतितो भवेत् ॥ ६१ ॥ इत्युक्तं हि बृहन्नारदीये किं च मयोदितम् । मार्कण्डेयपुराणे वै श्रोतव्यं तत्समाहितैः ॥ ६२ ॥ ब्राह्मणानां च गायत्र्याः शापाद्वोऽभून्महान्पुरा । अतस्तयाऽतिसंशप्ताः पाषण्डाश्चैव देवताः ॥ ६३ ॥ वेदोक्तकर्महीनाश्च तान्त्रिकाचारतत्पराः । यूयं कलौ भवन्त्वेवमिति तानाह सा रुषा ॥ ६४ ॥ अतः

१ क. °त्म्यं केन वक्तुं सुश° । २ ग. घ. °ङ्कनं तथाऽत्र° । ३ ग. घ. °श्यं क° । ४ घ. °ङ्कितं च° । ५ ग. घ. °पाषण्डा° । ६ घ. च । ७ घ. °दाऽपि सं° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कलियुगे प्राप्ते भविष्यन्ति द्विजाधमाः । वेदार्थहीनाः पाषण्डा लिङ्गचक्रादिचिह्निताः
॥ ६५ ॥ ज्ञानकर्मपथादभ्रष्टाः कामक्रोधादिपीडिताः । दुरात्मानः सत्यधर्मविवर्जिताः दा
माभिनः ॥ ६६ ॥ कलौ त्रिंशत्सहस्राब्दे पुनर्नष्टा भवन्ति ते । निःशेषतां गताः ध्व
दद्वैतार्थानुचिन्तकाः ॥ ६७ ॥ सत्यधर्मपरा भूयो भविष्यन्ति न संशयः । इति तस्मा
कर्तव्यं लिङ्गादेर्धारणं नरैः ॥ ६८ ॥ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । इ
सत्यादिलक्ष्यस्योपास्यगोचरता मता ॥ ६९ ॥ ततो ब्रह्मावतारस्य शिवस्यांशजं
श्रुतौ । प्रोक्तं तस्य निरासो नो कर्तुं केनापि शक्यते ॥ ७० ॥ भूतिरुद्राक्षयोश्चापि कर्तं
धारणं नरैः । किंतु लिङ्गादिचिह्नानां धारणे मानशून्यता ॥ ७१ ॥ ततः प्रोवाच भट
अग्रगण्यस्तं परमं गुरुम् । असमर्थाः पुरा देवास्त्रिपुरासुरनाशने ॥ ७२ ॥ इषुं ते प्र
यामासुस्त्रिभिर्विष्ण्वग्निचन्द्रकैः । आदावग्निः शशी मध्ये विष्णुरन्ते प्रतिष्ठितः ॥ ७३ ॥
ततो विचारयामासुः क इषुं धारयिष्यति । रुद्रो धारयिता केचित्प्रोचुस्तत्र दिवौकसः
॥ ७४ ॥ यतो रुद्रस्य वह्न्यादि तेजः सकलमेव हि । तस्य नेत्रेऽग्निचन्द्रौ स्तो विष्णु
स्तद्देहजः स्मृतः ॥ ७५ ॥ सात्त्विकांशात्समुद्भूतस्तस्माद्भारो न तस्य वै । इति दे
विचार्याऽऽशु प्रार्थयामासुरीश्वरम् ॥ ७६ ॥ सोऽब्रवीद्वरमिच्छामि देवाः कमिति चाब्रुवन्
सोवाचाहं पशूनां वै प्रधानः स्यां पतिः किल ॥७७॥ ऊचुर्देवा वयं सर्वे पशवः पशवस्त्
त्वमेकः पतिरस्माकमित्युक्त्वा ते सदाशिवम् ॥७८॥ लिङ्गशूलादिचिह्नानि धारयामासुरीश्वराः
ततो ज्यां वासुकिं कृत्वा मेरुं कृत्वा धनुर्धरम् ॥ ७९ ॥ रथं चन्द्ररवी चक्रे वेदाश्च
न्विधाय च । ब्रह्माणं सारथिं कृत्वा स्तूयमानः शिवोऽमरैः ॥ ८० ॥ बाणेन तेन दै
त्यान्ददाह परमेश्वरः । तस्माल्लिङ्गादिचिह्नानां धारणं युक्तमेव हि ॥ ८१ ॥ दृश्यते
तथा लोके सेव्यसेवकयोर्मुने । अस्माभिः सेवकैश्चिह्नं सेव्यस्य परमेशितुः ॥ ८२ ॥ अ
श्यमेव संग्राह्यमित्युक्तः प्राह तं गुरुः । मानहीनमिदं वाक्यं यतो देवादिषु क्वचित् ॥ ८३ ॥
लिङ्गादेर्धारणं नैव प्रसिद्धं किंतु तेषु वै । भूत्यादेर्धारणं किंच कैवल्योपनिषद्वचः ॥ ८४ ॥
श्रद्धाभक्तिध्यानयोगादवेहीत्येवं ब्रूते नैव शूलादिचिह्नम् । ज्ञानस्याङ्गं तेन नास्त्येव हस्ते
ज्ञानेप्सूनां धारणं भोः कदाऽपि ॥ ८५ ॥ नान्यः पन्था विद्यते कोऽपि मुमुक्षोः इत्यु
वेदवाक्यैर्मुमुक्षोः । नास्त्येवार्थो देहसंतापनेन निन्दा तस्य श्रूयमाणा हि शास्त्रे ॥ ८६ ॥
लोके राज्ञश्छत्रचिह्नं न भृत्ये दृष्टं शूलादेर्हि संधारणं चेत् । युष्माकं कोऽप्यस्ति
लोहं स्वीकर्तव्यं तेन तद्भार एव ॥ ८७ ॥ किंचास्य भक्तेन भुजादिभूषणं सर्पादिकं धा
मनन्यचेतसा । परं तु नैतत्खलु युज्यते नरे सर्पभ्रमेणापि भयेन कम्पिनि ॥ ८८ ॥

---

१ ध. °दिमूर्छिताः । २ क. °त्वादिधार° । ३ ध. °नेच्छूनां । ४ ध. °मुक्तावित्य°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादिमां पामरबुद्धिमाशु विहाय चिह्नं च समर्प्य कर्म । वेदोक्तमीशे परजीवयोश्चैक्यस्यानुसंधानमनन्यचित्तः ॥ ८९ ॥ कुर्वन्निबोधेन परस्य तस्याज्ञानस्य नाशेन भविष्यसि त्वम् । मुक्तो न चान्येन पथा कदाऽपीत्युक्तः स आचार्यवरं प्रणम्य ॥ ९० ॥ चिह्नानि संत्यज्य सपुत्रबान्धवः शिष्यो बभूवाद्वयवादतत्परः । तथैव चान्येऽपि गुरोः प्रसादतो बभूवुरद्वैतपराः सुखार्थिनः ॥ ९१ ॥ अनन्तशयनं नाम प्रदेशं प्राप्तवांस्ततः । देवस्य दर्शनं कृत्वा मासमास स तत्र ये ॥ ९२ ॥ भक्ता भागवताश्चैव वैष्णवाः पाञ्चरात्रिणः । वैखानसाः कर्महीनाः षड्विधा वैष्णवा मताः ॥ ९३ ॥ तानाह शंकराचार्यः किं वो लक्षणमुच्यताम् । भक्ताः प्रथममाहुस्तं सर्वज्ञो जगदीश्वरः ॥ ९४ ॥ वासुदेवः स रामाद्यानवतारान्बिभर्त्यजः । तदुपास्त्या वयं मूढाः प्राप्स्यामस्तत्सलोकताम् ॥ ९५ ॥ इति बुद्ध्या वयं सर्वे कौण्डिन्यमुनिना प्रभोः । प्रसादितस्य सेवायामनन्तस्य सदा रताः ॥ ९६ ॥ आचारो द्विविधोऽस्माकं क्रियाज्ञानविभेदतः । कर्मठा ब्रह्मगुप्ताद्या विष्णुशर्मादयो वयम् ॥ ९७ ॥ ज्ञानिनोऽत्रैव तिष्ठाम इत्युक्तो ज्ञानलक्षणम् ॥ पप्रच्छ विष्णुशर्माऽथ प्राह तेषु विचक्षणः ॥ ९८ ॥ अनन्तभगवत्पादकमलं शरणं परम् । इति तूष्णींस्थितिर्ज्ञानं यतो नैव तदाज्ञया ॥९९॥ विना तृणादिसंचारो भवतीत्युक्त आह तम् । जन्मना जायते शूद्रः कर्मणा जायते द्विजः ॥ १०० ॥ नित्यं संध्यामुपासीत प्रत्यवाय्यन्यथा भवेत् । प्रातरादिषु कालेषु ह्यग्निहोत्रादिकं बुधः ॥ कुर्वन्वै ब्राह्मणो विद्वान्स्फलं भद्रमश्नुते । इत्यादिश्रुतिवाक्यानि नित्यं कर्म स्तुवन्ति हि ॥ २ ॥ अतः सर्वैः श्रुतिप्रोक्तं कर्तव्यं कर्म सर्वदा । वैधस्य तस्य संत्यागाद्दुःखस्याऽऽर्ति मनुर्जगौ ॥ ३ ॥ जीवन्कर्मपरित्यागं यः करोति नराधमः । स मूढो नरकं याति यावदाभूतसंप्लवम् ॥ ४ ॥ यतीनामपि कर्मास्ति स्नानदेवार्चनादिकम् । ब्राह्मण्यहानिरेवातो भ्रष्टानां स्वीयकर्मतः ॥१०५॥ अब्दैः कतिपयैरेवं स्थितिरित्युक्त आह तम् । विष्णुशर्मा मया तुल्यः सप्तमः पुरुषः प्रभो ॥ ६ ॥ किंचित्कर्मपरस्तस्य पिताऽभूदिति वै[1] श्रुतम् । बाल्ये मयेति संप्रोक्तः प्राह दूरं व्रजाधुना ॥७॥ एवमुक्तः स तु क्लेशापूरितः सगणस्तदा । प्रणम्य दण्डवद्भूमौ क्षमस्वेत्याह तं गुरुम् ॥ ८ ॥ दृष्ट्वा तं शरणं प्राप्तं प्राह शिष्यान्दयानिधिः । प्रायश्चित्तविधानार्थं तेऽपि कुर्युस्तथैव हि ॥ ९ ॥ प्रायश्चित्तेन संशुद्धा विष्णुशर्मादयोऽपि ते । कर्मनिष्ठास्तमाचार्यं प्रोचुस्त्वत्कृपया प्रभो ॥ ११० ॥ ब्राह्मण्यसिद्धिरस्माकं जाता मुक्तिः कथं भवेत् । इत्युक्त आह परमो गुरुः करुणयाऽन्वितः ॥११॥ ब्रह्मार्पणाचारदेवाः स्युरीशो विष्णुर्दिनेश्वरः । उमा गणपतिश्चैव तेषां पूजापरा नराः ॥१२॥ ब्रह्मार्पणधिया कामांस्त्यक्त्वा कर्म चरन्ति वै[2] । एवं कृते नित्यकर्मण्यमले मनसि प्रभोः ॥१३॥ जीवस्य

१ घ. च । २ घ. वे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च भिदाभावो भवत्येव न संशयः । मूलाज्ञानस्य तत्तस्मान्निवृत्तिर्ज्ञानकारणम् ॥ १४ ॥
तेन भग्ने लिङ्गदेहे मुक्तिर्भवति नान्यथा । इत्यादिष्टो विष्णुशर्मा दण्डवत्प्रणिपत्य स
॥ ११५ ॥ सगणः कारयामास नित्यं कर्म गुरुं स्मरन् । स्मार्ताचारपरिभ्रान्तः पञ्चपू-
विशारदः ॥ १६ ॥ त्रिपुण्ड्रं भस्मना कुर्वंश्चन्दनेन च सुव्रतः । स्नात्वा मृत्तिकया चोर्ध्व-
पुण्ड्रं कुर्वन्प्रयत्नतः ॥ १७ ॥ एवं तेषु निरस्तेषु ब्रह्मगुप्तादयस्ततः । समागत्य प्रणम्योचुः
स्वामिन्स्मार्तेन वर्त्मना ॥ १८ ॥ कुर्वन्तो वयमाचार्य कर्म ब्रह्मार्पणं धिया । कृत्वा सं
वसामोऽत्रेत्युक्तः स प्राह तान्गुरुः ॥ १९ ॥ इतः परं पञ्चपूजातत्पराः शुद्धमानसाः । स्थे-
वासनाया मुक्ता भवन्तः स्वात्मबोधतः ॥ १२० ॥ लिङ्गदेहेन निर्मुक्ताः सच्चिदानन्द-
द्वयम् । प्राप्नुवन्तीति संप्रोक्ता नत्वा तं स्वस्थमानसाः ॥ २१ ॥ बभूवुरथ तं प्राह समागत्यैं
गुरुम् । कश्चिद्भागवतो विप्रः स्वामिन्शृणु मतं मम ॥ २२ ॥ सर्ववेदेषु यत्पुण्यं सर्वतीर्थे
यत्फलम् । तत्फलं नर आप्नोति स्तुत्वा देवं जनार्दनम् ॥ २३ ॥ इत्यादिवचनाद्विष्णोः कीर्त-
नेऽहर्निशं रतः । शङ्खचक्रादिसंचिह्नैश्चिह्नितस्तुलसीगलः ॥ २४ ॥ ऊर्ध्वपुण्ड्री वसाम्यत्र
मुक्तिर्मम करे स्थिता । इत्युक्त आह मा चक्राद्यङ्कनस्य विनिन्दनात् ॥ २५ ॥ किंच मूर्तिर्भ-
वतश्चतुर्धा वर्तते शृणु । परैकाऽऽकाशरूपा स्याद्ब्रह्मसामप्यगोचरा ॥ २६ ॥ यतो वाचो नि-
वर्तन्ते अप्राप्य मनसा सह । इत्यादिश्रुतिवाक्येभ्यो द्वितीया व्यूहसंज्ञिका ॥ २७ ॥ सर्व-
लोकात्मिका तस्य विष्णोश्चिह्नस्य धारणम् । समर्थश्चेत्कुरुष्वाऽऽशु तस्मिन्नैकेन वा हस्त ।
॥ २८ ॥ शीर्षादिपादपर्यन्तं देहमङ्क्य नाशतः । तस्य सेत्स्यति ते वैष्णवत्वं यदुलं
नृणाम् ॥ २९ ॥ विभूतिमूर्तयस्तस्य मत्स्याद्याः परिकीर्तिताः । तप्तलोहमयीभिर्वै ताभिः
ङ्क्य देहकम् ॥ १३० ॥ किमर्थं जडशङ्खादेः कर्तव्यं चिह्नधारणम् । विष्णुवल्लोहचक्रे
धारणं कुरु वा सदा ॥ ३१ ॥ अर्चामूर्तेः शिलामय्याः स्वरूपेणाथ वाऽङ्क्य । सर्वं
मूढ तस्मात्त्वं कर्तव्यं चिह्नधारणम् ॥ ३२ ॥ विष्णोरिति विहायाऽऽशु पाखण्डमविभागं
स्वकर्माणि फलं तेषां समर्पय परेश्वरे ॥ ३३ ॥ तेन शुद्धस्ततोऽद्वैतवादिनं गुरुमाश्रय ।
तस्योपदेशतो नष्टकर्मबन्धो विमोक्ष्यसि ॥ ३४ ॥ नान्यः पन्था विद्यते मुक्तये हीत्युक्तं
श्रुत्वा तेन बोधेऽतियत्नः । कार्यो मोक्षाकाङ्क्षिभिः शुद्धचित्तैरित्युक्तोऽसौ विप्रदेवो वचो
शाम् ॥ १३५ ॥ सम्यङ्नत्वा प्राह पुण्यैरनेकैः स त्वत्पादाम्भोजयोर्दर्शनं मे । जातं तस्मान्मां
कृतार्थं कुरुष्वेत्येवं तेन प्रार्थितोऽसौ बभाषे ॥ ३६ ॥ भो विप्रदेवाऽऽशु विहाय चिह्नं कर्माणि
कुर्वन्खलु कामहीनः । ब्रह्माहमस्मीति विभावय त्वं मुक्तो भविष्यस्यवबोधतोऽद्धा ॥ ३७ ॥
पुनरन्यो गुरुं प्राह शार्ङ्गपाणिरिति श्रुतः । नमो नारायणायेति मन्त्रमुच्चारयन्मुनः ॥ ३८ ॥

---

१ ग. घ. वरं । २ न. स्मार्त्यैः स°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्य मुद्रादिकैः शङ्खचक्राद्यैः सुचिह्नितः । संसारबन्धनान्मुक्तो वैकुण्ठं वैष्णवो-
त्तमः ॥ ३९ ॥ गमिष्यामि यतस्तत्र तथाभूता वसन्ति तत् । चिह्नस्य धारणे मानं
पुराणं शृणु भो मुने ॥ १४० ॥ ये बाहुमूलपरिचिह्नितशङ्खचक्रा ये कण्ठलग्नतुल-
सीनलिनाक्षमालाः । ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवि-
त्रयन्ति ॥ ४१ ॥ इत्युक्त आचार्य उवाच मैवं श्रुतेरभावात्कथनीयमत्र । अतप्तदेहो
न समश्नुतेऽयं विमोक्षमेषा श्रुतिरस्ति मानम् ॥ ४२ ॥ नैवं यतः पातकनाशनार्थं
महत्तपः कृच्छ्रमुखं स्वकर्म । यद्वाऽथवा ध्यानमधीश्वरस्य प्रोक्तं श्रुतौ चिह्नमतो न
धार्यम् ॥ ४३ ॥ ब्रह्मज्ञो यः सोऽश्नुते मोक्षमित्यादेर्वाक्यान्मोक्षस्य हेतुर्विबोधः ।
क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यादेर्वाक्यादन्यतः संसृतिः स्यात् ॥ ४४ ॥ पुराणेषु
बृहन्नारदीयादिषु निषेधनम् । दृश्यते तप्तशङ्खादेर्धारणस्य प्रयत्नतः ॥ १४५ ॥
चिह्नानां धारणेनाहं भविष्यामि हरेः समः । इत्येतत्तु मनोराज्यमात्रं शूद्रो यथा न
हि ॥ ४६ ॥ शिखायज्ञोपवीतादिधारणादेव सद्द्विजः । ब्रह्मात्मबोधतस्तस्मात्तत्प्राप्तिः
श्रुतिमानतः ॥ ४७ ॥ तस्माद्ब्रह्माहमित्येवं चिन्तनं सर्वदा कुरु । तेन नष्टे भिदागन्धे
जीव एव परः शिवः ॥ ४८ ॥ शिवः शिवोऽहमस्मीतिवादिनं यं च कंचन । आत्मना
सह तादात्म्यभागिनं कुरुते भृशम् ॥ ४९ ॥ इत्युक्तं शिवगितास्वित्युक्तो वैष्णव आह
तम् ॥ नमस्कृत्य कृतार्थोऽहं स्वामिंस्त्वदुपदेशतः ॥ १५० ॥ अधुनाऽद्वैतनिष्ठोऽहं भविष्या-
मीति सोऽब्रवीत् । ननाम दण्डवद्भूमौ तं प्राह गुरुसत्तमः ॥ ५१ ॥ मुक्तो भवेति सोऽ-
प्युक्तः स्मार्ताचारेषु तत्परः । पञ्चपूजारतो नित्यं स्वदेशस्थाञ्जनानपि ॥ ५२ ॥ तथाऽ-
कारीत्ततः पाञ्चरात्रागमसुदीक्षितः । आह मुक्तिप्रतिष्ठादिमूलभूतोऽस्मदागमः ॥ ५३ ॥
तस्माद्यतेऽयमाचारो विप्रैः कार्योऽखिलैरपि । इत्युक्तः श्रीगुरुः प्राह यदि वेदावि-
रुद्धता ॥ ५४ ॥ अस्त्यागमे तदा तस्याऽऽचारो ग्राह्यो न चान्यथा । अन्यमन्त्रा-
ग्रहे तत्र वैष्णवत्वं प्रकीर्तितम् ॥ १५५ ॥ गायत्र्या उपदेशस्तु ब्राह्मण्यायास्ति सर्वथा ।
एवं च वैष्णवत्वस्य भङ्ग एव समागतः ॥ ५६ ॥ तदभावे न विप्रत्वं विष्णुमन्त्रशतै-
रपि । वैष्णवत्वं कुतोऽस्त्यस्याः सत्त्वे ननु हरेरियम् ॥ ५७ ॥ शक्तिः शङ्खादिव-
त्तस्य श्रवणादिति चेत्तदा । रुद्रस्य शक्तिरेवास्तु चन्द्रशेखरतादिकम् ॥ ५८ ॥
श्रूयतेऽस्या यतः पञ्चमुखत्वाद्यं च देहगम् । अस्तु वा सर्वसंपूज्या शुभदा परमे-
श्वरी ॥ ५९ ॥ ननु सूर्ये स्थितस्यास्या प्राधान्यं तेजसो यतः । निरूप्यते ततो
विष्णोः शक्तिरेव यतो हरिः ॥ १६० ॥ मातृमण्डलवर्तीति वर्ण्यते तत्र तत्र ह ।
पञ्चास्यताऽपि नो तस्मिन्बहुरूपे विरुध्यते ॥ ६१ ॥ इति चेन्न यतस्तस्याः समु-
त्पत्तिर्निरूपिता । व्याहृतिभ्यः शिखाऽऽसां तु पञ्चास्या सा महेश्वरात् ॥ ६२ ॥
अस्य प्रोक्ताऽत्र एतस्य शक्तिर्नान्यस्य कस्यचित् । नारायणश्रुतौ प्रोक्तः स्वरकं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महेश्वरः ॥ ६३ ॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृ-
लीनस्य यः परः स महेश्वरः ॥ ६४ ॥ अष्टमूर्तिमहेशस्य मूर्तिरादित्य ईरि-
तस्मात्तस्यैव शक्तिः सा पञ्चवक्त्रादिसंयुता ॥ १६५ ॥ वैष्णवेन त्वयैवं नो शिवमूर्ति-
भावसुः । सेव्योऽतो ब्राह्मणत्वस्य हानिरेव तवाऽऽगता ॥ ३६ ॥ तदभावे-
का हानिर्वैष्णवोऽस्मीति चेत्तदा । भ्रष्टोऽसि भाषणायोग्यो जीवन्नेव मृतोऽसि चे-
॥ ६७ ॥ ततस्तु माधवः कश्चिद्वैष्णवः प्राह तं गुरुम् । तप्तं शङ्खादिकं धार्यं द्वे-
प्राप्नोति वैष्णवम् ॥ ६८ ॥ पाञ्चरात्रागमे प्रोक्तमित्येवं तस्य मानता । त्वदुक्त-
नाशमायातीत्युक्तः प्राह परो गुरुः ॥ ६९ ॥ आगमाद्युक्त आचारो ग्राह्यो वेदानु-
लतः । विरोधे तस्य न ग्राह्य उक्तं चेदं स्फुटं किल ॥ १७० ॥ अतीन्द्रियार्थविज्ञाने
प्रमाणं श्रुतिरेव हि । श्रुत्याचारमृतेऽग्राह्यताऽऽगमानां प्रसज्यते ॥ ७१ ॥ को-
वेदविरुद्धं यत्तन्मानं न कदाचन । अतो ब्राह्मण्यसिद्ध्यर्थं स्वकर्मनिरतो भव ॥ ७२ ॥
तेन सम्यग्विशुद्धः संस्तत्त्वज्ञानमवाप्स्यसि । मुक्तिस्तस्मान्न चान्यस्मादत्रार्थे त्वं श्रु-
शृणु ॥ ७३ ॥ सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि । संपश्यन्ब्रह्म पर-
याति नान्येन हेतुना ॥ ७४ ॥ तस्मात्पाखण्डचिह्नानि विहायाद्वैतनिष्ठता । संप्र-
मोक्षसिद्ध्यर्थमित्युक्तः स च माधवः ॥ १७५ ॥ स्वकुलग्रामदेशस्थैः सहाद्वैतपरः सदा ।
संध्याग्निहोत्रमुख्यानि कुर्वन्कर्माणि शुद्धताम् ॥ ७६ ॥ प्राप श्रीशंकराचार्यप्रसा-
त्तत आगतः ॥ वैखानसमताचारो व्यासदास इति श्रुतः ॥ ७७ ॥ उवाच भो द्वे-
ब्रह्मोऽपि मत्पक्षनिवारणे । न समर्थो यतो देवः परो नारायणो मम ॥ ७८ ॥ तद्वि-
ष्णोः परमं धामेत्यादिवेदेन बोधिता । नारायणपदस्यैव श्रेष्ठता मुनिसत्तम ॥ ७९ ॥
तथा नारायणाद्ब्रह्मा जायते रुद्र एव च । इत्यादिश्रुतिभिस्तस्य कारणत्वमुदीरि-
॥ १८० ॥ तस्मात्सेव्यः सदैवायमन्तर्यामी परेश्वरः । लक्षणं तस्य भक्तस्य प्रोक्तं
वैखानसे मते ॥ ८१ ॥ शङ्खचक्रपवित्राङ्ग ऊर्ध्वपुण्ड्र इति प्रभो । इत्युक्तः प्र-
विष्णुस्तु पालको वाऽथ ब्रह्म वा ॥ ८२ ॥ अस्तु तत्र विवादः कः पदं त्वावृति-
र्जितम् । लभ्यते तत्त्वबोधेन नैव त्वन्येन हेतुना ॥ ८३ ॥ यदि त्वं विष्णुभक्तोऽसि
तदा तत्प्रीतये कुरु । कर्म नैव तु तप्तानां चक्रादीनां विधारणम् ॥ ८४ ॥ प्रमाण-
भावतो वेदविरुद्धे नैव मानता । आगमे विप्रतानाशो नो चेत्स्यादेव सर्वथा ॥ १८५ ॥
इत्युक्त आह तं व्यासदासः पूर्वयुगे मुने । दत्तात्रेयः परो योगी पञ्चमुद्राविभूषि-
॥ ८६ ॥ आसीत्तस्मान्महद्भिः स्वीकृतो मार्गो मुमुक्षुभिः । ग्राह्यः किंच पुराणे-
चक्रादेर्धारणं श्रुतम् ॥ ८७ ॥ अन्यथा वैष्णवत्वस्य हानिरेव समापतेत् । तस्मा-
गवतश्चिह्नं धार्यमित्युदितो गुरुः ॥ ८८ ॥ उवाच भो विवेकस्ते किंतु माध्योऽसि
बालकाः । अपि जानन्ति मुद्राभिरङ्कनेन प्रयोजनम् ॥ ८९ ॥ दत्तात्रेयस्य वैष्ण-

१ क. ततश° । २ घ. °नुसारतः । ३ त. °त्पापण्ड° । ४ ग. घ. °हऽस्यप्रमत्त° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगिनस्तत्त्वदर्शिन । मुद्रयाऽङ्कितदेहो दत्तात्रेयोऽस्तीति केनचित् ॥ १९० ॥ श्रुतं
तै ततो मूढबुद्धिं त्यक्त्वा सुखी भव। पुराणेषु श्रुतं चिह्नधारणं त्विति नोचि-
तम् ॥ ९१ ॥ प्रह्लादस्य विभीषणस्य गजराजस्य ध्रुवस्याऽऽनिलेर्द्रौपद्या व्रजवा-
सिनां च खलु कश्चनाङ्कनं रेऽकरोत् । तस्मान्मूढमतिं विहाय सकलं पाखण्डचिह्नं
त्वम् ब्रह्मास्मीति विभावनेन सुसुखं गच्छाऽऽशु मोक्षं पदम् ॥ ९२ ॥ अवश्यं
वैस्तथा कार्यं चिह्नानां धारणं तदा। कपोलयोर्गले चैव शेषेण गरुडेन च ॥ ९३ ॥
अङ्कनं कुरु कर्मेन्द्रियप्रधाने भुजद्वये। कपोलद्वितये चैव ज्ञानेन्द्रियसमीपगे ॥ ९४ ॥
विहिते पशुवद्धर्तुं योग्यो भव विबन्धनः । तथाचैवंविधस्यात्र वैष्णवस्य स्वकर्मणा
॥ १९५ ॥ हीनस्य शुभ्रवस्त्राणां धारणं त्ववशिष्यते । न तु कर्माग्निहोत्रादीत्युक्तः
स्वाह सद्गुरुम् ॥ ९६ ॥ स्वामिंस्तव प्रसादेन सविवेकोऽस्मि नाङ्कितः । किंतु मे
पुरुषोऽऽसीत्तथेति भगवञ्छ्रुतम् ॥ ९७ ततः शुद्धाद्वयस्थं मां कुरु त्वं यतिशे-
खर। इति विज्ञाप्य तं भूमौ दण्डवत्प्रणिपत्य च ॥ ९८ ॥ कृताञ्जलिं समासीनमी-
षत्प्रं विलोक्य सः । करुणानिधिराचार्यः प्रहसन्निदमब्रवीत् ॥ ९९ ॥ ब्रह्मैवाहं न
संसारी मुक्तोऽहमिति भावय । तस्मिन्विधावशक्तस्त्वं वाक्यमेतदुदीरय ॥ २०० ॥
इत्यभ्यासपरित्यक्तद्वंद्वेषणषडूर्मिकः । विदित्वा परमात्मानं मुक्तो भवसि नान्यथा
॥ २०१ ॥ इति संबोधितः शिष्यः कृतार्थोऽहमितीरयन् । ब्रह्माहमिति संजल्पन्ययौ
स्वकुलसंयुतः ॥ २०२ ॥ तत आचार्यमागत्य नामतीर्थो हि वैष्णवः। कर्महीन इदं प्राह
भ्रैः स्वामिञ्शृणु मे मतम् ॥ ३ ॥ शेषेणाप्यप्रकम्प्यं वै सर्वं विष्णुमयं जगत् । इत्यादेशा-
द्यतो मोक्षं गुरुरेव प्रयच्छति ॥ ४ ॥ तदानीं भगवन्तं स गुरुः प्रार्थयते प्रभो । मच्छिष्यं
निजपादारविन्दं प्रापय सोऽप्यथ ॥ २०५ ॥ एवमुक्तः करोत्येव तथैव जगदीश्वरः ।
तस्मान्मम पुनर्जन्महेत्वभावो यतीश्वर ॥ ६ ॥ जीवन्मुक्तोऽहमेवं वै भवन्तोऽपि मुमुक्षवः।
कर्महीनाः सुरेशं तं विष्णुं सर्वमयं प्रभुम् ॥ ७ ॥ समालम्ब्याञ्जसा मुक्ता भविष्यन्तीति
निश्चयः। एवमुक्तो गुरुः प्राह सत्यमुक्तं त्वया मतम् ॥ ८ ॥ कर्मभ्रष्टो भवाञ्जीवन्मुक्त
एव न संशयः। निन्द्यानिन्द्यविहीनः सन्प्रवृत्तोऽसि पिशाचवत् ॥ ९ ॥ वेदोक्तसर्व-
कर्माणि कृत्वा तेषां फलार्पणम् । कर्तव्यं ब्रह्मणीत्येवं ज्ञानमार्गोऽयमीरितः ॥ २१० ॥
तदर्थं कर्मकरणं कर्ममार्गोऽस्ति तद्विधात् । अतस्त्वं दण्डनीयोऽसि विष्णुभक्तोऽपि
नो भवान् ॥ ११ ॥ न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न *जहति न च हन्ति कंचिदुच्चैः स्थितमनसं तमवेहि विष्णुभक्तम् ॥ १२ ॥ श्रुति-

* अत्राऽऽर्षत्वादकारस्योऽपूर्वो जहतिर्वा कल्पनीयः।

१ घ. °मुद्राङ्कितनुर्दत्ता°। २ घ. °तिं तु के°। ३ ग. प्रह्लादस्य। ४ क. घ. विभीषणस्य
५ क. घ. पाखण्ड°। ६ ग. घ. °म्यं यतसर्वं। ७ ग. घ. °हमस्म्येवं भ°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मृती ममैवाऽऽज्ञे ते उल्लङ्घ्य प्रवर्तते । आज्ञाभङ्गी मम द्रोही मद्भक्तोऽपि न
वैष्णवः ॥ १३ ॥ आज्ञाछेदी मम द्रोही स याति नरकं सदा । इत्यादिवचनेभ्योऽपि
कर्मत्यागो न शस्यते ॥ १४ ॥ ब्राह्मणः कर्म कुर्वीतेत्यादिवाक्यान्न कर्मणः ।
त्यागो देवान्तरत्यागो ब्राह्मणानां न चास्ति हि ॥ २१५ ॥ अग्निर्देवो द्विजातीनामिति
वाक्यात्ततस्तु भोः । ब्रह्मचार्यादिकैः सर्वैः कर्म त्यक्तुं न शक्यते ॥ १६ ॥ संध्याद्य-
यातिक्रमदोपशान्तिः कृच्छ्रत्रयेणास्ति ततो द्विजत्त्वम् । तत्त्यागतो नैव न कर्मि
श्रुतिस्तु संन्यासममुष्य वक्ति ॥ १७ ॥ इत्युक्तोऽसौ नामतीर्थः प्रणामैः प्रीतं कृत्वा
कर्मशीलो बभूव । एवं सर्वे खण्डनं स्वस्वपक्षस्य श्रुत्वा ते निष्कृतिं संविधाय ॥ १८ ॥
शुद्धाद्वैतावलम्बिनः सत्रिपुण्ड्रा वेदप्रोक्ताचारनिष्ठा बभूवुः । तस्मात्सुब्रह्मण्यसंज्ञं कुमार-
स्थानं प्राप श्रीगुरुः पञ्चघस्रैः ॥ १९ ॥ स्नात्वा कुमारधारायां नद्यां शिष्यसमन्वितः ।
भक्त्या संपूजयामास षण्मुखं शेषरूपिणम् ॥ २० ॥ काषायवस्त्रदण्डाढ्यः कम-
ण्डलुलसत्करः । भूतिभूषितसर्वाङ्गो बभौ रुद्र इव स्वयम् ॥ २१ ॥ नानादेशस्थी-
प्रौढ्याः सुब्रह्मण्यं समागताः । दृष्ट्वा तं शंकराचार्यमिदमूचुः सुविस्मिताः ॥ २२ ॥
द्विजा वयं ब्रह्मकुलोद्भवाः प्रभो मनुप्रभृत्युक्तसुकर्मतत्पराः । हिरण्यगर्भार्चनलब्धमानि-
सप्रशुद्धयः स्थैर्यमुपागतास्तथा ॥ २३ ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः
पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ २४ ॥
इत्यादिमन्त्राः सकलस्य कर्ता ब्रह्मा तथा पालक एष एव । लयस्य कर्ता निखिलेशे-
मश्च सर्वाधिकानन्दकरूप उक्तः ॥ २२५ ॥ स एव सृष्ट्वा निखिलं जगत्प्रभुः श्रुति-
सर्वात्मतया स्थितो वै । तदैक्षतेत्यादिवचोभिरीरितः करोति विष्णुं च शिवं भुज-
ष्याम् ॥ २६ ॥ तदीयभक्ताः किल योगनिष्ठाः कर्मस्थिताः कूर्चकमण्डलुभिः ।
वयं यतिं वीक्ष्य भवन्तमद्धा जाताः कृतार्थाः शृणु भोस्तथाऽपि ॥ २७ ॥ वचोऽस्म-
दीयं भगवन्प्रयोजनं किमस्त्यभेदेन यतश्चतुर्मुखात् । जनिं गतो जीवगणः स्वकर्म-
पुनः पुनः संसृतिमेति दुःखदाम् ॥ २८ ॥ ततो लये ब्रह्मण एव कुक्षौ लयं प्रप-
द्येष लयस्य काले । मोक्षोऽन्यथा ब्रह्मविदेष याति परं पदं ब्रह्मण एव लोके
॥ २९ ॥ तस्माद्भवान्दण्डकमण्डलुश्रितस्तल्लोकयोग्यो यतिशेखरो गुरुः । इत्युक्ते
आचार्य उवाच शंकरो ब्रह्मादिभूतानि यतो भवन्ति तम् ॥ २३० ॥ ज्ञात्वा विमुक्तो
भवतीति हि श्रुतौ प्रोक्तं ततस्तस्य विबोधकारणम् । वेदान्तवाक्यश्रवणादिकं स्या-
कार्ये विमोक्षो हि लयो न कीर्तितः ॥ ३१ ॥ सुषुप्तितुल्यो न च लभ्यते फ-
कार्यस्य हि ब्रह्मण एव सेवनात् । श्रुत्वैवमाचार्यमुखाद्विहाय ते चिह्नानि शुद्धात्मनि

१ घ. शस्यते । २ क. स्वस्य प° । ३ ग. °लं प्रपञ्चं म° । ४ ग. घ. °तोऽत्र । उ° ।
५ ग. °दिभिरीरितोऽसौ क° । घ. °दिभिरीडितोऽसौ क° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोधतत्पराः ॥ ३२ ॥ शिष्या बभूवुस्तत आगतास्तं प्रोचुर्गुरुं वह्निमतानुवर्तिनः । स्वामिन्वयं वह्निपरा यतो वै मन्त्रेण देवोऽयमुदीरितोऽस्ति ॥ ३३ ॥ अग्निरग्रे प्रथमो देवतानां संपातानामुत्तमो विष्णुरासीत् । यजमानाय परिगृह्य देवान्दीक्षयेतं हविरागच्छतं नः ॥ ३४ ॥ ततश्च विस्फुलिङ्गात्ममणेः शकलधारणम् । कृत्वा मुक्ता भविष्यन्ति ब्राह्मणा वह्न्युपासकाः ॥ २३५ ॥ अग्निर्देवो द्विजातीनामिति वाक्याद्यतीश्वर । अग्निर्देवो नान्योऽस्ति किंच पापहरः श्रुतः ॥ ३६ ॥ उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम । पशूंश्च मह्यमावह जीवनं च दिशो दिश ॥ ३७ ॥ अतः सर्वैर्द्विजैरग्निरेव सेव्यः प्रयत्नतः । कृतकृत्या भवन्त्वस्माद्भवन्तोऽप्यस्य सेवया ॥ ३८ ॥ इत्युक्त आह देवानामवमो वह्निरीरितः । परमो विष्णुराख्यातो देवास्तन्मध्यगाः स्मृताः ॥ ३९ ॥ तथाचाग्निः सुराणां वै भागदः कर्मदेवता । अग्निकारणवाक्यानि भूनात्माग्निपराणि तु ॥ २४० ॥ तस्माद्यूयं वह्न्यधीनं हि कर्म कुर्वन्तोऽस्मिन्विष्णुमाराधयन्तः । शुद्धाद्वैते तत्परा यास्यथाद्धा मुक्तिं प्रोक्ता एवमाचार्यवर्यैः ॥ ४१ ॥ नत्वा सर्वे स्वीकृताद्वैतनिष्ठाः स्वस्था जातास्ते सुहोत्रादयोऽन्ये । तत्राथाऽऽगत्याऽऽहुराचार्यवर्यं भक्ता भानोर्मण्डिता रक्तपुष्पैः ॥ ४२ ॥ दिवाकरादयः पूर्णमण्डलाकारमाश्रिताः । तिलकं शृणु भोः स्वामिन्नस्मदीयं मतं ध्रुवम् ॥ ४३ ॥ सूर्यः प्रोक्तः सर्वलोकस्य चक्षुः श्रुत्या तस्मात्सोऽस्ति विद्यादिरूपः । सृष्टिस्थित्यादेः स हेतुश्च तस्मादादित्योऽसौ ब्रह्म चेत्याह वेदः ॥ ४४ ॥ ओंघृणिः सूर्य आदित्यमिति वेदे मनुः श्रुतः । स्युरस्योपासका रक्तचन्दनाश्रितमस्तकाः ॥ २४५ ॥ तन्मालालंकृतग्रीवाः षड्विधाः सूर्यसेवकाः । उद्यन्तं मण्डलं केचित्कारणं ब्रह्मरूपिणम् ॥ ४६ ॥ भजन्त्याकाशमध्यस्थमीशरूपेण केचन । जगल्लयस्य हेतुं तं तेनैवोपक्रमोऽपि च ॥ ४७ ॥ विष्ण्वात्मकत्वेनास्तमये त्वपसंहारकेणेति विनिश्चित्य भजन्ति तम् । केचित्केचित्तु त्रिमूर्त्यात्मतया कालभेदः ॥ ४८ ॥ बिम्बं पालकपेतस्मादेव सृष्ट्यादिकारणम् । हिरण्यश्मश्रुं बिम्बस्थं सेवकाः ॥ ४९ ॥ केचिदन्ये तु तन्मण्डलेक्षणव्रतधारिणः । हिरण्यश्मश्रुकेशादियुक्तं तन्मण्डले स्थितम् ॥ २५० ॥ भजन्ति किंच तत्रैकदेशिनस्तु तदीक्षणम् । कृत्वा संपूज्य पाद्यार्घैरन्नमश्नन्ति नान्यथा ॥ ५१ ॥ केचित्तु तप्तलोहेन फाले भुजयुगे तथा । वक्षस्थले च चिह्नानि मण्डलस्य विधाय ते ॥ ५२ ॥ अनुक्षणं मनस्येवं ध्यायन्तः सन्त्युपासकाः । सुवैरेतैरुपास्योऽयमुक्तमन्त्रो यतीश्वर ॥ ५३ ॥ श्रुतयः सन्ति तन्मण्डलस्तुतिप्रतिपादिकाः । सर्ववेदनिरूप्य- ॥ ५४ ॥ वह्नयः पुरुषसूक्तेऽपि भानुरेव निरूपितः

---

१ ग. संयाता° । २ क. घ. °वान्देहसये । ३ क. °स्ति ब्रह्मादि° । घ. °स्ति द्विव्यादि° । ४ क. °दित्य इति । ५ घ. °तः । अस्य भोप° । ६ क. ग. भुजद्वये ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात्पुरुषं कृष्णपिङ्गलम् । इत्यादिरुद्रमन्त्रे पुरुषशब्दोऽपि तत्परः ॥ २५५ अरुणः सूर्य-
भानू च चन्द्रस्तपन एव च । मित्रो हिरण्यरेताश्च रव्यर्यमगभस्तयः ॥ ५६ ॥ विष्णुर्दि-
वाकरश्चेति संप्रोक्तादित्यमध्यगः । विष्णुरुक्तस्ततो विष्णुः स एवास्ति न चापरः ॥५७॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । इति कृष्णेन संप्रोक्तं किंच ब्रह्मादिका विभोः
॥ ५८ ॥ सूर्यादेव समुत्पन्नास्तस्मात्सर्वैर्मुमुक्षुभिः । अयमेव समाराध्य इति प्रोक्तः प्रो
गुरुः ॥ ५९ ॥ उवाच शृणु भो मूढ दिवाकर वचो मम । चन्द्रमा मनसो जातः सूर्य-
स्तस्य तु चक्षुषः ॥ २६० ॥ इति वेदेन जन्यत्वं यस्योक्तं तदनित्यता । तर्कसिद्धान्ततोऽ-
नित्ये ब्रह्मता कथमागता ॥ ६१ ॥ सूर्यनिष्ठपरब्रह्मबोधिकाः श्रुतयस्तु ताः ॥ जगदीशा-
ज्ञया सूर्यो भ्रमतीति श्रुतं स्फुटम् ॥ ६२ ॥ भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ ६३ ॥ न यत्र सूर्यो भाति न चन्द्र-
तारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभान्ति सर्वं यस्य भासा
सर्वमिदं विभाति ॥ ६४ ॥ इतिश्रुत्या परेशस्य भासा भानं प्रकीर्तितम् । सूर्यादेस्तु
तथा प्रोक्ता ज्योतिःशास्त्रेऽप्यनित्यता ॥ २६५ ॥ सृष्टिः सरोजासनवासरादौ विश्व-
राणां विलयस्तदन्ते । आद्यन्तकालः स च कल्प उक्तः कल्पद्वयं तद्दिवसं विरिञ्चेः
॥ ६६ ॥ एवंभूतस्य सूर्यस्य जनकत्वं त्वयेरितम् । ब्रह्मादिकस्य तस्मात्ते विद्या त्वत्यन्तमो-
मना ॥ ६७ ॥ तस्मादेकः परात्मैव सूर्यस्थो निगमैः स्तुतः । ततः पाखण्डचिह्नानि
विहायाऽऽचारतत्पराः ॥ ६८ ॥ शुद्धाद्वैतस्य बोधेन मुक्ता भवथ भो द्विजाः । इत्यु-
क्तास्ते गुरुं नत्वा सर्वे ताच्छिष्यतां गताः ॥ ६९ ॥ ततस्तत्राऽऽगतैर्विप्रैः सर्वैरे
यतीश्वरः । सभाजितो ययौ तस्माद्वायोराशां जयेच्छया ॥ २७० ॥ शिष्येषु [illegible]
हस्तेषु केचित्तं शङ्खपूरणैः । केचिद्वाद्यविशेषैश्च केचित्तालैः शुभोक्तिभिः ॥ ७१ ॥
केचिद्घण्टानिनादैश्च करतालैश्च केचन । केचिद्व्यजनवातैश्च पिच्छवातैश्च केचन ॥ ७२ ॥
समर्चयन्ति । संन्यस्तसुखदुःखं यतीश्वरम् । तत्तद्देशगता विप्रा दृष्ट्वा ताच्छिष्यतां ययुः
॥ ७३ ॥ एवं प्रतिदिनं गत्वा तत्र तत्राऽऽगतान्द्विजान् । कुमतस्थान्वरानन्दभाजः कुर्व-
शुभोक्तिभिः ॥ ७४ ॥ पुरं गणवरं प्राप गणपत्याश्रमं शुभम् । तत्र [illegible]
हि कौमुद्यां स्नात्वा विघ्नेशमव्ययम् ॥ २७५ ॥ संपूज्य यतिराट्तत्र मासमात्रं
सहानुगैः । पद्मपादमुखाः शिष्याः पञ्चपूजापरायणाः ॥ ७६ ॥ दिग्गजा इ-
विख्याताः परविद्याप्रभेदिनः । परपक्षक्षयोद्युक्तवचसः प्रौढवादिनः ॥ ७७ ॥ तदन्यं
शिरसाऽऽगृह्य शिष्योऽन्यः पुरजिद्बलः । नियतः सर्वशिष्याणां पाकादिषु [illegible]
कर्मसु ॥ ७८ ॥ समर्चयन्गुरुं भिक्षां दत्त्वा तस्मै परात्मने । पद्मपादस्तथाऽन्यैस्तं

१ घ. त्वयोदितं°। २ घ. परो ह्यात्मा सू° । ३ ग. घ. °गभे स्तु° । ४ ग. घ. °[illegible] ।
५ क. ग. °स्तत्र ग° । ६ ग. घ. झकोक्तिभिः । ७ घ. °राडत्र । ८ क. °क्षदरोषु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्याणां षड्भिस्तैर्युतम् ॥ ७९ ॥ अददाद्भोजनं नित्यं ब्रह्मार्पणमिति स्मरन्। सायंतने गुरुं शिष्यास्तमाचार्यशिरोमणिम् ॥ २८० ॥ द्विपङ्क्त्वा तं नमस्कृत्य दत्कातालकराः शिवम्। स्तुवन्तो नृत्यमाचक्रुः परेशं सच्चिदद्वयम् ॥ ८१ ॥ संपूर्णं ब्रह्माहं निखिलजनकं बुद्धिनिहितं चिदानन्दं सत्यं सकलजगदाधारममलम्। अगम्यं वागाद्यैः सुजितकरणैर्ज्ञातमनघैः सुनिर्वाणं लब्ध्वा यदिह न पुनः संसृतिरयः ॥ ८२ ॥ जल्पन्त एवं बहुधा सुनृत्यं कुर्वन्त आचार्यसमीपसंस्थाः। प्रीतिं गतास्तस्थुरुदारचित्ता हर्षेण युक्ता निखिला विनेयाः ॥ ८३ ॥ एवमानन्दसंतुष्टमाचार्यं सेवकानपि। तत्पत्तनद्विजाः प्रेक्ष्य किमेतदिति चाब्रुवन् ॥ ८४ ॥ न हि युष्मन्मतं सम्यगिव भाति हि पश्यताम्। आकाशवन्निरालम्बमद्वयं ब्रह्म केवलम् ॥ ८५ ॥ मनोवागादिवृत्तीनामगोचरतरं परम्। कथमज्ञोपबोधाय योग्यं स्यान्मतमीदृशम् ॥ ८६ ॥ तत्त्यक्त्वाऽस्मन्मतं सम्यगाचरन्तु शुभाप्तये। गाणपत्यमिति ख्यातं षड्भिर्भेदैः समन्वितम् ॥ ८७ ॥ समस्तदेवतात्वर्थैस्तदेव हि समीरितम्। तदाचरतमत्यन्तशान्तिदं मोक्षदं नृणाम् ॥ ८८ ॥ तुण्डैकदन्तचिह्नाभ्यां चिह्नितं शक्तिसंयुतम्। महागणपतिं यस्तु सदा ध्यायत्यनन्यधीः ॥ ८९ ॥ तन्मूलमन्त्रपठनपरः सन्ब्राह्मणोत्तमः। यो वर्तते स एवात्र मोक्षमार्गमवाप्ति ध्रुवम् ॥ ९० ॥ ध्येयो वल्लभया च चन्द्रकलयाऽऽश्लिष्टो ज्वलद्रूपया विश्वोत्पत्तिविपत्तिसंस्थितिकरोऽविघ्नो विशिष्टार्थदः। इत्येवं गणनायकः खलु जगत्सृष्ट्यादिकर्तेरितो युक्तं चैतदजादिकस्य विलयेऽप्यस्मिन्स्थिते हीश्वरे ॥ ९१ ॥ आसीद्गणपतिस्त्वेक इति श्रुत्या प्रकीर्तितः। ब्रह्मादिकगणेशोऽयं तस्मादखिलकारणम् ॥ ९२ ॥ तन्मायया विरचिता ब्रह्माद्या जगदीश्वराः। इत्युक्त आह यो मूढ गजास्यः कारणं पितुः। कथं भवेदतो ब्रह्म कारणं कथम् ॥ ९३ ॥ किंच रुद्रसुतत्वेन प्रसिद्धः कारणं पितुः। कथं भवेदतो ब्रह्म कारणं श्रुतिमानतः ॥ ९४ ॥ ब्रह्म वा इदमित्यादिवाक्यतस्त्वत्समीरितम्। वाक्यं ब्रह्मपरं नेयमित्युक्तो गिरिजासुतः ॥ २९५ ॥ उवाच पुनराचार्यं सत्यमेतद्वचोऽस्तु ते। तथाऽप्यङ्केन शून्योऽयं पुमान्देवस्य संनिधौ ॥ ९६ ॥ गन्तुं योग्यः कथं भूयात्स्वेष्टस्य यतिपुङ्गव। इत्युक्तः श्रीमदाचार्यः प्राह मूढमते शृणु ॥ ९७ ॥ ब्राह्मणस्य कुले जन्म शिखादेश्च विधारणम्। वेदोक्तकर्मनिष्ठत्वं विप्रत्वं समुदाहृतम् ॥ ९८ ॥ एतावता भवेद्विप्रः कृतकृत्यस्ततोऽस्य तु। पाखण्डमात्रमेवास्ति तत्तच्चिह्नस्य धारणम् ॥ ९९ ॥ वेदेन हि विरुद्धं यत्पुराणेषु च निन्दितम्। न तत्कार्यं प्रवृत्तेन मोक्षस्यार्थे विवेकिना ॥ ३०० ॥ किंच हेमनिभे चक्रे मूलाधारे चतुर्दले। गणेशोऽस्ति तथा चक्रे स्वाधिष्ठानसंज्ञके ॥ ३०१ ॥ षड्दले विद्रुमाकारे ब्रह्माऽस्ति मणिपूरके। द्विपञ्चदलसंयुक्ते नीलवर्णे स्थितो हरिः ॥ ३०२ ॥ द्विपड्भिस्तु दलैर्युक्तेऽनाहते पिङ्गले स्थितः। रुद्रो भूतपतिर्देवो

१ घ. °चार्य आह। २ ग. घ. पापण्ड°। ३ घ. तु।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवात्मा धूम्रवर्णके ॥ ३ ॥ विशुद्धे व्यष्टभिर्युक्ते दलैराज्ञाभिधे तथा । सहस्रदलसंयुते
चक्रे कर्पूरवर्णके ॥ ४ ॥ परमात्मा स्थितस्तस्मादिह एव व्यवस्थितः । गणेशस्तस्य चिह्ने
न प्रयोजनमण्वपि ॥ ३०५ ॥ तथाचाऽऽज्ञाभिधे चक्रे सर्वगोऽपि व्यवस्थितः । सर्वंसंके
यित्वा हि स्वयं साक्षी स निर्गुणः ॥ ६ ॥ सच्चिदानन्दरूपोऽसौ सर्वातीतोऽखिलेश्वरः ।
सम्यग्वेदेषु संप्रोक्तस्तं परेशं विचिन्तय ॥ ७ ॥ मुक्तो भविष्यसीत्युक्तः सगणः शिष्यतां
गतः । त्यक्तचिह्नो गुरोस्तस्य शंकरस्य महात्मनः ॥ ८ ॥ पञ्चपूजापरो नित्यं पञ्चद-
परायणः । गुरुशुश्रूषणासक्तः समभूद्गिरिजासुतः ॥ ९ ॥ आगत्यान्यो हरिद्रागणपति-
मतवादी गुरुं तं जगाद ब्रह्मादीनां गणानामधिपतिममरेशोपदेष्ट्रादिकानाम् । आद्यं
कवीनां सलिलजजपतिं ज्येष्ठराजं परेशं ध्यायेमेत्यादि वेदो वदति यतिपते सर्वदेवैः सु-
पूज्यम् ॥ ३१० ॥ तस्माद्देवादिभिः सर्वैः संपूज्योऽयं गणेश्वरः । ध्यानमस्य तु संप्रोक्तं
स्कान्दे सम्यग्यतीश्वर ॥ ११ ॥ पीताम्बरधरं देवं पीतयज्ञोपवीतिनम् । चतुर्भुजं त्रिनेत्रं
हरिद्रालसदाननम् ॥ १२ ॥ पाशाङ्कुशधरं देवं दण्डामयकराम्बुजम् । एवं यः पूजयेदेवं
स मुक्तो नात्र संशयः ॥ १३ ॥ जगत्कारणमेवायं ब्रह्माद्या अंशरूपिणः । अस्मादेव
समुत्पन्नास्तस्मात्सर्वपितामहम् ॥ १४ ॥ विघ्नेशानं भवन्तोऽपि भजन्तु जगदीश्वरम् ।
तुण्डाकारेण लोहेनैकदन्ताकारकेण च ॥ ३१५ ॥ संतप्तेनाङ्कितस्यैव मुक्तिरस्ति मुमुक्षवे ।
इत्युक्त आह सर्वज्ञो गुरुस्तं करुणानिधिः ॥ १६ ॥ अस्त्वेवं परमात्मैव जगत्कर्ता स्वे-
रितः । गणाधिपतिशब्देन सर्वनामा महेश्वरः ॥ १७ ॥ अंशांशिनोरभेदेन रुद्रपुत्रोऽपि च
स्वयम् । संभवत्येव सर्वात्मा सर्वविघ्ननिवारकः ॥ १८ ॥ उपासनीय एवायं निखिलैरपि
सर्वदः । किंच विघ्नेगणेशाद्याः पञ्च पूज्या मुमुक्षुभिः ॥ १९ ॥ किंतु तुण्डादिचिह्नस्य
धारणं संविरुध्यते । वेदेन च पुराणेन तस्माच्चिह्नं विहाय भोः ॥ ३२० ॥ पञ्चपूजादि-
संपन्नोऽद्वैतनिष्ठो विमोक्ष्यसे । एवमुक्तो गुरुं नत्वा द्विषड्धा तत्कटाक्षतः ॥२१॥ पवित्रतां
गतो ध्यायंस्तमेव परमं गुरुम् । पञ्चपूजादिकं कुर्वन्सुखमापादितं द्विजः ॥ २२ ॥ ततो
गणकुमाराख्ये निरस्तेऽन्यः समागतः । आचार्यमाह हेरम्बसुतस्तं परमं गुरुम्
॥ २३ ॥ महागणपतेस्त्वेकं हरिद्रागणपस्य च । उच्छिष्टगणपस्यैकं नवनीतगणे-
शितुः ॥ २४ ॥ मतमेकं तथा स्वर्णगणपस्यैकमीरितम् । संतानगणपस्यैकमागमे द्वैत-
संज्ञके ॥ ३२५ ॥ उच्छिष्टगणपस्याहमुपासनपरायणः । उच्छिष्टगणपः प्रोक्तो द्वैत-
मार्गावलम्बनात् ॥ २६ ॥ चतुर्भुजं त्रिनयनं पाशाङ्कुशगदामयम् । तुण्डाग्रवर्तिन-

१ 'दे त्वष्ट'। २ क. हि। ३ घ. विचिन्तयन्तं। ४ घ. विघ्नेश्वरं। ५ घ. सर्वेशं।
६ क. घ. 'वामाङ्गेनाव'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुत्रं गणनाथमहं भजे ॥ २७ ॥ महापीठनिषण्णं तं वामाङ्कपरिसंस्थितम् । देवीमालिङ्ग्य
चुम्बन्तं स्पृशंस्तुण्डेन वै भगम् ॥ २८ ॥ इति ध्यानं हि संप्रोक्तं तस्माद्युक्तं तु चिन्तनम् ।
गणेशयोरैक्यस्थं तयोस्तु यतिनायक ॥ २९ ॥ कुङ्कुमाङ्कितफालोऽहं भक्तो मार्गद्वये
स्थितः । इच्छाधीनानि कर्माणि कृत्वा देवं भजे सदा ॥ ३० ॥ एतत्समं मतं नास्ती-
त्येवं मत्वोऽतिहृष्टधीः । संपन्नोऽस्मि यते किंच धर्मोऽस्त्यस्मिन्मते नृणाम् ॥ ३१ ॥
सर्वेषामेक एवैकजातित्वात्तद्वदेव हि । रमंस्ता योषितस्तेषां तासां चैव वियोगतः ॥ ३२ ॥
संयोगतश्च नो दोषः कश्चिदस्ति यतीश्वर । अयमेव पतिर्ह्यस्या इति नास्ति नियामकः
॥ ३३ ॥ अन्योन्यसङ्गजानन्दप्राप्तिरेव विमुक्तता । आनन्दात्मा गणेशोऽयं तदंशाः पश्व-
ादयः ॥ ३४ ॥ अंशांशिनोरभेदस्तु वेदे सम्यक्प्रकीर्तितः । गणेभ्यो गणपेभ्यश्च नम
इत्यादिना यते ॥ ३५ ॥ रुद्रस्तु गणपात्मैव न त्वन्यो मुनिपुंगव । न कर्मणेति हि श्रुत्या
कर्म नो मोक्षकारणम् ॥ ३६ ॥ किंतु त्यागः सहिष्णुत्वमुखैर्युक्तः समीरितः । द्वंद्वता
पुण्यपापादावप्यस्ति हि मते मम ॥ ३७ ॥ अनुकूलमिदं तस्मादेतदेव मुमुक्षुभिः । सेव्य-
मित्युक्त आचार्यस्तमुवाच यतीश्वरः ॥ ३८ ॥ सुरां नैव पिबेन्नैव परमार्थं समाप्नुयात् ।
इत्यादिबहुभिर्वेदवचोभिर्निन्दितं मते ॥ ३९ ॥ गृह्यते यत्र तत्त्याज्यं दूरतः सुखकाङ्क्षिभिः ।
न कर्मणेत्यादिका तु श्रुतिस्तत्त्वविदो यतेः ॥ ४० ॥ सर्वपापविहीनस्य ब्रूते मोक्षं न
पापिनः । सुरापानपरस्याथ परदाररतस्य च ॥ ४१ ॥ सुरापानादिना मुक्तिं प्राप्स्याम इति
व्यसनम् । दुःखदं दौष्ट्यमेवास्ति त्यक्त्वा तस्मादिदं मतम् ॥ ४२ ॥ विप्राणां वाक्यत-
स्तेषां प्रसादेन विनिष्कृतिम् । विधाय मोक्षमार्गस्थाः पञ्चपूजापरायणाः ॥ ४३ ॥ पञ्चय-
ज्ञादिनिरता मूलाधारादिचक्रके । संध्यायन्तो गणेशादीनजपामन्त्रतत्पराः ॥ ४४ ॥ तद्देव-
ध्यानतो मुक्ता भविष्यथ न संशयः । एवमुक्तास्तथा चक्रुर्हेरम्बस्तुतपूर्वकाः ॥ ३४५ ॥
आगत्याथ गुरुं प्रोचुरवशिष्टास्त्रयोऽपि ते । स्वामिन्नेतज्जगत्सर्वं गणपत्यात्मना वयम् ॥ ४६ ॥
चिन्तयामो विमोक्षाय पूज्यं सर्वैः शुभार्थिभिः । तस्माद्रूपितवन्तो वै कथमेतन्मतत्रयम्
॥ ४७ ॥ भवन्त इति संप्रोक्तस्तानाह यतिपुंगवः । मूढा यूयं ततः शास्त्रतत्त्वं शृणुत
निश्चितम् ॥ ४८ ॥ पुरुषाधिष्ठितायाः प्रकृतेरादौ महानभूत् । ततोऽहंकार उत्पन्नस्त्रिगु-
णात्मा स एव हि ॥ ४९ ॥ रुद्रविष्ण्वादिरूपोऽभूत्तत्र रुद्रस्य सूनवः । गणेशश्च कुमारश्च
भैरवश्चेति विश्रुताः ॥ ५० ॥ स्वस्वाधिकारनिर्वाहे तत्पराः पूज्यतां गताः । तस्माद्विभिर्ग-
णेशाद्यास्तत्तच्चक्रेषु संस्थिताः ॥ ५१ ॥ चिन्तनीयाः प्रयत्नेन तदशक्तौ तु देवताः । पञ्च

१ ग. 'न्तं दिवा मो°। २ ग. तस्य युक्तमतो यते। जी°। ३ ग. °स्य ह्येतयोश्चिन्तनं तयोः।
॥ कु°। ४ ग. घ. 'तमालोऽ'। ५ घ. 'त्वा प्रसन्नधीः। ६ ग. घ. 'मत्तयो'। ७ घ. सुरार्थिभिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुरधाम स तत्र कारयित्वा परविद्याचरणानुसारि चित्रम् ॥
अपवार्य च तान्त्रिकानतानीद्भगवत्याः श्रुतिसंमतां सपर्याम् ॥५॥
निजपादसरोजसेवनार्थं विनयेन स्वयमागतानथाऽन्ध्रान् ॥
अनुगृह्य स वेंकटाचलेशं प्रणिपत्याऽऽप विदर्भराजधानीम् ॥६॥

---

पूज्या महेशाद्या इत्युक्तास्ते परं गुरुम् ॥ ९२ ॥ वीरभद्रादयो नत्वा त्यक्तचिह्नाः शुद्धे ष्यताम् । गतास्ते पद्मपूजादिरता अद्वैतवादिनः " ॥ ३९३ ॥ तदेतत्संक्षिप्योक्तं स्व इत्यादिना ॥ ४ ॥

तत्र काञ्च्यां परविद्याचरणानुसारि चित्रं देवमन्दिरं कारयित्वा तान्त्रिकांश्च विनिवार्य श्रुतिसंमतां भगवत्याः पूजां स श्रीशंकराचार्यो विस्तारितवानित्यर्थः । अत्रेदमनुसंधेयम् । " परमगुरुः श्रीशंकराचार्यो यत्र किल महादेवः स्वकीयपृथिवीमूर्त्याविर्भूतलिङ्गरूपेणै रेश इति प्रसिद्धया वर्तते तस्मिन्काञ्चीनगरे मासमात्रं स्थित्वा शंकरप्रतिष्ठापूर्वकं शिवकाञ्चीति पत्तनं निर्माय तत्प्रागाविर्भूतविष्णुं वरदराजं समाश्रित्य तत्र विष्णुकाञ्चीति पत्तनं निर्माय तत्सेवार्थं ब्राह्मणादीननेकभक्तजनान्संपाद्य तानपि शुद्धाद्वैतवृत्तीनिव सर्ववेदान्ततात्पर्यनिष्ठांश्चकार । ततस्तद्देशवासिनः सर्वे ताम्रपर्णीतटादागत्य परमगुरुं नत्वेदमूचुः । हे स्वामिन्नस्मिँल्लोके देहादिभेदस्य प्रत्यक्षत्वात्परलोकेऽपि तत्तत्कर्मणा तत्तदुपासनया च तत्तल्लोकप्राप्तिश्रवणाच्च भेद एव सत्यवद्भातीति पृष्ट आचार्य उवाच । भो द्विजाः परमार्थतत्त्वमविदित्वेदमुक्तं भवद्भिः । " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् " इत्यादिश्रुतिभिस्तत्त्वज्ञानाग्निदग्धपापपञ्जरस्य मुक्तिदशायां भेदाभावप्रतिपादनात् । " तत्सृष्ट्वा तदेवानुप्राविशत् " " अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इत्यादिश्रुतितात्पर्येण जगत्कर्तुर्ब्रह्मण एव जीवरूपेण जगदन्तः प्रवेशावगमाच्च । किंच ' कति देवाः ' इत्युपक्रम्य त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति देवानेकतामभिधायान्ते कतम एको देव इति प्राण इति स ब्रह्मेति ब्रह्मण एवानेकत्वं प्रदर्शितम् । ' बहु स्यां प्रजायेय ' इत्यादिश्रुत्या च भोक्तृभोग्यात्मकसकलस्यापि प्रपञ्चस्य परमात्मरूपता प्रतिपादिता । तस्मात्सर्वज्ञं नित्यशुद्धबुद्धमुक्तस्वभावं सकलविवर्ताधिष्ठानं ब्रह्म मुमुक्षुभिरनुसंधानीयं तस्माद्भवन्तोऽपि जीवपरमात्मभेदं देवताभेदं च विहाय शुद्धाद्वैतब्रह्मोपासनया कृतार्था भवथेति सम्यगुपदिष्टाः काञ्चीताम्रपर्णीदेशवासिनः शुद्धाद्वैतविद्याश्रिता बभूवुः " इति ॥ ५ ॥

एतदेव संग्रहेणाऽऽह—अथ निजपादसरोजसेवनार्थं विनयेन स्वयमागतानान्ध्रदेशीयाननुगृह्य स वेंकटाचलेशं प्रणिपत्य विदर्भराजधानीं प्राप ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिगम्य स भक्तिपूर्वमस्यां कृतपूजः क्रथकैशिकेश्वरेण ।
निजशिष्यनिरस्तदुष्टबुद्धीन्व्यदधाद्भैरवतन्त्रसावलम्बान् ॥ ७ ॥
अभिवाद्य विदर्भराडवादीदथ कर्णाटवसुंधरामियासुम् ।
भगवन्बहुभिः कपालिजालैः स हि देशो भवतामगम्यरूपः ॥ ८ ॥
न हि ते भगवद्यशः सहन्ते निहितेर्ष्याः श्रुतिषु ब्रवीम्यतोऽहम् ॥
अहिते जगतां समुत्सहन्ते महितेषु प्रतिपक्षतां वहन्ते ॥ ९ ॥
इतिवादिनि भूमिपे सुधन्वा यतिराजं निजगावधिज्यधन्वा ।
मयि तिष्ठति किं भयं परेभ्यस्तव भक्ते यतिनाथ पामरेभ्यः ॥ १० ॥
अथ तीर्थकराग्रणीः प्रतस्थे किल कापालिकजालकं विजेतुम् ॥
निशमय्य तमागतं समागात्क्रकचो नाम कपालिदेशिकाग्र्यः ॥ ११ ॥
पितृकाननभस्मनाऽनुलिप्तः करसंप्राप्तकरोटिरात्तशूलः ।
सहितो बहुभिः स्वतुल्यवेषैः स इति स्माऽऽह महामनाः सगर्वः ॥
भसितं धृतमित्यदस्तु युक्तं शुचि संत्यज्य शिरःकपालमेतत् ।
वहथाशुचि खर्परं किमर्थं न कथंकारमुपास्यते कपाली ॥ १२ ॥

[1]क्रथ[2]कैशिकेश्वरेण भक्तिपूर्वमभिगम्यास्यां विदर्भराजधान्यां कृतपूजः स भैरवतन्त्रेण सावलम्बानवलम्बसहितान्निजशिष्यैर्निरस्ता दुष्टबुद्धिर्येषां तथाभूतान्व्यदधात् ॥ ७ ॥

अथ कर्णाटभूमिं गन्तुमिच्छुमभिवाद्य विदर्भराडुक्तवान् । हे भगवन्स हि देशो बहुभिः कापालिकैर्भवतामगम्यरूपः ॥ ८ ॥

यतस्ते कापालिका भगवद्यशो न सहन्ते । यतश्च श्रुतिषु निहिता स्थापितेर्ष्या यैस्ते यतश्च जगतामहिते समुत्सहन्ते सम्यगुत्साहयुक्ता भवन्ति । यतश्च महत्सु प्रतिपक्षतामुद्वहन्ते स्वीकुर्वन्त्यत एवमहं ब्रवीमि ॥ ९ ॥

इत्थेवं विदर्भाधिपे [3]वदति सत्यधिज्यधन्वा सुधन्वा यतिराजं बभाषे हे यतिनाथ मयि तव भक्ते तिष्ठति पामरेभ्यः परेभ्यस्तव किमपि भयं नास्ति ॥ १० ॥ [ परेभ्यः शत्रुभ्यः ] ॥ १० ॥

अथ शास्त्रकराग्रणीः कापालिकजालकं विजेतुं स उज्जयन्याख्यपुरं प्रतस्थे ॥ ११ ॥

श्मशानभस्मना लिप्ताङ्गः करसंप्राप्तमनुष्यशिरःकपालः ॥ १२ ॥

[4]भस्म धृतमितीदं तु युक्तं परं तु शुचि शिरःकपालमेतत्परित्यज्यापवित्रं मृन्मयखर्परं किमर्थं वहथ । कथंकारं कथं कपाली भैरवो भवद्भिर्नोपास्यते ॥ १३ ॥

१ क. ख. °थकैशि° । २ क. ख. °थकैशि° । ३ ख. वादिनि । ४ ख. °पालं येन ॥१२॥ य° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नरशीर्षकुशेशयैरलब्ध्वा रुधिराक्तैर्मधुना च भैरवार्चाम्।
उमया समया सरोरुहाक्ष्या कथमाश्लिष्टवपुर्मुदं प्रयायात् ॥१४॥
इति जल्पति भैरवागमानां हृदयं कापुरुषेति तं विनिन्द्य।
निरवासयदात्मवित्समाजात्पुरुषैः स्वैरधिकारिभिः सुधन्वा ॥१५॥
भृकुटीकुटिलाननश्चलोष्ठः सितमुद्यम्य परश्वधं स मूर्खः।
भवतां न शिरांसि चेद्विभिन्द्यां क्रकचो नाहमिति ब्रुवन्नयासीत्॥
रुपितानि कपालिनां कुलानि प्रलयाम्भोधरभीकरारवाणि।
अमुना प्रहितान्यतिप्रसंख्यान्यभियातानि समुद्यतायुधानि ॥१७॥
अथ विप्रकुलं भयाकुलं तद्द्रुतमालोक्य महारथः सुधन्वा।
कुपितः कवची रथी निषङ्गी धनुरादाय ययौ शरान्विमुञ्चन् ॥१८॥
अवनीभृति योधयत्यरींस्तांस्त्वरयैकत्र ततोऽन्यतो नियुक्ताः॥
क्रकचेन वधाय भूसुराणां द्रुतमासेदुरुदायुधाः सहस्रम् ॥ १९॥
अवलोक्य कपालिसंघमाराच्छमनानीकनिकाशमापतन्तम्॥
व्यथिताः प्रतिपेदिरे शरण्यं शरणं शंकरयोगिनं द्विजेन्द्राः ॥२०॥

रुधिराक्तैर्नरशिरोलक्षणकमलैर्मद्येन च भैरवार्चामलब्ध्वा कपाली भैरवः स्वनक्ष
कमलाक्ष्योमयाऽऽश्लिष्टवपुर्मुदं कथं प्राप्नुयात् ॥ १४ ॥ [ नरेति । नर इति शेषः]॥
इत्येवं क्रकचे भैरवागमानां हृदयं जल्पति सति हे कुत्सितपुरुषेति तं विनिन्द्य स्वैर
धिकारिभिः सुधन्वाऽऽत्मविदां समाजाद्बहिश्चकार ॥ १५ ॥
सितं परश्वधमुद्यम्य भवतां शिरांसि न विभिन्द्यां चेत्तर्हि क्रकचो नाहमिति ब्रुवन्
सीत् ॥ १६ ॥
प्रलयाम्भोधरवद्भयंकरः शब्दो येषाममुना क्रकचेन प्रेषितान्यगणितानि कापालि
कुलानि कुपितानि समुद्यतायुधान्यभियातानि ॥ १७ ॥
अथ तेषामभिगमनानन्तरं तद्विप्रकुलं भयेन व्याकुलमालोक्य झटिति कुपितः सुध
धनुरादाय बाणान्विमुञ्चन्ययौ ॥ १८ ॥
त्वरया तानरीनेकत्र भूमिपे सुधन्वनि योधयति सत्यन्यतो ब्राह्मणानां वधाय क्रकचे
नियुक्ताः सहस्रसंख्या उदायुधा द्रुतमासेदुराययुः ॥ १९ ॥
इतिसैन्यसमीपमापतन्तं कपालिसंघं दूरादवलोक्य व्यथिता भूसुरेन्द्राः शरणं

१ क. घ. °रक्त्वा । २ घ. °मायान्तं ।

असितोमरपट्टिशत्रिशूलैः प्रजिघांसून्भृशमुज्झिताट्टहासान् ॥
यतिराड्स चकार भस्मसात्तान्निजहुंकारभुवाऽग्निना क्षणेन ॥२१॥
नृपतिश्च शरैः सुवर्णपुङ्खैर्विनिकृत्तैः प्रतिपक्षवक्त्रपद्मैः ॥
रणरङ्गभुवं सहस्रसंघैः समलंकृत्य मुदाऽगमन्मुनीन्द्रम् ॥ २२ ॥
तदनु क्रकचो हतान्स्वकीयानरुजांश्च द्विजपुंगवानुदीक्ष्य ॥
अतिमात्रविदूयमानचेता यतिराजस्य समीपमाप भूयः ॥ २३ ॥
कुमताश्रय पश्य मे प्रभावं फलमाप्स्यस्यधुनैव कर्मणोऽस्य ॥
इति हस्ततले दधत्कपालं क्षणमध्यायदसौ निमील्य नेत्रे ॥ २४ ॥
सुरया परिपूरितं कपालं झटिति ध्यायति भैरवागमज्ञे ॥
स निपीय तदर्धमर्धमस्या निदधार स्मरति स्म भैरवं च ॥ २५ ॥
अथ मर्त्यशिरःकपालमाली ज्वलनज्वालजटाछटस्त्रिशूली ॥
विकटप्रकटाट्टहासशाली पुरतः प्रादुरभून्महाकपाली ॥ २६ ॥
तव भक्तजनद्रुहं दृशा संजहि देवेति कपालिना नियुक्तः ॥
कथमात्मनि मेऽपराध्यसीति क्रकचस्यैव शिरो जहार रुष्टः॥२७॥

---

शरणदोग्यं श्रीशंकरयोगिनं शरणं प्रपेदिरे ॥ २० ॥ [ शमनेति । यमसैन्यसदृश-मित्यर्थः ] ॥ २० ॥

निजहुंकारप्रसूतेन वह्निना ॥ २१ ॥

नृपतिश्च सुवर्णपुङ्खैः शरैर्विच्छिन्नैः प्रतिपक्षिणां मुखपद्मैः सहस्रसंघै रणभूमिं समलं-कृत्य मुदा मुनीन्द्रमगमत् ॥ २२ ॥

अतिमात्रमत्यन्तं विदूयमानं पीडयमानं चित्तं यस्य सः ॥ २३ ॥

असौ क्रकचो नेत्रे निमील्य क्षणमात्रं ध्यानं कृतवान् ॥ २४ ॥ [ कुमतेति । इति जल्पन्नित्यार्थिकम् ] ॥ २४ ॥

भैरवागमज्ञे क्रकचे ध्यायति सति सुरया मद्येन कपालं परिपूरितं परिपूर्णमभवत्तस्याः सुराया अर्धं स क्रकचः सम्यक्पीत्वा तस्याः सुराया अर्धं निदधार स्थापयामास च पुन-र्भैरवं स्मरति स्म ॥ २५ ॥

अथ भैरवस्वरूपस्मरणानन्तरं वह्निज्वालासदृशानां जटानां छटा समूहो यस्य स महा-कपाली भैरवः ॥ २६ ॥

हे देव तव भक्तजनद्रुहं दृष्ट्या संजहीति कपालिना क्रकचेन नियुक्तो भैरवस्त-

---

१ क. 'मभूत'।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**यतिनामृषभेण संस्तुतः सन्नयमन्तर्धिमवाप देववर्यः ॥**
**अखिलेऽपि खिले कुले खलानाममुमानर्चुरलं द्विजाः प्रहृष्टाः ॥२८॥**

---

त्वविदो ममाऽऽत्मत्वान्मदवतारत्वाद्वा कथं ममाऽऽत्मनि श्रीशंकरेऽपराध्यसीति स्वहस्तेन शिरो जहार ॥ २७ ॥

खलानामखिलेऽपि कुले खिल उच्छिन्ने सति प्रहृष्टा द्विजा अमुं श्रीशंकरमानर्चुः । अत्रेदमवधेयम् । " संहारभैरवं नत्वा समासीनः किलाब्रवीत् । स्वामिन्वेदेषु शास्त्रेषु पुराणेषु च कर्म यत् ॥ १ ॥ प्रतिपादितमस्तीह तत्कर्तव्यं हि धर्मतः । विप्राणां कर्मणा धर्मः साध्यः स्यादिति मे मतम् ॥ २ ॥ धर्मेण सर्वपापौघो नाशं याति शुचिस्मित । पापसंघे तथा नष्टे मनःशुद्धिः प्रजायते ॥ ३ ॥ शुद्धे मनसि सर्वात्मसाक्षात्कारो भवत्फलम् । एवं सदसि सर्वेषां ब्राह्मणानां मयेरितः ॥ ४ ॥ त्वद्भक्तः सहपाऽऽपादि दुरुक्तिपरम्पराम् । एतन्नोचितमित्युग्रो मच्छिष्यैस्ताडितः स तु ॥ ५ ॥ अकरोदायतं त्वां तु मन्त्रबीजपरायणम् । इतः परं त्वमेवैतत्सत्यासत्यं विवेचय ॥ ६ ॥ इत्युक्तो भैरवः प्राह विप्रदण्डार्थमागतः । शंकरस्त्वं सदा पूज्यः सर्ववेदपदार्थभाक् ॥ ७ ॥ भवदुक्तं हि यत्कर्म मयाऽपि च कृतं हि तत् । तेषां कापालिकानां तु ब्राह्मण्याचारतां कुरु ॥ ८ ॥ न धर्मविकले तु कलौ प्राप्ते तेषां वृत्तिर्यथेप्सिता । बभूव मन्त्रबद्धोऽहं प्रत्यक्षोऽस्मि न [illegible] ॥ ९ ॥ इत्युक्त्वाऽन्तर्दधे देवः कापालिकमतानुगाः । तद्वाक्यश्रवणाद्भीताः परिव्राट्कुलशेखरम् ॥ १० ॥ नत्वा द्वादशधा सर्वे बटुकाद्याः सुविस्मिताः । स्वामिन्मूढा वयं दया[illegible]त्पालयास्मांश्च सादरम् ॥ ११ ॥ एवमालापिनो दृष्ट्वा करुणापूर्णविग्रहः । आज्ञापयद्यतिः शिष्यांस्तेषां विशोधने ॥ १२ ॥ पद्मपादमुखाः शिष्याश्चक्रुस्तान्ब्राह्मणान्यथा । [illegible] प्रातःस्नानरतान्नित्यं संध्याकर्मदृढव्रतान् ॥ १३ ॥ पञ्चपूजापञ्चयज्ञपरान्निर्भीत[illegible]नसान् । [illegible] गुरुं समाश्रित्य तेऽपि[3] सच्छिष्यतां गताः ॥ १४ ॥ तत्राऽऽगत्य ततः कश्चित्कापालिको दारुणाकृतिः । प्राहेदं न्यूनता चेत्कापालिकानां मते तदा ॥ १५ ॥ फलं किमपि नास्त्य[illegible] [illegible] विद्यते बटुकादयः । बभूवुः स्वमतभ्रष्टा यत्तु तत्राऽस्ति दूषणम् ॥ १६ ॥ महद्ब्राह्मण[illegible] [illegible]तिस्त्वं न मे जात्या प्रयोजनम् । किंच देहस्य सर्वस्य भौतिकत्वान्न कस्यचित् ॥ १७ ॥ [illegible] वक्तुं हि शक्यते जातिस्तस्मात्संकल्पिता त्वियम् । जातिर्नातः प्रमाणं तावत्तु [illegible] मतम् ॥ १८ ॥ स्त्रीजातिरेका नरजातिरन्या तत्रापि श्रेष्ठत्वमुपागताऽऽद्या । [illegible] दृश्यमानन्द उपैति यस्याः संयोगतोऽतो न विचार इष्टः ॥ १९ ॥ गम्या हीयं [illegible] दोषभावाद[illegible] गम्येयमस्ति गच्छेन्नासावन्यभार्यामितीदम् । वाक्यं नाङ्गीकुर्महे [illegible]

---

१ घ. तद्वा । २ घ. °रचयना° । ३ घ. °पि तच्छिष्य° । ४ घ. °किं या दृ° । ५ घ. °कल्पिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्रीयतामाव्रजन्ति ॥ २० ॥ आनन्दार्थं चर्मणश्चर्मयोगं कुर्वञ्जीवः प्राप्नुयात्कं ह्यनर्थम्। जीव यासौ मांस एवास्ति तृप्तिः सर्वोत्कृष्टाऽऽनन्दतो दर्शिताऽतः ॥ २१ ॥ आनन्दो धो व्यक्तिमायाति सङ्गात्तद्रूपोऽसौ भैरवो देहपाते। तस्य प्राप्तिर्मोक्ष इत्येव तत्त्वमित्युक्तः श्रीशंकराचार्य आह ॥ २२ ॥ उक्तं भोः कापालिकेदं सुसम्यक्सत्यं वाच्यं कस्य पुत्री त्वदीया। मातेत्युक्तः प्राह कापालिकोऽसौ स्वाभिन्माता दीक्षितस्यास्ति पुत्री ॥ २३ ॥ दीक्षितत्वमिदमागतं कुतस्तत्पितुः स तु जगाद भो यते। तालमुख्यतरुगां सुरामसावाहरन्नु रसे विशेषतः ॥ २४ ॥ ज्ञानवानपि न च स्वयं स तां पातुमिच्छति परं तु विक्रये। शीलवानत इमं सदा जनो दीक्षितं वदति तस्य पुत्रिका ॥ २५ ॥ मातृतामुपगता ममाऽऽस्वदेहांशेन सुखसागरे जनान्। आगतान्खलु नरान्सदाऽकरोत्संप्लुतान्मुसुखलब्धये यते ॥ २६ ॥ उन्मत्तभैरवसमाख्यमिमं विबोध तस्याः सुतं मम पिताऽपि सुराकरोऽभूत्। तत्संनिधौ स्थितिमपीह सुरा लभन्ते नो मद्यगन्धविमुखा हि पलायितास्ते ॥ २७ ॥ तस्मादेवं सत्कुलेऽहं प्रसूतः सम्यक्पूज्योऽहं भवद्भिः सुभक्त्या। इत्युक्तोऽसौ प्राह कापालिक त्वं गच्छैतस्मात्स्वेच्छया संचराऽऽशु ॥ २८ ॥ ब्राह्मणान्ननु सुदुष्टमतस्यानेव दण्डयितुमत्र समागाम्। नेतरानत इतोऽयमभाष्यो दूर आशु करणीय इतीत्थम् ॥ २९ ॥ प्रोदिता यतिवरेण तदागृह्याऽऽश्रवाः सुवचनं शिरसा ते। प्रात्यजन्खलममुं सुविदूरं शंकरं तत एत्य स दृष्ट्वा ॥ ३० ॥ चार्वाक इत्थं ह्यकरोद्विचारं मूर्खैर्जनैर्व्याप्तमिदं समस्तम्। देहाद्यतीतात्मविबोधिभिस्तत्सङ्गाद्गता मूढतमत्वमन्ये ॥ ३१ ॥ दुष्टा मतिर्नो भविताऽपि तस्मात्तथाऽपि तेषामयमग्रचारी। संन्यासवानस्ति तु कश्चिदेष विवेकयुक्तो यदि चेत्तदग्रे ॥ ३२ ॥ स्थास्यामि नो चेदहमेमि शीघ्रमेवं विचार्यास्य सभां प्रविश्य। उवाच तत्त्वं विदितं तवास्ति तदा विमुक्तेर्वद लक्षणं त्वम् ॥ ३३ ॥ आदौ विवेको मम बुध्यतामथं क्षयात्मदेहस्य तदादिरूपिणः। जीवस्य मोक्षो विलयो न चेतरस्तस्याऽऽगमं मूढधियो भणन्ति भोः ॥ ३४ ॥ लयं गतानां सरितां समुद्रे यथागमः स्यान्मरणं गतानाम्। स तृप्तिस्त्वनेनेति मृतिः स्यादतो मोक्ष इयं मृतिर्हि श्राद्धादिकं कर्म तु कुर्वते ये ॥ ३५ ॥ गतानां तेषां विवेकः किमु वाचनीयः। किंच प्रजल्पन्ति परोऽस्ति लोकः स्वर्गस्तथाऽन्यो नरकोऽतिघोरः ॥ ३६ ॥ पुण्येन पापेन च यान्ति तत्र क्षयात्तयोर्मर्त्यमिमं विशन्ति। स्वर्गो भोक्ता कथ्यतेऽसौ तेषां मतं तत्सुतराममानं यतस्त्विहैवास्त्युभयानुभूतिः ॥ ३७ ॥ प्रत्यक्षेणैवानुभूतिं सुखस्य यो वा भुङ्क्ते क्लेशमेष द्वितीयः। तस्माद्युक्ता कल्पना नो परोक्षा को वा जीवस्य भेदेऽपि मताऽस्ति ॥ ३८ ॥ देहेन्द्रियेषु भूतेषु नष्टेषु परलोकगः।

---

१ घ. °त्कं त्वन°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वटाकाशवदस्य तु ॥ ३९ ॥ गमनं रूपहीनत्वान्नैव संभवति क्वचित् । तस्मादस्मन्मतं
सम्यगित्युक्तः प्राह शंकरः ॥ ४० ॥ श्रुतिबाह्यमिदं मतं यतोऽतो न च सम्यक्सुधीमतां
मतं ततस्त्वम् । स तु देहमुखाद्विभिन्न आत्मा परमात्मा परिपठ्यते विमुक्तः ॥ ४१ ॥
विबद्धः परात्माऽप्रबोधाद्विमुक्तः परिज्ञानतो देहपाताद्विमुक्तिः । स्वदीयेयमुक्तिर्भ्रमादेव सं
श्रुतिर्ज्ञानमात्राद्धि मुक्तिं जगाद ॥ ४२ ॥ ज्ञानाग्निदग्धकर्माणो यान्ति ब्रह्म सनातनम् ।
इत्याद्याऽस्ति श्रुतिः साक्षात्तद्वाक्यं न प्रमेति चेत् ॥ ४३ ॥ भवद्वाक्यं कथं मानं कुलिशं
किल वह्निना । स्थूले दग्धेऽपि देहेऽस्मिँल्लिङ्गयुक्तो व्रजत्यमुम् ॥ ४४ ॥ ज्योतिष्टोमा
दिकं वाक्यं मानमत्र दृढं स्मृतम् । जलौकाजन्तुतुल्योऽयं जीवः प्रोक्तस्तथा श्रुतौ ॥ ४५ ॥
देहाद्देहान्तरं याति परलोकं स गच्छति । श्राद्धादिकर्म कर्तव्यं तस्य पुत्रादिना खलु ॥ ४६ ॥
तस्प्रेतत्वाविमुक्त्यर्थं पुण्यलोकस्य चाऽऽप्तये । गयादौ पिण्डदानं च कर्तव्यं तस्य मुक्तये
॥ ४७ ॥ इत्यर्थस्तु पुराणादौ बहुधा संप्रदर्शितः । तस्मात्त्वत्सद्देशाङ्गं स लिङ्गं स्वात्मरूप
गतः ॥ ४८ ॥ परत्र पक्षिवद्याति सिद्धान्तोऽयमुदीरितः । मूढ चार्वाक तस्मात्त्वमितस्तूर्णं
व्रजाधुना ॥ ४९ ॥ इत्युक्तो वैपभापादि त्यक्त्वा गुरुपदद्वयम् । नत्वा तत्पुस्तकभार
भरणे ह्युद्यतोऽभवत् ॥ ५० ॥ ततः सौगतः शंकरं पीनकायः प्रणम्याऽऽह शंका मे
मूढभावात् । सदा कर्मशीला यतो भौतिकस्य विशुद्धिर्न च स्नानदानादिनाऽस्ति ॥ ५१ ॥
सदा निर्मलो देहपाताद्विमुक्तस्तु जीवः पुनर्जायतेऽसावृणेन । प्रजल्पन्ति मूर्खा धनं दद्
देहाद्यदृष्टेन लभ्यं ततो नास्ति भीतिः ॥ ५२ ॥ देहान्ते वा ऋणाभावादृणं कृत्वा घृतं
पिबेत् । इति वाक्यस्य मानत्वाद्देहपुष्टिः सदैव हि ॥ ५३ ॥ कर्तव्या बुद्धियुक्तेन तत्कार्यं
तत्र तत्र च । सर्वभक्षणशीलस्य सुखस्याऽऽवाप्तिराप्तितः ॥ ५४ ॥ विमोक्षस्येति संप्रोक्तः
शंकरः प्राह सौगतम् । वृथा ते जल्पनं यस्मात्परलोकगमादिकम् ॥ ५५ ॥ श्रुतिस्मृती
तिहासादौ प्रोक्तं भोगाय कर्मणः । तस्माद्दणादिकं कर्तुः पुनर्जन्म सुनिश्चितम् ॥ ५६ ॥
तथाप्याज्ञानबुद्धिं त्वं पापदिग्धां विहाय वै । सन्मार्गस्थो भवेदानीमित्युक्तः पुनराह सः ।
॥ ५७ ॥ सुगताख्यो मुनिः सर्वां भुवं दृष्ट्वा सुविस्मितः । विचार्य जगतः तत्त्वं धर्मो
पासनतत्परः ॥ ५८ ॥ काले मदुपदेशस्य करुणाविष्टमानसः । इदमाह स धर्मोऽस्ति परः
प्राण्यविहिंसनम् ॥ ५९ ॥ तथाविधेन धर्मेण कपालस्य निवर्तनात् । मुक्तो भविष्यसीति
कस्तदारभ्याहमप्ययम् ॥ ६० ॥ तत्पादयुगलध्यानी शिरसाऽऽगृह्य तद्वचः । दयापरोऽस्मि
सर्वेषु प्राणिजातेषु सर्वदा ॥ ६१ ॥ यस्माद्धर्मोऽतो न चान्योऽस्ति सारस्तस्माद्धर्मं स्थापनीयं त्वं मन्यसे
मे । सर्वैरङ्गीकार्यमित्येवमुक्तो भूयः प्राहाऽऽचार्य इत्थं महात्मा ॥ ६२ ॥

---

१ ग. घ. °न्नाद्विमु° । २ क. °वृशांश स । ३ घ. °मुराहतः । ४ घ. वेशभा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुष्टसौगत कथं धर्मोऽस्त्यहिंसापरो यागीयस्य हि हिंसनस्य निगमे धर्मत्वमुक्तं स्फुटम्। अग्निष्टोममुखे क्रतौ खलु पशोः स्वर्गप्रदं हिंसनं श्रुत्याचाररतैरुपेयमपरे पाखण्डिनो विस्फुटम्॥ ६३॥ वेदनिन्दापरा ये तु तदाचारविवर्जिताः। ते सर्वे नरकं यान्ति यद्यपि ब्रह्मवर्चसः॥ ६४॥ इत्येवं मनुनोक्तत्वात्तदाचाररताः किल। पच्यन्ते नरके घोरे यावद्ब्रह्मलयो भवेत्॥ ६५॥ तस्माद्विप्रादिवर्णानां वेदादिषु निरूपितः। आचारः परमं मानं यस्य तन्नास्ति सोऽधमः॥ ६६॥ इत्युक्तोऽसौ सौगतो मानशून्यो नत्वाऽऽचार्यं पद्मपादादिकानाम्। तच्छिष्याणां पादुकावाहकोऽभूत्तेषामुच्छिष्टादनेनातिपुष्टः॥ ६७॥ कौपीनमात्रधारी तु कश्चित्क्षपणकः स्मृतः। स एकस्मिन्करे धृत्वा गोलयन्त्रं द्वितीयके॥ ६८॥ तुरीयन्त्रं समादाय समागत्याऽऽह शंकरम्। स्वामिञ्शृणु विचित्रं मे मतं परमशोभनम्॥ ६९॥ पूर्णसमयनामाऽहं सूर्ये कालप्रवर्तकम्। बद्ध्वा त्वाभ्यां सुयन्त्राभ्यां समयज्ञानतः शुभम्॥ ७०॥ अशुभं च त्रिलोक्यां यल्लभ्यं तद्वच्मि संस्फुटम्। किंच कालः परो देवो मत्पक्षस्य विचालने॥ ७१॥ परेशोऽपि समर्थो नेत्युक्तस्तं प्राह शंकरः। सम्यगुक्तं त्वया त्वं यत्कालवित्तं च वेद्म्यहम्॥ ७२॥ तस्मान्मदाश्रयस्तिष्ठ परीक्षाकाल आगते। त्वां पृच्छामीति संप्रोक्तस्तथैवाङ्गी चकार सः॥ ७३॥ कौपीनमात्रसंधारी जैनस्तु तत आगतः। मलेन दिग्धसर्वाङ्गः सदाऽर्हन्नम इत्यसौ॥ ७४॥ उच्चरन्नसकृच्छिष्यैः शून्याङ्कः शून्यपुण्ड्रकः। बिन्दुपुण्ड्रसमेतश्च शिष्यैः सर्वभयंकरः॥ ७५॥ पिशाचवत्समागत्य प्राह श्रीशंकरं गुरुम्। जिनो देवोऽस्ति सर्वेषां मुक्तिदः प्राणिनां हृदि॥ ७६॥ जीवात्मना स्थितः सोऽतिज्ञानमात्रेण सर्वदा। मुक्तत्वात्तस्य देहस्य पातात्तु समनन्तरम्॥ ७७॥ जीवः शुद्धः सदैवास्ति मलपिण्डस्तु देहकः। स्नानादिकर्मणा नैव शुद्धिं याति कदाचन॥ ७८॥ तस्मात्स्नानादिकं नैव प्रकर्तव्यं वृथा यतः। इत्युक्तोऽसौ जगादेदं देवं मां जैनदुर्मते॥ ७९॥ जीवस्य देहत्रितयं हि विद्यते स्थूलश्च सूक्ष्मश्च तथैव कारणम्। तेषां क्रमाज्ज्ञात्तु लयो भवेद्यदा स्यात्सच्चिदानन्दवपुस्तदा स्वयम्॥ ८०॥ भिन्नोऽस्मीत्यादिति धीरविद्या बद्धस्तयाऽभेदधिया विमुक्तः। एवं विमोक्षस्य सुदुर्लभस्य देहस्य पातास समाप्तिसंभवः॥ ८१॥ एवं श्रुत्वा शिष्ययुक्तः स जैनो मापवेषाद्यैर्विमुक्तो ... ॥ ८२॥ बौद्धगुरूणाम्। नित्यं धान्याकर्षणे संप्रयुक्तः पश्चात्स्याद्यैरपि जातो वणिग्वै॥ ८२॥ ... सर्वोऽस्तत्सं शृङ्खलाख्य एत्य प्रोवाच बोधस्तव भो निरर्थः। नरस्य शृङ्गेण समो ह्यभेदः सर्वोत्तमः सन्निमतः प्रवृत्तः॥ ८३॥ दृष्टं फलं त्वं परिहाय दूरमदृष्टमाकाङ्क्षसि दुष्टशत्रुः। निर्जीवत्वाच्चाप्यतथापि ते नैव फलं परोक्षे शून्यं परोक्षं न फलाय कल्प्यम्॥ ८४॥

---

१ म. "र्णसङ्केतमा"।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पार्थ मतं त एकोऽप्यात्मा चेतनो मे मते तु । भूत्वाऽनेकः प्रेरको ह्यमुत्तानां [illegible]
मुक्तो द्वैतशून्यः सुखात्मा ॥ ८५ ॥ कर्ता भोक्ताऽहं परानन्दरूपो मन्वानः [illegible]
स्यास्ति यावत् । तावत्क्रीडन्नेषु देहेषु पश्चाद्देहं त्यक्त्वा मुक्त इत्युक्त आह ॥ ८६ ॥ [illegible]
शौचपरो यस्तु देवतातिथिपूजनं । स याति ब्रह्मणो लोकं यावदिन्द्राश्चतुर्दश ॥ ८७ ॥
अग्निष्टोमं देवताप्रीतिदं चेत्कुर्यादस्मादिन्द्रलोकं स याति । सत्याख्यं सर्वपौण्डरीका[illegible]
तत्तद्देवोपासकास्तं तमेव ॥ ८८ ॥ यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ८९ ॥ इत्यादिवचनादस्य परलोक[illegible]
कम् । सिद्धं तस्मान्न देहस्य पतमात्राद्विमुच्यते ॥ ९० ॥ सर्वभूतेषु चाऽऽत्मानं स[illegible]
भूतानि चाऽऽत्मनि । संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ ९१ ॥ इत्या[illegible]
ज्ञानेन विना मोक्षो न लभ्यते । इत्युक्तमत आत्मानं परं ज्ञात्वा विमुच्यते ॥ ९२ ॥
कल्पितां जीवतां हित्वा सर्वानर्थप्रदायिनीम् । सच्चिदानन्दरूपेण मुक्तिरुक्ता सदा [illegible]
॥ ९३ ॥ तस्मात्त्वं मूढतां त्यक्त्वा भव स्वस्थ इतीरितः । परं गुरुं नमस्कृत्य तदा[illegible]
स्तवतत्परः ॥ ९४ ॥ बन्दिमागधसूतानां वेषधारी बभूव ह । *तस्माच्छिष्ययुतः [illegible]
प्रोद्यद्दिनकरप्रभः ॥ ९५ ॥ अनुमल्लपुरं तत्र दिनानामेकविंशतिम् । स्थित्वा तत्र [illegible]
न्वीक्ष्य तानुवाच परो गुरुः ॥ ९६ ॥ प्रभातमुखकाले स्वं कृत्यं वदत भो द्विजाः । [illegible]
मुक्ताः नमस्कृत्य प्रोचुस्ते पुरवासिनः ॥ ९७ ॥ मल्लासुरहरः स्वामिन्मल्लारीति प्रसिद्ध[illegible]
लोके प्राप्तः परेशो यस्तस्य मूर्तिमिमे वयम् ॥ ९८ ॥ संपूज्यानुदिनं भक्त्या [illegible]
हनस्य च । वेषभाषादिसंयुक्ताः कण्ठे धृतवराटिकाः ॥ ९९ ॥ निःशङ्का[illegible]
नाट्यवाद्यादिभिः प्रभुम् । मल्लारिं सुप्रसन्नं तं कृत्वा वासं प्रकुर्महे ॥ १०० ॥ [illegible]
क्षजनिते हि सर्वदावर्धमानसुखसागरे प्लुताः । तस्य गर्भगमिदं तु नित्यदा चिन्तयाम [illegible]
सुखेच्छया युताः ॥ १ ॥ किंच वेदेऽस्य सार्वात्म्यं प्रोक्तं तद्वाहनस्य च । तद्विद्वि त[illegible]
मेवातस्तद्वेषादिकधारणम् ॥ २ ॥ इच्छा न जायतेऽन्यत्र तत एव भवानपि । वेदोक्त[illegible]
ममाचारं सशिष्यः स्वी करोतु मे ॥ ३ ॥ श्रुतिराह नमः श्वभ्यः श्वपतिभ्यश्च [illegible]
नमः । वराटकानि दास्यामो योग्यानीत्युक्त आह तान् ॥ ४ ॥ एकोऽद्वि[illegible]
खलु सर्वसाक्षी स्वमायया सर्वजगद्विधाता । सदादिवेदाभिहितः परेशो [illegible]
रुद्रविरिञ्चिमुख्याः ॥ १०५ ॥ यथा वीरभद्रादिकैरंशभूतैर्लयः साध्यते क्वापि [illegible]
नैव । तथाऽप्यस्ति तेषां विबोधाद्विमुक्तिस्तथा ब्रह्मणोऽस्य रुद्रस्य [illegible]

* कर्णाटभूमेः सकाशात् ।

१ घ. °तेन । भु° । २ घ. °वेशभा° । ३ घ. वेशभा° । ४ क. नु । ५ क. रै ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan[illegible]

॥ ६ ॥ किं चैकादशरुद्राणामियं स्तुतिरुदाहृता । तदंशानां कथं सा स्यादेकस्य बहुता
स्था ॥ ७ ॥ यस्य स्पृष्टया मृदा स्नानं विप्राणां परिकीर्तितम् । तस्य वेषादिचिह्नस्य
धारणं बहुदोषदम् ॥ ८ ॥ एवं वंशप्रवृत्त्या हि श्वक्षेपादिविधारणम् । नित्यादिकर्मसंत्याग-
निष्फलं नाट्यसक्तता ॥ ९ ॥ चरितं भवतां सर्वं ब्राह्मण्यस्य विघातकम् । तस्मान्निरीक्षणे-
ऽपि मुखस्य भवतां किल ॥ ११० ॥ सूर्यावलोकनं शास्त्रे चोदितं मौनमेव तु । कर्तव्य-
मिति संप्रोक्ता न्यपतन्गुरुसंनिधौ ॥ ११ ॥ कृत्तमूला यथा वृक्षा राज्ञो मूलेऽपराधिनः ।
दर्शनेऽस्य दयायुक्तो ह्युत्तिष्ठतेति सोऽब्रवीत् ॥ १२ ॥ अथाऽऽज्ञया गुरोः शिष्याः पद्मपाद-
मुखाः खलु । तच्छिरोमुण्डनं नद्यामयुतस्नानमेव च ॥ १३ ॥ मृदाऽथ मुण्डनं भूयः शत-
स्नानं मृदा तथा । योग्यं च कारयित्वाऽन्यत्प्रायश्चित्तमतन्द्रिताः ॥ १४ ॥ ब्राह्मण्यमार्ग-
संस्थकृतांस्तेऽपि तु परं गुरुम् । नत्वा सच्छिष्यतां याताः शौचस्नानादितत्पराः ॥ ११५ ॥
ब्रह्मपूजारता जाताः शास्त्राध्ययनसंरताः । श्रीशंकरप्रसादेन मुक्तिभाजनतां गताः ॥ १६ ॥
तस्मात्पुरात्पश्चिममार्गगामी मरुन्धसंज्ञं पुरमाप शिष्यैः । ढक्कादिवाद्यानुचलत्करौघं वीचि-
वकघादिबहुप्रपद्यैः ॥ १७ ॥ तत्र पुर्यां विचित्रं वै विष्वक्सेनस्य गोपुरम् । तत्पूर्वतः
प्राशालां विपुलां तत्र कल्पनाम् ॥ १८ ॥ गृहादीनामसौ कृत्वा सम्यग्दर्भासनस्थितः ।
श्रोत्रमन्त्रभिधाङ्गुष्ठमात्रलक्ष्यं परं प्रभुम् ॥ १९ ॥ संपूर्णमण्डलाकारमात्मानं संनिरीक्ष्य
मः । पीयूषबिन्दुसंदोहपानतृप्ताङ्ग एव हि ॥ १२० ॥ कुण्डलिनीं पुनर्मूलाधारं नीत्वा तदी-
यम् । स्तुत्वा गणपतिं तत्र चिरमास सुखं गुरुः ॥ २१ ॥ तत्रत्याः स्वामिनं नत्वा
विष्वक्सेनपरायणाः । शङ्खचक्रविराजद्ध्वजदण्डाः स्तोत्रपरायणाः ॥ २२ ॥ ऊचुरस्मन्मतं सुष्ठु
विष्वक्सेनाधिदैवतम् । पुण्यदं स तु वैकुण्ठे सेनापतिरुदाहृतः ॥ २३ ॥ तस्य भक्ता वयं
नास्ति भयं नो यमराजतः । देहपातदृष्टैस्तस्य चादितन यथा किल ॥ २४ ॥ वैकुण्ठ एव
प्राप्तव्य इत्युक्तः प्राह तान्गुरुः । मैवं नारायणस्यैष विष्वक्सेनः प्रकीर्तितः ॥ १२५ ॥
सेवकस्तथैवेशभक्ता वैकुण्ठे सन्त्यनेकशः । तद्भक्ता अपि संपूज्यास्तद्भक्तैरित्यनुज्ञया ॥ २६ ॥
कथं तेषामुपास्यत्वं स्वातन्त्र्येण भवेत्किल । प्रमाणाभावतस्तस्मात्सगुणत्वात्स एव हि ॥ २७ ॥
देहलोकप्रेप्सुभिः सेव्यः पारम्पर्येण मुक्तिदः । नारायणस्तमेकं तु ध्यातुः प्रत्यगभेदतः ॥ २८ ॥
मुक्तिः साक्षादतो यूयं यदि च मुक्तिकाङ्क्षिणः । तदाऽद्वयमखण्डं तं गुरुशास्त्रोपदेशतः
॥ २९ ॥ ध्यात्वा सम्यक्प्रयत्नेन मुक्ता भवथ मा चिरम् । इत्युक्तास्त्यक्तलिङ्गास्ते
प्रणम्य शिरसा गुरुम् ॥ १३० ॥ तदादेशेन संप्राप्य विद्यां स्मृत्यादिदर्शिताम् । कर्मादौ
सुताः सर्वे बभूवुः साधुवृत्तयः ॥ ३१ ॥ ततः समागत्य तु मन्मथस्य भक्ता नमस्कृत्य
गुरुं समूचुः । शृण्वस्मदीयं मतमङ्ग स्वं यो मन्मथः सर्वहृदि स्थितः सः ॥ ३२ ॥

१ घ. 'धरीयं तु भा' । २ ङ. प्राताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गादिकर्ताऽत उपासनीयः सर्वार्थिभिः सर्वनुतः परात्मा । सुवर्तुलाकारविभूषणाभ्यां वक्षः
कृतं येन हृदि स्थिताभ्याम् ॥ ३३ ॥ कान्ताकदम्बेन तदीयदर्शनपस्पर्शनाभ्यां बहुमोह
दाभ्याम् । कामात्मनः पूर्णसुखस्य लब्धिर्मोक्षोऽस्त्यतो यूयमपीह तस्य ॥ ३४ ॥ सभुजे
पञ्चशरस्य चिह्नं धृत्वा ह्यनन्तेन सुखेन युक्ताः । तज्जेन मुक्ता भवथेति सोक्तः श्रेय
मैवं वदताप्रमाणम् ॥ ३५ ॥ कमलजप्रमुखा जगतः स्मृता उदयपालनसंयमने रताः ।
च हरेः सुत एष हि पालको न च सुते सवितुर्हि तथा प्रभा ॥ ३६ ॥ स्त्रीणां दर्शन
सङ्गं दूरतः परिवर्जयेत् । इत्येवं प्रतिषेधस्य सत्त्वाद्दुष्टं भवन्मतम् ॥ ३७ ॥ किंचानङ्गस्य
मोक्षादिदातृत्वे शक्तता कुतः । प्रद्युम्नस्य च कर्तृत्वं सृष्ट्यादेर्न विरोधतः ॥ ३८ ॥ प्रत्य
क्षादेरिति श्रुत्वा नत्वा क्रौञ्चविदादयः । त्यक्तचिह्ना बभूवुस्ते पञ्चपूजादितत्पराः ॥ ३९ ॥
तस्मादुदक्पथायातं पुरं मागधमद्भुतम् । कुबेरोपासकास्तत्र कुबेरप्रमुखाः स्थिताः ॥ ४० ॥
नवनिध्यात्मसौवर्णपदकावलिशोभिताः । ऊचुर्नवनिधीशत्वात्सर्वाधिकधनः किल ॥ ४१ ॥
कुबेरस्तस्य भक्तानामस्माकं न दरिद्रता । ततो नः पूर्ण आनन्दो ब्रह्मरूपोऽस्ति मोदते
॥ ४२ ॥ कर्मणोऽप्यर्थमूलत्वात्तत्पतेः सेवनं वरम् । मोक्षाद्याकाङ्क्षिभिः सर्वैः कार्यं
सुप्रयत्नतः ॥ ४३ ॥ किंच ब्रह्मादिकानां स धनदानेन पालकः । तस्मात्समप्रकोशत्वं
स्वाम्यर्थं सेव्यतां गतः ॥ ४४ ॥ तस्य सेवाकरी काचिद्यक्षिणी सुरसुन्दरी । महैश्वर्य
लाभस्तत्सेवनादपि जायते ॥ ४५ ॥ तस्मात्तदन्यसेवां ये कुर्वन्ति मनुजादयः । मोक्षादि
काङ्क्षिणस्ते तु मन्दा भाग्यविवर्जिताः ॥ ४६ ॥ तस्मात्त्वयन्तोऽपि कुबेरसेवां कुर्वन्तु
मोक्षार्थमनन्यचित्ताः । इत्युक्त आचार्य उवाच युष्मन्मतं प्रमाणेन विहीनमेव ॥ ४७ ॥
स्वामी कुबेरोऽस्तु परो धनस्य तथाऽपि कश्चिन्न हि तेन तृप्तः । लोभेन युक्तस्य कुबेरस्य
तृप्तिरतोऽस्य धर्मोऽपि न विद्यतेऽणुः ॥ ४८ ॥ मोक्षस्य वार्ता त्वतिदूरगाऽस्ति तस्मात्
रित्याज्यमनर्थरूपम् । द्रव्यं प्रयत्नेन मुमुक्षुभिस्तत्सेव्यं न यस्यास्ति पुनर्वियोगः ॥ ४९ ॥
अर्थमनर्थं भावय नित्यं नास्ति यतः सुखलेशः सत्यम् । पुत्रादपि धनभाजां भीतिः सर्वत्र
एषा विहिता नीतिः ॥ १५० ॥ इत्युक्तेर्ननु धर्मोऽपि तत्साध्य इति चेत्तथा । अस्तु धर्म
कुबेरस्तु सेव्यो नैव धनार्थिना ॥ ५१ ॥ यतः प्राक्सुकृतादेव धनभाजो जना भवेत् ।
ब्रह्मा हिरण्यगर्भोऽस्ति विष्णुर्लक्ष्मीपतिर्हरः ॥ ५२ ॥ हिरण्यवीर्य इन्द्रस्तु सुवर्ण
लसंस्थितः । एवंविधा धनेनास्य जीवन्तीत्यतिसाहसम् ॥ ५३ ॥ महाविद्वद्भि
वाक्यं नैव वाच्यमितः परम् । चिह्नानि संपरित्यज्य स्नानसंध्यादितत्पराः ॥ ५४ ॥
अद्वैतविद्यया युक्ताः पञ्चपूजारताः सदा । भवतेत्युदिताः सर्वे गुरुपादाम्बुजे रताः ॥ ५५ ॥

१ क. यत्नेन । २ ग. घ. ततः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ १५५ ॥ त्यक्तचिह्ना बभूवुस्ते पञ्चपूजादितत्पराः । इन्द्रभक्तास्ततो नत्वा तमूचुः परमं गुरुम् ॥ ५६ ॥ इन्द्रः स्वामिन्देवगन्धर्वयक्षैः सर्वेशः सर्गादिकर्ता सुसेव्यः । ब्रह्मा विष्णू रुद्र इत्येष वेदे तत्तच्छब्दैर्वाच्य एवैष नान्यः ॥ ५७ ॥ सर्वेशत्वं सर्वदातृत्वमस्य वेदे प्रोक्तं वामनश्चानुजोऽस्य । रत्नं सर्वं तद्गृहे चामृताद्यं देवाः सर्वे यस्य कुर्वन्ति सेवाम् ॥ ५८ ॥ सर्वस्याऽऽत्मा निर्विशेषः परात्मा सर्वातीतः शिक्षकोऽसौ यतीनाम् । प्रायच्छ-द्यस्त्वार्थहीनान्वृकेभ्यस्तस्मादिन्द्रः सेवनीयो भवद्भिः ॥ ५९ ॥ श्रेयस्कामैरित्यसौ प्रोक्त आह मैवं वाच्यं ब्रह्मशब्दादिवद्धि । पूर्णैश्वर्ये सच्चिदानन्दरूप इन्द्रः शब्दो नैव वज्रादि-युक्ते ॥ ६० ॥ सदेवेत्यादिवाक्येषु परं ब्रह्म निरूपितम् । कारणं जगतो यस्माद्ब्रह्मवि-ष्ण्वादिसंभवः ॥ ६१ ॥ ब्रह्मणस्त्विन्द्रवह्न्यादिदेवादीनां समुद्भवः । इन्द्रः स्रष्टेति चेदन्ये लोकपालाः कुतो न हि ॥ ६२ ॥ सर्वदातृत्वमप्यस्य सापेक्षं सर्वजन्तुवत् ॥ ब्रह्मतायां सुधापानात्तदानन्त्यं प्रसज्यते ॥ ६३ ॥ एकमेवेति वेदो हि व्यर्थः स्यात्तु तथा सति । सहस्रयुगकालस्य ब्रह्मणो दिवसस्य वै ॥ ६४ ॥ चतुर्दशांशसंजीवी कथं स्यात्परमेश्वरः । तस्मात्सर्वलये शिष्टं सदादिप्रतिपादितम् ॥ ६५ ॥ जगत्कारणमैक्यं श्रुतिरूपात्प्रमाणतः । मद्गुर्वादिभिः शुद्धाद्वैतविद्यामुपाश्रितैः ॥ ६६ ॥ एवमुक्ता गुरुं नत्वा स्मार्तकर्मपरायणाः । बभूवुः पञ्चपूजादितत्पराः शिष्यतां गताः ॥ ६७ ॥ तस्माद्यमप्रस्थपुरं प्रयातस्तत्र स्थितो ॥ ६८ ॥ पासमथाऽऽगता ये । यमस्य भक्ता महिषात्मतप्तलोहाङ्किता बाहुषु नृत्यवन्तः ॥ ६८ ॥ तन्नत्वोचिरे किंकरसंज्ञकाद्या लयस्य हेतुर्यम एव तस्मात् । सृष्ट्यादिकर्ताऽपि स एव नूनं तनस्तदीयाः खलु मुक्तिभाजः ॥ ६९ ॥ यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह दक्षौ गच्छत्यग्निदूतो अरं कृतः ॥ ७० ॥ इत्थेवं यज्ञभोक्तृत्वं श्रुतौ प्रोक्तं यमस्य हि । तस्मादयं परं ब्रह्म सृष्ट्युत्पत्त्यादिकारणम् ॥ ७१ ॥ तस्य मूर्तिर्द्विधा ज्ञेया शुक्ल-कृष्णविभेदतः । यच्छुक्लं तत्परं ब्रह्मेति श्रुतेः शुक्लरूपिणी ॥ ७२ ॥ या मूर्तिः सा परं ब्रह्म तस्मान्निर्गुणतो यमात् । महतत्त्वादिसंभूतिद्वारा रुद्रो यमस्य ह ॥ ७३ ॥ जातोऽव-तार एतस्मात्कृष्णवर्णो यमः किल । विष्णुनामा समुत्पन्नस्तस्य नाभिसरोजके ॥ ७४ ॥ रक्तवर्णो विधिस्तस्मादष्टौ दिक्पतयोऽभवन् । ग्रहाः सूर्यादयः सर्वं जगज्जज्ञे चराचरम् ॥ ७५ ॥ एवं कृत्वा स शिक्षार्थं दक्षिणाशाधिपालकः । दण्डपाणिर्महानीशो महिषारूढ आपन्नः ॥ ७६ ॥ इन्द्रादीनां निजांशानां मध्ये तद्बुद्धिलक्ष्यते । भस्मनोऽन्तर्गताङ्गार-वत्स सत्यादिरूपकः ॥ ७७ ॥ तस्माद्विशुद्धबुद्ध्यादिरूपः सर्वस्य कारणम् । तस्यांशः सगुणो नैव निर्गुणोपासने प्रभुः ॥ ७८ ॥ कश्चित्तस्माद्वयं नीलवर्णस्योपासनं सदा ।

१ क. घ. 'तू । सुधापानेन ब्रह्मत्वे तदा' । २ ङ. 'रेक्के' । ३ क. ग. 'ज्ञो दच्छ' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्मस्तेन यतो नाशं मूलाज्ञानं प्रपद्यते ॥ ७९ ॥ तस्मिन्नष्टे यमः सर्वमिति बोधो विज-
यते । ततः शुक्लयमस्याऽऽप्तिरूपो मोक्षो भवत्यतः ॥ १८० ॥ यूयं मोक्षार्थिनः सर्वे
कुरुतानन्यचेतसः । तदीयोपासनं तस्य मुक्तिं प्राप्स्यथ बोधतः ॥ ८१ ॥ इत्युक्त आचार्य
उवाच मैवं वाच्यं विरुद्धं श्रुतितो भवद्भिः । पुरा पितुः शापवशाद्धि कश्चिद्द्विजः प्र-
प्राप्य यमस्य गेहम् ॥ ८२ ॥ स नाचिकेता अवसत्त्रिरात्रमन्नं विना तं ह्यतिथिं सुरा-
न्त्या । युक्तं यमः प्रेक्ष्य सुवेपमानः प्रोवाच भूदेवमतीव नम्रः ॥ ८३ ॥ तिस्रो रात्रीर्यद-
वात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्व-
रान्वृणीष्व ॥ ८४ ॥ इत्येवं तु यमेनासौ नमःपूर्वमुदीरितः । नचिकेता उवाचैनं वचनं
सुमनोहरम् ॥ ८५ ॥ शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माऽभि मृत्यो ।
त्वत्प्रसृष्टं माऽभि वदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ ८६ ॥ यम उवाच । यथा
पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृ-
शिवान्मृत्युमुखात्प्रमुक्तम् ॥ ८७ ॥ स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया
बिभेति । उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ ८८ ॥ नचिकेता
उवाच ॥ स त्वमग्निं स्वर्ग्यमध्येपि मृत्यो प्रब्रूहि त्वं श्रद्दधानाय मह्यम् । स्वर्गलोका
अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ ८९ ॥ एवमुक्त उवाचाग्नेः स्वरूपं यम आद-
रात् । नचिकेतास्ततः प्राह मृत्युं बुद्धिमतां वरः ॥ ९० ॥ येयं प्रेते विचिकित्सा मनुष्येऽ-
स्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ ९१ ॥
एवमुक्तो यमस्तस्य लोभमुत्पादयन्बहु । धनादिना वरस्यास्य गोप्यतामभिलक्ष्य सः ॥ ९२ ॥
अथैनं लोभनिर्मुक्तं विद्यार्थिनमकल्मषम् । दृष्ट्वा प्राह यमस्तत्त्वं सुगोप्यमधिकारिणे
॥ ९३ ॥ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं
चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥ ९४ ॥ अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ९५ ॥ यस्य ब्रह्म च क्षत्रं च उभे भवत
ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ ९६ ॥ इत्यादिनोपदिष्टः स कृतार्थो
गृहमागमत् । इति श्रुतौ यमेनैव मृत्युर्ब्रह्मोपसेचनम् ॥ ९७ ॥ प्रोक्तं न च स्वयं तस्य
भक्ष्यं भवितुमर्हति । ततो यमात्परं ब्रह्म कारणं सर्ववस्तुनः ॥ ९८ ॥ ब्रह्मविष्ण्वादिलिङ्गो
सेवनीयं प्रयत्नतः । उपसेचनलिङ्गानां धारणेन विमुक्तता ॥ ९९ ॥ इत्युक्तिरवबोधको
भक्तां साहसास्मिका । मार्कण्डेये शृणु प्रोक्तं पुराणे भक्तवत्सलः ॥ २०० ॥ महादेवे
यमं निष्पीड्य भक्तपरिपालनम् । अकरोत्किंच पापात्मा सुन्दराख्यो बभूव ह ॥ १ ॥ कृतं
जागरणं तेन धनलोभात्कदाचन । शिवरात्रौ ततो दूतैर्यमस्याऽऽकृष्यतां गते ॥ २ ॥

१ क. °तीयकः ॥ ९१ ॥ ए° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शैवेऽस्य तत आगत्य शिवदूतैः सुताडिताः। परित्यज्य गता याम्याः शिवलोकं स
पुन्दरः ॥ ३ ॥ नीतः शैवैर्हि भक्तानामग्रगण्यो बभूव ह। अजामिलोऽपि कर्माणि
ब्राह्मणानां विहाय तु ॥ ४ ॥ नीचस्त्रीसङ्गतः पुत्रान्पञ्च प्राप्य कनिष्ठकम्। नारायणं
कुम्भ्राणांस्त्यजन्याम्यैः प्रपीडितः ॥ २०९ ॥ विष्णुदूतैस्तदाऽऽगत्य रक्षितस्ते तु किंकराः।
यमस्य भग्नसंकल्पास्तन्मन्दिरमथो ययुः ॥ ६ ॥ तस्माद्यूयं परित्यज्य चिह्नान्यद्वैततत्पराः।
वैदिकं कर्म कुर्वन्तः शुद्धास्तेन ततः परम् ॥ ७ ॥ गुरूपदेशतो ज्ञानं लब्ध्वा शान्ति
गमिष्यथ। इत्युक्तास्तं प्रणम्याऽऽशु बभूवुस्ते तथैव हि ॥ ८ ॥ तस्मात्प्राप प्रयागाख्यं
स्थलं पुण्यविवर्धनम्। गङ्गाया यमुनायाश्च सरस्वत्याश्च संगमम् ॥ ९ ॥ तत्र स्थिते
गुरौ पाशचिह्ना वरुणसेवकाः। समागतास्तथा वायूपासका ध्वजचिह्निताः ॥ २१० ॥
भूमिदेवस्य सेवायां रताः पूर्णाङ्कधारिणः। तीर्थस्योपासका बिन्दुचिह्नाश्चैव समागताः
॥ ११ ॥ तत्राऽऽद्यानां गुरुः प्राह गुरुं तीर्थपतिस्तदा। श्रोतव्यं मन्मतं चित्रं पुण्यदं
यतिशेखर ॥ १२ ॥ सर्वोत्तमो जीवनहेतुरस्य देवादिवन्द्यो वरुणः सुसेव्यः। तं प्राणनाथ-
स्त्ववदत्समीरः सर्वस्य हि प्राण उपासनीयः ॥ १३ ॥ मुनिं ततोऽनन्त उवाच चैनं सर्वो-
त्तमा भूमिरुपासनीया। नत्वा ततो जीवनदो जगाद तीर्थं सुसेव्यं सकलैः सुखाशैः
॥ १४ ॥ तच्च त्रिवेणीति प्रथामुपेतं पापापहं यस्य हि बिन्दुमात्रम्। केचित्तु तद्दर्शनतो
विमुक्तिं वदन्ति सर्वोत्तमता ततोऽस्य ॥ २१९ ॥ अम्ब त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं
फलम्। नारदेनोक्तमेतद्धि किंच सर्वात्मकं जलम् ॥ १६ ॥ आपो वै स्युरिदं सर्वमित्या-
दिश्रुतिवाक्यतः। तस्मात्सर्वात्मकत्वेन ब्रह्मत्वेऽस्यैतदेव हि ॥ १७ ॥ मोक्षार्थिभिर्भव-
द्भिस्तु सेवनीयं प्रयत्नतः। इत्येवमुक्त आहेदं शंकरः परमो गुरुः ॥ १८ ॥ उपासना
मुक्तजननी न कार्यगा ह्यनित्यताऽङ्ग सकलकार्यगा मता। जलस्य सर्वपरमता तु चोदिता
श्रुतौ तु सा क्षितिमुखराद्यपेक्षया ॥ १९ ॥ मुक्तिरतो युष्माकमलभ्या नास्ति विमोक्षेऽ-
नित्यसुसेवा। साधनमात्मज्ञानमतः संसाध्यमलं मोहं परिहाय ॥ २२० ॥ विश्वसुखाति-
क्रान्तपमेयं प्राप्य विमुक्ता आभवथाद्धा। ते श्रुतवन्तः श्रीगुरुशिष्यास्त्यक्तनिजाङ्काः
संप्रति जाताः ॥ २१ ॥ शून्यवादी ततो नत्वा गुरुं प्रोवाच शंकरम्। किंचिद्दृष्टं मया
मार्गे सावधानमनाः शृणु ॥ २२ ॥ मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः। सुखं
बन्ध्यासुतो याति शशशृङ्गधनुर्धरः ॥ २३ ॥ तं दृष्ट्वा देवभावेन प्रणम्य शिरसा भृशम्।
आगतोऽस्मि यतिश्रेष्ठ तवान्तिकमहं द्रुतम् ॥ २४ ॥ इत्युक्त आह भो विद्वत्तर त्वन्नाम
किं स्मृतम्। स तु प्रोवाच भो स्वामिन्निरालम्बनसंज्ञकः ॥ २२९ ॥ अहं पिता मदी-
यस्तु कखसनामेति विश्रुतः। मन्मतस्य प्रवक्तेति श्रुत्वा प्राह परो गुरुः ॥ २६ ॥ शून्य-

१ घ. °मिदेवतसे°। २ ग. °स्तु कल्पितास्योऽति°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वात्ते मतं निन्द्यं शून्यस्य ब्रह्मता न च । तमेव भान्तमित्यादि श्रुतेस्तस्माद्विमूढवत् ॥ २७ ॥ विहायाद्वैतविद्यां त्वं समाश्रित्य सुखी भव । इत्युक्तस्तं पुनः प्राह खं ब्रह्मेत्यु श्रुतीरितम् ॥ २८ ॥ आकाशः सर्वभूतेभ्यो ज्यायान्सोऽस्ति परायणम् । तं प्रत्येवास्त-मायान्तीत्येवं हि श्रुतिरब्रवीत् ॥ २९ ॥ किंच वेदान्त आकाशस्तल्लिङ्गादिति तस्य सा । निश्चिता ब्रह्मता तस्मात्स्वीकर्तव्यमिदं मतम् ॥ २३० ॥ इत्युक्तोऽसौ गुरुवर आह खं भो मूढतम कदाऽपि । वाच्यं खं यत्सगुणमतो नास्य ब्रह्मत्वं ननु पवनस्य ॥ ३१ ॥ हेतुः प्रोक्तं खलु परकार्यं सद्वेदेऽसावुभयविबोधी । आकाशोऽतः परमिह बोध्यः शब्दे-नैतेन न तु खमेतत् ॥ ३२ ॥ ज्यायस्त्वं यस्य खादिभ्यः श्रुत्या सम्यगुदीरितम् । तद्ब्रह्मानन्दविज्ञानं सन्मात्रं द्वैतवर्जितम् ॥ ३३ ॥ अन्तवत्त्वेन दोषेण शाल्मवत्यमतं हा निन्दित्वा शैवली राजा दोषयुक्तं कथं वदेत् ॥ ३४ ॥ एवमसौ श्रवणादतिहृष्टः प्राह गुरुं परमं पुनरित्थम् । दर्शनतो भवतामहमेषः पावनतामुपयात इतस्त्वम् ॥ २३५ ॥ ब्रह्मोपदेशं कुरु येन मुक्तः स्यामित्यसौ प्रोक्त उवाच भूयः । आकाशमात्मानमुपास्व सम्यग्घृदि स्थितं तेन तवास्तु मोक्षः ॥ ३६ ॥ इत्युक्त आचार्यवरस्य शिष्यो बभूव तं शंकरदेशिकेन्द्रम् । प्राहाऽऽगतो भक्त इदं वराहे नत्वा यते मे शृणु सुन्दरं मतम् ॥ ३७ ॥ प्रलयाम्भसि लीनाऽऽदिवराहेणोद्धृता मही । येन तं मुक्तिसिद्ध्यर्थं भजन्तं युक्तचेतसः ॥ ३८ ॥ दंष्ट्राङ्कितभुजाः सर्वे इत्युक्तः प्राह तं गुरुः । मैवं हि ब्राह्मणैर्नैकं तपः कार्यं प्रयत्नतः ॥ ३९ ॥ वेदोक्तं यदि चिह्नानां धारणेऽस्ति दुराग्रहः । तदाऽङ्कैः कूर्ममत्स्यादेरङ्कनीयं शरीरकम् ॥ २४० ॥ वेदोक्तकर्मणोऽन्येन विप्रस्यार्थो न कश्चन । सगुणं ब्रह्म संसेव्यमिति चेत्सेव्यतां मुदा ॥ ४१ ॥ शिवविष्ण्वादिरूपं तत्संत्यक्त्वा चिह्न-धारणम् । विप्रः संत्यक्तसंध्यादिकर्मा दण्डं समर्हति ॥ ४२ ॥ तस्मान्मूढमतिं त्यक्त्वा लिङ्गशून्यः कुलोचितम् । कुरु कर्मैव तेन त्वं शुद्धो मुक्तिं गमिष्यसि ॥ ४३ ॥ ज्ञानलाभेन सोऽप्युक्तो ज्ञानं प्राप्य गुरोर्मुखात् । बभूव लक्ष्मणाख्योऽस्य शिष्यः परमतापसः ॥ ४४ ॥ ततोऽन्यः कामकर्माख्यो मनुलोकसुसेवकः । आगत्य तं नमस्कृत्य प्रोवाच परमं गुरुम् ॥ २४५ ॥ लोकानां संघ एवास्ति परेशोऽतो मुमुक्षुभिः । सेवनीयो भव-द्भिर्वै स एवानन्यबुद्धिभिः ॥ ४६ ॥ सत्यलोकात्मिका मुक्तिस्तत्सेवातो न चान्यथा । इत्युक्तः प्राह भो मूढतम नानित्यसेवया ॥ ४७ ॥ अनृतभूतया मुक्तिः सत्यरूपा न लभ्यते । इत्युक्तोऽसौ गुरुं नत्वाऽद्वैतवृत्त्याश्रितोऽभवत् ॥ ४८ ॥ ततस्तं गुणसे-वायां तत्पराः परमं गुरुम् । नत्वोचुर्हि गुणाः स्वामिन्कारणं जगतां मताः ॥ ४९ ॥ ब्रह्मादीनां हि कर्तारस्तेषां सेवापरा वयम् । कृतार्थाः सर्वसंपूज्यास्तेषां सर्वप्रयत्नतः

---

१ घ. "खं वै सगु" । २ ग. मतं । ३ घ. सादरं । ४ ग. सन् । ५ घ. नत्" प्रोचुर्गु" ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥२५०॥ भवद्भिरपि ते सेव्या इत्युक्तः प्राह तान्गुरुः । जन्योपासनमत्यन्तमयुक्तं मोक्षसिद्धये ॥ ५१ ॥ इत्युक्ताः कुमतिं त्यक्त्वा शुद्धाद्वैतपरायणाः । तथैव शिष्यतां प्राप्तास्ततः कश्चित्समागतः ॥ ५२ ॥ सांख्यः प्रधानवादी तं नत्वोवाच परं गुरुम् । त्रिगुणात्मकं प्रधानं तु कारणं जगतः स्मृतम् ॥ ५३ ॥ स्मृतिः प्रमाणमस्माकं मन्वादिस्मृति-षुच्यते । गुणसाम्यं प्रधानं स्यान्महत्तत्त्वादिकारणम् ॥ ५४ ॥ अव्यक्तं व्यक्तभावं च व्यक्तमेकं परात्परम् । तदुपासनमात्रेण मुक्तिः संनिहिता नृणाम् ॥ २५५ ॥ इत्यादि समर्थ्यते तस्मात्स्वीकर्तव्यमिदं मतम् । इत्युक्त आह भोः सांख्य मैवं वेदविरोधतः ॥५६॥ स्मृतेर्वेदानुकूलायाः प्रामाण्यं हि न चान्यथा । अशब्दत्वात्प्रधानं तु जगतः कारणं न हि ॥ ५७ ॥ वेदोक्तस्येक्षितृत्वस्याभावादस्य जडस्य वै । नाशब्दमीक्षतेरित्यत आचार्यैरुदी-रितम् ॥ ५८ ॥ तस्मात्स ऐक्षतेत्यादिश्रुतिवाक्यान्न कारणम् । प्रधानं किंतु चैतन्यं परं ब्रह्म सदात्मकम् ॥ ५९ ॥ अतो मूढमतिं त्यक्त्वाऽद्वैतनिष्ठो भवाधुना । इत्युक्तः प्राह नाशब्दं प्रधानं श्रुतिरस्ति हि ॥ २६० ॥ अचिन्त्यमव्यक्तमरूपमव्ययं तथाऽरसं नित्य-मगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ ६१ ॥ इत्यव्यक्तेन शब्देन प्रधानं प्रतिपादितम् । इति श्रुत्वा गुरुः प्राह प्राज्ञः प्रकरणादिना ॥ ६२ ॥ उक्तशब्देन संप्रोक्तः किंच ज्ञानं न संभवेत् । गुणसाम्यसुसेवातः सत्त्वस्योद्रे-करूपकम् ॥ ६३ ॥ तस्मादेतन्मतं त्यक्त्वाऽद्वैतविद्यां समाश्रितः । सुखी भवेति संप्रोक्तः सांख्योऽसौ शिष्यतां गतः ॥ ६४ ॥ ततोऽन्यस्तं नमस्कृत्य कापिलो योगवित्तमः । प्राह प्रामाणिकं योगान्मुक्तिरस्तीति मे मतम् ॥ २६५ ॥ विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः । अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ ६६ ॥ हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् । अचि-न्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ ६७ ॥ अनादिमध्यान्तविहीन-मेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ ६८ ॥ ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् । इत्यादिवाक्यै-र्निगमेषु संस्थैः प्रमाणतां याति मतं मदीयम् ॥ ६९ ॥ किंचाऽऽगमेषु संप्रोक्ता जपविद्या विधानतः । भेदनं चक्रषट्कस्य तथा प्रोक्तमतो मतम् ॥ २७० ॥ मुक्त्याकाङ्क्षिभि-र्गुर्वार्य सेवनीयं प्रयत्नतः । इत्युक्त आह मैवं भो वेदैर्दहरसंज्ञिका ॥ ७१ ॥ विद्योक्ता न त्वनुक्तोऽयं योगो मोक्षस्य कारणम् ॥ ७२ ॥ अजपामूलमन्त्रस्य सोऽहमित्यर्थनिश्चयात् । भेदेनापोऽपिदागन्वाभावाद्योगः कथं भवेत् ॥ ७३ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि । संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ ७४ ॥ इत्यादिश्रुतिभिर्मार्गो

१ घ. °क्रिर्निःसंशया नृ° । २ घ. °परब्र° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानादन्यो निषिध्यते । षट्चक्रभेदनाद्योऽयं मुक्तेः किंच श्रुतिर्जगौ ॥ २७९ ॥ शान्ता-
दियुक्त आत्मानं पश्येदात्मनि केवलम् । अधिकारी शुद्धचित्तः श्रवणाद्यैः सुसाधकैः ।
॥ ७६ ॥ वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके
परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥ ७७ ॥ इत्यादिभिः श्रौतवचोभिरेष योगो
भवत्प्रोक्त उपेक्षणीयः । इत्युक्त आचार्यमुवाच भूयो यतेऽपरिज्ञानवशाद्ब्रवीषि ॥ ७८ ॥
अज्ञात्वा खेचरीं मुद्रां ब्रह्मज्ञोऽहमिति द्विजः । यो वदेत्तस्य जिह्वायां छेदं कुर्वीत शास-
नम् ॥ ७९ ॥ नदीत्रितयसंयोगं त्रिकूटाख्यमिति द्विजः । ब्रह्माहमिति यो ब्रूते तज्जिह्वा-
छेदमाचरेत् ॥ २८० ॥ अविदित्वा द्विजो यस्तु शृङ्गाटकमतः परम् । ब्रह्माहमिति यो
ब्रूते तज्जिह्वाछेदमाचरेत् ॥ ८१ ॥ मनोन्मन्याः स्वरूपं हि पूर्णमण्डलमार्गतः । अविदि-
त्वाऽब्रवीद्ब्रह्मेत्यस्य जिह्वां हि संछिनेत् ॥ ८२ ॥ अङ्गुष्ठमात्रस्य पुंसः स्थानज्ञानं विना
द्विजः । ब्रह्मास्मीत्युच्यते येन तस्य जिह्वां हि * संछिनेत् ॥ ८३ ॥ अवस्थात्रितयस्थं
नीचोन्मत्तविगर्हितम् । अज्ञात्वा ब्रह्म यो ब्रूते शिरस्तस्य पतत्यधः ॥ ८४ ॥ लयवित्तत्त्वं
याति ब्रह्म नान्येन वर्त्मना । हठवित्परमं स्थानं याति ब्रह्म सनातनम् ॥ २८५ ॥
इत्यादिवचनैर्योगः सर्वदा मोक्षकाङ्क्षिभिः । भवद्भिरतियत्नेन स्वीकर्तव्य इतीरितः ॥ ८६ ॥
गुरुराह वृथैवं त्वं जल्पस्यज्ञानमोहितः । अष्टाङ्गयोगजा मुक्तिर्न तु किंतु विशुद्धितः ।
॥ ८७ ॥ ऐकाग्र्यदस्तथा श्रौतो विरुद्धो वेदतो न हि । खेचर्यादिकमुद्राया विज्ञानेन किं
न हि ॥ ८८ ॥ मुक्तिरित्युक्तिरत्यन्तसाहसादेव नान्यथा । ब्रह्मज्ञानाद्यतो मुक्तिं वेदो
वदति नान्यतः ॥ ८९ ॥ तस्माच्छ्रुतिप्रोदितकर्मनिष्ठो विशुद्धचित्तः पुरुषो विवेकी । वैरा-
ग्यवाञ्शान्तिदमादियुक्तो मुमुक्षुरात्मानमजं सहिष्णुः ॥ २९० ॥ गुरोर्मुखात्तत्त्वमसीति
वाक्यं श्रुत्वा विचार्याऽऽत्मगतिं स सम्यक् । सच्चित्सुखं भेदविहीनमद्धा विज्ञाय मुक्तो
भवतीति चोक्तः ॥ ९१ ॥ नत्वा गुरोः पादयुगं सुभक्त्या शिष्यो बभूवाथ पराणुवादः ।
समाश्रिता धीरशिवादयोऽन्ये समागताः प्रोचुरिदं यतीशम् ॥ ९२ ॥ कर्ता परेशो यदुपे-
रितोऽस्ति सृष्टौ स भूम्याद्यणुकान्युनक्ति । नित्याह्वये तान्वियुनक्ति चैष भूम्यादिभिन्नैः
गुरुः स लोकान् ॥ ९३ ॥ विधाय सृष्ट्वा विविधांश्च जीवानास्ते स्वयं साक्षिवदेष पूर्णः । इत्युक्त
आचार्य उवाच मैवं श्रुतेर्विरोधाच्छृणु तद्विरोधम् ॥ ९४ ॥ परात्मनः स्वाविद्यया
उक्तः श्रुतौ कथं तेषु तु नित्यताऽतः । परेश एकः खलु नित्यरूपो जन्यं जगत्तत्
मानित्यमेव ॥ २९५ ॥ जगदीशादजन्यत्वं केषुचिद्यदि वर्तते । तस्य तत्त्वं न वक्तुं

* इदमार्षम् ।

१ क. °थैव त्वं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संख्याजनकत्वतः ॥ ९६ ॥ अधीत्य गौतमीं विद्यां सांगाली योनिमाविशेत् । इत्यादि-
वचनानां तु विहायाद्वैतमाश्रिताः ॥ ९७ ॥ मुक्ता भवथ शुद्धात्मविज्ञानाद्गुरुभक्तिजात् ।
इत्युक्तास्ते बभूवुर्वै शिष्या धीरशिवादयः ॥ ९८ ॥ प्रातः स्नात्वा त्रिवेण्यां हि गुरुः
शिष्यसमन्वितः । प्राङ्मार्गात्प्राप्य पक्षार्धात्काशीं काशीशसंयुताम् ॥ ९९ ॥ स्तुतिभिः
प्रतोष्य शङ्कादिनिनदैस्तथा । चित्रमासीत्तत्र मासत्रितयं संस्थिते गुरौ ॥ ३०० ॥
सर्वेषां केचिदागत्य नत्वा तं कर्मवादिनः । प्रोचुर्विश्वस्य सृष्ट्यादि कर्मणो भवति प्रभो
॥ १ ॥ रम्येण कर्मणा रम्यां योनिं विप्रादिकस्य वै । पापेन कर्मणा पापां शूद्रादेस्तां
व्रजन्ति हि ॥ २ ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः । इत्यादिकैर्वचोभिर्मुमुक्षुभिः
कर्म यत्नतः ॥ ३ ॥ कार्यं सुखस्य संप्राप्तिर्मोक्ष इत्यभिधीयते । इत्युक्तः प्राह मैवं
सुखैतत्कर्मेति हि श्रुतिः ॥ ४ ॥ ब्रह्मकार्यं जगद्ब्रूते ध्येयं तत्कारणं तथा । इत्युपक्रम्य
... शंभुराकाशमध्यगः ॥ ३०५ ॥ ऋतं च सत्यमित्यादिश्रुतिश्चास्ति विरोधिका ।
... सूक्ष्मस्थूलादिविश्वकारणरूपिणः ॥ ६ ॥ तस्मात्सर्वज्ञ एवेशः कारणं जगतो मतः ।
... कर्म जडत्वाद्ये मन्दास्तेऽथाऽऽश्रयन्ति तत् ॥ ७ ॥ इत्युक्तास्ते परां विद्यामाश्रिताः
शिष्यतां गताः । ततो वाभरणाख्यस्तं शिष्यैः सह समागतः ॥ ८ ॥ नत्वोवाच स
चन्द्रोऽसौ सर्वलोकप्रकाशकः । देवादिपालकः पूर्णिमादौ पूज्यः प्रयत्नतः ॥ ९ ॥ तद्रूपा-
... मुक्तिरित्युक्तः प्राह नास्ति सः । अनित्योपासनालभ्यो नित्यो मोक्षः कदाचन ॥
॥ ३१० ॥ इष्टापूर्तादिकं कर्म कृत्वा चन्द्रस्य मण्डलम् । प्राप्य भूयोऽस्य लोकस्य
... परात्मना ॥ ११ ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र
चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ १२ ॥ एष देवान्नमित्युक्तं श्रुतौ तस्मान्न
... । अन्नस्यास्य सुसेवातः किंतु तल्लोकसंस्थितिः ॥ १३ ॥ तस्मान्मूढमतिं त्यक्त्वा
शुद्धाद्वैतं समाश्रितः । मुक्तो भवेति संप्रोक्तः सच्छिष्योऽसौ बभूव ह ॥ १४ ॥ ततो
भौमादिकानां ये ग्रहाणां समुपासकाः । नमस्कृत्योचुराचार्यं शंकरं तं कृपानिधिम् ॥ १५ ॥
भौमादिकस्य सेवातो मुक्तिर्वेदे प्रचोदिता । तस्मान्मुमुक्षुभिः सेव्या एत एव प्रयत्नतः
॥ १६ ॥ इत्युक्त आह लोकानां ग्रहपीडानिवृत्तये । सेवा प्रोक्ता न मुक्त्यर्थं सा तु
... ॥ १७ ॥ सदेवेत्यादिभिर्वाक्यैर्वेदे सम्यगुदीरिता । इति श्रुत्वाऽप ते सर्वे
...: शिष्यत्वमादरात् ॥ १८ ॥ ततः क्षपणको नत्वा गुरुमाह प्रभो मया । त्वदा-
... षण्मासः कालो नीतस्ततो मतम् ॥ १९ ॥ मदीयं शृणु कालोऽयं परं ब्रह्म
...ताम् । मुक्त्यर्थमिति संप्रोचः प्राह कालस्य जन्म हि ॥ ३२० ॥ संवत्सरोऽजा-
... काल एष इति श्रुतिः प्राह ततः कुबुद्धिम् । विहाय शुद्धाद्वयमाश्रितस्त्वं मुक्तो

१ घ. शार्गाली । २ घ. ते । ३ ग. तं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवेत्युक्त इमं मुनीशम् ॥ २१ ॥ समस्तसर्वज्ञशिरोवतंसं नत्वाऽद्वये ब्रह्मणि संरतोऽभूत्।
ततः पितॄणां समुपासकास्तं समागताः प्राहुरिदं यतीशम् ॥ २२ ॥ अग्निष्वात्तादयोऽर्क्क-
मण्डलोपरिवासिनः । नित्यमुक्तास्त्रयस्तेषु मूर्तिहीनाः समूर्तयः ॥ २३ ॥ चत्वारः सेव्यं
तेषां धर्मादिफलदं स्मृतम् । मुक्तिदं चैव संप्रोक्तं सेव्यास्तेऽतः प्रयत्नतः ॥ २४ ॥ श्राद्ध-
कृत्सत्यवादी च गृहस्थोऽपि विमुच्यते । चान्द्रमासप्रमाणेन पितृमध्याह्नमीरितम् ॥ २५ ॥
अमातस्तत्र कर्तव्यं श्राद्धादि परितुष्टये । तेषामिति स संप्रोक्तः प्राह तान्परमो गुरुः ॥ २६ ॥
मैवं नेत्यादिवेदो हि कर्म मुक्तेर्न साधनम् । इति ब्रूते परं ब्रह्म प्राप्नोत्यात्मज्ञ इत्यपि ॥ २७ ॥
तस्मात्कर्माणि संत्यज्य शुद्धचित्तः परमेश्वरम् । श्रुत्वा गुरुमुखात्सम्यग्विचार्याऽऽशु वि-
च्यते ॥ २८ ॥ इति श्रुत्वाऽथ ते सर्वे सत्यशर्मादयो गुरुम् । नत्वा तदुपदेशेन संगताः
कृतकृत्यताम् ॥ २९ ॥ शङ्खपादाभिधः कश्चित्कुंज्वलीटस्तथैव च । समागत्योचतुर्नत्वा
यतीशं परमं गुरुम् ॥ ३० ॥ यत्र नारायणः शेते स सेव्यः शेष ईश्वरः । गरुडोऽपि
विमोक्षाय तस्य वाहनतां गतः ॥ ३१ ॥ इत्युक्त आह चेदेवं नारायणसुसेवनम् । कर्त-
व्यं तु ततः शुद्धचित्तौ गुरुमुखात्परम् ॥ ३२ ॥ श्रुत्वा विचार्य विज्ञाय ततो मुक्तिं गमि-
ष्यथ । इत्युक्तौ तौ गुरुं नत्वा सच्छिष्यत्वमुपागतौ ॥ ३३ ॥ चिरकीर्तिमुखाः सिद्धो-
पासकास्तत आगताः । प्रणम्योचुर्वयं मन्त्राँल्लब्ध्वा सिद्धोपदेशतः ॥ ३४ ॥ कृतकृत्या-
स्ततो यूयं भवथैतन्मतानुगाः । श्रीशैलादिकशैलेषु प्राप्य मन्त्रादिकाञ्शुभान् ॥ ३५ ॥
सत्यनाथादयः सिद्धाः कृतार्थाश्चिरजीविनः । तेषां समुपदेशेन तथाभूता वयं स्थिताः ॥ ३६ ॥
विचित्राञ्जनमुख्याभिर्विद्याभिः सर्ववेदिनः । तस्मादस्मन्मतं भेत्तुं न शक्यं केनचित्ते ॥ ३७ ॥
इत्युक्त आचार्य उवाच फल्गुफलेप्सुभिर्भाषणमप्ययुक्तम् । विचित्रवेषैर्हि क्रियाविहीनै-
र्दोषाप्तिरेवास्ति परस्वलाभात् ॥ ३८ ॥ तथा चिरं जीवनतः फलं नो देहो यतो दुःख-
मयोऽस्ति सर्वदा । तस्माद्विशुद्धैः किल साधनीयस्त्यागेन देहस्य विमुक्त्युपायः ॥ ३९ ॥
श्रुत्वाऽथ ते शिष्यवरा बभूवुर्गन्धर्वभक्तास्तत ऊचुरार्यम् । विश्वावसूपासनतो हि नादबिन्दु-
नतो बिन्दुकलाविबोधात् ॥ ४० ॥ कृतकृत्या वयं यूयमतो मुक्त्यभिलाषिणः । अतो
गान्धर्वविद्यायां कुरुध्वं सर्वदैव हि ॥ ४१ ॥ इत्युक्तः श्रीगुरुः प्राह मैवं वेदशिरोभिः ।
तत्र शब्दाद्यतीतत्वं ब्रह्मणः प्रतिपादितम् ॥ ४२ ॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं
नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ ४३ ॥
इति स्मृतौ तथा प्रोक्तः परः शब्दाद्यगोचरः । नादबिन्दुकलातीतं यस्तं वेद स वेदवित्
॥ ४४ ॥ इति तस्माद्भवन्तोऽपि ब्रह्म नादाद्यगोचरम् । भजध्वं तेन मुक्तिः

---

१ ग. °यश्चान्द्र° । २ क. °चार्य मुनि° । ३ ग. °त्कुञ्जलीदस्त° । ४ क. °न विद्य° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतिराडथ तेषु तेषु देशेष्विति पाषण्डपरान्द्विजान्विमथ्नन् ॥
अपरान्तमहार्णवोपकण्ठं प्रतिपेदे प्रतिवादिदर्पहन्ता ॥ २९ ॥
विललास चलत्तरङ्गहस्तैर्नदराजोऽभिनयन्निगूढमर्थम् ॥
अवधीरितदुन्दुभिस्वनेन प्रतिवादीव महान्महारवेण ॥ ३० ॥
बहुलभ्रमवानयं जडात्मा सुमनोभिर्मथितश्च पूर्वमेव ॥
इति सिन्धुमुपेक्ष्य स क्षमावानिव गोकर्णमुदारधीः प्रतस्थे ॥३१॥
अवगाह्य सरित्पतिं स तत्र प्रियमासाद्य तुषारशैलपुत्र्याः ॥
स्तवसत्तममद्भुतार्थचित्रं रचयामास भुजंगवृत्तरम्यम् ॥ ३२ ॥

---

यमिष्यथ न संशयः ॥ ३४५ ॥ इत्युक्ताः शिष्यतां यातास्ततो वेतालसेवकाः। चिताभ-स्मानुलिप्ताङ्गा भूतसेवारतास्तथा ॥ ४६ ॥ वमाधिरे गुरुं न वा स्वामिन्भूताद्युपासकाः। सर्वलोकवशीकारे समर्था इति तद्वचः ॥ ४७ ॥ श्रुत्वोवाच यतीशस्तान्न युक्तं यतां मतम्। ब्राह्मणानां न संप्रोक्ता यतो भूताद्युपासना ॥ ४८ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ४९ ॥ इत्यादिवचनात्तस्माद्भ्रष्टाचारं विहाय तम्। स्ववर्णोचितकर्माणि कुरुता-द्वैतमाश्रिताः ॥ ३५० ॥ स्वकर्महीना न गतिं लभन्ते श्रुत्वेदमाचार्यवरं प्रणम्य। स्वकर्म-शीलाः किल पञ्चपूजापरायणाः शिष्यवरा बभूवुः” ॥ ५१ ॥ २८ ॥

तदेतत्सर्वं संक्षिप्याऽऽह—यतिराडिति। अपरान्तमहार्णवोपकण्ठं पश्चिमसमुद्रस-मीपम् ॥ २९ ॥

चलद्भिस्तरङ्गात्मकैर्हस्तैस्तथाऽवधीरितस्तिरस्कृतो दुन्दुभिस्वनो येन तथाभूतेन महता शब्देन निगूढमर्थमभिनयन्प्रकटयन्महान्नदराजः समुद्रः प्रतिवादिवद्विललास विशुशुभे॥३०॥

आचार्यैस्तर्हि किमित्युपेक्षित इत्याशङ्क्याऽऽह—बहुलेति। प्रतिवादितुल्योऽपि बहुलावर्तलक्षणभ्रमवाञ्जडात्मा पुनश्च देवलक्षणैः संस्कृतचित्तैः पण्डितैः पुरैव मथितश्चेति हेतोः समुद्रमुपेक्ष्य स श्रीशंकराचार्यः क्षमावानिवोदारधीर्गोकर्णं प्रतस्थे। इवशब्द उत्प्रे-क्षार्थकः ॥ ३१ ॥ [ जडेति। डलयोः सावर्ण्याज्जलरूपः। पक्षे जडबुद्धिरित्यर्थः ] ॥ ३१ ॥

स श्रीशंकरस्तत्र सरित्पतिं समुद्रमवगाह्य हिमाचलसुतायाः पार्वत्याः प्रियं महादेव-मासाद्य ‘चतुर्भिर्यकारैर्भुजंगप्रयातम्’ इत्युक्तलक्षणभुजंगप्रयातवृत्ते रम्यमद्भुतैरर्थैर्विचित्रं स्तवसत्तमं रचयामास ॥ ३२ ॥

---

१ घ. °रतया वे°। २ क. ग. °ता भुवि सं°। ३ घ. प्रसाद्य।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदनन्तरमागमान्तविद्यां प्रणतेभ्यः प्रतिपादयन्तमेनम् ॥
हरदत्तसमाह्वयोऽधिगम्य स्वगुरुं संगिरते स्म नीलकण्ठम् ॥ ३३॥
भगवन्निह शंकराभिधानो यतिरागत्य जिगीषुरार्यपादान् ॥
स्ववशीकृतभट्टमण्डनादिः सह शिष्यैर्गिरिशालये समास्ते ॥ ३४॥
इति तद्वचनं निशम्य सम्यग्ग्रथितानेकनिबन्धरत्नहारः ॥
शिवतत्परसूत्रभाष्यकर्ता प्रहसन्वाचमुवाच शैववर्यः ॥ ३५ ॥
सरितां पतिमेष शोषयेद्वा सवितारं वियतः प्रपातयेद्वा ।
पटवत्सुरवर्त्म वेष्टयेद्वा विजये नैव तथाऽपि मे समर्थः ॥ ३६ ॥
परपक्षतमिस्रचण्डदण्डैर्मम तर्कैर्बहुधा विशीर्यमाणम् ॥
अधुनैव मतं निजं स पश्यत्विति जल्पन्निरगादनल्पकोपः ॥ ३७ ॥
सितभूतितरङ्गिताखिलाङ्गैः स्फुटरुद्राक्षकलापकम्रकण्ठैः ॥
परिवीतमधीतशैवशास्त्रैर्मुनिरायान्तममुं ददर्श शिष्यैः ॥ ३८ ॥

---

स्तवसत्तमरचनानन्तरं वेदान्तविद्यां नम्रीभूतेभ्यो विनेयेभ्यः प्रतिपादयन्तमेनं श्रीशंभुं हरदत्तसमाख्योऽधिगम्य स्वगुरुं नीलकण्ठं प्रोक्तवान् ॥ ३३ ॥

यत्प्रोक्तवांस्तदुदाहरति—हे भगवञ्शंकराख्यो यतिरार्यपादान्भवतो विजिगीषुरिहाऽऽगत्य शिष्यैः सह शिवालये समास्ते । तस्योपेक्षणीयत्वं वारयति । स्ववशीकृता[१] भट्टपादमण्डनमिश्रादयो येन सः ॥ ३४ ॥

इति तस्य हरदत्तस्य वचनं श्रुत्वा सम्यग्ग्रथितोऽनेकनिबन्धलक्षणै रत्नैर्हारो येन पुनश्च शिवतत्परस्य ‘ अथातो ब्रह्मजिज्ञासा ’ इत्यादिसूत्राणां भाष्यस्य कर्ता स शैववर्यः प्रहसन्वाचमुवाच ॥ ३५ ॥

वाचमेव सगर्वामुदाहरति—यद्येष यतिः समुद्रं शोषयेत् । यदि वा गगनात्सवितारं सूर्यं प्रपातयेत् । यदि वा पटवदाकाशं वेष्टयेत्तथाऽपि मे विजये समर्थो नैव भवेत् ॥ ३६ ॥

परपक्षलक्षणान्धकाराणां निवारणे स्फुरद्भिः सूर्यैर्मम तर्कैरधुनैवानेकधा विशीर्यमाणं निजं मतं स यतिः पश्यत्विति जल्पन्ननल्पकोपो नीलकण्ठो निर्गतवान् ॥ ३७ ॥

श्वेतभूत्या व्याप्तान्यङ्गानि येषां पुनश्च स्फुटरुद्राक्षाणां समूहेन कम्राः कमनीयाः कण्ठा येषां तथाभूतैरधीतशैवशास्त्रैः शिष्यैः परिवेष्टितमायान्तममुं नीलकण्ठं मुनिः श्रीशंकरो ददर्श ॥ ३८ ॥

---

[१] प. श्रीशंकराचार्यो ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधिगत्य महर्षिसंनिकर्षं कविरातिष्ठिपदात्मपक्षमेषः ॥
शुकतातकृतात्मशास्त्रतः प्राक्कपिलाचार्य इवाऽऽत्मशास्त्रमद्धा ॥३९॥
भगवन्क्षणमात्रमीक्ष्यतां तत्प्रथमं तु स्फुरदुक्तिपाटवं मे ॥
इति देशिकपुंगवं निवार्य व्यवदत्तेन सुरेश्वरः सुधीशः ॥ ४० ॥
सुमते तव कौशलं विजाने स्वयमेवैष मुनिः प्रतिब्रवीतु ॥
इति तं विनिवर्त्य नीलकण्ठो यतिकण्ठीरवसंमुखस्तदाऽऽसीत् ॥४१॥
परपक्षबिसावलीमरालैर्वचनैस्तस्य मतं चखण्ड दण्डी ॥
अथ नीलगलः स्वपक्षरक्षां जहदद्वैतमपाकरिष्णुरूचे ॥ ४२ ॥
प्रशमिंस्तदसीति यस्त्रयीकैः कथितोऽर्थः स न युज्यते त्वदिष्टः ॥
अभिदा तिमिरप्रकाशयोः किं घटते हन्त विरुद्धधर्मवत्त्वात् ॥ ४३ ॥

---

महर्षेः श्रीशंकराचार्यस्य संनिकर्षं समीपं प्राप्यैष कविर्नीलकण्ठ आत्मपक्षमातिष्ठिपत्स-म्यक्स्थापितवान् । तत्रोपमानमाह—शुकस्य तातेन श्रीवेदव्यासेन कृतादात्मप्रतिपादका-च्छास्त्राच्छारीरकमीमांसासंज्ञकात्प्राग्यथा कपिलाचार्यः साक्षात्स्वशास्त्रं स्थापितवांस्तद्वत् ॥ ३९ ॥

तदानीं स्वगुरुं निवार्य सुरेश्वरो विवादं कृतवानित्याह—हे भगवन्क्षणमात्रं प्रथमं तु मे तत्स्फुरदुक्तिपाटवमीक्ष्यतामिति देशिकपुंगवं निवार्य सुधीनामीशः सुरेश्वरस्तेन नीलकण्ठेन व्यवदत् ॥ ४० ॥

विवदमानं सुरेश्वरं प्रति नीलकण्ठो यदुक्तवांस्तदाह—हे सुमते तव कुशलतां विजा-नेऽतः स्वयमेवैष मुनिः प्रतिब्रवीत्विति तं सुरेश्वरं विनिवर्त्य तदा यतिसिंहसंमुख आसीत् ॥ ४१ ॥

ततः परपक्षलक्षणबिसावलीभक्षणे हंसैर्वचनैस्तस्य सम्यक्स्थापितं मतं दण्डी श्रीशंकर-श्चखण्ड खण्डितवान् । अथानन्तरं नीलकण्ठः स्वपक्षरक्षां त्यजन्नद्वैतमतं निराकर्तुमिच्छु-रूचे ॥ ४२ ॥

यदूचे तदाह षड्भिः—हे प्रशमिंस्तत्त्वमस्यादिवेदत्रयीमस्तकैर्जीवेश्वराभेदलक्षणो यस्त्व-दिष्टोऽर्थः कथितः स न युज्यते किं तमःप्रकाशयोरभेदो घटते नैव युज्यते । तत्र हेतुर्वि-रुद्धधर्मवत्त्वात् । तथाच जीवेश्वराभेदो न भवति विरुद्धधर्मवत्त्वात्तमःप्रकाशयोरिवेति युक्ति-विरोधात्त्वदिष्टोऽर्थो वेदान्तैर्नैव कथित इति भावः ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रवितत्प्रतिबिम्बयोरिवाभिद्घटतामित्यपि तत्त्वतो न वाच्यम् ॥
मुकुरे प्रतिबिम्बितस्य मिथ्यात्वगतेर्व्योमशिवादिदेशिकोक्त्या ॥४४॥
मुकुरस्थमुखस्य बिम्बवक्त्राद्भिदया पार्श्वगलोकलोकनेन ॥
प्रतिबिम्बितमाननं मृषा स्यादिति भावत्कमतानुगोक्तिका च ॥४५॥
न च मायिकजीवनिष्ठमौढ्येश्वरसार्वज्ञविरुद्धधर्मबाधात् ॥
उभयोरपि चित्स्वरूपताया अविशेषादभिदेव वास्तवीति ॥ ४६ ॥
न हि मानशतैः स्थितस्य बाधाऽपरथा दत्तजलाञ्जलिर्भिदा स्यात् ॥
विपरीतहयत्वगोत्वबाधाद्धयपश्वोर्निजरूपकैक्ययुक्त्या ॥ ४७ ॥
यदि मानगतस्य हानमिष्टं न भवेत्तर्हि न चेश्वरोऽहमस्मि ॥
इति मानगतस्य जीवसर्वेश्वरभेदस्य न हानमप्यभीष्टम् ॥ ४८ ॥

---

ननु रवितत्प्रतिबिम्बयोर्व्यभिचारश्चाञ्चल्याचाञ्चल्यादिविरुद्धधर्मवत्त्वेऽप्यभेदाभावाभावस्य सत्त्वात्तथाच विरुद्धधर्मयोरपि तयो रवितत्प्रतिबिम्बयोरिवाभेदो युज्यतामित्याशङ्क्य परिहरति—रवितत्प्रतिबिम्बयोरिव तत्त्वतोऽभिदभेदो घटतामित्यपि न वाच्यं तत्र हेतुर्व्योमशिवादिदेशिकोक्त्या दर्पणे प्रतिबिम्बितस्य मिथ्यात्वावगतेस्तथाच बाध्यस्य प्रतिबिम्बस्याभेदयोग्यताया अभावेन व्यभिचाराभावात्तद्दृष्टान्तेन जीवेश्वरयोरभेदो न युज्यत इत्यर्थः ॥ ४४ ॥ [ व्योमेति । व्योमशिवनामा कश्चित्पाशुपतमतप्रवर्तकस्तत्प्रभृतिगुरूक्त्येत्यर्थः ]
॥ ४४ ॥

किंच भवदीयमतानुयाय्युक्तिरप्यस्तीत्याह—बिम्बमुखान्मुकुरस्थमुखस्य भेदेन समीपस्थलोकावलोकनेन हेतुना प्रतिबिम्बितं मुखं मृषा स्यादिति भवदीयमतानुगोक्तिका च । स्वार्थे कः ॥ ४५ ॥

ननु जीवनिष्ठमौढ्यस्येश्वरसार्वज्ञस्य च विरुद्धधर्मस्य मायिकत्वेन बाधादुभयोरपि चैतन्यस्वरूपताया अविशेषाद्वास्तवोऽभेद एवेत्याशङ्क्य परिहारं प्रतिजानीते—न चेति ॥ ४६ ॥

तत्र हेतुमाह—हि यस्मात्प्रमाणशतैः स्थितस्य विरुद्धधर्मस्य बाधो न संभवति बाधाभावेन मायिकत्वमप्यस्य नास्तीति भावः । विपक्षे बाधकमाह—अपरथेति । मानशतैः स्थितस्यापि बाधाङ्गीकारे भेदो दत्तजलाञ्जलिः स्यात् । तत्र युक्तिमाह—विपरीतयोरश्वगोत्वयोर्बाधादश्वपश्वोः स्वरूपस्यैक्यमेवेति युक्त्येत्यर्थः ॥ ४७ ॥ [ अपरथाऽन्यथा ]
॥ ४७ ॥

यदि प्रत्यक्षादिमानावगतस्य हानमिष्टं न भवेत्तर्हि न चेश्वरोऽहमस्मीति प्रत्यक्षप्रमाणावगतस्य जीवसर्वेश्वरभेदस्य हानमप्यभीष्टं न भवेदित्यर्थः ॥ ४८ ॥

---

१ घ. वृथा । २ घ. °र्नार्भिणोर° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

इति युक्तिशतैः स नीलकण्ठः कविरक्षोभयदद्वितीयपक्षम्।
निगमान्तवचःप्रकाश्यमानं कलभः पद्मवनं यथा प्रफुल्लम् ॥४९॥
अथ नीलगलोक्तदोपजालो भगवानेवमवोचदस्तु कामम्।
शृणु तत्त्वमसीतिसंप्रदायश्रुतिवाक्यस्य परावरेऽभिसंधिम् ॥ ५० ॥
ननु वाच्यगता विरुद्धताधीरिह सोऽसावितिवद्विरोधहाने ॥
अविरोधि तु वाच्यमाद्वैक्यं पदयुग्मं स्फुटमाह को विरोधः ॥
यदिहोक्तमतिप्रसञ्जनं भो न भवेन्नो हि गवाश्वयोः प्रमाणम्।
अभिदाघटकं तयोर्यतः स्यादुभयोर्लक्षणयाऽभिदानुभूतिः॥ ५२ ॥
ननु मौढ्यसमस्तविश्वधर्मान्वितजीवेश्वररूपतोऽतिरिक्तम्।
उभयोः परिनिष्ठितं स्वरूपं बत नास्त्येव यतोऽत्र लक्षणा स्यात्॥५३॥
इति चेन्न समीक्ष्यमाणजीवेश्वररूपस्य च कल्पितत्वयुक्त्या।
तदधिष्ठितसत्यवस्तुनोऽद्धा नियमेनैव सदाऽभ्युपेयतायाः ॥ ५४ ॥

---

इत्येवं युक्तिशतैः स कविर्नीलकण्ठो वेदान्तवचोभिः प्रकाश्यमानमद्वैतपक्षमक्षोभयत्।
[य]था प्रफुल्लं सरोजवनं हस्तिपोतः क्षोभयति तद्वत् ॥ ४९ ॥

अथ तत्कृताद्वैतपक्षक्षोभानन्तरं नीलकण्ठेनोक्तं दोपजालं यस्मै स भगवाञ्शंकराचार्य
[...]त्यच। एवं त्वदुक्तं यथेष्टमस्तु तथाऽपि तत्त्वमसीतिसंप्रदायश्रुतिवाक्यस्य परावरेऽभिसं-
[...]धिमभिप्रायं शृणु। परे ब्रह्मादयोऽवरे यस्मात्तथाभूतेऽखण्डैकरसे। यद्वा कार्योपाधिको
[जी]वः कारणोपाधिरीश्वर इत्युक्तत्वात्कारणाभिन्ने कार्ये ॥ ५० ॥

इह तत्त्वमसिवाक्ये सोऽयमितिवद्विरुद्धताबुद्धिर्ननु वाच्यगता न तु लक्ष्यगता। तथाच
[...]भागलक्षणया तस्य विरोधस्य हाने सत्यविरोधि वाच्यं चैतन्यमात्रं तु स्वीकुर्वत्तत्त्वमिति
[...]द्वयमैक्यं स्फुटमाहातः कोऽपि विरोधो नास्ति ॥ ५१ ॥

[...]त्तपरेत्याद्युक्तं तत्राऽऽह—यदिति। इहैवमुच्यमाने योऽतिप्रसङ्गस्त्वयोक्तः स न
[भ]वेत्। हि यस्माद्गवाश्वयोरभेदघटकं प्रमाणं नास्ति। यतः प्रमाणात्तयोर्गवाश्वयोरुभयो-
[...]र्भागलक्षणया भेदानुभवः स्यादित्यर्थः ॥ ५२ ॥

नीलकण्ठः शङ्कते—ननु मौढ्यधर्मान्वितजीवस्वरूपात्सर्वज्ञत्वधर्मयुक्तेश्वरस्वरूपाच्चातिरि-
[...]क्तमुभयोर्जीवेश्वरयोः परिनिष्ठितं स्वरूपं खलु नास्त्येव। यतस्तथाभूतस्वरूपसत्त्वादत्र स्वरूपे
[ल]क्षणा स्यात्। यद्वाऽत्र तत्त्वमसिवाक्ये ॥५३॥ [परिनिष्ठितं वस्तु स्वभावसिद्धम्] ॥५३॥

परिहरति—इति चेन्न। तत्र हेतुमाह—मौढ्यादिविरुद्धधर्मविशिष्टं जीवादिस्वरूपं

---

१ घ. मौर्ख्यध°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवताऽपि तथा हि दृश्यदेहाद्यहमन्तस्य जडत्वमभ्युपेयम् ।
परिशिष्टमुपेयमेकरूपं ननु किंचिद्धि तदेव तस्य रूपम् ॥ ५५॥
जगतोऽसत एवमेव युक्त्या त्वनिरूप्यत्वत एव कल्पितत्वात् ।
तदधिष्ठितभूतरूपमेष्यं ननु किंचिद्धि तदीश्वरस्य सत्यम् ॥ ५६॥
तदिह श्रुतिगोभयस्वरूपे निरुपाधौ न हि मौढ्यसर्ववित्त्वे ।
न जपाकुसुमात्तलोहितिम्नः स्फटिके स्यान्निरुपाधिके प्रसक्तिः॥५७॥
अपि भेदधियो यथार्थतायां न भयं भेददृशः श्रुतिर्ब्रवीतु ।
विपरीतदृशो ह्यनर्थयोगो न भिदाधीर्विपरीतधीर्यतः स्यात् ॥५८॥

---

कल्पितं दृश्यत्वाच्छुक्तिरूप्यादिवदिति परिदृश्यमानजीवेश्वरस्वरूपस्य कल्पितत्वयुक्त्या ते स्वरूपेणाधिष्ठितस्य तदधिष्ठानस्य सत्यस्य वस्तुनः सदा नियमेनैव साक्षादभ्युपगन्तव्यत्वात् । अद्धेत्यस्य पूर्वपदेन वा संबन्धः ॥ ५४ ॥

नन्वभ्युपगन्तव्यं भवद्भिर्मया तु नाभ्युपगम्यत इत्याशङ्क्याऽऽदौ समीक्ष्यमाणजीवस्वरूपाधिष्ठानमभ्युपेयमेवेत्याह—**भवताऽपीति** । हि यस्माद्भवताऽपि दृश्यस्य देहादेरहन्तस्य जडत्वमभ्युपेयं तस्य जीवस्य परिशिष्टं तदेव किंचित्सत्यं रूपं स्वीकर्तव्यमेव॥ ५५॥

तथेश्वरस्वरूपमपीत्याह—असतो जगतो व्युत्थितं प्रति विमतं कल्पितमनिरूप्यत्वाद्रज्जूरगवदित्येवमेव युक्त्या कल्पितत्वात्किंचिद्धि तत्सत्यमीश्वरस्य जगदधिष्ठानभूतं रूपमेवमवश्यमङ्गीकार्यमित्यर्थः ॥ ५६ ॥

तत्तस्मादिह श्रुतिगम्ये निरुपाधावुभयस्वरूपे मौढ्यसर्ववित्त्वे नैव स्तः । तत्र दृष्टान्तमाह—जपापुष्पात्प्राप्तस्य लोहितिम्नो निरुपाधिके स्फटिके प्रसक्तिर्न हि स्यात्तद्वत् ॥५७॥

अपि च भेदधियो यथार्थतायां भेददृशः पुरुषस्य “ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति य उदरमन्तरं कुरुतेऽथ तस्य भयं भवति ” इत्यादिश्रुतिर्भयं न ब्रवीतु न ब्रूयात् । हि यस्मादनर्थसंबन्धो विपरीतदर्शिनः स्यात् । यतश्च भिदाधीर्भेदबुद्धिर्विपरीतधीः स्यात्तथाचोक्तश्रुत्या भेददर्शिनो भयस्योक्तत्वादनर्थयोगस्य च विपरीतदर्शिन एव युक्तत्वाद्भेदधीर्विपरीतधीरेवेत्यर्थः ॥ ५८ ॥

---

१ ग. °भेव रू° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिदा श्रुतिगाऽप्यतात्त्विकी चेत्पुरुषार्थश्रवणं न तद्गतौ स्यात् ॥
अशिवोऽहमिति भ्रमस्य शास्त्राद्विधुमानत्वगतेरिवास्ति बाधः ॥५९॥
तदबाधितकल्पनाक्षतिर्नो श्रुतिसिद्धात्मपरैक्यबुद्धिबाधः ॥
निगमात्प्रबलं विलोक्यते माकरणं येन तदीरितस्य बाधः ॥ ६० ॥
ऋषिभिर्बहुधा परात्मतत्त्वं पुरुषार्थस्य च तत्त्वमप्यथोक्तम् ॥
तदपास्य निरूपितप्रकारो भवताऽसौ कथमेक एव धार्यः ॥ ६१ ॥
प्रबलश्रुतिमानतो विरोधे बलहीनस्मृतिवाच एव नेयाः ॥
इति नीतिबलात्त्रयीविरुद्धं न ऋषीणां वचनं प्रमात्वमीयात् ॥६२॥

एवं भेददृशः श्रुतयांऽन्यथानुपपत्त्या भेदबुद्धेर्विपरीतधीत्वमुपवर्ण्य 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति श्रुत्याऽभेदज्ञाने श्रुतपुरुषार्थान्यथानुपपत्त्याऽभेदस्य तात्त्विकत्वमाशङ्कते—अभिदाऽभेदः श्रुतिगाऽप्यतात्त्विक्ययथार्था चेत्तर्हि तद्गतौ तस्या अभिदाया गतौ ज्ञाने पुरुषार्थस्य श्रवणं न स्यात्। यत्तु यदि मानगतस्येत्यादि तत्राऽऽह—अशिवोऽहमिति भ्रमस्य प्रत्यक्षसिद्धचन्द्रगतप्रादेशमानत्वबुद्धेरिव शास्त्राद्बाधोऽस्ति। तथाच नेश्वरोऽहमस्मीति बुद्धिर्भ्रमः शास्त्रेण बाध्यमानत्वाद्विधुमानत्वबुद्धिवत्तस्य बाधेन चाभेद एव श्रुतिगम्यो वास्तव इति भावः। यत एवमतस्तदबाधितकल्पनायाः क्षतिः क्षयो न तु श्रुतिसिद्धात्मपरैक्यबुद्धिबाधोऽतस्तदबाधितत्वकल्पनाक्षतेर्हेतोर्नोक्तबुद्धिबाध इति पाठान्तरे। ननु निगमात्प्रबलं प्रमाकरणं प्रमाणं किं विलोक्यते यथेयम्। कुतो नास्तीति वदन्तं प्रत्याह—निगमात्प्रबलं प्रमाकरणं प्रमाणं किं विलोक्यते येन निगमोक्तस्याऽऽत्मपरैक्यस्य बाधः स्यात् ॥ ५९ ॥ ६० ॥

नीलकण्ठ आह—ऋषिभिः कपिलादिभिर्बहुधा परात्मतत्त्वमथ पुरुषार्थस्य च तत्त्वमप्युक्तं तदपास्यैक एव निरूपितप्रकारो भवता कथं धार्यो बहूनामनुसरणस्य न्याय्यत्वेन ॥ ६१ ॥

परिहरति—प्रबलश्रुतिप्रमाणेन विरोधे सति बलहीनाः स्मृतिवाच एव नाङ्गीकर्तव्या इति नयबलाद्वेदत्रयीविरुद्धमृषीणां वचनं प्रमात्वं न प्राप्नुयात्। तथाच प्रमाणलक्षणस्थो जैमिनिन्यायः—विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानमिति। "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतेर्विरुद्धाऽपि सर्वा वेष्टयितव्येति स्मृतिर्मानं न वेति विषयेऽष्टकास्मृतिवन्मानमिति पूर्वपक्षे राद्धान्तस्तु पूर्वपक्षमपनुदति। श्रुतिविरोधे स्मृतेः प्रामाण्यमनपेक्षमनादरणीयं स्याद्धि इत्यर्थः। एवं च वेदाविरोधादसति विरोधे मूलश्रुत्यनुमापकतया स्मृतिरपि मानमिति न्यायार्थः। एवं च वेदाविरोधे बहूनामप्यनुसरणमन्याय्यमेवेति भावः ॥ ६२ ॥ [प्रबलेति। अत्र प्राबल्यदर्शनेऽसां बहूनामप्यनुसरणमन्याय्यमेवेति भावः ॥ ६२ ॥]

१ ग. घ. विशेदेऽष्ट°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु युक्तियुतं महर्षिवाक्यं श्रुतिवद्ग्राह्यतमं परं तथाहि ॥
प्रतिदेहमसौ विभिन्न आत्मा सुखदुःखादिविचित्रतावलोकात् ॥६३॥
यदि चाऽऽत्मन एकता तदानीमतिदुःखी युवराजसौख्यमीयात् ॥
अमुकः ससुखोऽमुकस्तु दुःखीत्यनुभूतिर्न भवेत्तयोरभेदात् ॥ ६४ ॥
अयमेव विदन्वितश्च कर्ता न हि कर्तृत्वमचेतनस्य दृष्टम् ॥
अत एव भुजेर्भवेत्स कर्ता परभोक्तृत्वमतिप्रसङ्गदुष्टम् ॥ ६५ ॥
पुरुषार्थ इहैष दुःखनाशः सकलस्यापि सुखस्य दुःखयुक्त्वात् ॥
अतिहेयतया पुमर्थता नो विषपृक्तान्नवदित्यभेद्ययुक्तेः ॥ ६६ ॥
इति चेन्न सुखादिचित्रताया मनसो धर्मतयाऽऽत्मभेदकत्वम् ॥
न कथंचन युज्यते पुनः सा घटयेत्प्रत्युत मानसीयभेदम् ॥ ६७ ॥

---

दौर्बल्ये क्रमान्मूलप्रमाणानपेक्षत्वसापेक्षत्वे एव ] ॥ ६२ ॥

एवमुक्तो नीलकण्ठः शङ्कते चतुर्भिः—ननु युक्तियुक्तं महर्षिवाक्यं परं केवलं ग्राह्यं न तु त्याज्यम् । युक्तियुक्तत्वमेव दर्शयितुमाह—तथाहीति ॥ ६३ ॥

विपक्षे दोषमाह—यदि चाऽऽत्मन एकता स्यात्तदानीमतिदुःखी युवराजसौख्यं प्राप्नुयात्किंचामुकः सुख्यमुकस्तु दुःखीत्यनुभवो न स्यात्तयोरभेदात् ॥ ६४ ॥

किंचाऽऽत्मनोऽकर्तृत्वमचेतनस्यान्तःकरणादेः कर्तृत्वमिति भवन्मतमप्ययुक्तमित्याशयेनाऽऽह—अयमेव ज्ञानान्वितः कर्ता हि यस्मादचेतनस्य कर्तृत्वं न दृष्टम् । अत एव भुजेरपि स आत्मा कर्ता भवेद्यतः कर्तुरन्यस्य भोक्तृत्वं देवदत्तकृतकर्मफलभोक्तृत्वं यज्ञदत्तस्य स्यादित्यतिप्रसङ्गेन दुष्टम् ॥ ६५ ॥

किंच मोक्षोऽपि भवदभिमतोऽयुक्त इत्याशयेनाऽऽह—इह लोके वेदे वा । पुरुषार्थोऽप्येष दुःखनाश एव न तु सुखाप्तिस्तत्राभेद्यां युक्तिमाह—सर्वस्यापि सुखस्य दुःखयुक्त्वादतिहेयत्वेन विषपृक्तान्नवत्पुरुषार्थत्वं नास्तीत्यभेद्याया युक्तेर्हेतोस्तथाचायं प्रयोगो विमतं न पुरुषार्थो दुःखसंयुक्तत्वाद्विषसंपृक्तान्नवत् ॥ ६६ ॥

परिहरति—इति चेन्नेति । तत्र सुखदुःखादिचित्रतावलोकनादिहेतोः पक्षावृत्तिं दर्शयन्नाऽऽत्मभेदकत्वाभावे हेतुमाह—सुखादिचित्रताया मनसो धर्मत्वेनाऽऽत्मभेदकत्वं कथंचिदपि न युज्यते प्रत्युत सा चित्रता मानसीयं मनोनिष्ठं भेदं घटयेत् । तस्या मनोधर्मत्वे तु 'कामः संकल्पः' इत्यादिश्रुतिर्मानमिति भावः ॥ ६७ ॥

---

१ ग. च । २ ग. घ. 'युतत्व' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चितियोगविशेष एव देहे कृतिमत्ताघटकोऽप्यचेतने स्यात् ॥
तदभावत एव कर्तृता स्यान्न तृणादेरिति कल्पनं वरीयः ॥ ६८ ॥
विषयोत्थसुखस्य दुःखयुक्त्वेऽप्यलयं ब्रह्मसुखं न दुःखयुक्तम् ॥
पुरुषार्थतया तदेव गम्यं न पुनस्तुच्छकदुःखनाशमात्रम् ॥ ६९ ॥
इति युक्तिशतोपबृंहितार्थैर्वचनैः श्रुत्यवरोधसौविदल्लैः ॥
यतिरात्ममतं प्रसाध्य शैवं परकृद्दर्शनदारुणैरजैषीत् ॥ ७० ॥
विजितो यतिभूभृता स शैवः सह गर्वेण विसृज्य च स्वभाष्यम् ॥
शरणं प्रतिपेदिवान्महर्षिं हरदत्तप्रमुखैः सहाऽऽत्मशिष्यैः ॥ ७१ ॥
यमिनामृषभेण नीलकण्ठं जितमाकर्ण्य मनीषिधुर्यवर्यम् ॥
सहसोदयनादयः कवीन्द्राः परमद्वैतमुपश्रुकम्पिरे स्म ॥ ७२ ॥
विषयेषु वितत्य नैजभाष्याण्यथ सौराष्ट्रमुखेषु तत्र तत्र ॥
बहुधा विबुधैः प्रशस्यमानो भगवान्द्वारवतीं पुरीं विवेश ॥ ७३ ॥

---

अथ न हीत्यादि यदुक्तं तत्राऽऽह—चैतन्ययोगविशेष एव देहद्वयेऽचेतनेऽपि कर्तृत्वघटकः स्यात्। तस्य चितियोगविशेषस्याभावादेव तृणादेः कर्तृता न स्यादिति कल्पनमेव गुरुलघुकृत्वाच्छ्रेष्ठमित्यर्थः ॥ ६८ ॥

यदपि पुरुषार्थ इत्यादि तत्राप्याह—विषयोत्थसुखस्य दुःखयुक्तत्वेऽपि नाशरहितं ब्रह्मसुखं न दुःखयुक्तम्। 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिश्रुतेः। तस्मात्तदेव पुरुषार्थतयाऽवगम्यं न तु तुच्छकं दुःखनाशमात्रम्। स्वार्थे तद्धितः ॥ ६९ ॥

इत्येवं युक्तिशतैरुपबृंहितोऽर्थो येषां तैः पुनश्च 'सौविदल्लाः कञ्चुकिनः' इत्यमरात्श्रुत्यवरोधकञ्चुकवद्भिर्वचनैर्यतिः श्रीशंकराचार्यः स्वीयमद्वैतमतं प्रसाध्य परकृच्छास्त्रस्य दर्शने तत्पापभूतैर्वचनैः शैवं मतमजैषीत्। निराकरणेन जितवान् ॥ ७० ॥

यतिराजेन विजितः स शैवो नीलकण्ठो गर्वेण सह स्वभाष्यं विसृज्य च पुनर्हरदत्तप्रमुखैरात्मशिष्यैः सह महर्षिं शरणं प्राप्तवान् ॥ ७१ ॥

परमत्यन्तं चकम्पिरे। स्मेति पादपूरणे ॥ ७२ ॥ [परमित्यनेनातुल्यत्वं भीतेर्द्योत्यते] ॥ ७२ ॥

अथ सौराष्ट्रादिषु तत्र तत्र देशेषु स्वीयभाष्याणि प्रसार्य विबुधैः सुपण्डितैर्देवैश्च बहुधा स्तूयमानो भगवाञ्शंकरो द्वारवतीं पुरीं विवेश ॥ ७३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भुजयोरतितप्तशङ्खचक्राकृतिलोहाहतसंभृतव्रणाङ्काः ॥
शरदण्डसहोदरोर्ध्वपुण्ड्रास्तुलसीपर्णसनाथकर्णदेशाः ॥ ७४ ॥
शतशः समपेत्य पाञ्चरात्रास्त्वमृतं पञ्चभिदाविदां वदन्तः ॥
मुनिशिष्यवरैरतिप्रगल्भैर्मृगराजैरिव कुंजराः प्रभग्नाः ॥ ७५ ॥
इति वैष्णवशैवशाक्तसौरप्रमुखानात्मवशंवदान्विधाय ॥
अतिवेलवचोझरीनिरस्तप्रतिवाद्युज्जयिनीं पुरीमयासीत् ॥ ७६ ॥
सपदि प्रतिनादितः पयोदस्वनशङ्काकुलगेहकेकिजालैः ॥
शशभृन्मुकुटार्हणामृदङ्गध्वनिरश्रूयत तत्र मूर्छिताशः ॥ ७७ ॥
मकरध्वजविद्विडाप्तिविद्वाञ्श्रमहृत्पुष्पसुगन्धवन्मरुद्भिः ॥
अगरूद्भवधूपधूपिताशं स महाकालनिवेशनं विवेश ॥ ७८ ॥
भगवानभिवन्द्य चन्द्रमौलिं मुनिवृन्दैरभिवन्द्यपादपद्मः ॥
श्रमहारिणि मण्डपे मनोज्ञे स विशश्राम विसृत्वरप्रभावः ॥ ७९ ॥

---

भुजयोरतितप्तेन शङ्खचक्राकृतिलोहेनाऽऽहतेषु ताडितेष्ववयवेषु संभृतानि समासादितानि व्रणानामङ्कानि यैः पुनश्च शरदण्डसदृश ऊर्ध्वपुण्ड्रो येषां पुनश्च तुलसीपत्रैः सनाथः कर्णदेशो येषां ते । शतशः पाञ्चरात्राः समवेत्यामृतं मोक्षं पञ्चभिदाविदां जीवेश्वरभेदो जीवानां परस्परभेदो जीवानामचितां भेद ईश्वरस्याचितां भेदोऽचितां च परस्परभेद इत्येवं पञ्चविधभेदविदां वदन्तः प्रगल्भैर्मुनिशिष्यवरैः सिंहैरिभा इव प्रभग्ना इति द्वयोरर्थः ॥ ७४ ॥ [ शरस्तृणविशेषः ] ॥ ७४ ॥ ७५ ॥

इत्येवं शैवादीनात्मवशं वदन्तीति तथाविधान्विधायातिक्रान्तवेलाभिर्वचोझरीभिर्निरस्ताः प्रतिवादिनो येन स उज्जयिनीं पुरीं प्राप्तवान् ॥ ७६ ॥

पयोदस्वनशङ्कया मेघशब्दाशङ्कया व्याकुलैर्गेहे पञ्जरादौ रुद्धैर्मयूरसमुदायैस्तत्क्षणे प्रतिनादितः पुनश्च व्याप्ता दिशो येन तथाभूतश्चन्द्रशेखरस्य महाकालाख्यशिवस्येज्यासंबन्धिमृदङ्गाणां ध्वनिस्तत्रोज्जयिन्यामश्रूयत ॥ ७७ ॥

मकरध्वजविद्विषः कामविद्विषः शिवस्य प्राप्तिं जानातीति तथाभूतः स महाकालमन्दिरं विवेश । तद्विशिनष्टि—पुष्पसुगन्धवद्वायुभिः श्रमहृत् । पुनश्चागरूद्भवधूपेन धूपिता आशा यत्र तत् ॥ ७८ ॥

मुनिसंघैरभिवन्द्यपादपद्मो विसृत्वरः प्रसरणशीलः प्रभावो यस्य स भगवाञ्शंकरश्चन्द्रशेखरं महाकालेश्वरमभिवन्द्य श्रमहारिणि मनोज्ञे मण्डपे विश्रामं कृतवान् ॥ ७९ ॥

---

१ °पत्रस° । २ क. °शब्दश° । ३ क. मन्दिरादौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कवये कथयास्मदीयवार्तामिह सौम्येति स भट्टभास्कराय ॥
विससर्ज वशंवदाग्रगण्यं मुनिरभ्यर्णगतं सनन्दनार्यम् ॥ ८० ॥
अभिरूपकुलावतंसभूतं बहुधाव्याकृतसर्ववेदराशिम् ॥
तमयत्ननिरस्तदुःसपत्नं प्रतिपद्येत्थमुवाच वावदूकः ॥ ८१ ॥
जयति स्म दिगन्तगीतकीर्तिर्भगवाञ्शंकरयोगिचक्रवर्ती ॥
प्रथयन्परमाद्वितीयतत्त्वं शमयंस्तत्परिपन्थिवादिदर्पम् ॥ ८२ ॥
स जगाद बुधाग्रणीर्भवन्तं कुमतोत्प्रेक्षितसूत्रवृत्तिजालम् ॥
अभिभूय वयं त्रयीशिखानां समवादिष्म परावरेऽभिसंधिम् ॥८३॥
तदिदं परिगृह्यतां मनीषिन्मनसाऽऽलोच्य निरस्य दुर्मतं स्वम् ॥
अथ वाऽस्मदुदग्रतर्कवज्रप्रतिघातात्परिरक्ष्यतां स्वपक्षः ॥ ८४ ॥
इति तामवहेलपूर्ववर्णां गिरमाकर्ण्य तदा स लब्धवर्णः ॥
यशसां निधिरीपदात्तरोपस्तमुवाच प्रहसन्यतीन्द्रशिष्यम् ॥ ८५ ॥

---

विश्रम्य यत्कृतवांस्तदाह—इहास्यां पुर्यां भट्टभास्कराय कवयेऽस्मदीयवार्तां हे सौम्य कथयेत्युक्त्वा स मुनिर्वशंवदाग्रगण्यं शिष्याग्रगण्यं समीपगतं पद्मपादार्यं विससर्ज ॥ ८० ॥

वावदूकोऽतिवक्ता सनन्दनार्यस्तं प्रतिपद्योवाच । तं विशिनष्टि—अभिरूपकुलस्य बुधगणस्यावतंसभूतम् । 'अभिरूपो बुधे रम्ये' इति मेदिनी । बहुधा व्याख्यातो वेदराशिर्येनायत्नेन निरस्ता दुःसपत्ना येन तम् ॥ ८१ ॥

यदुवाच तदाह—यो दिगन्तगीतकीर्तिर्भगवाञ्शंकरयोगिचक्रवर्ती परमद्वैततत्त्वं प्रथयंस्तस्य परिपन्थिनां वादिनां गर्वं शमयञ्जयति स्म । स बुधाग्रणीर्भवन्तं जगादेतिपरेणान्वयः ॥ ८२ ॥

यदभाषे तदाह—कुत्सितं मतं येषां तैः कुमतैरुत्प्रेक्षितं सूत्रवृत्तिजालमभिभूय वेदान्तानां परावरे ब्रह्माभिन्ने प्रतीचि तात्पर्यमवादिष्म ॥ ८३ ॥

तत्तस्मादिदमस्मदीयं मतं मनसाऽऽलोच्य स्वीयं मतं विहाय परिगृह्यतां यतो हे मनीषिन् । अथवा स्वमते दुराग्रहश्चेत्तर्ह्यस्मदीयोदग्रतर्कलक्षणवज्रप्रतिघातात्स्वपक्षः परिरक्ष्यताम् ॥ ८४ ॥

इत्येवमवज्ञापूर्विका वर्णा यस्यां तां गिरमाकर्ण्य स लब्धवर्णो विचक्षणो यशसां निधिरीषदात्तरोषो भट्टभास्करः प्रहसंस्तं यतीन्द्रशिष्यमुवाच ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्रुवमेष न शुश्रुवाननुदन्तं मम दुर्वादिवचस्ततीर्नुदन्तम् ॥
परकीर्तिबिसाङ्कुरानदन्तं विदुषां मूर्धसु नानटत्पदं तम् ॥ ८६ ॥
मम वल्गति सूक्तिगुम्फवृन्दे कणभुग्जल्पितमल्पतामुपैति ॥
कपिलस्य पलायते प्रलापः सुधियां कैव कथाऽधुनातनानाम् ॥८७॥
इति वादिनमब्रवीत्सनन्दः कुशलोऽथैनमविज्ञ माऽवमंस्थाः ॥
न हि दारितभूधरोऽपि टङ्कः प्रभवेद्वज्रमणिप्रभेदनाय ॥ ८८ ॥
स तमेवमुदीर्य तीर्थकीर्तेरुपकण्ठं प्रतिपद्य सद्विदग्र्यः ॥
सकलं तदवोचदानुपूर्व्या स महात्माऽपि यतीशमाससाद ॥ ८९ ॥
अथ भास्करमस्करिप्रवीरौ बहुधाक्षेपसमर्थनप्रवीणौ ॥
बहुभिर्वचनैरुदारवृत्तैर्व्यदधातां विजयैषिणौ विवादम् ॥ ९० ॥
अनयोरतिचित्रशब्दशय्यां दधतोर्दुर्नयभेदशक्तयुक्त्योः ॥
पटुवादमृधेऽन्तरं तटस्थाः श्रुतवन्तोऽपि न किंचनान्वविन्दन् ॥९१॥

---

एष तव गुरुर्मम[1] तं वृत्तान्तं न शुश्रुवान् । उदन्तं विशिनष्टि—दुर्वादिवचस्ततीर्नुदन्तं परकीर्तिलक्षणबिसाङ्कुरान्भक्षयन्तं विदुषां शिरःसु नानटदतिशयेन नृत्यत्पदं यस्य ॥ ८६ ॥ [ नुदन्तं खण्डयन्तम् ] ॥ ८६ ॥

मम सूक्तिगुम्फवृन्दे सूक्तिरचनासमुदाये वल्गति सति कणादभाषितमल्पतां प्राप्नोति कपिलस्य तु प्रलापः पलायते तथाचाधुनातनानां सुधियां कैव कथा ॥ ८७ ॥

इति वादिनमेनं भट्टभास्करमथानन्तरं कुशलः सनन्दनोऽब्रवीत् । हेऽविज्ञ माऽवमंस्था माऽवजानीह्यवज्ञां मा कुरु यस्माद्दारितपर्वतोऽपि टङ्को ग्रावदारणो वज्रमणिभेदनाय समर्थो न भवति ॥ ८८ ॥

स पद्मपादस्तं भट्टभास्करमेवमुदीर्य तीर्थकीर्तेर्गुरोः समीपं प्राप्य सद्विदामग्र्यस्तत्सर्वमानुपूर्व्या प्रोक्तवान् । स महात्मा भट्टभास्करोऽपि यतीशं प्राप ॥ ८९ ॥ [ तीर्थेति । तीर्थवत्प्रयागादितीर्थराजवद्विश्वपावनकर्त्री कीर्तिर्यस्य तस्य भगवत्पादस्येत्यर्थः ] ॥ ८९ ॥

अथानन्तरं भास्करयतीशप्रवीरौ बहुधाक्षेपसमर्थनयोरतिकुशलौ विजयैषिणौ बहुभिरुदारपद्यैर्वचनैर्विवादं कृतवन्तौ ॥ ९० ॥

अतिचित्रशब्दशय्यां तथाभूतपदानुगुण्यविश्रान्तिं दधतोर्दुर्युक्तिभेदे शक्ता युक्तिर्ययोस्तयोरनयोः पटुवादसंख्ये तटस्थाः श्रुतवन्तोऽपि किंचिदन्तरं न प्राप्तवन्तः ॥ ९१ ॥

---

१ क. °र्ममेदन्तं शु° । २ क. °नुशान्तिं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तस्य यतिः समीक्ष्य दाक्ष्यं निजपक्षाब्जशरज्जडाब्जभूतम् ॥
बहुधाऽऽक्षिपदस्य पक्षमार्यो विबुधानां पुरतोऽप्रभातकक्ष्यम् ॥९२॥
अथ भास्करवित्स्वपक्षगुप्त्यै विधुतो वाग्मिवरः प्रगल्भयुक्त्या ॥
श्रुतिशीर्षवचःप्रकाश्यमेवं कविरद्वैतमपाकरिष्णुरूचे ॥ ९३ ॥
प्रशमिंस्त्वदुदीरितं न युक्तं प्रकृतिर्जीवपरात्मभेदिकेति ॥
न भिनत्ति हि जीवगेशगा वो भयभावस्य तदुत्तरोद्भवत्वात् ॥
मुनिरेवमिहोत्तरं बभाषे मुकुरो वा प्रतिबिम्बबिम्बभेदी ॥
कथमीरय वक्त्रमात्रगश्चेच्चितिमात्राश्रिदियं तथेति तुल्यम् ॥९५॥
चितिमात्रगतप्रकृत्युपाधेर्जहतो बिम्बपरात्मपक्षपातम् ॥
प्रतिबिम्बितजीवपक्षपातो मुकुरस्येव विरुध्यते न जातु ॥ ९६ ॥

---

अथ यतिस्तस्य दाक्ष्यं समीक्ष्य स्वपक्षचन्द्रस्य शरत्कालीनकमलभूतम् । 'अब्जो धन्वन्तरौ चन्द्रे निचुले शङ्खपद्मयोः' इति विश्वप्रकाशः । तथाच चिदब्जस्य चन्द्रस्याग्रे यथा जडाब्जं कमलं मुकुलितं भवति तथाभूतमस्य पक्षमार्यः श्रीशंकरो बहुधाऽऽक्षिपत् । पक्षं विशिनष्टि—सुपण्डितानामग्रेऽप्रभाताः कक्ष्याः कोट्यो यस्मिंस्तम् ॥ ९२ ॥ [दाक्ष्यं दक्षत्वम् ] ॥ ९२ ॥

अथ भास्करो विद्वान्वाग्मिवरः प्रकम्पितः सन्स्वपक्षपालनाय श्रुतिशीर्षवचोभिः प्रकाश्यमद्वैतं प्रगल्भया युक्त्याऽपाकरिष्णुरेवमुवाच ॥ ९३ ॥ [ एवं वक्ष्यमाणम् ] ॥ ९३ ॥

हे प्रशमिन्प्रकृतिर्जीवपरात्मनोर्भेदिकेति तदुक्तं न युक्तं हि यस्मात्सा जीवगा परात्मगा च न भिनत्ति । तत्र हेतुरुभयभावस्य जीवभावस्येशभावस्य च प्रकृत्युत्तरोद्भवत्वात् ॥९४॥ [उभयेति । जीवत्वपरमात्मत्वस्येत्यर्थः । तदिति । "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुतेः प्रकृत्युत्तरभावित्वादिति यावत् ] ॥९४॥

इत्युक्तो मुनिरेवमिहोत्तरमुवाच—आदर्शः किल प्रतिबिम्बबिम्बभेदी कथं किं प्रतिबिम्बगा उत बिम्बग इतीरय मुखमात्रगश्चेन्मुकुरस्तद्भेदी तर्हि चिन्मात्राश्रितेयं प्रकृतिरपि बिम्बप्रतिबिम्बभेदिकेति तुल्यमित्यर्थः ॥ ९५ ॥

नन्वेवं तर्हि चिन्मात्र एव दुःखित्वादिकं कुतो नाऽऽपादयति किमिति जीव एवाऽऽपादयतीति चेत्तत्राऽऽह—चितिमात्रगतप्रकृत्युपाधेर्बिम्बभूतपरात्मपक्षपातं त्यजतः प्रतिबिम्बभूतजीवात्मपक्षपातो दर्पणस्येव कदाचिदपि न विरुध्यते ॥ ९६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविकारिनिरस्तसङ्गबोधैकरसात्माश्रयता न युज्यतेऽस्याः ॥
अत एव विशिष्टसंश्रितत्वं प्रकृतेः स्यादिति नापि शङ्कनीयम् ॥९७॥
न हि मानकथा विशिष्टगत्वे भवदापादित ईक्षते तथाहि ॥
अहमज्ञ इति प्रतीतिरेषा न हि मानत्वमिहाश्नुते तथा चेत् ॥९८॥
अनुभव्यहमित्यपि प्रतीतेरनुभूतेश्च विशिष्टनिष्ठता स्यात् ॥
अजडानुभवस्य नो जडान्तःकरणस्थत्वमितीष्टता न तस्याः ॥९९॥
ननु दाहकता यथाऽग्नियोगादधिकूटं व्यपदिश्यते तथैव ॥
अनुभूतिमदात्मयोगतोऽन्तःकरणे सा व्यपदिश्यतेऽनुभूतिः ॥१००॥
इति चेन्नैवमिहापि तस्य मायाश्रयचिन्मात्रयुते तथोपचारः ॥
न पुनस्तदुपाधियोगतोऽन्तःकरणस्येति समाऽन्यथागतिर्हि ॥ १॥

---

नन्वस्या विकारिण्या अबोधरूपायाः प्रकृतेरविकारि निरस्तसङ्गं ज्ञानैकरसस्वरूपं ब्रह्माऽऽश्रयो न युज्यते विरोधात् । अत एवान्तःकरणविशिष्टसंश्रितत्वं प्रकृतेः स्यादित्याशङ्क्य [1]परिहरति—अविकारीति । अत एवेत्यपि न शङ्कनीयमिति वा ॥ ९७ ॥ [ विशिष्टेति । प्रकृतिलेशात्मकाविद्याविशिष्टजीवसंश्रितत्वमित्यर्थः ॥ ९७ ॥

हि यस्मात्त्वयाऽऽपादिते विशिष्टगत्वे प्रमाणकथा न दृश्यते । नन्वहमज्ञ इति विशिष्टाश्रिताज्ञानानुभव एव मानमित्याशङ्क्याऽऽह—तथाहीति । इहास्मिन्नर्थेऽहमज्ञ इत्येषा प्रतीतिर्मानत्वं न ह्यश्नुते । तथा चेदित्यस्योत्तरेण संबन्धः ॥ ९८ ॥ [ विशिष्टगत्वे प्रकृतेर्विशिष्टस्तदेकदेशीभूताविद्याविशिष्टो यो जीवस्तन्निष्ठत्वे विषय इत्यर्थः ] ॥ ९८ ॥

विपक्षे दोषमाह—तथा चेदुक्तप्रतीतिर्मानत्वमश्नुते चेदहमनुभवीत्यपि प्रतीतेर्हेतोरनुभूतेरपि विशिष्टनिष्ठता स्यात् । इष्टापत्तिमाशङ्क्याऽऽह—अजडस्यानुभवस्य जडान्तःकरणनिष्ठत्वं न संभवतीति हेतोस्तस्या विशिष्टनिष्ठताया इष्टता नास्ति ॥ ९९ ॥

भट्टभास्करः शङ्कते—ननु यथा दाहकवह्नितादात्म्याल्लोहपिण्डे दाहकता व्यपदिश्यते तथैवानुभूतिमदात्मतादात्म्यादन्तःकरणे साऽनुभूतिर्व्यपदिश्यत इत्यर्थः ॥ १०० ॥

परिहरति—इति चेन्नैवं यतस्तथेहापि मायाश्रयचिन्मात्रयुतेऽन्तःकरणे तस्याज्ञानस्योपचारो न पुनस्तस्य चिन्मात्रस्योपाधेः प्रकृतेर्योगतोऽन्तःकरणस्येत्यन्यथागतिः समाना ॥ १ ॥ [ इहाप्यहमज्ञ इत्यनुभवेऽपीत्यर्थः ] ॥ १ ॥

---

१ ग. °ति नो विश° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च तत्र हि बाधकस्य सत्त्वादियमस्तु प्रकृतेर्न साऽस्त्यबाधात् ॥
इति वाच्यमिहापि तज्जचित्ते तदुपाश्रित्ययुतेश्च बाधकत्वात् ॥ २ ॥
अधिसुप्त्यपि चित्तवर्ति तत्स्याद्यदि चाज्ञानमिदं हृदाश्रितं स्यात् ॥
तदिहास्ति न मानमुक्तरीत्या प्रकृतेर्दृश्यविशिष्टनिष्ठतायाम् ॥ ३ ॥
ननु न प्रतिबन्धिकैव सुप्ताविति सा दूरत एव चिद्गतेति ॥
प्रतिबन्धकशून्यता तु सुप्तेः परमात्मैक्यगतेः सतेति वाक्यात् ॥ ४ ॥
न च तत्र च तत्स्थितिप्रतीतिः सति संपद्य विदुर्न हीति वाक्यात् ॥
श्रुतिगीस्तदधिक्षिपत्यभावप्रतिपत्तेर्न च निह्नवोऽत्र नेति ॥ १०५ ॥

---

ननु तत्रान्तःकरणेऽनुभूतेर्व्यपदेशेऽजडानुभवस्य जडान्तःकरणस्थत्वमनुपपन्नमिति बाधकस्य सत्त्वादनुभूतिमदात्मयोगादन्तःकरणेऽनुभूतिव्यपदेश इतीयं गतिरस्तु प्रकृतेऽन्तःकरणस्य मायाश्रयत्वे बाधाभावान्मायाश्रयचिन्मात्रयुतेऽन्तःकरणेऽज्ञानस्योपचार इत्युक्ता गतिर्नास्तीत्याशङ्क्य परिहरति—इति न च वाच्यमिति। कुत इत्यपेक्षायामाह—तेन विद्याजनिते चित्ते विद्याश्रयत्वायोगस्य बाधकत्वात् ॥ २ ॥

किंचेदमज्ञानं यदि हृदाश्रितं स्यात्तर्ह्यधिसुप्त्यपि सुषुप्तावपि चित्तवर्ति तदज्ञानं स्यात्तस्मादिहास्यां प्रकृतेर्दृश्यान्तःकरणविशिष्टनिष्ठतायामुक्तरीत्या प्रमाणं नास्त्यतश्चिद्गतैवेत्यर्थः ॥ ३ ॥

एवमुक्तो भट्टभास्करः शङ्कते नन्वित्यादिचतुर्भिः। ननु सुषुप्तौ जीवब्रह्मैक्यप्रतिबन्धिकाऽविद्यैव नास्तीति हेतोः साऽविद्या तदानीं चिद्गतेति दूरत एव। अत्र प्रमाणाकाङ्क्षायामाह—सुप्ते प्रतिबन्धकशून्यता तु "सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति" इति वाक्याज्जीवस्य परमात्मनैक्यस्यावगतेस्तथाचोक्तश्रुतिवाक्यमेवात्र प्रमाणमिति भावः ॥ ४ ॥

ननु सति संपद्य न विदुरिति वाक्यात्तत्र सुषुप्तावज्ञानस्थितिप्रतीतिरित्याशङ्क्य परिहरति—न चेति। सति परमात्मनि संपद्यैक्यं प्राप्य जना न विदुः किमपि न जानन्ति। हेतुमाह—यत उक्तश्रुतिगीस्तज्ज्ञानमधिक्षिपति निषेधति। ननु निह्नवो ज्ञाननिषेधोऽत्र नास्तीत्याशङ्क्य परिहरति—न चेति। निह्नवोऽत्रश्रुतिगिरि नेति न च। अत्र हेतुमाह—न विदुरिति ज्ञानाभावप्रतीतेरिति ॥ ५ ॥

---

१ क. °द्यदि वा ज्ञा°। २ क. °याः। ३ न°। ३ ग. घ. स्यात्तस्मा°। ४ ग. सौम्य। ५ ग. स्वय°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमु नित्यमनित्यमेव चैतत्प्रथमो नेह समस्ति युक्त्यभावात् ॥
अनिवर्तकसत्त्वतोऽस्य नान्त्यो न हि मिथ्यादविरोधि चित्प्रकाशः ॥
न च तच्छमयेज्जडप्रकाशोऽप्यविरोधात्सुतरां जडत्वतोऽस्य ॥
तदिहाप्रतिबन्धकत्वमस्य प्रभवेत्किंत्विह तद्भ्रमाग्रहादि ॥ ७ ॥
इति चेदिदमीरय भ्रमः को मनुजोऽहं त्विति शेमुषीति चेन्न ॥
अतिविस्मृतिशीलता तवाहो गदितुः सर्वपदार्थसंकरस्य ॥ ८ ॥

---

किंचैतदज्ञानं किमु नित्यमुतानित्यमेवेति विकल्प्य दूषयति—किम्विति । श्लोक-विकल्पद्वये प्रथमो विकल्पः सम्यङ्नास्ति । तत्र हेतुर्युक्त्यभावात् । नान्त्योऽस्यानिवर्तक-सत्त्वतो निवर्तकसत्त्वाभावात् । एतदेवोपपादयन्किमस्य चित्प्रकाशो निवर्तक उत जडप्रकाश इति विकल्प्याऽऽद्यं प्रत्याह—हि यस्मात्तदज्ञानमविरोधि चित्प्रकाशो न भिद्यात् । उत्तर-श्लोकस्थतत्पदमत्रापि संबन्धनीयम् ॥ ६ ॥ [ अविरोधीति । साक्षित्वेनाज्ञानविरोधि-त्वविधुर एतादृशो यश्चित्प्रकाशः स तावदज्ञानं प्रकृतं भावरूपत्वेन भवत्संमतं नैव भिद्या-दित्यन्वयः ] ॥ ६ ॥

द्वितीयं प्रत्याह–तदज्ञानं जडप्रकाशो न च शमयेत्तत्र हेतुर्जडेन जडस्य विरोधाभावात् । +तत्तस्मादिहावस्थात्रयेऽस्याज्ञानस्याप्रतिबन्धकत्वं प्रभवेदज्ञानं प्रतिबन्धकं न भवतीत्यर्थः । तथाच सकलसंसारबीजभूतमवस्थात्रयेऽप्यनपायि संसारविमोक्षद्वारा जायमानमज्ञानम-स्तीति भवत्सिद्धान्तोऽनुपपन्न इति भावः । किं तर्हि प्रतिबन्धकमित्याशङ्क्याऽऽह—किं-त्विति । इहावस्थात्रये तत्प्रतिबन्धकं चिदनवभासनिमित्तं भ्रमाग्रहादि । भ्रमो मिथ्या-ज्ञानमग्रहोऽग्रहणम् । आदिपदेन तत्संस्कारादिसंग्रहः ॥ ७ ॥ [ प्रतिबन्धकत्वं जीवकर्तृ-क्यमान इत्यार्थिकम् । प्रभवेत्किमपि तु नैव प्रभवेदित्यर्थः । नन्वेवं तर्हि निद्रातो व्युत्थि-तस्य किंविषयकः परामर्श इत्यत्राऽऽह—त्विहेत्यादिशेषेण । इह सुषुप्तौ तु भ्रमाग्रहादेः तदज्ञानत्वेन जाग्रति परामृश्यमानं वस्त्वस्तीत्यर्थः ] ॥ ७ ॥

भ्रमे निरस्ते संस्कारनिरासोऽर्थात्सेत्स्यत्यग्रहणं स्वयोग्यत्वादेव नोपपन्नमित्यभिप्राये-णाऽऽचार्य आह—इतीति । भिन्नाभिन्नविषयत्वेन सर्वप्रत्ययायाथार्थ्यान्न भ्रमसिद्धिरिति किंशब्दार्थः । प्रश्नं मत्वोत्तरमाह—मनुष्योऽहमित्यहंकारादिदेहपर्यन्तेऽनात्मन्यात्मबुद्धि-भ्रम इत्यर्थः । उपहासपूर्वकमुत्तरं वक्तुमाचार्य आह—इति चेन्नाहो सर्वपदार्थसंकरस्य वक्तुस्तवातिविस्मरणशीलता ॥ ८ ॥ [ सर्वेति । भेदाभेदाभ्यां सर्ववस्तुसांमिश्र्यभावस्य-

---

+ 'एतदारभ्य ग्रह इत्यन्तो ग्रन्थः 'क' 'ग.' पुस्तकयोर्न दृश्यते ।

---

१ क. ग °दिह प्र° २ ग. किं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमितित्वमुपाश्रयन्प्रतीतिरमुकः खण्ड इति स्वशास्त्रसिद्धात्॥
भिदभिद्द्वयगोचरत्वहेतोर्धियमेतां तु किमित्युपेक्षसे त्वम्॥ ९॥
अनुमानमिदं तथाच सिद्धं विमता धीः प्रमितिर्भिदाभिदत्वात्॥
इह चारु निदर्शनं भवेत्सा तव खण्डोऽयमिति प्रतीतिरेषा॥ १०॥
ननु संहननात्मधीः प्रमाणं न भवत्येव निषिध्यमानगत्वात्॥
इदमिति प्रतिपन्नरूप्यधीवत्प्रबला सत्प्रतिपक्षतेति चेन्न॥ ११॥
व्यभिचारयुतत्वतोऽस्य खण्डः पशुरित्यत्र तदन्यधीस्थमुण्डे॥
इतरत्र निषिध्यमानखण्डोल्लिखितत्वेन निरुक्तहेतुमत्त्वात्॥ १२॥

...र्थः। अतीति। परमविस्मरणशीलताऽस्तीत्यर्थः। तथा च त्वन्मते भ्रमः पदार्थ एव नास्तीति भावः]॥ ८॥

विस्मरणशीलतामेवाऽऽह—सर्वस्यापि भिदभिद्द्वयविषयत्वात्स्वशास्त्रसिद्धाद्धेतोरमुकः खण्ड इति भेदाभेदप्रत्ययस्य प्रमाणत्वमुपाश्रयन्नहं मनुज इति प्रत्ययं भेदाभेदविषयं तु त्वं भेदाभेदाभ्यां सर्वसंकरवादी किमित्युपेक्षसे॥ ९॥

तथाचेदमनुमानं सिद्धम्—विवादास्पदाऽहं मनुज इति बुद्धिः प्रमाणं भिन्नाभिन्नविषयत्वात्सा खण्डोऽयमित्येषा तव प्रतीतिरिहानुमाने चारु निदर्शनं दृष्टान्तः॥ १०॥

ननु संघातात्मबुद्धिरप्रमाणं निषिध्यमानविषयत्वादिदमिति प्रतिपन्नरजतबुद्धिवदिति ...साध्याभावसाधकहेत्वन्तरेण प्रबलां सत्प्रतिपक्षतामापादयति भट्टभास्करः—नन्विति। नाहं मनुजो ब्रह्मास्मीति प्रतिप्रत्ययसामर्थ्यान्निषिध्यमानविषयत्वमित्यर्थः। दूषयति—इति चेन्नेति॥ ११॥ [इदमिति प्रतिपन्नेत्यत्र 'प्रह्वाभ्यां च' इति वचनेन पूर्ववर्णस्य ...वैकल्पिकगुरुत्वाभिधानात् 'सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा' इति कुमारसंभवे तथैव प्रयुक्तत्वाच्च न च्छन्दोभङ्गापत्तिरिति दिक्]॥ ११॥

तत्र हेतुमाह—अस्य हेतोः खण्डः पशुरित्यत्र व्यभिचारयुक्तत्वात्। कुत एतदिति चेत्ताऽऽह—इतरत्र नायं खण्डो गौः किंतु मुण्डो गौरिति खण्डान्यधीस्थे मुण्डे निषिध्यमानखण्डोल्लिखितत्वेन निषिध्यमानविषयत्वरूपनिरुक्तहेतुमत्त्वात्। तथाच खण्डमुण्डाभ्यां गोत्वस्येव भेदप्रत्ययवद्देहब्रह्मभ्यां जीवस्याभेदप्रत्ययस्यापि प्रामाण्योपपत्तिरिति भावः॥ १२॥

* अर्शआदेराकृतिगणत्वादच्।

१ क. घ. 'भिदित्वा°'। २ क. ग. '°द्द्व°'। ३ क. ग. '°यस्य प्रा°'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु हेतुरयं विवक्ष्यतेऽत्र प्रतिपन्नोपाधिके निषेधगत्वम् ॥
इति चेन्न विवक्षितस्य हेतोर्व्यभिचारात्पुनरप्यमुत्र चैव ॥ १३ ॥
ननु गोत्व उपाधिके त्वमुष्य प्रतिपन्नस्य हि तत्र नो निषेधः ॥
अपि तु प्रथमानमुण्ड इत्यत्र तथाच व्यभिचारिता न हेतोः ॥ १४ ॥
इति चेन्न विकल्पनासहत्वात्किमु खण्डस्य तु केवले निषेधः ॥
उत गोत्वसमन्विते स मुण्डे प्रथमो नो घटते प्रसक्त्यभावात् ॥ १५ ॥
न हि जात्वपि खण्डके प्रसक्तः परमुण्डस्त्विति संप्रसक्त्यभावः ॥
चरमोऽपि न गोत्वयुक्तमुण्डे खलु खण्डस्य निषेधकाल एव ॥ १६ ॥
स्वविशेषणभूतगोत्व एव स्फुटमेतस्य निषेधनं श्रुतं स्यात् ।
तदिहोदितहेतुसत्त्वतोऽस्य व्यभिचारो दृढवज्रलेप एव ॥ १७ ॥

---

ननु नायं निषिध्यमानविषयत्वमात्रं हेतुः किंतु प्रतिपन्नोपाधौ निषिध्यमानविषयत्वमिति
भट्टभास्करः शङ्कते—नन्विति । प्रतिपन्नस्य प्रतीतस्योपाधिक उपाधावधिष्ठाने । तथाचे-
दमंशे प्रतिपन्नं तत्रैव निषिध्यते नेदं रजतमिति तथाऽऽत्मनि प्रतिपन्नं मनुजत्वं तत्रैव निषि-
ध्यत इति तस्य भ्रमत्वं खण्डो गौरित्यस्य तु तद्वैपरीत्यान्न तत्त्वमिति भावः । दूषयति—
इतीति । तत्र हेतुर्विवक्षितस्य हेतोः पुनरप्यमुत्र खण्डो गौरित्यमुष्मिन्व्यभिचारा-
देव ॥ १३ ॥

ननु नायं खण्डः किंतु मुण्ड इति गोत्व उपाधौ प्रतिपन्नस्य खण्डस्य न तत्र निषेधोऽपि
तु प्रथमानमुण्ड इति तथाच हेतोर्व्यभिचारिता नास्तीति शङ्कते—नन्विति ॥ १४ ॥
परिहरति—इति चेन्न विकल्पनासहत्वात् । विकल्पनासहत्वमेव दर्शयति—किमु
खण्डस्य केवले मुण्डे निषेध उत गोत्वोपहिते मुण्डे स निषेधस्तत्र प्रथमो न युज्यते
प्राप्त्यभावात् ॥ १५ ॥

हि यस्मादिह भूतले घटो नेत्यत्र भूतलसंसृष्टतया प्रतिपन्नस्य स्मर्यमाणस्यान्यत्र निषेधो
दृष्टः परो मुण्डस्तु कदाचिदपि खण्डे प्रसक्तो न भवतीत्येतस्मात्प्रसक्त्यभावः । द्वितीयं
प्रत्याह—चरमोऽपि न यतो गोत्वोपहितमुण्डे खण्डस्य निषेधसमय एव मुण्डविशेषणीभूतगो-
त्वेऽप्येतस्य खण्डस्य निषेधनं श्रुतं स्याद्यथेदमि प्रतिपन्नामिदंतोपहितशुक्तिव्यक्तौ निषि-
ध्यते तद्वदित्यर्थः । तत्तस्मादिह प्रतिपन्नोपाधौ निषिध्यमानविषये खण्डज्ञान उक्तहेतोः
प्रतिपन्नोपाधौ निषिध्यमानविषयस्य सत्त्वादस्य हेतोर्व्यभिचारो दृढवज्रलेप एव ॥ १६ ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु भातितरामुपाधिरत्रादलदेतद्व्यवहर्तृतेति चेन्न ॥
अहमोऽनुभवेन साधनव्यापकभावादवगत्यनन्तरं च ॥ १८ ॥
ननु तद्व्यवहारसंछिदाया इह तत्केन कमित्यनेन मुक्तौ ॥
श्रुतिवाक्यगतेन संप्रतीतेर्व्यवहर्तुर्न कथं छिदेति चेन्न ॥ १९ ॥
तदिदं घटते मतेऽस्मदीये तदबोधोल्लसितत्वतोऽखिलस्य ॥
तदबोधलये लयोपपत्तेर्जगतः सत्यतया छिदा न ते स्यात् ॥१२०॥
ननु पञ्चसु तु स्थलेषु भेदो ह्यभिदा नो तु शरीरदेहिनोस्ते ॥
प्रथितस्थलपञ्चकेतरत्वात्फलिता ह्यत्र तथा च हेत्वसिद्धिः ॥२१॥

---

अत्रानुच्छिन्नैतद्व्यवहारत्वमुपाधिरतिशयेन भातीति शङ्कते—नन्विति। नायं खण्डो गौरिति निषेधप्रत्ययोत्तरकालमपि खण्डे गोत्वव्यवहारो लक्ष्यते न तथा ब्रह्मसाक्षात्कारादूर्ध्वं मनुजत्वव्यवहार इति भावः। साधनव्यापकत्वान्नायमुपाधिरिति समाधत्ते—इति चेन्न साक्षात्कारोत्तरकालमपि प्रारब्धकर्मानुरोधादहं मनुज इत्यहमोऽनुभवेन साधनव्यापकत्वात् ॥ १८ ॥ [ अदलन्त्यनुच्छिद्यमाना चासावेतद्व्यवहर्तृता चेत्यर्थः ] ॥ १८ ॥

प्रारब्धकर्मसमाप्तेरूर्ध्वं व्यवहारस्य व्यवहर्तुश्चोच्छेदान्न साधनव्यापकत्वमित्याशयेन चोदयति—नन्विति। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति श्रुतिवाक्यगतेन मोक्ष इह तत्केन कमित्यनेन तद्व्यवहारोच्छेदस्य सम्यक्प्रतीतेर्व्यवहर्तुरुच्छेदः कथं नास्ति किं स्यात्स्येव। परिहरति—इति चेन्नेति ॥ १९ ॥

यस्मात्तदिदमस्मदीये मते घटते तस्य परब्रह्मणोऽबोधः स चासावबोध इति वा। सर्वस्य तदज्ञानविलसितत्वात्तदज्ञानलये लयोपपत्तेः। ते मते तु जगतः सत्यतयोच्छेदो न स्यात् ॥ १२० ॥

भिन्नाभिन्नविषयत्वस्य हेतोरसिद्धिं शङ्कते—ननु जातिव्यक्तिगुणगुणिकार्यकारणविशिष्टस्वरूपांशांशिसंबन्धा यत्र विद्यन्ते तत्र पञ्चसु तु स्थलेषु भेदोऽभेदश्च न तु शरीरदेहिनोस्ते भिदाभिदे तत्र हेतुरुक्तः प्रथितस्थलपञ्चकेतरत्वात्। अयमर्थः—देहदेहिनोर्द्रव्यत्वाज्जातिव्यक्तिता[2] गुणगुणिभावश्च न संभवति। नापि कार्यकारणता देहस्य भौतिकत्वात्। नापि विशिष्टस्वरूपता दण्डवैशिष्ट्यस्य चैत्रतन्त्रतावद्देहस्याऽऽत्मतन्त्रत्वाभावात्। नाप्यंशांशिता देहिनो निरवयवद्रव्यत्वात्। तथाचात्र देहदेहिनोर्हेत्वसिद्धिरेव फलितेत्यर्थः ॥ २१ ॥

---

१ ग. घ. °च्छिन्नव्यव°। २ ग. घ. 'क्तित्वं गुण°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति चेन्न विकल्पनासहत्वान्मिलितानां भिदभेदतन्त्रता किमु ॥
उत वा पृथगेव तन्न नाऽऽद्यो मिलिताः पञ्च न हि क्वचिद्यतः स्युः॥२२॥
चरमोऽपि न युज्यते तदाऽङ्गाङ्गिकभावस्य च तन्त्रता न किं स्यात्॥
न च योजकगौरवं च दोषः प्रकृते तस्य तवापि संमतत्वात् ॥ २३ ॥
अपि चान्यतमस्य जातितद्वत्प्रभृतीनां घटकत्व आग्रहश्चेत् ॥
अपि सोऽत्र न दुर्लभश्चिदात्माङ्गकयोः कारणकार्यभावभावात्॥२४॥
न च वाच्यमिदं परात्मजत्वात्सकलस्यापि न जीवकार्यतेति ॥
तदभेदत एव सर्वकस्याप्युपपत्तेरिह जीवकार्यतायाः ॥ २५ ॥
तदसिद्धिमुखानुमानदोषानुदयादुक्तनयस्य निर्मलत्वम् ॥
भ्रमधीप्रमितिस्ववेदिनोऽतस्तव न भ्रान्तिपदार्थ एव सिध्येत् ॥ २६ ॥
अपि च भ्रम एव किं तवान्तःकरणस्येति चिदात्मनोऽथवाऽसौ ॥
परिणाम इहाऽऽदिमो न तस्याऽऽत्मगतत्वानुभवस्य भङ्गपत्तेः॥ २७॥

---

परिहरति—इति चेन्नेति । किं मिलितानामेतेषां भेदाभेदप्रयोजकत्वमुत पृथगेव । तत्राऽऽद्यो न संभवति यतो मिलिताः पञ्च कचिदपि न स्युः ॥ २२ ॥

अन्त्योऽपि न युज्यते तदा प्रत्येकं प्रयोजकत्वे गुणगुणिभावादिवदङ्गाङ्गिकभावस्य देहदेहिभावस्यापि प्रयोजकत्वं किं न स्यात् । न च प्रयोजकगौरवमपि दोषः । प्रकृते तस्याङ्गाङ्गिकभावस्य तवापि संमतत्वात् । देहदेहिनोर्भेदाभेदानङ्गीकारे सर्वसंकरवादिनस्तव सिद्धान्तो बाध्येत ॥ २३ ॥

अपि च जातिजातिमत्प्रभृतीनां जातिव्यक्त्यादीनामन्यतमस्य प्रयोजकत्वेऽभिनिवेशश्चेत्सोऽप्यत्र दुर्लभो नास्ति । चिदात्मशरीरकयोः कार्यकारणभावसत्त्वात् ॥ २४ ॥

सकलस्यापि परात्मकार्यत्वान्न जीवकार्यतेतीदं त्वया न च वाच्यम् । जीवस्य ब्रह्माभेदादेव सर्वस्यापीह जीवकार्यताया उपपत्तेः ॥ २५ ॥

असिद्ध्यादिदोषवैधुर्यादनुमानं निरवद्यमित्युपसंहरति—तत्तस्मादसिद्ध्यादीनामनुमानदोषाणामनुदयादुक्तानुमानस्य निर्मलत्वमतो भ्रमप्रमितिस्ववेदिनस्तव भ्रमपदार्थ एव न सिध्येत् ॥ २६ ॥

अहं मनुज इत्यादिप्रत्ययानां याथार्थ्यान्न भ्रमत्वमित्युक्तं संप्रति समवायिकारणपर्यालोचनयाऽपि भ्रमत्वं प्रतिक्षिप्यत इत्याह—अपि चैष भ्रमः किं तव मतेऽन्तःकरणस्य परिणामोऽथवा चिदात्मनोऽसौ परिणाम इत्यस्मिन्पक्षद्वय आद्यो न संभवति । तस्य भ्रमस्याऽऽत्मगतत्वानुभवस्य भङ्गापत्तेः । मृज्जस्य घटस्य तन्त्वनाश्रयत्ववदन्तःकरणपरिणामित्वे भ्रमस्याऽऽत्माश्रयत्वं न स्यादित्यर्थः ॥२७॥ [ एषोऽहं मनुष्य इति भ्रमः[1] ॥२७॥

---

१ ग. °कत्वं पृथग्वा । त° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु रक्ततमप्रसूनयोगात्स्फटिके संस्फुरणं यथाऽरुणिम्नः ॥
भ्रमसंयुतचित्तयोगतोऽस्य भ्रमणस्यानुभवस्तथाऽऽत्मनि स्यात् ॥२८॥
इति चेदयमीरयाऽऽत्मयोगो भ्रमणस्याऽऽश्रित एप सन्नसन्वा ॥
प्रथमो घटते न संसृजेस्तेऽपरथाख्यातिवदस्य शून्यकत्वात् ॥ २९ ॥
चरमोऽपि न युज्यतेऽपरोक्षप्रथनस्यानुपपद्यमानतायाः ॥
परिणामविशेष आत्मनोऽसौ भ्रम इत्येप न युज्यतेऽन्त्यपक्षः ॥१३०॥
असमागतयाऽऽत्मनो निरस्तेतरयुक्तेः परिणत्ययोग्यतायाः ॥
परिणत्ययुजेश्च योग्यतायामपि बुद्ध्याकृतितश्चिदात्मनोऽस्य ॥ ३१ ॥
न हि नित्यचिदाश्रयप्रतीचः परिणामः पुनरन्याचित्स्वरूपः ॥
गुणयोः समुदायगत्ययोगाद्गुणतावान्तरजातितः सजात्योः ॥ ३२ ॥

---

ननु रक्ततमस्य जपाकुसुमस्य योगाद्यथा स्फटिके लौहित्यस्य स्फुरणं तथा भ्रमसंयुतचित्तयोगादस्य भ्रमस्याऽऽत्मन्यनुभवः स्यादिति शङ्कते— नन्विति ॥ २८ ॥

एतत्परिहर्तुं पृच्छति—इति चेदयमन्तःकरणाश्रितस्य भ्रमस्य स्वीकृत आत्मसंबन्धः सन्नसन्वा तत्र प्रथमो न घटते । अन्यथाख्यातिवादिनस्तव मते संसर्गस्य शून्यत्वात् । तथाचाऽऽत्मभ्रमसंबन्धो न स्यादित्यर्थः ॥ २९ ॥

नाप्यसत्त्वमपरोक्षप्रथाया अनुपपद्यमानत्वादित्याह—चरमोऽपीति । एवमन्तःकरणस्य परिणामो भ्रम इति पक्षं निराकृत्याऽऽत्मनः परिणामविशेपोऽसौ भ्रम इत्येतमन्त्यपक्षं निराचष्टे—परिणामविशेप इति ॥ १३० ॥

तत्र हेतुर्निरस्तेतरसङ्गस्याऽऽत्मनोऽसमागतया निरवयवद्रव्यत्वेन परिणामायोग्यत्वात् । परिणामित्वमङ्गीकृत्याप्याह—योग्यतायामपि बुद्ध्याकृतितो ज्ञानान्तराकारेण चिदात्मनोऽस्य परिणामायोगादित्यर्थः ॥ ३१ ॥

हि यस्मान्नित्यज्ञानाश्रयस्य सुखमहमस्वाप्सं न किंचिदवेदिषमिति सुप्तोत्थितपरामर्शानुमेयं[1] करणविरमेऽपि सत्त्वेन नित्यं च यज्ज्ञानं तदाश्रयस्य प्रत्यगात्मनः पुनरन्यचित्स्वरूपो भ्रमज्ञानात्मकः परिणामो न संभवति । गुणतावान्तरजातितः सजात्योर्गुणयोः समुदायगत्ययोगाद्युगपत्समवायायोगात् । एकद्रव्याश्रितरूपरसादिगुणव्यावृत्त्यर्थं गुणतावान्तरेति विशेपणम् ॥ ३२ ॥ [ गुणतेति । गुणत्वावान्तरजात्येत्यर्थः ] ॥ ३२ ॥

---

१ घ. °युतेश्च । २ क. °यं कार° । ३ क. भ्रमात्म° । ४ क. घ. °ताजातावया° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युगपत्समवैति नो हि शौक्ल्यद्वयकं यत्र च कुत्रचिद्यदेतत् ॥
ननु [1]चिन्न गुणो गुणी तथाच प्रसरेन्नोदितदुष्टतेति चेन्न ॥ ३३ ॥
कटकाश्रयभूतदीप्तहेम्नो रुचकाधारकभाववत्तथैव ॥
अविनाशि[2]चिदाश्रयस्य भूयोऽन्य[3]चिदाधारतया स्थितेरयोगात् ॥ ३४ ॥
न च संस्कृतिरग्रहोऽप्यविद्या भ्रमशब्दार्थनिरुक्त्यसंभवेऽपि ॥
भ्रमसंज्ञितवस्त्वसंभवेन भ्रमसंपादितसंस्कृतेरयोगात् ॥ १३५ ॥
अपि नाग्रहणं चितेरभावश्चितिरूपग्रहणस्य नित्यतायाः ॥
तदसंभवतो न वृत्त्यभावस्तदभावेऽपि चिदात्मनोऽवभासात् ॥ ३६ ॥
न च भञ्जकमीक्ष्यते न तस्योपगमे दुःखजडानृतात्मकस्य ॥
इति वाच्यमखण्डवृत्तिरूढेश्वरबोधस्य नि[4]वर्तकत्वयोगात् ॥ ३७ ॥
अपि चेष्टतदन्यहेतुधीजे जगतः कृत्यकृती न ते घटेते ॥
सकलव्यवहारसंकरत्वात्तदलं जीवनिकाऽपि दुर्लभा ते ॥ ३८ ॥

---

हि यस्माच्छौक्ल्यद्वयं यत्र कुत्रचिदपि नो संभवति। ननु मन्मते ज्ञानं न गुणोऽपि तु गुणी द्रव्यपदार्थस्तथाच नोदितदुष्टता प्रसरेत्। एतद्दूषयति—इति चेन्नेति ॥ ३३ ॥

तत्र हेतुमाह—कटकाश्रयभूतदीप्तसुवर्णस्य तदैव रुचकाधारत्वं यथा तथैव नित्यज्ञानाश्रयस्य भूयो ज्ञानान्तराधारतया स्थितेरयोगात् ॥ ३४ ॥ [ रुचकेति। रुचकसंज्ञकालंकारविशेषाधारकत्वं तदैव कटकदशायामेव यथा न घटते तथैव ] ॥ ३४ ॥

ननु भ्रमशब्दार्थनिरुक्त्यसंभवेऽपि संस्कृतिरग्रहणं वाऽविद्या स्यादित्याशङ्क्य परिहरति—न चेति। तत्र हेतुमाह—भ्रमसंज्ञितेति ॥ १३५ ॥

अग्रहणमपि किं स्वरूपग्रहणस्याभाव उत आगन्तुकस्येति विकल्प्याऽऽद्यं प्रत्याह—नाप्यग्रहणं चितेरभावश्चितिरूपग्रहणस्य नित्यत्वेन तस्य चितेरभावस्यासंभवात्। द्वितीयं प्रत्याह—वृत्त्यभावोऽप्यग्रहणं न भवति तत्र हेतुस्तस्या वृत्तेरागन्तुकस्य ग्रहणस्याभावेऽपि चिदात्मनः स्फुरणान्न तस्य प्रतिबन्धकत्वमित्यर्थः ॥ ३६ ॥

नन्वात्मन्यज्ञानाभ्युपगमे तस्य भञ्जकं नेक्ष्यत इत्याशङ्क्य परिहरति—न चेति। तत्त्वमस्यादिमहावाक्यजन्याखण्डवृत्त्यारूढपरब्रह्मचैतन्यस्य निवर्तकत्वयोगात् ॥ ३७ ॥ [ ननु दुःखाद्यात्मकाज्ञानोपगमे किं तन्निवर्तकमित्याशङ्क्य समाधत्ते। न चेति ] ॥ ३७ ॥

किंचेष्टानिष्टसाधनज्ञानजनिते सर्वस्य जङ्गमस्य प्रवृत्तिनिवृत्ती न च ते सर्वसंकर-

---

१ क. °नु चिन्न। २ क. ग. °शिचिदा°। ३ क. ग. °न्यचिदा°। ४ °न चि°। ५ क. न संभ°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति युक्तिशतैरमर्त्यकीर्तिः सुमतीन्द्रं तमतन्द्रितं स जित्वा ॥
श्रुतिभावविरोधिभावभाजं विमतग्रन्थममन्थरं ममन्थ ॥ ३९ ॥
इति भास्करदुर्मतेऽभिभूते भगवत्पादकथासुधा *प्रसस्रे ॥
घनवार्षिकवारिवाहजाले विगते शारदचन्द्रचन्द्रिकेव ॥ १४० ॥
स कथाभिरवन्तिषु प्रसिद्धान्विबुधान्बाणमयूरदण्डिमुख्यान् ॥
शिथिलीकृतदुर्मताभिमानान्निजभाष्यश्रवणोत्सुकांश्चकार ॥ ४१ ॥
प्रतिपद्य तु बाह्लिकान्महर्षौ विनयिभ्यः प्रविवृण्वति स्वभाष्यम् ॥
अवदन्नसहिष्णवः प्रवीणाः समये केचिदथाऽऽर्हताभिधाने ॥४२॥
ननु जीवमजीवमास्रवं च श्रितवत्संवरनिर्जरौ च बन्धः ॥
अपि मोक्ष उपैपि सप्तसंख्यान्न पदार्थान्कथमेव सप्तभङ्ग्या ॥४३॥

---

मते संभवतः । सकलव्यवहारस्य संकीर्णत्वात् । जीवनिकाऽपि ते दुर्लभा तत्तस्मादलमि- त्याह—अपि चेति ॥ ३८ ॥

इत्येवं युक्तिशतैः सोऽमर्त्यकीर्तिर्भगवान्भाष्यकारस्तमनलसं सुधीन्द्रं भट्टभास्करं जित्वा श्रुतिभावविरोधिभावभाजं विमतग्रन्थं झटिति ममन्थ ॥ ३९ ॥

इत्येवं भास्करदुर्मतेऽभिभूते सति भगवत्पादकथालक्षणा सुधा प्रसस्रे विस्तारं गता । यथा घनीभूतानां वार्षिकपयोदानां जाले विगते सति शरत्कालीनचन्द्रचन्द्रिका तद्वदि- त्यर्थः ॥ १४० ॥

सोऽवन्तिषु जनपदेषु प्रसिद्धान्बाणादीन्पण्डितान्कथाभिः शिथिलीकृतदुर्मताभिमाना- न्निजभाष्यश्रवणोत्कण्ठितांश्चकार । कथाभिः प्रसिद्धानिति वा ॥४१॥ [ स प्रकृतः श्रीशं- कराचार्यः ] ॥ ४१ ॥

बाह्लिकांस्तु देशान्प्रतिपद्य महर्षौ श्रीशंकरे शिष्येभ्यः स्वभाष्यं विवृण्वति सत्यार्हतसं- ज्ञके विवसनसमये प्रवीणाः केचिदसहिष्णव ऊचुः ॥ ४२ ॥ [ प्रविवृण्वति प्रकर्षेण विवेचयति सतीत्यर्थः ] ॥ ४२ ॥

बोधात्मको जीवो जडवर्गस्त्वजीव एतयोरयमपरः प्रपञ्चो जीवास्तिकायः पुद्गलास्ति- कायो धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायश्चेति पञ्च । अस्तिकाया नामास्तीति कायन्ते शब्द्यन्त इत्यस्तिकायाः । कै गै शब्द इति स्मरणात् । तत्र जीवास्तिकायस्त्रिधा बद्धो मुक्तो नित्यसिद्धश्च । अर्हन्नित्यसिद्ध इतरे केचित्साधनैर्मुक्ता अन्ये बद्धाः । पुद्- गलास्तिकायः षोढा । पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति । शास्त्रीयवाह्य-

---

* प्रसरणानुकूलव्यापारानुकूलव्यापारार्थकान्प्रोपसृष्टात्सृधातोः कर्मकर्तरि लिट्तत आत्मनेपदम् ।

१ ग. इति यु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवृत्त्या ह्यान्तरोऽपूर्वाख्यो धर्मोऽनुमीयत इति प्रवृत्त्यनुमेयो धर्मास्तिकायः। ऊर्ध्वगमनशीलस्य जीवस्य देहेऽवस्थानेनाधर्मोऽनुमीयत इति स्थित्यनुमेयोऽधर्मास्तिकायः। आकाशास्तिकायो द्वेधा—लोकाकाशोऽलोकाकाशश्च। तत्रोपर्युपरि स्थितानां लोकानामन्तर्वर्त्याद्यस्तेषामुपरि मोक्षस्थानं द्वितीयः। पुरुषं विषयेष्वास्रावयति गमयतीतीन्द्रियप्रवृत्तिरास्रवः। इन्द्रियद्वारा हि पौरुषं ज्योतिर्विषयान्स्पृशद्रूपादिज्ञानरूपेण परिणमते। अन्ये तु कर्माण्यास्रवमाहुस्तानि कर्तारमभिव्याप्य स्रवन्ति कर्तारमनुगच्छन्तीत्यास्रवः। सेयं मिथ्या प्रवृत्तिरनर्थहेतुत्वात्। जीवमजीवमास्रवं चाऽऽश्रितवन्तौ तैः सहितौ संवरनिर्जरौ सम्यक्प्रवृत्ती तत्र शमदमादिप्रवृत्तिः संवरः। स ह्यास्रवस्रोतसो द्वारं संवृणोतीति संवर उच्यते। निर्जरस्त्वनादिकालप्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणादिः। स हि निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरः। बन्धोऽष्टविधं कर्म। तत्र घातिकर्म चतुर्विधं तद्यथा ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तरायमिति। तथा चत्वार्यघातिकर्माणि। तद्यथा वेदनीयं नामिकं गोत्रिकमायुष्कं चेति। तत्र सम्यग्ज्ञानं न मोक्षसाधनं न हि ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयम्। आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयम्। बहुषु विप्रतिपिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम्। मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं ज्ञानमान्तरायम्। तानीमानि श्रेयोहन्तृत्वाद्घातीनि कर्माण्युच्यन्ते। अघातीनि कर्माणि तद्यथा शुक्लशरीराकारेण परिणामहेतुर्वेदनीयम्। तद्द्वारेण तत्त्ववेदनहेतुत्वात्। तदनुगुणं नामिकं तद्धि शुक्लपुद्गलस्याऽऽद्यामवस्थां कललबुद्बुदादिरूपामारभते। गोत्रिकं त्वव्याकृतं ततोऽप्याद्यं देहाकारपरिणामशक्तिरूपेणावस्थितम्। आयुष्कं चाऽऽयुः कायति कथयत्युत्पादनद्वारेणेति शुक्रशोणितस्वरूपम्। यद्वा मम वेदनीयं तत्त्वमसीति वेदनीयम्। एतन्नामाहमस्मीत्यभिमानो नामिकम्। अहमत्रभगवतो देशिकस्यार्हतः शिष्यवंशे प्रविष्ट इत्यभिमानो गोत्रिकम्। शरीरस्थित्यर्थं कर्माऽऽयुष्कम्। तान्येतानि तत्त्ववेदकशुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि। तदेतत्कर्माष्टकं पुरुषं बध्नातीति बन्धः। विगलितसमस्तक्लेशतद्वासनस्यानावरणीयज्ञानस्य सुखैकतानस्याऽऽत्मन उपरिदेशावस्थानं मोक्ष इत्येके। अन्ये तूर्ध्वगमनशीलो हि जीवो धर्माधर्मास्तिकायेन बद्धस्तद्विमोकादूर्ध्वं गच्छत्येव स मोक्ष इति। सप्तानामस्तित्वादीनां भङ्गानां समाहारः सप्तभङ्गी तयोपलक्षितान्सप्त पदार्थान्कथं नाङ्गी करोषि। सप्त भङ्गास्तु स्यादस्ति। स्यान्नास्ति। स्यादस्ति च नास्ति च। स्यादवक्तव्यः। स्यादस्ति चावक्तव्यः। स्यान्नास्ति चावक्तव्यश्च। स्यादस्ति च नास्ति चावक्तव्यश्चेति। स्यादिति तिङन्तप्रतिरूपकं कथंचिदर्थकमव्ययम्। तत्र वस्तुनोऽस्तित्ववाञ्छायां प्रथमो भङ्गः प्रवर्तते। नास्तित्ववाञ्छायां द्वितीयः। क्रमेणोभयवाञ्छायां तृतीयः। युगपदुभयवाञ्छायां चतुर्थः। आद्यचतुर्थभङ्गयोर्वाञ्छायां पञ्चमः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथयाऽऽर्हत जीवमस्तिकायं स्फुटमेवंविध इत्युवाच मौनी ॥
अवदत्स च देहतुल्यमानो दृढकर्माष्टकवेष्टितश्च विद्वन् ॥ ४४ ॥
अमहाननणुर्घटादिवत्स्यात्स न नित्याऽपि च मानुषाच्च देहात् ॥
गजदेहमयन्विशेन्न कृत्स्नं प्रविशेच्च प्लुषिदेहमप्यकृत्स्नः ॥१४५॥
उपयान्ति च केचन प्रतीका महता संहननेन संगमेऽस्य ॥
अपयान्त्यधिजग्मुषोऽल्पदेहं तदयं देहसमः समश्रुतेश्च ॥ ४६ ॥
उपयन्त इमे तथाऽपयन्तो यदि वर्ष्मेव न जीवतां भजेयुः ॥
प्रभवेयुरनात्मनः कथं ते कथमात्मावयवाः प्रयन्तु तस्मिन् ॥ ४७ ॥
जनितारहिताः क्षयेण हीनाः समुपायान्त्यपयान्ति चाऽऽत्मनस्ते ॥
अमुकोपचितः प्रयाति कृत्स्नं त्वमुकैश्चापचितः प्रयात्यकृत्स्नम् ॥

---

द्वितीयचतुर्थेच्छायां षष्ठः । तृतीयचतुर्थेच्छायां सप्तम इति विवेकः ॥ ४३ ॥

एवमुक्तो मौनी श्रीशंकराचार्य उवाच—हे आर्हत जीवास्तिकायमेवंविधो जीवास्तिकाय इति स्फुटं कथय । एवमुक्तः स चाऽऽर्हतो बभाषे—देहतुल्यप्रमाणो दृढेनोक्तकर्माष्टकेन बद्धश्च ॥ ४४ ॥

आचार्य आह—अमहाननणुर्देहपरिमाणो जीवो घटादयो मध्यमपरिमाणत्वाद्यथा न नित्यास्तथा नित्यो न स्यात् । अपि च शरीराणामनवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित्कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न सर्वं हस्तिशरीरं प्रविशेद्देहापरदेशो निर्जीवः स्यात्पुत्तिकादेहं च प्राप्नुवंस्तं सर्वं न प्रविशेत् । देहाद्बहिरपि जीवः स्यादित्यर्थः । चकारादस्मिन्नपि जन्मनि कौमारयौवनस्थविरेष्वेष दोषो बोध्यः ॥ १४५ ॥

एवमुक्त आर्हतः शङ्कते—महता संघातेनास्य जीवस्य संगमे सति केचनावयवा उपयान्ति । तथाऽल्पदेहमभिगन्तुमिच्छोः केचनावयवा अपयान्तीत्येवं समानव्यासेश्च स चासावयं जीवो देहसमः ॥ ४६ ॥

आचार्य आह—यदीमेऽवयवा उपयन्तस्तथाऽपयन्तश्च तर्ह्यागमापायित्वाच्छरीरवदात्मतां न भजेयुः । किंचानात्मनस्ते जीवावयवाः कथं प्रादुर्भवेयुः । कथं च तस्मिन्ननात्मनि ते लीयेरन्विरोधादित्यर्थः ॥ ४७ ॥

आर्हत आह—आत्मनस्तेऽवयवा जन्मना रहिताः क्षयेण च हीना नित्या एव समुपायान्त्यपयान्ति च । तथाचामुकैरुपचितो गजादिदेहं कृत्स्नं प्रयात्यमुकैश्चापचितः पुत्तिकादिदेहमकृत्स्नं स्वरं प्रयाति ॥ ४८ ॥

---

१ क. 'पायन्त्य' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमचेतनतोत चेतनत्वं वद तेषां चरमे विरुद्धमत्या ॥
वपुरुन्मथितं भवेत्तु पूर्वे बत कात्स्न्येन वपुर्न चेतयेयुः ॥ ४९ ॥
चलयन्ति रथं यथैकमत्या बहवो वाजिन एवमप्रतीताः ॥
इतरेतरमङ्गमेजयन्तु ज्ञपते चेतनतामपि प्रपद्य ॥ १५० ॥
बहवोऽपि नियामकस्य सत्त्वात्सुमते तत्र भजेयुरैकमत्यम् ॥
कथमत्र नियामकस्य तद्वद्विरहात्कस्यचिदप्यदो घटेत ॥ ५१ ॥
उपयान्ति न चापयान्ति जीवावयवाः किंतु महत्तरे शरीरे ॥
विकसन्ति च संकुचन्त्यनिष्टे यतिवर्यात्र निदर्शनं जलौका ॥ ५२ ॥
यदि चैवममी सविक्रियत्वाद्घटवत्ते च विनश्वरा भवेयुः ॥
इति नश्वरतां प्रयाति जीवे कृतनाशाकृतसंगमौ भवेताम् ॥ ५३ ॥
अपि चैवमँलाबुवद्भवाब्धौ निजकर्माष्टकभारमग्नजन्तोः ॥
सततोर्ध्वगतिस्वरूपमोक्षस्तव सिद्धान्तसमर्थितो न सिध्येत् ॥ ५४ ॥

---

आचार्य उवाच—किं तेषामचेतनत्वमुत चेतनत्वमिति वद । तत्रान्त्ये पक्षे बहूनां चेतनानामेकाभिप्रायनियमाभावात्कदाचिद्विरुद्धमत्या शरीरमुन्मथितं भवेत् । आद्ये तु कार्त्स्न्येन शरीरं न चेतयेयुः ॥ ४९ ॥

अन्त्यकल्पमवलम्ब्याऽऽर्हत आह—यथा बहवोऽप्यश्वा एकमत्या रथं चलयन्ति तथाऽन्योन्यमप्रतीताश्चेतनतामपि प्रतिपद्य हे तत्त्वज्ञाधिपतेऽङ्गं शरीरमेजयन्तु चालयन्तु ॥ १५० ॥ [ अन्त्यपक्षेणाऽऽर्हत आह—चलयन्तीति ] ॥ १५० ॥

आचार्यः परिहरति—बहवोऽपि वाजिनो नियामकस्य सत्त्वादैकमत्यं तत्र रथचालने भजेयुरत्र तु तद्वत्कस्यचिदपि नियामकस्याभावाददः ऐकमत्यं कथं घटेत । कश्चिदेन संबोधयति—हे सुमत इति ॥ ५१ ॥

आर्हत आह—उपयान्तीति । अनिष्टे पुत्तिकादिदेहे ॥ ५२ ॥

एवमुक्त आचार्य उवाच—यदि चैवं तर्हि सविक्रियत्वात्तेऽमी विनश्वरा भवेयुरित्येवं जीवे नश्वरतां प्रयाति सति कृतनाशाकृताभ्यागमौ भवेताम् ॥ ५३ ॥

किंचैवं सति तुम्बिकावत्संसारसागरे निजकर्माष्टकभारेण मग्नस्य जन्तोः सततोर्ध्वगतिस्वरूपो मोक्षस्तव सिद्धान्तसमर्थितो बाध्येत ॥ ५४ ॥

---

१ ग. घ. वलयन्ति । २ ग. घ. जलूका । ३ ख. 'मलाम्बु' । ४ क. चालयन्ति । ग. घ. वलयन्ति । ५ ग. घ. °ते श° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि साधनभूतसप्तभङ्गीनयमप्याहत नाऽऽद्रियामहे ते ॥
परमार्थसतां विरोधभाजां स्थितिरेकत्र हि नैकदा घटेत ॥ १५५ ॥
इति माध्यमिकेषु भग्नदर्पेष्वथ भाष्याणि स नैमिशे वितत्य ॥
दरदान्भरतांश्च शूरसेनान्कुरुपाञ्चालमुखान्बहूनजैषीत् ॥ ५६ ॥
पटुयुक्तिनिकृत्तसर्वशास्त्रं गुरुभट्टोदयनादिकैरजय्यम् ॥
स हि खण्डनकारमूढदर्पं बहुधा व्युद्य वशंवदं चकार ॥ ५७ ॥
तदनन्तरमेष कामरूपानधिगत्याभिनवोपशब्दगुप्तम् ॥
अजयत्किल शाक्तभाष्यकारं स च भग्नो मनसेदमालुलोचे ॥ ५८ ॥
निगमाब्जविकासिबालभानोर्न समोऽमुष्य विलोक्यते त्रिलोक्याम् ॥
न कथंचन मद्वशंवदोऽसौ तदमुं दैवतकृत्यया हरेयम् ॥ ५९ ॥
इति गूढमसौ विचिन्त्य पश्चात्सह शिष्यैः सहसा स्वशाक्तभाष्यम् ॥
परिहृत्य जनापवादभीत्या यमिनः शिष्य इवान्ववर्ततैषः ॥ १६० ॥

---

अपि च हे आर्हत ते साधनभूतसप्तभङ्गीनयमपि नाऽऽद्रियामहे । हि यस्मात्परमा-
र्थसतां विरोधभाजां सदसत्त्वादिधर्माणामेकस्मिन्धर्मिण्येकदा युगपत्स्थितिर्न घटेत ॥ ५५ ॥
इत्येवं माध्यमिकेषु भग्नगर्वेषु सत्स्वथानन्तरं स श्रीशंकराचार्यो नैमिशे भाष्याणि
विस्तार्य दरदादिकान्देशविशेषाञ्जितवान् ॥ ५६ ॥ [ माध्यमिकेषु मध्यमपरिमाणा-
त्मवादिषु दिगम्बराख्यार्हतमतानुयायिषु नास्तिकविशेषेष्वित्यर्थः ] ॥ ५६ ॥
स हि भाष्यकारः खण्डनकारं श्रीहर्षाख्यं बहुधा वादं कृत्वा वशंवदं चकार । तं
विशिनष्टि—पटुयुक्तिभिः खण्डितानि सर्वशास्त्राणि येन । गुरुः प्रभाकरो भट्टो भट्टपादो
भट्टभास्करश्च । गुर्वादिभिर्जेतुमशक्यमत एवोढदर्पम् ॥ ५७ ॥ [ उदयनो न्यायभाष्य-
कारः । आदिना पार्थसारथिमिश्रादयः । व्युद्य वादं कृत्वा ] ॥ ५७ ॥
कामरूपान्देशविशेषानधिगत्य प्राप्य अभिनव उपशब्दो यस्य स चासौ गुप्तश्च
तमभिनवगुप्तमिति यावत् । स च भग्नोऽभिनवगुप्ताचार्यो मनसेदं वक्ष्यमाणं विचार-
यामास ॥ ५८ ॥ शाक्तेति । शक्तिपरत्वेन ब्रह्मसूत्रभाष्यकर्तारम् ] ॥ ५८ ॥
तदेवाऽऽह—वेदाब्जविकासिनो बालसूर्यस्यामुष्य शंकरस्य समस्त्रिलोक्यां न-
विलोक्यतेऽतोऽसौ मद्वशंवदः कथंचिदपि न भविष्यति । तस्मादमुं दैवतकृत्ययाऽहं
परिहरेयम् ॥ ५९ ॥
इत्येवमसौ गूढं विचिन्त्य पश्चाच्छिष्यैः सह विचिन्त्य जनापवादभयेन स्वशाक्त-
भाष्यं सहसा परित्यज्यैष यमिनः शिष्य इवान्ववर्तत ॥ १६० ॥

---

१ ग. 'ह्रो भट्टभा°' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजशिष्यपदं गतानुदीच्यानिति कृत्वाऽथ विदेहकौशलाद्यैः ॥
विहितापचितिस्तथाऽङ्गवङ्गेष्वयमास्तीर्य यशो जगाम गौडान् ॥६१॥
अभिभूय मुरारिमिश्रवर्यं सहसा चोदयनं विजित्य वादे ।
अवधूय च धर्मगुप्तमिश्रं स्वयशः प्रौढमगापयत्स गौडान् ॥ ६२ ॥
पूर्वं येन विमोहिता द्विजवरास्तस्यासतोऽरीन्कलौ
बुद्धस्य प्रबिभेद मस्करिवरस्तान्भास्करादीन्क्षणात् ॥
शास्त्राम्नायविनिन्दकेन कुधिया कूटप्रवादाग्रहा-
न्निष्णातो निगमागमादिषु मतं दक्षस्य कूटग्रहे ॥ ६३ ॥
शाक्तैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवै-
रप्यन्यैरखिलैः खिलं खलु खलैर्दुर्वादिभिर्वैदिकम् ॥
मार्गं रक्षितुमुग्रवादिविजयं नो मानहेतोर्व्यधा-
त्सर्वज्ञो न यतोऽस्य संभवति संमानग्रहग्रस्तता ॥ ६४ ॥

---

इत्येवमुदीच्यानुत्तरदिशि भवान्स्वशिष्यपदं गतान्विधायाथ विदेहाद्यैर्विहिता पूजा यस्य स तथाऽङ्गादिष्वयं यश आस्तीर्य गौडाञ्जगाम ॥ ६० ॥

तेषु गौडदेशेषु स्थितान्मुरारिमिश्रादीन्विजित्य प्रौढं स्वयशो गौडदेशोद्भवानगापयत् ॥ ६२ ॥

पूर्वं कलौ येन शास्त्राम्नायविनिन्दकेन कुबुद्धिना द्विजवरा विमोहितास्तस्यासतो बुद्धस्यारींस्तान्भास्करादीन्निगमागमादिषु निष्णातः पारं गतो मस्करिवरो यतिश्रेष्ठः श्रीशंकराचार्यः क्षणमात्रेण प्रबिभेद । ननु बुद्धारीणां तेषां प्रविभेदनमनुचितमित्याशङ्कानिरासाय तान्विशिनष्टि— कूटेषु मिथ्याभूतेषु प्रवादेष्वाग्रहो येषाम् । नन्वेवं तर्हि बुद्धमतस्थापनं कृतं भविष्यतीत्याशङ्काव्यवच्छेदायाऽऽह— कूटग्रहे मिथ्याभूतपक्षस्वीकारे दक्षस्य बुद्धस्यापि मतं प्रविभेदेत्यनुपज्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ६३ ॥

शाक्तादिभिरन्यैर्वैशेषिकादिभिरपि सर्वैर्दुष्टैर्वादिभिः खिलमुच्छिन्नं वैदिकं मार्गं रक्षितुं सर्वज्ञः श्रीशंकराचार्य उग्रवादिविजयं व्यधान्मानहेतोर्न । यतोऽस्य संमानग्रहग्रस्तता न संभवति ॥ ६४ ॥

---

१ प. 'दिग्भवा' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिष्टे पङ्कजविष्टरेण जगतामाद्येन तत्सूनुभि-
र्निर्दिष्टे सनकादिभिः परिचिते प्राचेतसाद्यैरपि ॥
श्रौताद्वैतपथे परात्मभिदुरान्दुर्वादिनः कण्टका-
न्प्रोद्धृत्याथ चकार तत्र करुणो मोक्षाध्वगक्षुण्णताम् ॥ ६५ ॥
शान्तिर्दान्तिविरागता ह्युपरतिः क्षान्तिः परैकाग्रता
श्रद्धेति प्रथिताभिरेधिततनौ षड्वक्त्रवन्मातृभिः ॥
भिक्षुक्षोणिपतौ पिचण्डिलतरोच्चण्डातिकण्डूच्चल-
त्पाखण्डासुरखण्डनैकरसिके बाधा बुधानां कुतः ॥ ६६ ॥
यत्राऽऽरम्भजकाहलाकलकलैर्लोकायतो विद्रुतः
काणाः काणभुजास्तु सैन्यरजसा सांख्यैर्धृताऽसांख्यधीः ॥
युद्ध्वा तेषु पलायितेषु सहसा * योगाः सहैवाद्रव-
न्को वा वादिभटः पटुर्भुवि भवेद्वस्तुं पुरस्तान्मुनेः ॥ ६७ ॥

किंच जगतामाद्येन कमलासनेन चतुर्मुखेन दिष्ट उपदिष्टे पुनश्च तस्य पुत्रैः सनकादिभिर्निर्दिष्टे सम्यगुपदिष्टे पुनश्च वाल्मीक्यादिभिः परिचिते परि समन्तात्संचिते श्रौताद्वैतमार्गे परात्मभेदिनो दुर्वादिनः कण्टकान्प्रोद्धृत्याथानन्तरं तत्र मोक्षाध्वनि मोक्षाध्वगैर्मुमुक्षुभिः क्षुण्णतामभ्यस्ततां चकार ॥ ६५ ॥ [ करुण इति हेतुगर्भं विशेषणम् । दयालुर्भगवान्माध्यकार इत्यर्थः ॥ ६५ ॥

मातृभिः षडाननवत्प्रथिताभिः शान्त्याद्याभिरेधिततनौ पुनश्चातिशयितं पिचण्डमुदरं येषां ते पिचण्डिलाः स्थूलोदराः । ' पिच्छादित्वादिलच् ' ' बृहत्कुक्षिः पिचण्डिलः ' इत्यमरः । अतिशयेन पिचण्डिलानां प्रचण्डानामतिकण्डूच्चलतां पाखण्डात्मकानामसुराणां खण्डनैकरसिके भिक्षुराजे श्रीशंकराचार्ये सति बुधानां पण्डितात्मकानां देवानां बाधा कुतः कुतोऽपि नैवेत्यर्थः ॥ ६६ ॥

यत्राऽऽरम्भजन्यैः काहलाकलकलैः वर्णालाख्यवाद्यविशेषकोलाहलैः । ' कलकल उक्तः कोलाहलः ' इति मेदिनी । लोकायतश्चार्वाको विद्रुतः । काणादास्तु सैन्यरजसा काणा जाताः । सांख्यैस्त्वसांख्यधीर्धृता । युद्धं कृत्वा तेषु चार्वाकादिषु पलायितेषु तैः सहैव पातञ्जला अपि सहसा पलाय्य गतास्तथा च भुवि को वा वादिभटो मुनेः पुरस्ताद्वस्तुं पटुर्भवेन्न कोऽपीत्यर्थः ॥ ६७ ॥ [ + असंख्यधीरिति च्छेदः । अयुद्धबुद्धिरित्यर्थः ]॥ ६७ ॥

* अर्शआदेराकृतिगणत्वादच् । + मूले सांख्यैर्धृताऽसांख्यधीरित्यत्र सांख्यैर्धृताऽऽसंख्यधीरिति पाठानुरोधेनेदम् । आदर्शपुस्तकेषु तु नायमुपलभ्यते ।

१ क. °ल्लैर्लोका° । २ ख. °ख्यैर्धृताऽ° । ग. घ. 'हे पु' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उच्चण्डे पणबन्धबन्धुरतरे वाचंयमक्ष्मापतेः
पूर्वं मण्डनखण्डने समुदभूद्यो डिण्डिमाडम्बरः ॥
जाताः शब्दपरम्परास्तत इमाः पाखण्डदुर्वादिना-
मद्य श्रोत्रतटाटवीषु दधते दावानलज्वालताम् ॥ ६८ ॥
बुद्धो युद्धसमुद्यतः किल पुनः स्थित्वा क्षणाद्विद्रुतः
कोणे क्वाक्कणभुग्व्यलीयत तमःस्तोमावृतो गौतमः ॥
मग्नोऽसौ कपिलः पलायत ततः पातञ्जलाश्चाञ्जलिं
चक्रुस्तस्य यतीशितुश्चतुरता केनोपमीयेत सा ॥ ६९ ॥
हस्तग्राहं गृहीताः कतिचन समरे वैदिका वादियोधाः
काणादाद्याः परे तु प्रसभमभिहता हन्त लोकायताद्याः ॥
गाढं वन्दीकृतास्ते सुचिरमथ पुनः स्वस्वराज्ये नियुक्ताः
सेवन्ते तं विचित्रा यतिधरणिपतेः शूरता वा दया वा ॥ १७० ॥
शान्त्याद्यर्णववाडवानलशिखा सत्याभ्रवात्या दया-
ज्योत्स्नादर्शनिशाऽथ शान्तिनलिनीराकाशशाङ्कद्युतिः ॥
आस्तिक्यद्रुमदावपावकनवज्वालावली सत्कथा-
हंसीप्रावृडखण्डि दण्डिपतिना पाखण्डवाङ्मण्डली ॥ ७१ ॥

---

पणस्य ग्लहस्य बन्धनेन बन्धुरतरेऽतिशोभने प्रचण्डे पूर्वं मण्डनस्य खण्डने यो वाचंयमक्ष्मापतेर्डिण्डिमाडम्बरः समुदभूत्तस्माड्डिण्डिमाडम्बराज्जाताः शब्दपरम्परा अद्य पाखण्डदुर्वादिनां श्रोत्रतटाटवीषु दावाग्निज्वालतां दधते ॥ ६८ ॥

किंच युद्धाय समुद्यतो बौद्धः किल पुरः स्थित्वा क्षणाद्विद्रुतः । कणादस्तु झटिति कोणे विलयं गतः । गौतमस्तु तमःस्तोमेनाऽऽवृतः क्वचिद्गाढान्धकारे मग्नः । असौ कपिलस्तु भग्नः संस्ततः पलायत । ततस्तस्मात्कारणादिति वा । पातञ्जलाश्चाञ्जलिं चक्रुस्तस्य यतिपतेः सा चतुरता केनोपमीयेत ॥ ६९ ॥

केचित्काणादाद्या वैदिका वादियोधाः सङ्ग्रामे हस्तग्राहं गृहीता हस्तेन गृहीता इत्यर्थः । परे तु वेदबाह्याश्चार्वाकाद्या बलात्कारेणाभिहताः । हन्तेति हर्षे । ते काणादाद्याः सुचिरं गाढं वन्दीकृताः । अथ पुनः स्वस्वराज्ये स्वस्वरूपब्रह्मानन्दलक्षणे नियुक्तास्तं सेवन्ते । तथाप्यहो अतिचित्रा यतिभूमिपतेः शूरता वा दया वा । स्रग्धरा वृत्तम् ॥ १७० ॥

किंच पाखण्डवाङ्मण्डली दण्डिपतिनाऽखण्डि खण्डिता । तां विशिनष्टि—शान्त्या-

---

१ ग. पाषण्ड° । २ ग. पाषण्ड° ३ ग. घ. पाषण्ड° । ४ ग. घ. पाषण्ड° । ५ क. ग. घ. शान्तिल° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वैतामृतवर्षिभिः परगुरुव्याहारधाराधरैः
कान्तैर्हन्त समन्ततः प्रसृमरैरुत्कृत्ततापत्रयैः ॥
दुर्भिक्षं स्वपरैकताफलगतं दुर्भिक्षुसंपादितं
शान्तं संप्रति खण्डिताश्च निबिडाः पाखण्डचण्डातपाः ॥ ७२ ॥

शान्तानां सुभटाः कपालिकपतद्ग्राहग्रहव्यापृताः
काणादप्रतिहारिणः क्षपणकक्षोणीशवैतालिकाः ॥
सामन्ताश्च दिगम्बरान्वयभुवश्चार्वाकवंशाङ्कुरा
नव्याः केचिदलं मुनीश्वरगिरा नीताः कथाशेषताम् ॥ ७३ ॥

इति सकलदिशासु द्वैतवार्तानिवृत्तौ
स्वयमथ परितस्तारायमद्वैतवर्त्म ॥
प्रतिदिनमपि कुर्वन्सर्वसंदेहमोक्षं
रविरिव तिमिरौघे संप्रशान्ते महः स्वम् ॥ १७३६ ॥

---

दिलक्षणसमुद्रस्य वाडवाग्निशिखा सत्यलक्षणमेघस्य वात्या वायुसमूहो दयालक्षणायाश्चन्द्रि-
काया अमावास्यारात्रिः शान्तिलक्षणायाः कमलिन्याः पूर्णमासीचन्द्रकान्तिरास्तिक्यवृक्षस्य
दावानलतूलज्वालानामावली सत्कथालक्षणाया हंस्याः प्रावृट् । अथेति पदं सर्वत्र संबन्ध-
नीयम् । खण्डनयोग्यताबोधकानि विशेषणानि । शार्दूलविक्रीडितं वृत्तम् ॥ ७१ ॥

हन्तेति हर्षे । समन्ततः प्रसृमरैः प्रसरणशीलैः कान्तैः सुन्दरैरद्वैतामृतवर्षिभिरुत्कृत्तमु-
न्मूलितमाध्यात्मिकाधिदैविकाधिभौतिकलक्षणं तापत्रयं यैः परगुरुव्याहारलक्षणैः पयोदैर्दुर्भि-
क्षुसंपादितं स्वपरैकतालक्षणफलविषयं दुर्भिक्षं संप्रति शान्तम् । निबिडाः पाखण्डलक्षणाश्च-
ण्डातपाश्च खण्डिताः ॥ ७२ ॥ [ स्वेति । स्व आत्मा परं ब्रह्म तयोरैक्यमैक्यं तदेव फलं
तत्र गच्छतीति तथा तद्विषयकमिति यावत् । दुर्भिक्षवो बौद्धादयः ] ॥ ७२ ॥

शान्तानां पातञ्जलानां सुभटाः कपालिकानां पतद्ग्राहाणां ग्रहणे व्यापृताः । काणादानां
प्रतिहारिणः । क्षपणकराज्ञां वैतालिकाः । दिगम्बरवंशोद्भवाः सामन्ताः । केचिन्नव्याश्चार्वा-
कवंशाङ्कुरा मुनीश्वरगिरा कथाशेषतामलं नीताः ॥ ७३ ॥

उपसंहरति—इत्येवं सकलासु दिशासु द्वैतवार्तानिवृत्तौ सत्यामथ स्वयमयं प्रति-
दिनं संदेहनाशं कुर्वन्नद्वैतमार्गं विस्तारितवान् । यथा तिमिरौघे संप्रशान्ते सति रवि-

---

१ ग. पाषण्ड° । २ ग. घ. पाषण्ड° । ३ ग. तद्वाशाविज° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीमाधवीये तत्तदाशाजयकौतुकी ।
संक्षेपशंकरजये सर्गः पञ्चदशोऽभवत् ॥ १५ ॥

---

अथ षोडशः सर्गः ।

अथ यदा जितवान्यतिशेखरोऽभिनवगुप्तमनुत्तममान्त्रिकम् ॥
स तु तदाऽपजितो यतिगोचरं हृतमनाः कृतवानपगोरणम् ॥ १ ॥
स ततोऽभिचचार मूढबुद्धिर्यतिशार्दूलममुं प्ररूढरोषः ॥
अचिकित्स्यतमो भिषग्भिरस्मादजनिष्टास्य भगंदराख्यरोगः ॥ २ ॥

---

महः स्वं प्रकाशं वितनोति तद्वत् । *इत्थमद्वैतमतस्थापनानन्तरं कलियुगोद्भूतनराणां शुद्धाद्वैतविद्यायामनधिकारमालक्ष्य परमतकालन–लक्ष्मण–दिवाकर-त्रिपुरकुमार गिरिजाकुमाराख्याञ्शिवविष्णुसूर्यशक्तिगणपतिभक्तानाहूय तदाशयं श्रुत्वा क्रमण स्वस्वमतस्थापनार्थं प्रेषयामास । ततो भगवन्मन्मतस्य का गतिरित्युक्तवन्तं बटुकनाथाख्यं कापालिकं शैवादिमतपूर्वपक्षतया स्वमत रचयेत्याज्ञापयामासेति प्राचीनादवगन्तव्यम् । मालिनी वृत्तम् ॥ ॥ १७३६ ॥ [ परितस्तार सूत्रभाष्यादिप्रतिष्ठापनद्वारा विस्तारयामासेति संबन्धः ] ॥ ॥ १७३६ ॥

[ इति श्रीति । तदिति । भाष्यकारीयदिग्विजयकौतुकवर्णनशालीत्यर्थः । संक्षेपेत्याद्युक्तार्थम् ] ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्य-
दत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृते श्रीमच्छंकरा-
चार्यविजयडिण्डिमे पञ्चदशः सर्गः ॥ १५ ॥

अथ षोडशसर्गस्य टीका ।

एवं दिग्विजयकौतुकं प्रतिपाद्य शारदापीठवासं सपरिकरं निरूपयितुमारभते—अथानुत्तममान्त्रिकमभिनवगुप्तं यतिशेखरो यस्मिन्काले जितवांस्तस्मिन्काले स तु पराजितो हतमना यतिविषयमपगोरणं वधोद्यमं कृतवान् । द्रुतविलम्बितं वृत्तम् ॥ १ ॥ [ हृतेति । दुर्बुद्धिः ] ॥ १ ॥

स मूढबुद्धिः प्ररूढकोपोऽभिनवगुप्तस्तदनन्तरं यतिशेखरमभिचचाराऽऽभिचारिकं कर्म कृतवान् । अस्मादभिचारादस्य श्रीशंकरस्य वैद्यैरचिकित्स्यतमो भगंदराख्यो रोगोऽजनिष्ट । वसन्तमालिका वृत्तम् ॥ २ ॥

---

* एतदादिरवगन्तव्यमित्यन्तो ग्रन्थः 'क' 'ग' पुस्तकयोर्न दृश्यते ।

---

१ ग. तदाशाविज° । २ क. °त्तमं मा° । ३ क. ग. °र्भ कृत्यां कृ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अचिकित्स्यभगंदराख्यरोगप्रसरच्छोणितपङ्किलस्वशाठ्याः ॥
अजुगुप्सविशोधनादिरूपां परिचर्यामकृतास्य तोटकार्यः ॥ ३ ॥
भगंदरव्याधिनिपीडितं गुरुं निरीक्ष्य शिष्याः समबोधयञ्शनैः ॥
नोपेक्षणीयो भगवन्महामयस्त्वपीडितः शत्रुरिवाधिमाप्नुयात् ॥ ४ ॥
ममत्वहानाद्भवता शरीरके न गण्यते व्याधिकृताऽऽर्तिरीदृशी ॥
पश्यन्त एवान्तिकवर्तिनो वयं भृशातुराः स्मः सहसा व्यथासहाः ॥ ५ ॥
चिकित्सका व्याधिनिदानकोविदाः संप्रच्छनीया भगवन्नितस्ततः ॥
प्रत्यक्षवत्संप्रति सन्ति पूरुषा जीवातुवेदे गदितार्थसिद्धिदाः ॥ ६ ॥
उपेक्षमाणेऽपि गुरावनास्थया शरीरकादौ सुखमात्मनीश्वरैः ॥
नोपेक्षणीयं गुरुदुःखदृश्वभिर्दुःखं विनेयैरिति शास्त्रनिश्चयः ॥ ७ ॥
स्वस्थे भवत्पादसरोरुहद्वये स्वस्था वयं यन्मधुपायिवृत्तयः ॥
तस्माद्भवेत्तावकविग्रहो यथा स्वस्थस्तथा वाञ्छति पूज्य नो मनः ॥

---

अचिकित्स्येन भगंदराख्यरोगेण प्रसरच्छोणितस्य पङ्केन व्याप्ताया आचार्यशाठ्या अजुगुप्सपरिशोधनादिरूपां सेवां तोटकार्यः कृतवान् ॥ ३ ॥

हे भगवन्महारोगस्तूपेक्षणीयो न भवति नो चेदपीडितः शत्रुर्यथाधिमाप्नोति तथा वृद्धिं प्राप्नुयात् । उपजाति वृत्तम् ॥ ४ ॥

यद्यपि शरीरके ममत्वहानाद्भवतैवंविधाऽपि रोगकृता पीडा न गण्यते तथाऽपि समीपवर्तिनः शिष्या वयं पश्यन्त एव सहसा व्यथासहा भृशार्ताः स्मः ॥ ५ ॥

तर्हि किं कर्तव्यमिति तत्राऽऽहुः—चिकित्सका इति । संप्रति जीवातुवेदे जीवनौषधवेदे वैद्यकशास्त्रे । 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' इति मेदिनी । गदितार्थसिद्धिदा उक्तार्थसिद्धिदाः पुरुषाः प्रत्यक्षवत्सन्ति ॥ ६ ॥

ननु यथा मयोपेक्ष्यते तथा भवद्भिरप्युपेक्षणीयमित्याशङ्क्याऽऽहुः—शरीरकादावनास्थया गुरावात्मनि सुखमुपेक्षमाणे सत्यपि गुरुदुःखदर्शिभिः समर्थैः शिष्यैर्नोपेक्षणीयमिति शास्त्रनिश्चयः ॥ ७ ॥

किंच स्वस्थे भवत्पादसरोजद्वंद्वे वयं स्वस्था यत्र पादसरोरुहद्वये भ्रमराणां वृत्तिर्येषां तस्मात्तावकविग्रहो यथा स्वस्थो भवेत्तथा हे पूज्यास्माकं मनो वाञ्छति । इन्द्रवंशा वृत्तम् ॥ ८ ॥

---

१ क ध. °गुप्स्यवि° । २ ध. °दुःखदर्शिभि° । ३ ग. °राख्येन रो° । ४ ग. °मो पाधि चे°

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याधिर्हि जन्मान्तरपापपाको भोगेन तस्मात्क्षपणीय एषः ॥
अभुज्यमानः पुरुषं न मुञ्चेज्जन्मान्तरेऽपीति हि शास्त्रवादः ॥ ९ ॥
व्याधिर्द्विधाऽसौ कथितो हि विद्भिः कर्मोद्भवो धातुकृतस्तथेति ॥
आद्यक्षयः कर्मण एव लीनाच्चिकित्सया स्याच्चरमोदितस्य ॥ १० ॥
संक्षीयतां कर्मण एव संक्षयाद्व्याधिः प्रवृत्तो न चिकित्स्यते मया ॥
पतेच्छरीरं यदि तन्निमित्ततः पतत्ववश्यं न बिभेमि किंचन ॥ ११ ॥
सत्यं गुरो ते न शरीरलोभः स्पृहालुता नस्तु चिराय तस्मै ॥
त्वज्जीवनेनैव हि जीवनं नः पाथश्चराणां जलमेव तद्धि ॥ १२ ॥
स्वयं कृतार्थाः परतुष्टिहेतोः कुर्वन्ति सन्तो निजदेहरक्षाम् ॥
तस्माच्छरीरं परिरक्षणीयं त्वयाऽपि लोकस्य हिताय विद्वन् ॥ १३ ॥

---

एवं शनैर्बोधित आचार्य उवाच—हि यस्माद्रोगो जन्मान्तरपापस्य पाकस्तस्मादेव भोगेन नाशनीयो हि यतश्चाभुज्यमान एष पुरुषं जन्मान्तरेऽपि न त्यजेदिति शास्त्रवादः। उपजातिवृत्तम् ॥ ९ ॥

नन्वेवं तर्हि चिकित्साशास्त्रवैयर्थ्यमिति चेत्तत्राऽऽह—विद्भिरसौ व्याधिर्द्विप्रकारः कथितः। कर्मोद्भवो वातादिधातुभिः कृतश्च तत्र कर्मणो लीनादेवाऽऽद्यस्य क्षयः। चरमोक्तस्य चिकित्सया क्षयः स्यात् ॥ १० ॥

तर्हि धातुकृत्वाच्चिकित्सया नाशनीय इति चेत्तत्राऽऽह—अयं प्रवृत्तो व्याधिः कर्मण एव संक्षयात्संक्षीयतां मया नैव चिकित्स्यते। तर्हि रोगवशाच्छरीरं पतिष्यतीत्याशङ्क्याऽऽह—यदि तन्निमित्ततः शरीरं पतेत्तर्ह्यवश्यं पततु तत्पतनात्किंचिदपि न बिभेमि ॥ ११ ॥

एवमुक्ताः शिष्याः प्राहुर्हे गुरो सत्यं तव शरीरलोभो नास्ति तथाऽप्यस्माकं चिराय चिरकालं तत्स्थितये स्पृहालुताऽस्ति। हि यस्मात्तव जीवनेन नो जीवनम्। हि यतो जलचराणां जलमेव तज्जीवनम् ॥ १२ ॥

भवत्वेवं तथाऽपि मया निजदेहरक्षा किमिति कर्तव्येत्याशङ्क्याऽऽहुः—स्वयमिति ॥ १३ ॥ [ विद्वन्निति भाष्यकारसंबुध्या सर्वविषयकज्ञानवति परमेश्वरावतारे सद्गुरावस्माभिः पामरैः किं प्रार्थनीयमित्याशयः सूच्यते ] ॥ १३ ॥

---

१ ग. °ता नोऽस्ति चि° । २ घ. °या त्रिलो° । ३ ग. क्षपणीयो । ४ क. °ध ज° । ५ घ. °तुकृ° । ६ ग. °या वै न चि° । ७ क. घ. °कं तदर्थं चिरा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्बन्धतो गुरुवरः प्रददावनुज्ञां
दिग्भ्यो भिषग्वरसमानयनाय तेभ्यः ॥
नत्वा गुरुं प्रतिदिशं प्रययुः प्रहृष्टाः
शिष्याः प्रवासकुशला हरिभक्तिभाजः ॥ १४ ॥
प्रायो नृपं कविजना भिषजो वदान्यं
वित्तार्थिनः प्रतिदिनं कुशला जुषन्ते ॥
तस्मादमी नृपपुरेषु निरीक्षणीया
इत्येव चेतसि मनोरथमादधानाः ॥ १५ ॥
तेऽतीत्य देशान्बहुलान्स्वकार्य-
सिद्ध्यै क्वचिद्राजपुरे भिषग्भिः ॥
अवाप्य संदर्शनमापणानि
समानयंस्तान्गुरुवर्यपार्श्वम् ॥ १६ ॥
ततो द्विजेन्द्रैर्निजसेवकैस्ता-
न्संतोषितान्स्वाभिमतार्थदानैः ॥
यदत्र कर्तव्यमुदीर्यतां त-
त्कुर्मः स्वशक्त्येति वदाञ्जगौ सः ॥ १७ ॥
उपगुदं भिषजः परिबाधते
गद उदेत्य तनुं तनुमध्यगः ॥
यदिदमस्य विधेयमिदं ध्रुवं
वदत रोगतमस्तिमिरारयः ॥ १८ ॥

---

एवं शिष्याणामाग्रहाद्गुरुवरो दिग्भ्यो वैद्यवराणां समानयनार्थं तेभ्यः शिष्येभ्योऽनुज्ञां प्रददौ । वसन्ततिलका वृत्तम् ॥ १४ ॥

वदान्यमुदारं जुषन्ते सेवन्ते ॥ १५ ॥

गुरुवर्यसमीपं तान्भिषजः समानीतवन्तः । उपजातिवृत्तम् ॥ १६ ॥

ततो निजसेवकैः स्वाभिमतार्थदानैः संतोषितान्यदत्र कर्तव्यं तत्कथयत। स्वशक्त्या कुर्म इति भाषमाणांस्तान्स गुरुवरो जगौ ॥ १७ ॥

यदुवाच तदाह—हे भिषजो गुदसमीपे तनुमध्यगो गदो रोग उदेत्य शरीरं परिबाधते । यदिदमस्य रोगस्य विधेयमौषधं तदिदं ध्रुवमव्यभिचारि वदत । यतो रोगतमस्तिमिरारयः । द्रुतविलम्बितं वृत्तम् ॥ १८ ॥ [ गदत कथयत ] ॥ १८ ॥

---

१ ग. गदत ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिरमुपेक्षितवानहमेतकं
दुरितजोऽयमिति प्रतिभाति मे ॥
तदपि शिष्यगणैर्निरहिंस्यहं
प्रहितवान्भवदानयनाय तान् ॥ १९ ॥
निगदिते मुनिनेति भिषग्वरा
विदधिरे बहुधा गदसत्क्रियाः ॥
न च शशाम गदो बहुतापदो
विमनसः पटवो भिषजोऽभवन् ॥ २० ॥
अथ मुनिर्विमनस्त्वसमन्विता-
निदमवोचत सिद्धभिषग्वरान् ॥
अटत गेहमगात्समयो बहु-
र्गदहृते भवतामित ईयुषाम् ॥ २१ ॥
दिनचयं गणयन्पथिलोचनः
प्रियजनो निवसेद्विरहातुरः ॥
नरपतिर्भवतां शरणं ध्रुवं
स च विदेशगमं श्रुतवान्यदि ॥ २२ ॥
कुपितवान्न च वो वितरेन्नृपः
फणितजीवितमक्षतशासनः ॥
तुरगवन्नृपतिश्चलमानसो
भिषजमन्यमसौ विदधीत वा ॥ २३ ॥

नन्वेवंभूतो रोग एतावत्कालं किमित्युपेक्षितस्तत्राऽऽह—चिरमिति । तदपि तथाऽपि शिष्यगणैरहं निरहिंस्यत्याग्रहेण नियोजितत्वाद्धिंसितः ॥ १९ ॥

इत्येवं मुनिना कथिते सति वैद्यवरा रोगस्य सत्क्रिया बहुधा विदधिरे ॥ २० ॥ [ पटवश्चतुरा अपीत्यर्थः ] ॥ २० ॥

इतो गेहमटत गच्छत । यतो रोगहरणार्थमित आगतानां भवतां कालो महानगात् ॥ २१ ॥

अवश्यमेव भवद्भिर्गन्तव्यमित्यनुशयेनाऽऽह—विरहातुरः प्रियजनः पथिलोचनो दिनसमुदायं गणयन्निवसेदिति । संभावनायां लिङ् । किंच नरपतिर्भवतां ध्रुवं शरणं स च भवतां विदेशगमनं यदि श्रुतवान् ॥ २२ ॥

तदा कुपितः सन्नृपः कथितं जीवितं प्रतिज्ञातां जीविकां युष्मभ्यो न दद्यात् ।

१ ध. °पः कथित° । २ ग. स. नृपः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

जनपदो विरलो गदहारकैर्बहुलरुग्णजनः प्रकृतेरतः ॥
मृगयते भवतो भवतां गृहे गदिजनः सहितुं गदमक्षमः ॥ २४ ॥
पितृकृता जनिरस्य शरीरिणः समवनं गदहारिषु तिष्ठति ॥
जनितमप्यफलं भिषजं विना भिषगसौ हरिरेव तनूभृतः ॥ २५ ॥
यदुदितं भवता वितथं न तत्तदपि न क्षमते व्रजितुं मनः ॥
सुरभुवं प्रविहाय मनुष्यगां व्रजितुमिच्छति कोऽत्र नरः सुधीः ॥
इति निगद्य ययुर्भिषजां गणा विमनसः पटवोऽपि निजान्गृहान् ॥
अथ मुनिर्विजहन्ममतां तनौ गुरुवरो गुरुदुःखमसोढ सः ॥ २७ ॥
प्रथितैरवनौ परःसहस्रैरगदंकारचयैरथाचिकित्स्ये ॥
प्रबले सति हा भगंदराख्ये स्मरति स्म स्मरशासनं मुनीन्द्रः ॥
स्मरशासनशासनान्नियुक्तौ द्विजवेषं प्रविधाय भूमिमाप्तौ ॥
उपसेदतुरश्विनौ च देवौ सुभुजौ साञ्जनलोचनौ सुपुस्तौ ॥२९॥

---

यतोऽक्षतशासनः । यद्वा यस्मादश्ववन्नृपतिश्चलमानसस्ततोऽसावन्यं वैद्यं विदधीत ॥ २३ ॥ [ तुरगवदिति चलत्वमात्रे निदर्शनम् ] ॥ २३ ॥

किंच रोगहारकैर्विरलो रहितो जनपदः स्वभावादेव बहुलं रुग्णा जना यस्मिन्नतो रोगिजनो रोगं सहितुमसमर्थो भवतां गृहे भवतो विचिनुते ॥ २४ ॥

जनिर्जन्मावनं पालनं तस्मादसौ वैद्यः शरीरभृतो विष्णुरेव तद्वदुपासनीय इत्यर्थः ॥ ॥ २५ ॥ [ जनितमपीति । शरीरमित्यार्थिकम् ] ॥ २५ ॥

एवमुक्ता भिषज ऊचुः—भवता यत्कथितं तन्मिथ्या न भवति तथाऽपि गन्तुं मनो न क्षमते यतो देवभूमिं प्रविहाय मनुष्यभूमिं गन्तुं सुधीर्नरोऽत्र जगति क इच्छति न कोऽपीत्यर्थः ॥ २६ ॥ [ सुरभुवमिति । अमरावतीमित्यर्थः ] ॥ २६ ॥

इति निगद्यैवमुक्त्वा ॥ २७ ॥

भूमौ प्रथितैः सहस्राद्प्यधिकैरौषधकारसमूहैर्भगंदराख्ये प्रबले। हेति खेदे। अचिकित्स्ये सति मुनीन्द्रः श्रीशंकराचार्यः कामशासनं महादेवं स्मरति स्म। वसन्तमालिका वृत्तम्॥२८॥

स्मृतमहादेवाज्ञया नियुक्तौ देवावश्विनीकुमारौ द्विजवेषं प्रविधाय भूमिं प्राप्तौ सुभुजौ साञ्जनलोचनौ सुपुस्तकयुक्तौ मुनीन्द्रसमीपे विविशतुः ॥ २९ ॥ [ सुभुजावित्यादि ब्राह्मणारिवेषत्वादेव ] ॥ २९ ॥

---

१ घ. रुग्णो । २ घ. जनो । ३ घ. °ति परो मु° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतिवर्य चिकित्सितुं न शक्या परकृत्याजनिता हि ते रुगेषा ॥
इति तं समुदीर्य योगिवर्यं विबुधौ तौ प्रतिजग्मतुर्यथेतम् ॥ ३० ॥
तदनु स्वगुरोर्गदापनुत्त्यै परमन्त्रं तु जजाप जातमन्युः ॥
मुहुरार्यपदेन वार्यमाणोऽप्यरिवर्गेऽप्यनुकम्पिनाऽब्जपादः ॥ ३१ ॥
अमुनैव ततो गदेन नीचः प्रतियातेन हतो ममार गुप्तः ॥
मतिपूर्वकृतो महानुभावेष्वनयः कस्य भवेत्सुखोपलब्ध्यै ॥ ३२ ॥
स्वस्थः सोऽयं ब्रह्म सायं कदाचिध्यायन्गङ्गापूरसङ्गार्द्रवातैः ॥
आगच्छन्तं सैकते प्रत्यगच्छद्योगीशानं गौडपादाभिधानम् ॥ ३३ ॥
पाणौ फुल्लश्वेतपङ्केरुहश्रीमैत्रीपात्रीभूतभासा घटेन ॥
आराद्राजत्कैरवानन्दसंध्यारागारक्ताम्भोदलीलां दधानम् ॥ ३४ ॥

---

उपविश्य यदूचतुस्तदाह—भो यतिवर्यैषा ते रुग्रोगश्चिकित्सितुं न शक्या हि यस्मात्परकृत्ययोत्पादितेति तं योगिवर्यं समुदीर्य तौ देवौ यथागतं प्रतिजग्मतुः ॥ ३० ॥

तदनन्तरं जातकोपः शत्रुवर्गेऽनुकम्पिनाऽऽर्यपादेनाऽऽचार्येण मुहुर्वार्यमाणोऽपि पद्मपादः स्वगुरो रोगस्य नाशाय परं मन्त्रं तु जजाप ॥ ३१ ॥ [ परेति । परश्चासौ मन्त्रश्च परमन्त्रः सर्वमन्त्रराजत्वेनोत्कटः प्रणवस्तमित्यर्थः । 'तारमेव जपेद्भिक्षुर्यथाकालमतन्द्रितः । मन्त्रान्तरे नाधिकारः श्रूयते स्मर्यते यतेः' इति वचनाद्यतीनां मन्त्रान्तरेऽनधिकारात् ॥ ३१ ॥

ततः किं वृत्तमित्याकाङ्क्षायामाह—अमुनैवेति । प्रतियातेन प्रतिप्राप्तेन ॥ ३२ ॥ [ गुप्तोऽभिनवगुप्तः शाक्त इत्यर्थः ] [ अनयोऽपराध ] ॥ ३२ ॥

स्वस्थः सोऽयं श्रीशंकराचार्यः सैकते सायंकाले ब्रह्म ध्यायन्सन्गङ्गापूरेणाऽऽर्द्रैर्वायुभिः सहाऽऽगच्छन्तं योगीशं गौडपादसंज्ञं प्रत्यबुध्यत । शालिनी वृत्तम् ॥ ३३ ॥ [ स्वस्थः सद्यो निरस्तभगंदराख्यरोगः ] [ सैकते सिकतामये गङ्गातट एवावलोक्येति शेषः । प्रत्यगच्छदभिमुखो जगामेत्यन्वयः ] ॥ ३३ ॥

तमेव वर्णयति—पाणौ हस्ते प्रफुल्लितस्य श्वेतकमलस्य या श्रीस्तया या मैत्री तस्याः पात्रीभूता भाः कान्तिर्यस्य तेन घटेन कमण्डलुनाऽऽराद्राजत्कैरवस्य सितपङ्कजस्याऽऽनन्दो यस्य तस्य संध्यारागेणाऽऽ समन्ताद्रक्तस्य पयोदस्य च लीलां दधानम् ॥ ३४ ॥

---

१ क. 'षेऽप्यन' । २ क. 'लब्धौ ॥ ३२ ॥ स्व' । ३ ग. 'यं शं' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

पाणौ शोणाम्भोजबुद्ध्या समन्ताद्भ्राम्यद्भृङ्गीमण्डलीतुल्यकुल्याम्॥
अङ्गुल्यग्रासङ्गिरुद्राक्षमालामङ्गुष्ठाग्रेणासकृद्भ्रामयन्तम् ॥ ३५ ॥
आर्यस्याथो गौडपादस्य पादावभ्यर्च्यासौ शंकरः पङ्कजाभौ ॥
भक्तिश्रद्धासंभ्रमाक्रान्तचेताः प्रह्वस्तस्थावग्रतः प्राञ्जलिः सन्॥३६॥
सिञ्चन्नेनं क्षीरवाराशिवीचीसाचिव्यायाऽऽसन्नयत्नैः कटाक्षैः ॥
दन्तज्योत्स्नादन्तुराश्चापि कुर्वन्नाशाः सूक्तिं संदधे गौडपादः ॥ ३७ ॥
कच्चित्सर्वां वेत्सि गोविन्दनाम्नो हृद्या विद्या संसृदुद्धारकृत्या ॥
कच्चित्तत्त्वं तत्त्वमानन्दरूपं नित्यं सच्चिन्निर्मलं वेत्सि वेद्यम् ॥ ३८ ॥
भक्त्या युक्ताः स्वानुरक्ता विरक्ताः शान्ता दान्ताः संततं श्रद्दधानाः॥
कच्चित्तत्त्वज्ञानकामा विनीताः शुश्रूषन्ते शिष्यवर्या गुरुं त्वाम् ॥३९॥
कच्चिन्नित्याः शत्रवो निर्जितास्ते कच्चित्प्राप्ताः सद्गुणाः शान्तिपूर्वाः॥
कच्चिद्योगः साधितोऽष्टाङ्गयुक्तः कच्चिच्चित्तं साधुचित्तत्वगं ते ॥४०॥

---

पुनश्च हस्ते शोणपद्मबुद्ध्या समन्तोद्भ्राम्यन्तीनां भ्रमरीणां या मण्डली तत्तुल्यकुल्ो-
भवां तत्सदृशामङ्गुल्यग्रासङ्गिरुद्राक्षमालां पुनः पुनर्भ्रामयन्तम् ॥ ३५ ॥
अथो अनन्तरमार्यस्य गौडपादस्य पङ्कजाभौ पादावसौ शंकरोऽभ्यर्च्य भक्तिश्रद्धाभ्यां
यः संभ्रमस्तेन तैर्वाऽऽक्रान्तचित्तो नम्रीभूतोऽग्रतः प्राञ्जलिः सन्नवतस्थे ॥३६॥ [भक्तीति ।
भक्तिरनुरागः । श्रद्धा विश्वासः ] ॥ ३६ ॥
एनं शंकरं क्षीरवारिराशिसादृश्यायोऽऽसन्नयत्नैः प्राप्तयत्नैः कटाक्षैः सिञ्चन्दिशश्च
दन्तज्योत्स्नया दन्तुरा व्याप्ताः कुर्वन्सुष्ठूक्तिं संदधे ॥ ३७ ॥
तामेव दर्शयति—कच्चिदिति प्रश्ने । संसारोद्धारकारणीभूता हृद्यस्य प्रिया या गोवि-
न्दनाम्नो विद्या तां सर्वां वेत्सि जानासि । सच्छास्त्रप्रसिद्धं नित्यं सच्चिदमलं वेद्यं तत्त्वं त्वं
कच्चिद्वेत्सि ॥ ३८ ॥ [ विद्यामद्वैतब्रह्मविद्यामित्यर्थः ] ॥ ३८ ॥
भक्त्या सेवया युक्ताः स्वस्मिंस्त्वयि स्वात्मनि वाऽनुरक्ता विषयेषु विरक्ता वशीकृ-
तान्तरिन्द्रिया जितबाह्यकरणा निरन्तरं श्रद्धावन्तस्तत्त्वज्ञानाभिलाषा विनयं प्राप्ताः शिष्य-
वर्याः कच्चित्त्वां गुरुं सेवन्ते ॥ ३९ ॥
नित्याः शत्रवः कामाद्या यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिसंज्ञकै-
रष्टभिरङ्गैर्युक्तः साधुचित्तत्वगं सम्यक्चैतन्यतत्त्वविषयम् ॥ ४० ॥

---

१ ग. °याऽऽपंन्न° । २ क. ग. °दुत्तार° । ३ घ. °न्तादूभ्रमंन्ती° । ४ क. °न्ती भ्र° । ५ ग. याऽऽपन्न° । ६ क. °श्चन्द° । ७ क. °रां उन्नतरदा आशा दिशोऽपि धवलीकु° । ८ ग. घ. °न्ति । तच्छा° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यद्वैताचार्यवर्येण तेन प्रेम्णा पृष्टः शंकरः साधुशीलः ॥
भक्त्युद्रेकाद्बाष्पपर्याकुलाक्षो बध्नन्मूर्धन्यञ्जलिं व्याजहार ॥ ४१ ॥
यद्यत्पृष्टं स्पष्टमाचार्यपादैस्तत्तत्सर्वं भो भविष्यत्यवश्यम् ॥
कारुण्याब्धेः कल्पयुष्मत्कटाक्षैर्दृष्टस्याऽऽहुर्दुर्लभं किंनु जन्तोः॥४२॥
मूको वाग्ग्मी मन्दधीः पण्डिताग्र्यः पापाचारः पुण्यनिष्ठेषु गण्यः ॥
कामासक्तः कीर्तिमान्निस्पृहाणामार्यापाङ्गालोकतः स्यात्क्षणेन॥४३॥
लेशं वाऽपि ज्ञातुमीष्टे पुमान्कः सीमातीतस्याद्य युष्मन्महिम्नः ॥
तुष्टाऽत्यन्तं तत्त्वविद्योपदेष्टा जातः साक्षाद्यस्य वैयासकिः सः॥४४॥
आजानात्मज्ञानसिद्धं यमारादौदासीन्याज्जातमात्रं व्रजन्तम् ॥
प्रेमावेशात्पुत्र पुत्रेति शोचन्पाराशर्यः पृष्ठतोऽनुप्रपेदे ॥ ४५ ॥
यश्चाऽऽहूतो योगभाष्यप्रणेत्रा पित्रा प्राप्तः स प्रपञ्चैकभावम् ॥
सर्वाहंताशीलनाद्योगभूमेः प्रत्याक्रोशं प्रातनोद्वृक्षरूपः ॥ ४६ ॥

---

बाष्पपर्याकुले परिव्याप्ते अक्षिणी यस्य ॥ ४१ ॥ [ मूर्धनि मस्तके ] ॥ ४१ ॥
हे भगवन्नाचार्यपादैर्यद्यत्पृष्टं तत्तत्सर्वमवश्यं स्पष्टं भविष्यति । यस्मात्कारुण्यसमुद्रस्य कल्पैः सदृशैर्भवत्कटाक्षैर्दृष्टस्य जन्तोः किंनु दुर्लभं किमपि दुर्लभं नेत्याहुः ॥ ४२ ॥

एतदेवोपपादयति—भवद्विधानामार्याणां कटाक्षावलोकात्क्षणमात्रेण मूको वाग्ग्मी स्यादेवमग्रेऽपि । निस्पृहाणां मध्ये कीर्तिमान् ॥ ४३ ॥

सीमातीतस्य भवन्महिम्नो लेशं वाऽपि ज्ञातुमद्य कः पुमान्समर्थो न कोऽपीत्यर्थः । कुत इति चेत्तत्राऽऽह—यस्य भवतः सोऽतिप्रसिद्धो व्याससूनुः शुकाचार्योऽत्यन्तं तुष्टो भूत्वा साक्षात्स्वयमेव विद्योपदेष्टा जातोऽत इत्यर्थः ॥ ४४ ॥

वैयासकिरित्युक्त्या व्यासपुत्रत्वेनैव तस्य श्रैष्ठ्यं नास्त्यपि तु स्वतोऽपीत्याशयेन तं वर्णयति—यं जन्मत एवाऽऽत्मज्ञानसिद्धमौदासीन्येनाऽऽरात्समीपाद्दूरं वा जातमात्रं व्रजन्तं प्रेमावेशात्पुत्र पुत्रेति शोचन्पराशरनन्दनो वेदव्यासः पृष्ठतोऽनुप्रपेदे । अवैदिक इतिशब्दे परे प्लुतोऽप्लुतवत्स्यादित्यर्थकेनाप्लुतवदुपस्थित इति सूत्रेणाप्लुतवत्त्वात्स्वरसंधिः ॥ ४५ ॥

यश्च योगभाष्यप्रणेत्रा पित्राऽऽहूतः सर्वाहंभावशीलनाद्योगभूमेः प्रपञ्चैकभावं प्राप्तः स वृक्षरूपः प्रत्याक्रोशं प्रातनोत् । तथाचोक्तम्—"यं प्रव्रजन्तमनुपेतमपेतकृत्यं[1] द्वैपायनो विरहकातर आजुहाव । पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं व्याससूनुमु-

---

१ घ. °कृत्यमित्या दि भागवते । यो°।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्तादृक्षज्ञानपाथोधियुग्मत्पादद्वंद्वं पद्मसौहार्दहृद्यम् ॥
दैवादेतद्दीनदृग्गोचरश्चेद्भक्तस्यैतद्भागधेयं ह्यमेयम् ॥ ४७ ॥
इत्याकर्ण्याथाब्रवीद्गौडपादो वत्स श्रुत्वा वास्तवांस्त्वद्गुणौघान् ॥
द्रष्टुं शान्तस्वान्तवन्तं मम त्वां गाढोत्कण्ठागर्भितं चित्तमासीत् ॥४८॥
कृतास्त्वया भाष्यमुखा निबन्धा मत्कारिकावारिजभानुःसुखार्काः ॥
श्रुत्वेति गोविन्दमुखात्प्रहृष्य दृगध्वनीनोऽस्मि तवाद्य विद्वन् ॥ ४९ ॥
इति स्फुटं प्रोक्तवते विनीतः सोऽश्रावयद्भाष्यमशेषमस्मै ॥
विशिष्य माण्डूक्यगभाष्ययुग्मं श्रुत्वा प्रहृष्यन्निदमब्रवीत्तम् ॥ ५० ॥
मत्कारिकाभावविभेदितादृङ्माण्डूक्यभाष्यश्रवणोत्थहर्षः ॥
दातुं वरं ते विदुषां वराय प्रोत्साहयत्याशु वरं वृणीष्व ॥ ५१ ॥
स प्राह पर्यायशुकर्षिमीक्ष्य भवन्तमद्राक्षमतिष्यपूरुषम् ॥
वरः परः कोऽस्ति तथाऽपि चिन्तनं चित्तस्वगं मेऽस्तु गुरो निरन्तरम् ५२

पयामि गुरुं मुनीनाम्" इति । योगमाहात्म्येन गमनागमनयोः संभवात्परीक्षिदुपदेष्टृत्वव-द्गौडपादोपदेष्टृत्वमपि न विरुध्यत इति द्रष्टव्यम् ॥ ४६ ॥ [ सर्वेति । "अहमेवेदं सर्वम्" इति सर्वत्र यदहंताशीलनमात्मैक्यानुसंधानाभ्यसनं तल्लक्षणो योऽयमा समन्ता-द्योगश्चित्तवृत्तिनिरोधस्तस्य भूम्ना महिम्नेत्यर्थः । सप्रपञ्चेति । सप्रपञ्चं प्रपञ्चविशिष्टं यद्ब्रह्म तेन साकं य एकभाव एकत्वं तं प्राप्तः सन्निति यावत् ] ॥ ४६ ॥

तत्तस्मादेवंविधस्य ज्ञानसमुद्रस्य भवतः कमलस्य सौहार्देन सादृश्येन हृद्यमेतत्पादद्वंद्वं दैवादस्मद्विधदीनदृष्टिविषयभूतं यदि स्यात्तर्ह्येतद्भक्तस्याप्रमेयं भाग्यम् ॥ ४७ ॥

शान्तमनस्वन्तं त्वां द्रष्टुमत्यन्तोत्कण्ठागर्भितं मम मानसमासीत् ॥ ४८ ॥

किंच मत्कृतकारिकाब्जसुखसूर्या भाष्यादयो निबन्धास्त्वया कृता इति गोविन्दमुखा-च्छ्रुत्वा हर्षं प्राप्याद्य हे विद्वंस्तव दृष्टिमार्गगोऽस्मि ॥ ४९ ॥

माण्डूक्यगतं भाष्ययुग्मं श्रुतिभाष्यं गौडपादीयकारिकाभाष्यं चेत्यर्थः । उपजाति-वृत्तम् ॥ ५० ॥

यदुवाच तदाह—मत्कारिकाभावविभेदिनोस्तादृशयोर्माण्डूक्यभाष्ययोः श्रवणेनोत्थितो हर्षो विदुषां मध्ये श्रेष्ठाय तुभ्यं वरं दातुं प्रोत्साहयति । तस्माच्छीघ्रं वरं वृणीष्व । इन्द्रवज्रा वृत्तम् ॥ ५१ ॥

एवं वरग्रहणाय प्रेरितः स श्रीशंकरः प्राह—भवन्तं पर्यायेण रूपान्तरेणोपलक्षितं शुकर्षिं शुकर्षेः पर्यायमिति वा । सर्वात्मना शुकर्षितुल्यमीक्ष्य भगवन्तमकलिपुरुषं त्रियुगं

१ क. घ. 'चरं चेद्द' । २ ग घ. 'जनेः सु' । ३ क. 'मदभा' । ४ क. 'लिपूरु' ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथेति सोऽन्तर्धिमपास्तमोहे गते चिरंजीविमुनावथासौ ॥
वृत्तान्तमेतं स मुदाऽऽश्रवेभ्यः संश्रावयंस्तां क्षणदामनैषीत् ॥ ५३ ॥
अथ द्युनद्यामुषसि क्षमीन्द्रो निर्वर्त्य नित्यं विधिवत्स शिष्यैः ॥
तीरे निदिध्यासनलालसोऽभूदत्रान्तरेऽश्रूयत लोकवार्ता ॥ ५४ ॥
जम्बूद्वीपं शस्यतेऽस्यां पृथिव्यां तत्राप्येतन्मण्डलं भारताख्यम् ॥
काश्मीराख्यं मण्डलं तत्र शस्तं यत्राऽऽस्तेऽसौ शारदा वागधीशा ॥ ५५
द्वारैर्युक्तं माण्डपैस्तच्चतुर्भिर्देव्या गेहं यत्र सर्वज्ञपीठम् ॥
यत्राऽऽरोहे सर्वविरसज्जनानां नान्ये सर्वे यत्प्रवेष्टुं क्षमन्ते ॥ ५६ ॥
प्राच्याः प्राच्यां पश्चिमा पश्चिमायां ये चोदीच्यास्तामुदीचीं प्रपन्नाः ॥
सर्वज्ञास्तद्द्वारमुद्घाटयन्तो दाक्षा नद्धं नो तदुद्घाटयन्ति ॥ ५७ ॥
वार्तामुपश्रुत्य स दाक्षिणात्यो मानं तदीयं परिमातुमिच्छन् ॥
काश्मीरदेशाय जगाम हृष्टः श्रीशंकरो द्वारमपावरीतुम् ॥ ५८ ॥

---

परमात्मानं विष्णुमेवाहमद्राक्षमतोऽस्मात्परो वरः कोऽस्ति कोऽपि नास्ति तथाऽपि हे गुरो मे चिन्तनं सदैव चैतन्यतत्त्वविषयमस्त्विवति वरं देहीत्यर्थः । उपजातिवृत्तम् ॥ ५२ ॥
*[ ईक्ष्यावलोक्य संभ्रमादेवायमपप्रयोगोऽपि भक्तिरसपरिपोषकत्वाद्गुण एव ' ह्रापितः कासि हे सुभ्रु ' इति भक्तिरित्यादिवदिति ज्ञेयम् ॥ ५२ ॥

तथेति स गौडपादः प्राहेत्यनुकृष्य संबन्धनीयम् । अथापास्तमोहे चिरंजीविमुनावन्तर्धिं गते सत्यसावेतं वृत्तान्तं शिष्येभ्यो मुदा संश्रावयंस्तां रात्रिमनैषीत् ॥ ५३ ॥

अथ प्रातःकाले श्रीशंकरः शिष्यैः सह नित्यकर्तव्यं गङ्गायां विधिवत्संपाद्य तस्यास्तीरे निदिध्यासनलालसोऽभूदेतस्मिन्नन्तरे लोकवार्ताऽश्रूयत ॥ ५४ ॥

तामेवाऽऽह— जम्बूद्वीपमिति । शालिनी वृत्तम् ॥ ५५ ॥

मण्डपसंबन्धिभिश्चतुर्भिर्द्वारैर्युक्तं तस्या देव्या गेहं यस्मिन्गेहे सर्वज्ञपीठं यत्राऽऽरोहे सति सज्जनानां मध्ये सर्वज्ञो भवति । सर्वज्ञादन्ये सर्वेऽपि यद्गेहं प्रवेष्टुमपि न क्षमन्ते । यद्वा यदेवंभूतं तद्देव्या गेहमित्यन्वयः ॥ ५६ ॥

दाक्षा दाक्षिणात्याः पिनद्धं तद्द्वारं नोद्घाटयन्ति ॥ ५७ ॥

तस्या वार्ताया इदं प्रमाणं मातुमिदं मानं वेति निश्चेतुमिच्छंस्तद्द्वारमुद्घाटयितुं काश्मीरदेशाय जगाम ॥ ५८ ॥

---

* शुकर्षिमेक्ष्येति तु पठितुं युक्तम् ।

---

१ ख. जम्बुद्वी° ।

द्वारं पिनद्धं किल दाक्षिणात्यं
न सन्ति विद्वांस इतीह दाक्षाः ॥
तां किंवदन्तीं विफलां विधातुं
जगाम देवीनिलयाय हृष्यन् ॥ ५९ ॥

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसंकर्षण-
श्रीमच्छंकरदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ॥
दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुधो
वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ॥ ६० ॥

करटतटान्तवान्तमदसौरभसारभर-
स्खलदलिसंभ्रमत्कलभकुम्भविजृम्भिबलः ॥
हरिरिव जम्बुकानमददन्तगजान्कुजना-
नपि खलु नाक्षिगोचरयतीह यतिर्हतकान् ॥ ६१ ॥

संश्रावयन्नध्वनि देशिकेन्द्रः
श्रीदक्षिणद्वारभुवं प्रपेदे ॥
कवाटमुद्घाटय निवेष्टुकामं
ससंभ्रमं वादिगणो न्यरौत्सीत् ॥ ६२ ॥

---

किलेति प्रसिद्धं दाक्षिणात्यं द्वारं पिनद्धं यत इह भूमौ दाक्षिणात्या विद्वांसो नैव सन्तीति किंवदन्तीं जनश्रुतिं विफलां विधातुं जगाम । आख्यानकी वृत्तम् ॥ ५९ ॥

वादिसमूहा एव गजेन्द्रास्तेषां दुर्मदघटानां यो गर्वस्तं सम्यक्कर्षतीति तथा स चासौ श्रीमच्छंकरदेशिकेन्द्रलक्षणो मृगेन्द्रः सर्वार्थविदायात्यतो हे वादिदुःशठगजा दूरं गच्छत । किं करोतीति । चेत्संन्यासलक्षणदंष्ट्रायुधो . वेदान्तलक्षणबृहद्वनाश्रयो वेदान्तादन्यद्द्वैतप्रतिपादकशास्त्रलक्षणं वनं भक्षतीत्यध्वनि संश्रावयन्नितिव्यवहितेनान्वयः । शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

करटतटान्ताद्गजगण्डतटप्रान्तभागादुद्वमितमदसौरभसारभरेण स्खलद्भिरलिभिः संभ्रमति गजकुम्भे विजृम्भि स्फुरद्बलं यस्य स सिंहो यथा क्षुद्रो सृगालानमददन्तवर्जितान्गजांश्च नाक्षिगोचरयति नैं प्रतिगणयति तथेह लोके यतिर्निन्दितान्कुत्सितजनान्नाक्षिगोचरयति न गणयति । 'यदि भवतो नजौ भजजला गुरुर्नर्कुटकम्' ॥ ६१ ॥

इत्येवं मार्गे संश्रावयन्देशिकेन्द्रः श्रीदक्षिणद्वारभूमिंप्राप्तवान् । ततः कवाटमुद्घाटय प्रवेष्टुकामं ससंभ्रमं तं वादिगणो निरुद्धवान् । उपजातिवृत्तम् ॥ ६२ ॥

---

१ घ. कपाट° । २ घ. °प्रान्ताद्° । ३ ग. °क्रूशृगा° । ४ घ. °न ग° । ५ ग. घ. °ति । हयदृशभिर्नजो । ६ घ. °भूमिमाप्त° ; ७ घ. कपाट° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथाब्रवीद्वादिगणः स देशिकं
किमर्थमेवं बहुसंभ्रमक्रिया ॥
यदत्र कार्यं तदुदीर्यतां शनै-
र्न संभ्रमः कर्तुमलं तदीप्सितम् ॥ ६३ ॥
यः कश्चिदेत्येतु परीक्षितुं चे-
द्वेदाखिलं नाविदितं ममाणु ॥
इत्थं भवान्वक्ति समुन्नतीच्छो
दत्त्वा परीक्षां व्रज देवतालयम् ॥ ६४ ॥
षड्भाववादी कणभुङ्मतस्थः
पप्रच्छ तं स्वीयरहस्यमेकम् ॥
संयोगभाजः परमाणुयुग्मा-
ज्जातं हि सूक्ष्मं द्व्यणुकं मतं नः ॥ ॥ ६५ ॥
यत्स्यादणुत्वं तदुपाश्रितं त-
ज्जायेत कस्माद्वद सर्वविच्चेत् ॥
नो चेत्प्रभुत्वं तव वक्तुमेते
सर्वज्ञभाषां विहितां *कथन्ते ॥ ६६ ॥

---

अथ निराधनानन्तरं स वादिगणो देशिकमुवाच—एवं बहुसंभ्रमा क्रिया किमर्थं बहुसंभ्रमस्य क्रियाकरणमिति वा । यदत्र कार्यं तत्कथ्यताम् । यतस्तदीप्सितं कर्तुं संभ्रमः समर्थो न भवति वंशस्थवृत्तम् ॥ ६३ ॥

यः कश्चित्परीक्षितुमायाति स काममागच्छतु यतोऽहमखिलं वेदाण्वपि ममाविदितं नास्तीति भवान्वक्ति चेत्तर्हि हे समुन्नतीच्छो परीक्षां दत्त्वा देवतालयं व्रज । इन्द्रवज्रा वृत्तम् ॥ ६४ ॥

एवं श्रुत्वा परीक्षां दातुमवस्थितं श्रीशंकराचार्यं प्रति कणादमते स्थित एकं स्वीयं रहस्यं पप्रच्छ । तं विशिनष्टि— द्रव्यगुणकर्मसामान्यविशेषसमवायाः षड्भावा इति वादी । रहस्यमेव दर्शयति—संयोगभागिनः परमाणुद्वयात्सूक्ष्मं द्व्यणुकं जातमिति नो मतम् ॥६५॥

द्व्यणुकाश्रितमणुत्वं यत्स्यात्तत्कस्माज्जायेतेति वद यदि त्वं सर्वज्ञो नो चेत्तव प्रभुत्वं वक्तुमेते तव शिष्या रचितां सर्वज्ञभाषां ब्रुवन्ति न त्वर्थतस्त्वं सर्वज्ञोऽसीत्यर्थः ॥ ६६ ॥

---

* इदं चिन्त्यम् । कथंचिण्णिचो वैकल्पिकत्वेन तदभावेऽप्यात्मनेपददोषपत्तेर्दुःसाधत्वात् । आदर्शपुस्तकेषु तु सर्वेष्वपीदमेवोपलभ्यते ।

---

१ ग. °लं तदी° । २ ग. घ. °ङ्मताश्रयः पप्र° । ३ क. नास्ति । वादिगण आह अमुना प्रकारेण भ° । ४ ग. घ. °मताश्रय ए° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या द्वित्वसंख्या परमाणुनिष्ठा सा कारणं तस्य गतस्य मात्रा ॥
इतीरिते तद्वचनं प्रपूज्य स्वयं न्यवर्तिष्ट कणादलक्ष्मीः ॥ ६७ ॥
तत्रापि नैयायिक आत्तगर्वः कणादपक्षाच्चरणाक्षपक्षे ॥
मुक्तेर्विशेषं वद सर्वविच्चेन्नो चेत्प्रतिज्ञां त्यज सर्वविक्त्वे ॥ ६८ ॥
अत्यन्तनाशे गुणसंगतेर्या स्थितिर्नभोवत्कणभक्षपक्षे ॥
मुक्तिस्तदीये चरणाक्षपक्षे साऽऽनन्दसंवित्सहिता विमुक्तिः ॥ ६९ ॥
पदार्थभेदः स्फुट एव सिद्धस्तथेश्वरः सर्वजगद्विधाता ॥
स ईशवादीत्युदितेऽभिनन्द्य नैयायिकोऽपि न्यवृतन्निरोधात् ॥ ७० ॥
तं कापिलः प्राह च मूलयोनिः किं वा स्वतन्त्रा चिदधिष्ठिता वा ॥
जगन्निदानं वद सर्वविक्त्वान्नो चेत्प्रवेशस्तव दुर्लभः स्यात् ॥ ७१ ॥
सा विश्वयोनिर्बहुरूपभागिनी स्वयं स्वतन्त्रा त्रिगुणात्मिका सती ॥
इत्येव सिद्धान्तगतिस्तु कापिली वेदान्तपक्षे परतन्त्रता मता ॥७२॥

---

परमाणुद्वयनिष्ठा या द्वित्वसंख्या सा तस्य द्व्यणुकगतस्याणुत्वस्य कारणमिति मात्रा ज्ञात्रा श्रीशंकरेण कथिते सति तद्वचनं प्रपूज्य कणादलक्ष्मीः स्वयमेव निवृत्तिं गता । उपजातिवृत्तम् ॥ ६७ ॥

तदनन्तरं तेषु मध्ये गौतममताश्रय आत्तगर्वो नैयायिक आह—कणादपक्षाद्गौतमपक्षे मुक्तेर्विशेषं वद यदि त्वं सर्वज्ञो नो चेत्सर्ववित्त्वे प्रतिज्ञां त्यज ॥ ६८ ॥

एवमुक्त आचार्य आह—गुणसंबन्धस्यात्यन्तनाशे नभोवद्या स्थितिः सा कणादपक्षे मुक्तिः । तदीये गौतमपक्षे तु सा गुणसंगतेरत्यन्तनाशे नभोवत्स्थितिरानन्दसंवित्सहिता मुक्तिरित्यर्थः ॥ ६९ ॥

पदार्थभेदस्तु स्फुट एव सिद्धः कणादमते सप्त पदार्था गौतममते तु षोडश ते । तथाच कणभुक्सूत्रम् 'द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः' तथा गौतमीयमपि 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति । सर्वजगन्निमित्तकारणभूत ईश्वरस्तथा कणादपक्षवदेवेत्युदिते सति स ईशवादी नैयायिकोऽपि निरोधनान्न्यवृतन्निवृत्तः ॥ ७० ॥

ततस्तं सांख्यः प्राह मूलप्रकृतिः किं स्वतन्त्रा जगत्कारणमुत चिदधिष्ठितेति सर्वज्ञत्वात्त्वं वद । नो चेत्प्रवेशस्तव दुर्लभः स्यात् ॥ ७१ ॥

एवमुक्त आचार्य आह—सा विश्वयोनिः सत्त्वरजस्तमोभिधगुणत्रयात्मिका स्वतन्त्रा

---

१ ग. °किस्त्वदी° । २ ग. त्वदीये । ३ ग. घ. प्राहास्य मू° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततो नदन्तो न्यरुधन्सगर्वा दत्त्वा परीक्षां व्रज धाम देव्याः ॥
बौद्धास्तथा संप्रथिताः पृथिव्यां बाह्यार्थविज्ञानकशून्यवादैः॥ ७३ ॥
बाह्यार्थवादो द्विविधस्तदन्तरं वाच्यं विविक्षुर्यदि देवतालयम् ॥
विज्ञानवादस्य च किं विभेदकं भवन्मताद्ब्रूहि ततः परं व्रज ॥७४॥
सौत्रान्तिको वक्ति हि वेद्यजातं लिङ्गाधिगम्यं त्वितरोऽक्षिगम्यम् ॥
तयोस्तयोर्भङ्गुरताऽविशिष्टा भेदः कियान्वेदनवेद्यभागी ॥ ७५ ॥
विज्ञानवादी क्षणिकत्वमेषामङ्गीचकारापि बहुत्वमेषः ॥
वेदान्तवादी स्थिरसंविदेकेत्यङ्गीचकारेति महान्विशेषः ॥ ७६ ॥
अथाब्रवीद्दिग्वसनानुसारी रहस्यमेकं वद सर्वविच्चेत् ॥
यदस्तिकायोत्तरशब्दवाच्यं तत्किं मतेऽस्मिन्वद देशिकाऽऽशु ॥ ७७ ॥

---

सती बहुरूपभागिनी जगन्निदानमिति तु कापाली सिद्धान्तगतिर्वेदान्तपक्षे त्वस्याः परतन्त्रता मता ॥ ७२ ॥

ततस्तदनन्तरं तथैव बाह्यार्थविज्ञानकशून्यवादैः पृथिव्यां प्रथिताः सगर्वाः सौत्रान्तिकवैभाषिकयोगाचार्यमाध्यमिकमतावलम्बिनो बौद्धाः परीक्षां दत्त्वा देव्या धाम व्रजेति नादं कुर्वन्तो निरोधं कृतवन्तः ॥ ७३ ॥

यदि त्वं देवतालयं विविक्षुस्तर्हि द्विविधो यो बाह्यार्थस्तदन्तरं त्वया वाच्यम् । विज्ञानवादस्य च भवतो वेदान्तवादिनो मतात्किं विभेदकमिति ब्रूहि ततः परं व्रज ॥७४॥

एवमुक्त आचार्य उवाच—सौत्रान्तिकः सर्वमपि वेद्यमनुमानगम्यं वक्ति । वैभाषिकस्तु तत्सर्वं प्रत्यक्षगम्यं वक्ति । तयोः सौत्रान्तिकवैभाषिकयोस्तयोः पदार्थयोः क्षणभङ्गुरता समाना वेदनवेद्यविषयो भेदो लिङ्गवेद्यत्वाक्षिवेद्यत्वरूपो विशेषः कियान्विद्यत इत्यर्थः ॥ ७५ ॥

विज्ञानवाद्ययं विज्ञानानां क्षणिकत्वं बहुत्वं चाङ्गीचकार । अयं वेदान्तवादी तु स्थिरमेकं ज्ञानमित्यङ्गीचकारेति महान्विशेषः । इन्द्रवज्रा वृत्तम् ॥ ७६ ॥

अथ दिगम्बरानुसारी जगाद—यदि त्वं सर्वज्ञस्तर्ह्येकं गुह्यं वद । किं तदिति तत्राऽऽह—काय इत्युत्तरशब्दो येषां तैर्वाच्यं यदस्मिञ्जैनमतेऽस्ति तत्किं हे देशिकाऽऽशु वद । उपजातिवृत्तम् ॥ ७७ ॥

---

१ घ. °पिलसि° । २ क. ता ॥ ७२ ॥ ततो नदन्तो न्यरुधन्निति । तत° । ३ घ. °स्तयोरर्थ° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्राऽऽह देशिकवरः शृणु रोचते चे-
ज्जीवादिपञ्चकमभीष्टमुदाहरन्ति ॥
तच्छब्दवाच्यमिति जैनमतेऽप्रशस्ते
यद्यस्ति बोद्धुमपरं कथयाऽऽशु तन्मे ॥ ७८ ॥
दत्तोत्तरे वादिगणे तु बाह्ये
बभाण कश्चित्किल जैमिनीयः ॥
शब्दः किमात्मा वद जैमिनीये
द्रव्यं गुणो वेति ततो व्रज त्वम् ॥ ७९ ॥
नित्या वर्णाः सर्वगाः श्रोत्रवेद्या
यत्तद्रूपं शब्दजालं च नित्यम् ॥
द्रव्यं व्यापीत्यब्रुवञ्जैमिनीया
इत्येवं तं प्रोक्तवान्देशिकेन्द्रः ॥ ८० ॥
शास्त्रेषु सर्वेष्वपि दत्तवन्तं
प्रत्युत्तरं तं समपूजयंस्ते ॥
द्वारं समुद्घाट्य ददुश्च मार्गं
ततो विवेशान्तरभूमिभागम् ॥ ८१ ॥

---

आकाशास्तिकाय
तैर्जीवास्तिकायः पुद्गलास्तिकायो धर्मास्तिकायोऽधर्मास्तिकाय तत्पृष्टमुक्त्वाऽप्रशस्ते जैनमतेऽ-
इति शब्दैर्वाच्यं जीवादिपञ्चकमभीष्टमित्युदाहरन्ति । वसन्ततिलका वृत्तम् ॥७८॥
परमपि यज्ज्ञातुमस्ति तच्छीघ्रं वदेत्याह—जैनमत इति । कश्चिज्जैमिनिमतावलम्ब्यध्वरमीमांसको

एवं वेदबाह्ये वादिगणे तु दत्तोत्तरे सति जगाद । जैमिनीये मते शब्दः किंस्वरूपः । किंशब्दार्थमाह—द्रव्यं गुणो वेति । तथाच शब्दस्वरूपमुक्त्वा ततो व्रज । उपजातिवृत्तम् ॥ ७९ ॥

नित्या वर्णा व्यापकाः श्रोत्रेन्द्रियवेद्या यद्रूपं शब्दजालं तच्च नित्यं द्रव्यं व्यापीति जैमिनीया अब्रुवन्नित्येवं तं जैमिनीयं देशिकेन्द्रः प्रोक्तवान् । शालिनी वृत्तम् ॥ ८० ॥

सर्वेष्वपि शास्त्रेषु प्रत्युत्तरं दत्तवन्तं तं श्रीशंकरं ते वादिनः सम्यगपूजयन्द्वारं समुद्घाट्य मार्गं च ददुः । तदनन्तरमन्तरभूमिभागं विवेश । उपजातिवृत्तम् ॥ ८१ ॥

---

१ ग. °नीयम° । २ ग. घ. नियद्र° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाणौ सनन्दनमसाववलम्ब्य विद्या-
भद्रासनं तदवरोढुमनाश्चचाल ॥
अत्रान्तरे विधिवधूर्विबुधाग्रगण्य-
माचार्यशंकरमवोचदनङ्गवाचा ॥ ८२ ॥

सर्वज्ञता तेऽस्ति पुरैव यस्मा-
त्सर्वत्र पर्यैक्षि भवान्न चेत्ते ॥
विरिञ्चिरूपान्तरविश्वरूपः
शिष्यः कथं स्यात्प्रथिताग्रणीः सः ॥ ८३ ॥

सर्वज्ञतैकैव भवेन्न हेतुः
पीठाधिरोहे परिशुद्धता च ॥
सा तेऽस्ति वा नेति विचार्यमेत-
त्तिष्ठ क्षणं त्वं कुरु साहसं मा ॥ ८४ ॥

त्वं चाङ्गनाः समुपभुज्य कलारहस्य-
प्रावीण्यभाजनमभूर्यतिधर्मनिष्ठः ॥
आरोढुमीदृशपदं कथमर्हता ते
सर्वज्ञतेव विमलत्वमपीह हेतुः ॥ ८५ ॥

---

हस्ते सनन्दनमसाववलम्ब्य तद्विद्याभद्रासनमारोढुमनाश्चचालैतस्मिन्नन्तरे विबुधाग्रगण्यं श्रीशंकराचार्यमशरीरवाचा शारदाऽवोचत् । वसन्ततिलका वृत्तम् ॥ ८२ ॥

यदवोचत्तदुदाहरति—ते सर्वज्ञतायां संशयो नास्ति यस्मात्पूर्वमेव सर्वत्र परीक्षां प्राप्तोऽसि । यदि भवान्सर्वज्ञो नो भवेत्तर्हि विरिञ्चिरूपान्तरं यस्य स चासौ विश्वरूपः प्रथितानामग्रणीस्ते शिष्यः कथं स्यात् । उपजातिवृत्तम् ॥ ८३ ॥

यद्यप्येवं तथाऽपि पीठाधिरोहे केवलं सर्वज्ञतैव हेतुर्न भवेदपि तु परिशुद्धताऽपि सा तेऽस्ति न वेत्येतद्विचारणीयमतः क्षणमात्रं त्वं तिष्ठ साहसं मा कुरु । इन्द्रवज्रा वृत्तम् ॥ ८४ ॥

एवं कोटिद्वयमुक्त्वोत्तरकोटिं साधयति—त्वं यतो यतिधर्मनिष्ठः सन्नङ्गनाः सम्यगुप भुक्त्वा कामकलारहस्यप्रवीणतापात्रमभूरत ईदृशपदमारोढुमेवंभूतस्य तव योग्यता कथमपि नास्ति । यतः सर्वज्ञतेव विमलताऽपीहाऽऽरोहे हेतुः ॥ ८५ ॥

---

१ ग. °अगण्यः ॥ ८३ ॥ स° । २ क. °ज्ञो नाभवत्त° । ३ क. °ग्रणीः स शि° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्मिञ्शरीरे कृतकिल्बिषोऽहं
जन्मप्रभृत्यम्ब न संदिहेऽहम् ॥
व्यधायि देहान्तरसंश्रयाद्य-
न्न तेन लिप्येत हि कर्मणाऽन्यः ॥ ८६ ॥

इत्थं निरुत्तरपदां स विधाय देवीं
सर्वज्ञपीठमधिरुह्य ननन्द सभ्यः ॥
संमानितोऽभवदसौ विबुधैश्च वाण्या
गार्ग्या कहोलमुखरैरिव याज्ञवल्क्यः ॥ ८७ ॥

वादप्रादुर्विनोदप्रतिकथनसुधीवाददुर्वारतर्क-
न्यक्कारस्वैरधाटीभरितहरिदुपन्यस्तमाहानुभाव्यः ॥
सर्वज्ञो वस्तुमर्हस्त्वमिति बहुमतः स्फारभारत्यमोघ-
श्लाघाजोघुष्यमाणो जयति यतिपतेः शारदापीठवासः ॥ ८८ ॥

---

एवमुक्तः श्रीशंकर उवाच—नेति । अहमपि न संदिहेऽम्बायास्तव संदेहो नास्तीति किमु वक्तव्यमित्यतिशयेन संबोधयति—हेऽम्बेति । यत्तु त्वं चाङ्गना इत्यादि तत्र शृणु यत्कर्म देहान्तरसंश्रयाद्विहितं तेन कर्मणाऽन्योऽयं देहो न लिप्यते । लोकशास्त्रप्रसिद्धं चैतत् । उपजातिवृत्तम् ॥ ८६ ॥

सरस्वत्या पण्डितैश्च पूजितोऽभवत् । यथा गार्ग्या कहोलादिभिश्च याज्ञवल्क्यस्तद्वत् ॥ ८७ ॥ [ कहोलेति । कहोल एव मुखरः शुद्धाद्वैतात्मानुभवाप्त्या वास्तविकातिवक्ता येषां तैः ] ॥ ८७ ॥

अथ भगवत्पादस्य शारदापीठवासं वर्णयति—वादेन प्रादुष्प्रकटतां गतो विनोदो येषां ते च ते प्रतिकथनसुधियः प्रतिवादिपण्डिता मण्डनमिश्रप्रमुखास्तैः साकं यो वादस्तत्र ये दुर्वारास्तर्का अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इत्युक्तलक्षणास्तेषां न्यक्कारे तिरस्कारे स्वैराभिः स्वतन्त्राभिर्धाटीभिर्युद्धयात्राभिर्भरिताभिर्व्याप्ताभिर्हरिद्भिर्दिग्भिरुपन्यस्तं वर्णितं माहानुभाव्यं महाप्रभावत्वं यस्य स त्वं सर्वज्ञोऽत एव वस्तुमर्हो योग्य इति स्फारभारत्या विशालया वाचाऽमोघश्लाघया सफलप्रशंसया सर्वैर्जोघुष्यमाणो भृशं घुष्यमाणो बहुभिः समस्तगुणशालित्वेनात्यन्तं संभावितोऽस्मिन्पीठे वस्तुमर्हो योग्य इति स्फारं यथा तथा यतिपतेः श्रीशंकरस्य शारदापीठवासो जयति सर्वोत्कर्षेण वर्तते । स्रग्धरा वृत्तम् ॥ ८८ ॥

भारत्या सरस्वत्याऽमोघश्लाघया जोघुष्यमाण इति वा ।

---

१ क. घ. °त्यनुश° । २ ब. °था स्यात्तथा ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुत्राप्यासीत्प्रलीनेक्षणचरणकथा कापिली क्वापि लीना
मग्नाऽमग्ना गुरूक्तिः क्वचिदजनि परं भट्टपादप्रवादः ॥
भूमावायोगकाणादजनिमतमथाभूतवाग्भेदवार्ता
दुर्दान्तब्रह्मविद्यागुरुदुरुदकथादुन्दुभेर्धिंधिमेतः ॥ ८९ ॥
काणादः क्व प्रणादः क्व च कपिलवचः क्वाक्षिपादप्रवादः
क्वाप्यन्धा योगकन्था क्व गुरुरतिलघुः क्वापि भाट्टप्रघट्टम् ॥
क्व द्वैताद्वैतवार्ता क्षपणकविवृतिः क्वापि पाषण्डषण्ड-
ध्वान्तध्वंसैकभानोर्जयति यतिपतेः शारदापीठवासे ॥ ९० ॥

ततो दिविषदध्वनि त्वरितमध्वराशावली-
धुरंधरसमीरितत्रिदशपाणिकोणाहतः ॥
अरुन्द्ध हरिदन्तरं स्वरमरैर्भ्रमत्सिन्धुभि-
र्घनाघनघनारवप्रथमबन्धुभिर्दुन्दुभिः ॥ ९१ ॥

---

किंच दुर्दान्तैरुद्धतैर्वादिभिः सह ब्रह्मविद्यागुरोः श्रीशंकरस्य वादलक्षणद्यूतकथाया दुन्दुभेर्धिंधिम इति शब्दादीक्षणचरणस्याक्षपादस्य गौतमस्य कथा क्वापि प्रकर्षेण लीनाऽऽसीत्तथा कापिली कपिलकथा क्वापि लीनाऽऽसीत्तथा पूर्वमभग्नाऽपि प्रभाकरोक्तिर्मग्नाऽऽसीत् । भट्टपादप्रवादः परं केवलं क्वचिदपि भूमावजनि प्रादुर्भूतः । किंचाथ तथा पातञ्जलैः काणादैश्च जनितं यन्मतं तदभिव्याप्य भेदवार्ताऽभूतवागनुचितवागासीत् । असमवागिति वाऽसत्यवागिति वा । 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिपूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना' इति मेदिनी ॥ ८९ ॥

किंच पाषण्डसंघातात्मान्धकारध्वंसैकसूर्यस्य यतिपतेः शारदापीठवासे जयति सति काणादः प्रवादः क्व न क्वापीत्यर्थः । क्वापि क्व च क्षपणकविवृतिरार्हतव्याख्यानम् ॥ ९० ॥ [ प्रघट्टं वाक्यरचनम् । द्वैतेति । भट्टभास्करसंमतभेदाभेदकथेत्यर्थः ] ॥९०॥

ततः शारदापीठारोहणानन्तरं दिविषदध्वनि देवमार्गे त्वरितं झटिति यज्ञभुक्तिधुरंधुर इन्द्रस्तेन सम्यक्प्रेरितानां देवानां हस्तप्रान्तभागैराहत आ समन्तात्ताडितो दुन्दुभिर्भ्रमन्तः सिन्धवः समुद्रा यैर्घनाघनो मेघस्तस्य घनीभूतानामारवाणां शब्दानां प्रथमबन्धुभिस्तत्तुल्यैः स्वराणामतिशयैर्हरितां दिशामन्तरमन्तरालमरुन्द्ध रोधितवान् । पृथ्वी वृत्तम् ॥ ९१ ॥

---

१ ग. °दुरदुरु° । घ. °दुरुद° । २ घ. °वृतिर्द्वैतपा° । ३ क. पाखण्ड° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कचभरवहनं पुलोमजायाः
कतिचिदहान्यपगर्भकं यथा स्यात् ॥
गुरुशिरसि तथा सुधाशनाः स्व-
स्तरुकुसुमान्यथ हर्षतोऽभ्यवर्षन् ॥ ९२ ॥
इति मुनिरतितुष्टोऽध्युष्य सर्वज्ञपीठं
निजमतगुरुतायै नो पुनर्मानहेतोः ॥
कतिचन विनिवेश्याथर्व्यशृङ्गाश्रमादौ
मुनिरथ बदरीं स प्राप कैश्चित्स्वशिष्यैः ॥ ९३ ॥
दिवसान्विनिनाय तत्र कांश्चि-
त्स च पातञ्जलतन्त्रनिष्ठितेभ्यः ॥
कृपयोपदिशन्स्वसूत्रभाष्यं
विजितत्याजितसर्वदर्शनेभ्यः ॥ ९४ ॥
नितरां यतिराडुडुराजकर-
प्रकरप्रचुरप्रसरस्वयशाः ॥
स्वमयं समयं गमयन्नमय-
न्हृदयं सदयं सुधियां शुशुभे ॥ ९५ ॥

---

अथानन्तरं सुधाभुजो देवाः पुलोमजायाः शच्याः संयतकेशभरवहनं कतिचिद्दिवसान्यपगर्भकमपगतेपद्धिकसत्पुष्पकं यथा स्यात्तथा गुरोः श्रीशंकरस्य शिरसि कल्पवृक्षपुष्पाणि हर्षेणाभ्यवर्षन्सम्यग्वृष्टिं कृतवन्तः । पुष्पिताग्रा वृत्तम् ॥ ९२ ॥ [ अपगर्भकं " माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः " इत्यमरादपगतो गर्भकः कुन्तलोत्तंसीकृतसंतानादिकुसुमविशेषो यस्मात्तत्तथेत्यर्थः । अत्रातिशयोक्तिरलंकारः ] ॥ ९२ ॥

इत्येवमातितुष्टो मुनिः श्रीशंकरः सर्वज्ञपीठमध्युष्य तेंपरि स्थित्वा तदपि निजमतस्य गुरुतायै श्रैष्ठ्याय न पुनर्मानहेतोरथानन्तरं कतिचन सुरेश्वरादीञ्शिष्यानृष्यशृङ्गाश्रमादौ विनिवेश्याथ स मुनिर्बदरीं बदरिकाश्रमं कैश्चित्स्वशिष्यैः सहितः सन्प्राप मालिनी । वृत्तम् ॥ ९३ ॥ [ निजेति । अद्वैतमतमहत्त्वार्थम् ] ॥ ९३ ॥

अथ तत्र यत्कृतवांस्तदाह—तत्र बदर्यां स च श्रीशंकराचार्यो विजिताश्च ते त्याजितसर्वदर्शनाश्चेति ते तथाभूतेभ्यः पातञ्जलशास्त्रनिष्ठितेभ्यः कृपया स्वकृतं भाष्यमुपदिशन्कांश्चिद्दिवसानि व्यतिक्रान्तवान् । वसन्तमालिका वृत्तम् ॥ ९४ ॥

उडुराजस्य चन्द्रस्य करप्रकरः किरणकलापस्तद्वत्प्रचुरः प्रसरो यस्य तथाभूतं स्वीयं

---

१ क. त्पुष्पं य° । २ ग. उपरि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवंप्रकारैः कलिकल्मषघ्नैः
शिवावतारस्य शुभैश्चरित्रैः ॥
द्वात्रिंशदत्युज्ज्वलकीर्तिराशेः
समा व्यतीयुः किल शंकरस्य ॥ ९६ ॥
भाष्यं भूष्यं सुशीलैरकलि कलिमलध्वंसि कैवल्यमूल्यं
हन्ताहंता समन्तात्कुमतिनतिकृता खण्डिता पण्डितानाम् ॥
सद्यो विद्योतिताऽसौ विपथविमथनैर्मुक्तिपद्याऽनवद्या
श्रेयो भूयो बुधानामधिकतरमितः शंकरः किं करोतु ॥९७॥
हन्ताशोभियशोभरैस्त्रिजगतीमन्दारकुन्देन्दुभा-
मुक्ताहारपटीरहीरविहरन्नीहारतारानिभैः ॥
कारुण्यामृतनिर्झरैः सुकृतिनां दैन्यानलः शून्यतां
नीतः शंकरयोगिना किमधुना सौरभ्यमारभ्यताम् ॥९८॥

---

यशो यस्य स यतिराट् श्रीशंकराचार्यः स्वमयमात्मप्रचुरं समयं शास्त्रमवगमयन्सदयं सुधियं हृदयं रमयन्सन्नितरां शुशुभे । तोटकं वृत्तम् ॥ ९ ॥

उपसंहरति—एवंप्रकारैः कलिकल्मषघ्नैः शुभैश्चरित्रैरुज्ज्वलकीर्तिराशेः शिवावतारस्य शंकरस्य द्वात्रिंशत्संवत्सरा व्यतीयुरिति योजना । आख्यानकी वृत्तम् ॥ ९६ ॥ [ 'चतुर्वेदष्टमे वर्षे द्वादशे सर्वशास्त्रवित् । षोडशे सर्वदिग्जेता द्वात्रिंशे मुनिरत्यगात्' इत्यभियुक्तोक्तेर्द्वात्रिंशत्संख्याकाः समाः 'हायनोऽस्त्री शरत्समाः' इत्यमराद्वर्षाणि व्यतीयुरतिक्रान्तान्यासन्नित्यन्वयः ] ॥ ९६ ॥

श्रीशंकराचार्यो भाष्यादिकरणैः सुधियां कृते निरतिशयं श्रेयः संपादितवानित्याशयेनाऽऽह—भाष्यमिति । सुशीलैर्भूष्यं कलिमलविनाशकं कैवल्यस्य मूल्यं वेतनं भाष्यमकालि कृतम् । हन्तेति हर्षे कोमलामन्त्रणे वा । कुमतीनां नमस्कारैः कृता या पण्डितानामहंता सा समन्तात्खण्डिता । एवं च विपथमथनैरसावनवद्या मुक्तिपद्या मोक्षपद्धतिः सद्यो विद्योतिता तस्मादेवंकर्ता शंकर इतोऽधिकतरं श्रेयः पुनः किं करोतु तस्याभावादित्यर्थः । स्रग्धरा वृत्तम् ॥ ९७ ॥ [ सुशीलैर्भूष्यं व्याख्येयम् । कलिमलविनाशकं कैवल्यस्य मूल्यं वेतनं भाष्यमकारि कृतम् । अत्र पूर्वपूर्वं प्रत्युत्तरोत्तरस्य कारणत्वं बोध्यम् ] ॥ ९७ ॥

किंच हन्तेत्याश्चर्ये हर्षे वा । त्रिजगत्यां त्रिलोक्यां यानि मन्दारादीनि तत्तुल्यैरा समन्ताच्छोभनैर्यशसां भरैर्भारैरतिशयैर्वा कारुण्यामृतस्य निर्झरैः प्रवाहैः शंकरयोगिना सुकृतिनां दैन्यलक्षणोऽग्निः शून्यतां नीतोऽतस्तेनाधुनाऽतः परं सौरभ्यं सौगन्ध्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आक्रान्तानि दिगन्तराणि यशसा साधीयसा भूयसा
विस्मेराणि दिगन्तराणि रचितान्यत्यद्भुतैः क्रीडितैः ॥
भक्ताः स्वेप्सितभुक्तिमुक्तिकलनोपायैः कृतार्थीकृता
भिक्षुक्ष्मापतिना किमन्यदधुना सौजन्यमातन्यताम् ॥ ९९ ॥

पारिकाङ्क्षीश्वरोऽप्यापदुद्धारकं
सेवमानातुलस्वस्तिविस्तारकम् ॥
पापदावानलातापसंहारकं
योगिवृन्दाधिपः प्राप केदारकम् ॥ १०० ॥

तत्रातिशीतार्दितशिष्यसंघ-
संरक्षणायातुलितप्रभावः ॥
तप्तोदकं प्रार्थयते स्म चन्द्र-
कलाधरात्तीर्थकरप्रधानः ॥ १०१ ॥

कर्मन्दिवृन्दपतिना गिरिशोऽर्थितः स-
न्संततप्तवारिलहरीं स्वपदारविन्दात् ॥
प्रावर्तयत्प्रथयती यतिनाथकीर्तिं
याऽद्यापि तत्र समुदञ्चति तप्ततोया ॥ १०२ ॥

---

किमारभ्यताम् । तत्रेन्दुभाश्चन्द्रज्योत्स्ना पटीरश्चन्दनम् । हीरो वज्रम् । विहरन्विहार-
श्चरन्तुपारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९८ ॥

किंच साधीयसा बाढतरेणातिदृढेन भूयसा यशसा दिगन्तराण्याक्रान्तानि व्याप्तानि ।
अन्तिकबाढयोर्नेदसाधाविति बाढशब्दस्य साधादेशः "बाढं दृढप्रतिज्ञयोः" इति मेदिनी ।
तथाऽत्यन्तमाश्चर्यरूपैरतिमानुषैः क्रीडितैर्दिगन्तराणि विस्मेराणि विस्मयशीलानि रचितानि ।
तथा स्वभक्ताः स्वस्वेप्सितभोगमोक्षप्राप्त्युपायैः कृतार्थीकृतास्तस्मादेवं कृतवता यतिराजेना-
धुनितोऽन्यत्सौजन्यं किमातन्यताम् ॥ ९९ ॥

पारिकाङ्क्षीश्वरोऽपि तापसेश्वरोऽपि 'तपस्वी तापसः पारिकाङ्क्षी' इत्यमरः ।
केदारकं प्राप । तं विशिनष्टि—आपदुद्धारकं सेवमानानामतुलायाः स्वस्तेर्विस्तारकं पापदा-
वाग्निपरितापस्य संहारकम् । स्रग्विणी वृत्तम् ॥ १०० ॥

तत्र केदारकेऽतिशीतेन पीडितस्य शिष्यसमूहस्य संरक्षणार्थमतुलप्रभावः शास्त्रकर्तृषु
प्रधानः श्रीशंकराचार्यश्चन्द्रकलाधरान्महादेवात्तप्तोदकं प्रार्थयामास । उपजातिवृत्तम् ॥ १०१ ॥

कर्मन्दिवृन्दस्य भिक्षुसमुदायस्य पतिः श्रीशंकराचार्यस्तेन प्रार्थितः सन्गिरिशः शिवः

---

१ ग. °तशि° । २ क. ग. °करस्ते° ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिकृतसुरकार्यं नेतुमाजग्मुरेनं
रजतशिखरिशृङ्गं तुङ्गमीशावतारम् ॥
विधिशतमखचन्द्रोपेन्द्रवाय्वग्निपूर्वाः
सुरनिकरवरेण्याः सर्षिसंघाःससिद्धाः ॥ १०३ ॥

संततोयलहरीं नदीं स्वचरणारविन्दात्प्रवर्तितवान् । या तप्ततोया यतिनाथकीर्तिविस्तारयन्त्यद्यापि तत्र समुद्गच्छति समुल्लसतीति वा । वसन्ततिलका वृत्तम् ॥ १०२ ॥

इत्येवं कृतं देवकार्यं येन तमेनमीशावतारं श्रीशंकरं तुङ्गमुन्नतं कैलासगिरिशृङ्गं प्रति नेतुं ब्रह्मेन्द्रादयः सुरसमुदायप्रवरा ऋषिसंघैः सिद्धैश्च सहिता आजग्मुः । मालिनी वृत्तम् ॥ १०३ ॥ [ ईशेति । ईश्वरावतारम् । विधीति । विधिर्ब्रह्मा । शतमख इन्द्रः । गौरीरमणावतारत्वं तु श्रीशंकराचार्यस्योक्तं शिवरहस्ये नवमांशे षोडशाध्याये ॥

स्कन्द उवाच—

"तदा गिरिजया पृष्टस्त्रिकालज्ञस्त्रिलोचनः । भविष्यच्छिवभक्तानां भक्तिं संवीक्ष्य विस्मये ॥ १ ॥ 'विस्मये जाते सति गिरिजया पृष्ट इति संबन्धः' । मौलिमान्दोलयन्देवो बभाषे वचनं मुने । शृणु त्वमेभिर्गणपैर्मुनिशिष्यैः सुरैस्तथा ॥ २ ॥ प्रभावं शिवभक्तानां भविष्याणां कलावपि ।

ईश्वर उवाच—

शृणु देवि भविष्याणां भक्तानां चरितं कलौ ॥ ३ ॥ वदामि संग्रहेणैव श्रवणाद्भक्तिवर्धनम् । गोपनीयं प्रयत्नेन नाऽऽख्येयं यस्य कस्यचित् ॥ ४ ॥ पापघ्नं पुण्यमायुष्यं श्रोतॄणां मङ्गलावहम् । पापकर्मैकनिरतान्विरतान्सर्वकर्मसु ॥ ५ ॥ वर्णाश्रमपरिभ्रष्टान्धर्मप्रवणाज्ञनान् । कल्यब्धौ मज्जमानांस्तान्दृष्ट्वाऽनुक्रोशतोऽम्बिके ॥ ६ ॥ मदंशजातं देवेशि कलावपि तपोधनम् । केरलेषु तदा विप्रं जनयामि महेश्वरि ॥ ७ ॥ तस्यैव चरितं तेऽद्य वक्ष्यामि शृणु शैलजे । कलाविमे महादेवि सहस्रद्वितयात्परम् ॥ ८ ॥ सारस्वतास्तथा गौडा मिश्राः कार्णाञ्जिनो द्विजाः । आममीनाशना देवि आर्यावर्तानुवासिनः ॥ ९ ॥ औत्तरा विन्ध्यनिलया भविष्यन्ति महातले । शब्दार्थज्ञानकुशलास्तर्ककर्कशबुद्धयः ॥ १० ॥ जैना बुद्धा बुद्धियुता मीमांसानिरताः कलौ । वेदबोधकवाक्यानामन्यथैव प्ररोचकाः ॥ ११ ॥ 'वेदस्य बोधदान्यद्वैतबोधप्रदानि यानि वाक्यानि तेषामित्यर्थः' । प्रत्यक्षवादकुशलाः शल्यभूताः । मिश्राः शास्त्रमहाशस्त्रैरद्वैतोच्छेदिनोऽम्बिके ॥ १२ ॥ कर्मैव परमं श्रेयो नैवेशः फलदायकः । इति युक्तिपरास्त-

१ क. ग. 'म समुद्र' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्वाक्यैरुद्बोधयन्ति च ॥ १३ ॥ तेन घोराः कुलाचाराः कर्मभारा भवंस्तथा । 'कर्म-
भारा अभवन्निति पदयोरपि संधिरयं छान्दसः' । तेषामुद्धाटनार्थाय सृजामांशो मदंशनम्
॥ १४ ॥ केरले शशलग्रामे विप्रपत्न्यां मदंशतः । भविष्यति महादेवि शंकराख्यो
द्विजोत्तमः ॥ १५ ॥ उपनीतस्तदा मात्रा वेदान्साङ्गान्ग्रहीष्यति । अब्दावधि ततः शब्दे
विहृते स सुतर्कजाम् । मतिं मीमांसमानोऽसौ कृत्वा शास्त्रेषु निश्चयम् । वादिमत्तद्विपवरा-
न्शंकरोत्तमकेसरी ॥ १७ ॥ भिनत्त्येव महाविद्यान्सिद्धविद्यानपि द्रुतम् । जैनान्विजित्ये
तरसा तथाऽन्यान्कुमतानुगान् ॥ १८ ॥ तदा मातरमामन्त्र्य परिव्राट्स भविष्यति । परिव्रा-
जक्वेषेण मिश्रानाश्रमदूषकान् ॥ १९ ॥ दण्डहस्तस्तथा कुण्डी काषायवसनोऽमलः ।
भस्मादिव्यत्रिपुण्ड्राङ्को रुद्राक्षाभरणोज्ज्वलः ॥ २० ॥ साररुद्राक्षपारीणः शिवलिङ्गार्चनप्रियः ।
स्वशिष्यैस्तादृशैर्घुष्यन्भाष्यवाक्यानि सोऽम्बिके ॥ २१ ॥ मद्वृत्तवित्तया भिक्षुर्विराजति
शशाङ्कवत् । 'आर्षं विराजतीति' । सोऽद्वैतोच्छेदकान्पापानुच्छिद्याऽऽक्षिप्य तर्कतः
॥ २२ ॥ स्वमतानुगतान्देवि करोत्येव निर्गलम् । तथाऽपि प्रत्ययस्तेषां नैवाऽऽसीच्छ्रु-
तिदर्शनैः ॥ २३ ॥

**सूत उवाच—**

मिश्राः शास्त्रास्त्रकुशलास्तर्ककर्कशबुद्धयः । तेषामुद्बोधनार्थाय यतिर्भाष्यं करिष्यति
॥ २४ ॥ भाष्यघुष्यमहावाक्यैरितष्वजातान्हनिष्यति । 'तिष्यः कलिः' । व्यासोपदिष्टसू-
त्राणां द्वैतवाक्यात्मनां शिवे ॥ २५ ॥ अद्वैतमेव सूत्रार्थं प्रामाण्येन करिष्यति । अविमुक्ते
समासीनं व्यासं वाक्यैर्विजित्य च ॥ २६ ॥ शंकरं स्तौति हृष्टात्मा शंकराख्योऽथ
मस्करी ।

**शंकर उवाच—**

सत्यं सत्यं नेह नानाऽस्ति किंचिदीशावास्यं ब्रह्म सत्यं जगद्धि । ब्रह्मैवेदं ब्रह्म
पश्चात्पुरस्तादेको रुद्रो न द्वितीयोऽवतस्थे ॥ २७ ॥ एको देवः सर्वभूतेषु गूढो नानाका-
रोऽह्नासमानैस्त्वमात्मा । पूर्णोऽपूर्णैर्नामरूपैर्विहीनो दिक्कालातीतो विश्वनाशे महेशः ॥ २८ ॥
भूतं भव्यं वर्तमानं त्वयीशे सामान्यं वै देशकालादिहीनः । नो ते मूर्तिर्वेदवेद्यस्त्वसङ्गः
सञ्जीव त्वं लिङ्गसंस्थो विभासि ॥ २९ ॥ उद्भासा वै सोमसूर्यानलेन्द्रा भीषैवादैस्येष
सूर्यश्च देवः । त्वं वेदादौ स्वर एको महेश वेदान्तानां सारवाक्यार्थवेद्यः ॥ ३० ॥
वैद्योऽमेयः सर्वभूताद्यविद्यो भियदृष्ट्वा तव मे हृत्तमोऽद्य । ॐकारार्थः पुरुषस्त्वमृतं च
सत्यज्ञानानन्दभूमाऽसि सोम ॥ ३१ ॥ बद्धो मुक्तो नासि हृङ्गेष्वसङ्गः प्राणप्राणो मन-
सस्त्वं मनश्च । त्वत्तो वाचो मनसा संनिवृत्तास्ता वाऽऽनन्दज्ञानिनो बद्धभावाः" ॥ ३२ ॥
ताः संनिवृत्ता वाचः । वा निश्चितम् । आनन्देति । ब्रह्मविदः । बद्धेति । ज्ञानिमात्रकृ-
तैकानिबद्धप्रेमविशेषाः सन्तीत्यर्थः । "त्वत्तो जातं भूतजातं महेश त्वया जीवत्येवमेवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्युद्वल्लीनियुतसमुदारब्धयुद्धैर्विमानैः
संख्यातीतैः सपदि गगनाभोगमाच्छादयन्तः ॥
स्तुत्वा देवं त्रिपुरमथनं ते यतीशानवेषं
मन्दारोत्थैः कुसुमनिचयैरब्रुवन्नर्चयन्तः ॥ १०४ ॥

विचित्रम् । त्वय्येवान्ते संविशत्येव विश्वं त्वा वैको वा स्तुवते स्तव्यमीशम् ॥ ३३ ॥ किंचिज्ज्ञात्वा सर्वभावस्य बुद्ध्या त्वामात्मानं वेद्मि देवं महेशम् ॥ ३४ ॥

ईश्वर उवाच—

इति शंकरवाक्येन विश्वेशाख्यादहं तदा । प्रादुर्बभूव लिङ्गात्स्वादलिङ्गोऽपि महेश्वरि ॥ ३५ ॥ 'प्रादुर्भविष्यामीति वाच्ये प्रादुर्बभूवेत्यार्षम्'। त्रिपुण्ड्रविलसत्फालश्चन्द्रार्धकृतशेखरः । नागाजिनोत्तरासङ्गो नीलकण्ठस्त्रिलोचनः ॥ ३६ ॥ वरकाकोदरानद्धराजद्वारस्त्वयाऽम्बिके । तमब्रूयां महादेवि प्रणतं यतिनां वरम् ॥ ३७ ॥ शिष्यैश्चतुर्भिश्च युतं भस्मरुद्राक्षभूषणम् ।

ईश्वर उवाच—

मदंशस्त्वं सुजातोऽसि भुवि चाद्वैतसिद्धये ॥ ३८ ॥ पापामिश्राश्रिते मार्गे जैनदुर्बुद्धिबौद्धकैः । भिन्ने वेदैकसंसिद्धे अद्वैते द्वैतवाक्यतः ॥ ३९ ॥ तच्छेदगिरिवज्रस्त्वं संजातोऽसि मदंशतः । द्वात्रिंशत्परमायुस्ते शीघ्रं कैलासमावस ॥ ४० ॥ एतत्प्रतिगृहाण त्वं पञ्चलिङ्गं सुपूजय । भस्मरुद्राक्षसंपन्नः पञ्चाक्षरपरायणः ॥ ४१ ॥ शतरुद्रावर्तनैश्च तारेण भसितेन च ॥ बिल्वपत्रैश्च कुसुमैर्नैवेद्यैर्विविधैरपि ॥ ४२ ॥ त्रिवारं सावधानेन गच्छ सर्वजयाय च ॥ ४३ ॥ त्वदर्थे कैलासाचलवरसुपालीगतमहासमुद्यच्चन्द्राभं स्फटिकधवलं लिङ्गकुलकम् । समासीनं द्योतद्विमलकमलैरर्चय परं कलौ लिङ्गार्चायां भवति हि विमुक्तिः परतरा ॥ ४४ ॥ स शंकरो मां प्रणनाम मस्करी मयस्करं तस्करवर्यमार्गे । संगृह्य लिङ्गानि जगाम वेगाद्भूमौ सुबुद्धार्हतमिश्रजैनान् ॥ ४५ ॥ तद्योगभोगवरमुक्तिसुमोक्षयोगलिङ्गार्चनात्प्राप्तजयस्वकाश्रयम् । तान्वै विजित्य तरसाऽक्षतशास्त्रवादैर्मिश्रान्स काङ्क्यामथ सिद्धिमाप " इति ॥ ४६ ॥ एतत्कथाजालं बृहच्छंकरविजय एव श्रीमदानन्दज्ञानाख्यानन्दगिरिविरचिते द्रष्टव्यमिति दिक् ॥ १०३ ॥

आगत्य यत्कृतवन्तस्तदाह—विद्युद्वल्लीनां नियुतैर्लक्षैः सम्यगारब्धं युद्धं यैर्विद्युद्वल्लीनियुततुल्यैरिति यावत् । तथाभूतैः संख्यारहितैर्विमानैः सपदि तत्क्षण आभोगं पूर्णं गगनमाकाशमाच्छादयन्तो यतीशवेषं त्रिपुरमथनं महादेवं स्तुत्वा मन्दारोत्थैः पुष्पसमुदायैरर्चयन्तस्ते ब्रह्मादयो देवा अब्रुवन्नुक्तवन्तः । मन्दाक्रान्ता वृत्तम् ॥ १०४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवानाद्यो देवः कवलितविषः कामदहनः
पुरारातिर्विश्वप्रभवलयहेतुस्त्रिनयनः ॥
यदर्थं गां प्राप्तो भवमथन वृत्तं तदधुना
तदायाहि स्वर्गं सपदि गिरिशास्मत्प्रियकृते ॥ १०५ ॥
उन्मीलद्विनयप्रधानसुमनोवाक्यावसाने महा-
देवे संभृतसंभ्रमे निजपदं गन्तुं मनः कुर्वति ॥
शैलादिः प्रमथैः परिष्कृतवपुस्तस्थौ पुरस्तत्क्षणा-
दुक्षा शारदवारिदुग्धवरटाहंकारहुंकारकृत् ॥ १०६ ॥
इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानः प्रसूने-
र्दिव्यैरभ्यर्च्यमानः सरसिरुहभुवा दत्तहस्तावलम्बः ॥
आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचन्द्रावतंसः
शृण्वन्नालोकशब्दं समुदितमृषिभिर्धाम नैजं प्रतस्थे ॥ १८४३ ॥

यदब्रुवंस्तदुदाहरति—आद्यः सर्वकारणभूतो देवो द्योतनात्मकः सकलदेवादिर्जगद्रक्षणार्थं कवलितं ग्रसितं विषं समुद्रमथनादुत्थं हालाहलाख्यं येन पुनश्च कामदहनः पुरारातिस्त्रिपुरसंहारकर्ता विश्वोत्पत्तिलयकारणं त्रिनेत्रो महादेवो भवान्यदर्थं वेदमर्यादास्थापनार्थं भूमिं प्राप्तस्तदधुना हे संसृतिनिवारक वृत्तं संपन्नं तत्तस्मादधुना सपदि द्राग्घे गिरिशास्मत्प्रियार्थं स्वर्गमायाहि । शिखरिणी वृत्तम् ॥ १०५ ॥ [ स्वर्गं स्वर्गोपलक्षितं कैलासं प्रत्यायाहीति योजना ] ॥ १०५ ॥

विकसद्विनयप्रधानानां सुमनसां देवानां वाक्यस्यान्त उन्मीलतो विनयप्रधानसुमनोवाक्यस्येति वा । महादेवे श्रीशंकरे स्वीकृतसंभ्रमे निजपदं गन्तुं मनः कुर्वति सति प्रमथै रुद्रगणैः परिष्कृतं भूषितं वपुर्यस्य स शैलादिरुक्षा नन्द्याख्यो वृषस्तत्क्षणाच्छ्रीशंकराचार्यस्याग्रे तस्थौ । तं विशिनष्टि—शरत्कालीनजलस्य दुग्धस्य वरटाया हंसयोषितश्चाहंकारस्य हुंकारकृद्भर्त्सनकृत्तेभ्योऽपि शुभ्र इत्यर्थः । ' हंसस्य योषिद्वरटा ' इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥ १०६ ॥

अथ संपादितसमस्तसुरकार्यस्य श्रीशंकराचार्यस्य स्वधामारोहणं वर्णयति—इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृढैर्देवाधिपैः स्तूयमानः पुनश्च दिवि भवैः पुष्पैरर्च्यमानः कमलजेन ब्रह्मणा दत्तो हस्तावलम्बो यस्मै सोऽग्र्यं श्रेष्ठं वृषं नन्दिनं समारुह्य प्रकटितो जटाजूटचन्द्रावतंसौ येन स ऋषिभिः समुदितमालोकशब्दं बन्दिभाषणशब्दं शृण्वन्स्वीयं धाम प्रतस्थे । ' आलोकस्तु पुमान्द्योते दर्शने बन्दिभाषणे ' इति मेदिनी । स्रग्धरा वृत्तम् ॥ १८४३ ॥

१ क. °कृत्ते° ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीमाधवीये तच्छारदापीठवासगः ।
संक्षेपशंकरजये सर्गः पूर्णोऽपि षोडशः ॥ १६ ॥

---

[ इति श्रीति । तच्छारदेति । तस्य श्रीशंकराचार्यस्य यः शारदापीठे प्रागुक्ते वासः समधिरोहस्तं गच्छाति प्रतिपादयतीति तथेत्यर्थः । षोडशोऽपि पूर्णः ] ॥ १६ ॥

जीवन्नेव विमुच्यते यदुदितं ब्रह्माद्वयं तारकं
श्रुत्वा तं द्विजराजसंश्रितपदं मापाधिपस्याऽऽत्मदम् ॥
वेदान्तामृतयुक्तकण्ठममलैर्हंसैः सदा सेवितं
भोग्यासङ्गविवर्जितं यतिवरं नौम्यद्भुतं शंकरम् ॥ १ ॥
पाण्डवेष्वहितारेशप्रमिते शुभवत्सरे ॥
श्रावणे सितपञ्चम्यां सिंहे सिद्धो गुरावयम् ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यसारस्वतजात्यन्तर्गतदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिविरचिते श्रीमच्छंकराचार्यविजयडिण्डिमे षोडशः सर्गः ॥ १६ ॥

[ अद्वैतसच्चिदानन्दवाणीन्द्रगुरुरूपिणम् ।
नत्वा श्रीशंकराचार्यमच्युतोऽहं तथाऽभवम् ॥ १ ॥
श्रीनारायणगुर्वङ्घ्रिपद्मपांसुप्रसादतः ।
अद्वैतराज्यलक्ष्मीर्नः समाप्ताऽभवदिष्टदा ॥ २ ॥
क्व श्रीमाधववाणी श्रीशंकरविजयरूपिणी तदपि ।
श्रीरघुवीरगुरुकृपा तस्यां मेऽद्वैतराज्यलक्ष्मीकृत् ॥ ३ ॥
शाके शास्त्रश्रुतिमुनिकलानाथसंख्येऽत्र वर्षे
मासेऽन्त्येऽपि द्विजवरदिने शुक्लपक्षे चतुर्थ्याम् ।
पूर्णा व्याख्या समभवदियं पञ्चवट्यां प्रयत्ना-
च्छ्रीमच्छंभोश्चरणकृपयैवाच्युतो यामकार्षीत् ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानन्देन्द्रसरस्वतीसद्गुरुवरचरणसरोजराजहंसीभूतमानसेनाच्युतेन विरचितायां श्रीमन्माधवीयसंक्षेपशंकरविजयव्याख्यायामद्वैतराज्यलक्ष्मीसमाख्यायां षोडशोल्लासः संपूर्णः ] ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



# शास्त्रार्थाय-आह्वानम्

अयि ! प्रिय ! भाण्डार्युयाह ! महाशय ! भवद्धिताय वच्मि यन्न भवान् मां लेखेनापि पारयिष्यति । अत्र भवन्तमहं शास्त्रार्थायाऽऽह्वये । किमिति त्वद्दुर्बलकगलघोटकचौरितकैर्भवतः सेत्स्यति । तस्मिन्दिवसे श्रीमद्भाग्येनैवाहं सभायां विलम्बेनोपस्थितः । अस्तु—सम्प्रति श्री १०८ विद्यावाचस्पतिमहामहोपदेशकश्रीमधुसूदनशास्त्रि—श्रीमाननीयमहामहोपाध्यायगिरिधरशास्त्रि—श्रीमान्य० म० म० श्रीहरनारायणशास्त्रि—श्री०मान्य० प्रिन्सिपलमहोदयरघुवरदयालुशास्त्रिणां माध्यस्थं स्वीकृत्य स्वयं भवतोत्थापितः प्रात्यहिकः कलहः शमनीयः । अहन्तु भवन्तं पूर्वं पूज्यबुद्ध्यवापश्यम् । परमत्रभवता साधु मया साकं सौजन्यं प्रकटीकृतमिति स्वयं विविच्यताम् । सज्जीभूयतां च शास्त्रार्थाय सभायां, मा विलम्बो विधीयताम् ।

ता० २७—११—२८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

* ॐ *

# पाण्डित्यपरिचयः



आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥१।



माननीयाः ! प्रियपाठकमहोदयाः ! सदसद्विवेकार्थिनो विद्यार्थिनश्च मत्प्रकाशितः पाण्डित्यपरिचयनामको निबन्धः प्रायः सर्वैर्भवद्भिर्निष्पक्षतया पठितोभवेदिति सम्भाव्यते । सम्प्रति मया तदुत्तरात्मकालोचनस्वरूपग्रन्थीय-प्रत्यालोचनमृजुविवरणमल्पग्रन्थमिदमारभ्यते, तदप्यालोकनीयं भवद्भिः । माधवा ममाशिष्टजल्पनं कथयन्ति, तत्पण्डिता द्वयोर्ग्रन्थं विवेचनातुलनया स्वयं तोलयन्तु यत्कस्याऽशिष्टता वर्त्तते वर्धते च, "चाञ्चल्यस्ये" त्यादिकं प्रथमं कश्चाऽसभ्यशब्दप्रयोगं करोति ।

१—कालिदासप्रभृतिमहाकविनिबन्धेषु "प्रह्वेवा" इति नियमानुसारमुपलक्षणरीत्या समाधानमुद्योते पाण्डित्यपरिचयस्य द्वितीयपृष्ठाधोभागे "तान्भृतानपि क्रव्यादाः" "एतच्च श्रुत्वा गदितो मया त्वम्" "बहुलभ्रामरमेचकतामसम्, मम प्रिये"—इत्यादितत्तत्स्थलप्रदर्शनपूर्वकं मकरवम्, परं महदिदमाश्चर्यं यद्भाण्डार्युपाह्वाः प्रत्यक्षमप्यपलपन्तस्तथागतमतप्रवेशादपि नो बिभ्यति । यत्तु-ममैव कथितं नृसिंहेन समर्थितमित्युक्तं तदपि परप्रतारणामात्रम्, यतो भवत्कथनन्त्विदमस्ति यद्—"रघुवर"—इतिपद्ये पूर्वस्य गुरुत्वे छन्दोभङ्ग इति । मत्समर्थनन्तु क्रमसञ्ज्ञकत्वात्संयोगस्य, सर्वहलां रेफसंयोगस्य पूर्ववर्णीयगुरुत्वसाधने वैकल्पिकत्वाच्च नास्ति कोऽपि दोष इति । सम्प्रति भवान् कथयति यद्यदि महाकविनिबन्धेषु श्रीशब्दे परतः पूर्वस्य गुरोः सतो लघुता दर्श्येत तदा युक्तं स्यादिति तदेतन्महति सागरे ब्रुडतः पुरुषस्य तृणावलम्बनेच्छान्यायनाटनमनुरुन्धे । अथवा—यथा कश्चित् कथयेत् "दध्यानय" इति तदा शुद्धं मन्ये यदि पाणिनीयग्रन्थे दर्श्येत, तत्र तु "सुध्युपास्य" इत्येव वर्त्तते तस्मात्तदशुद्धमिति तद्वदिदं शाठी भवताम् । हन्त ! अनया घटनया माधवा आचार्याणां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षणग्रन्थविरोधिनः सुस्पष्टमेव सञ्जाताः। "लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चित" इत्यपि च ते विस्मृतवन्तः।

अथ—नारायणभट्टीयस्य—"अल्पव्ययेन सुन्दरि"—इति ग्रन्थस्य सिद्धगतिचिन्तनन्यायेन समर्थनाख्यानं स्वपाण्डित्यकलङ्ककरमेवावेदितं भवति भवदीयम्, नहि कोऽप्यनुन्मत्तः—"पादादाविह वर्णस्य संयोगः क्रमसञ्ज्ञकः" इति शास्त्रं सिद्धगतिचिन्तनपरं ब्रूते मन्यते वा, अन्यथा सर्वाण्यपवादशास्त्राणि भवदभिमतसिद्धगतिचिन्तनन्यायानुरोधीनि सन्त्युत्सर्गापवादन्यायलोपपर्यवसायीनि भविष्यन्तीति भवद्द्वारा महती कदर्थना शास्त्राणां शास्त्रकारणाञ्चापत्स्यते येनात्रभवान् प्रायश्चित्तीयिष्यत इति मा गाद् दुराग्रहम्। अयि! मान्य! किमर्थं स्वयं स्वभाण्डस्फोटनाय प्रयत्यते भवता। मा नाम सत्यस्य विद्वेषी भूद्भवान्। एतेन—"सीताया पतये नमः" "कृष्णस्य सखिरर्जुन" इत्याद्यपि दत्तोत्तरं वेदितव्यं दृष्टान्तस्य वैधर्म्यात्। अस्मद्भावनया तु एवञ्जातीयकपदप्रयोग[1]प्रवाहप्रतिबन्धभूता भूताशयानभिज्ञा भवादृशाः सर्वथोपेक्षणीया एव।

(२)—अप्रयुक्तादोषान्वाख्यान विषयविर्ध्वस्तताकथनादिकं कृतसमाधानमिति न वहूपपादनार्हम्।

(३)—"कान्ताकटाक्ष"—इत्यत्र "वेधयन्ति" पदप्रयोगे प्रसादगुणभङ्गेन स्वप्रतिज्ञाहानिरित्याद्यर्थकं पदजातं, "यत्र हि व्याकरणादिविशिष्टसामग्रीसहकारं व्युत्पत्तिभङ्गं च विनैव पद्यस्य सहृदयहृदयचुम्बकता तत्रैव प्रसाद इति हि साहित्यरहस्यम्" इत्यादि चोक्तम् तदनेन मम्मटाद्याचार्यबुद्ध्यगोचरप्रसादलक्षणरहस्यकथनेन भवता कियती धृष्टता प्रादर्शीति किं लेख्यम्। सर्वत्र विहितस्थितेः प्रसादस्य वेधयन्त्यादिपदप्रयोगवत्काव्येष्वप्यबाध्यमानसहृदयहृदयग्राहिताया विद्वदनुभवसिद्धत्वेन प्रयोगस्यैतादृशस्य साधुताया अनिवार्यत्वात्। हन्त! पूर्वन्तु श्रीस्वरूपसूरिभ्यो दत्ते पत्रे स्वैयाकरणत्वख्यापनाय "वेधयन्ति" इति पदमशुद्धमित्यभ्यधायि, सम्प्रति प्रसादरहस्यरक्षाभीतिहेतोरन्यथाऽऽख्यायते किं भवतो बुद्धौ सञ्जातम्, न्यायशास्त्रज्ञताग्रहिलेन स्वीया प्रतिज्ञाहानिरपि न स्मर्यते। सत्यमुक्तम्—"एकामसिद्धिं परिहरतो द्वितीयापत्ते" रिति। "सविशेषणानाम्"—इति न्यायस्यानभिज्ञो भवानित्यैव वेद्यम्।

---

[1]—कालान्तरे आवश्यकतां मत्वा विशिष्टं व्याख्यास्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(४)—यदपि—"यत्पादशौचे"—त्यादिचतुर्थप्रघट्टकविषये भावशब्दस्य मदभिप्रेतरागार्थतां स्वीकृत्यापि "किमिति सरलतया रागशब्दो नोपात्त" इत्यात्थ तदपि रुदतो बालस्यास्यप्रोञ्छनमात्रमेव, नहि कोशशक्तिग्रहभाजो महाकवयोऽनायाससिद्धप्रतिभाप्रवाहागतांस्तांस्ताञ्शब्दान् प्रयुञ्जाना एवंविधार्थे भ्रान्ता भवन्ति, उपालम्भनीयवचना वा कथ्यन्ते कैश्चिदृते दुर्हृदयग्रामात्। अन्यथाऽहं भवन्तं पृच्छामि परिषदभिनन्दने भवता "दिविषदञ्चित" इत्यस्य स्थानेऽत्यन्तसरलस्य "सुरगणाञ्चित"—इति पदस्य निवेशः कुतो न कृतः। तद्योऽत्र न्यायोऽसौ ममापि भविष्यतीति मौनमास्यताम्। यत्त्वत्रैव—"रत्यादि पदेन "रतिर्हासश्चे त्यारम्भ्य धूलिप्रक्षेपमात्रमित्यन्तमुक्तम्। तत्रोच्यते किं सर्वत्र भवान् रतिशब्दं शृङ्गारस्थायिभावार्थकमेव मन्यते ? एवञ्चेत्! "आत्मरतिरात्मक्रीड" "यस्त्वात्मरतिरेव स्यात्" इत्यादौ गतं विद्वदनुभवसिद्धस्वात्मानुभवानन्देन, दुर्व्यवस्थितश्च भवेत्—

"यस्त्यक्त्वा प्राकृतं कर्म नित्यमात्मरतिर्मुनिः।
सर्वभूतात्मभूतात्मा स्याच्चेत्परतमा गतिः" ॥

(महाभा० शां० प० अ० १९४)

इत्यादीनां महामान्यानां महर्षिव्यासवचसाम्। "भावशब्दो न रतित्वेन रतिं बोधयति किन्तु भावत्वेन" इति लिखंश्च भवाननभिज्ञो न्यायचर्यायाः अनेकार्थवाची भावशब्दः प्रकरणनियन्त्रितः सन् रतित्वेनैव रतिं बोधयिष्यति न भावत्वेन। यथा—"सशङ्खचक्रो हरि" रित्यत्र यमानिलाद्यनेकार्थको हरिशब्दः संयोगनियन्त्रितः सन् विष्णुत्वेन विष्णुं बोधयति नतु हरित्वेन, इतरथा संयोगादीनां विशेषस्मृतिहेतुताविलोपापत्तिरनिवार्यैवापद्येतेत्यहो राजमार्गे एव ते भ्रमः संवृत्तः। एतेन भावत्वावच्छिन्नस्य इत्यादेरपीत्यादि द्वेपोत्थकुकल्पनामात्रमनादेयमनङ्गीकारात्।

इति पाण्डित्यपरिचये "धूर्तप्रलापो" नाम द्वितीयः परिचयः।

---

१—अन्ये यन्त्रस्था वर्तन्ते।

विदुषामनुचरः—
नृसिंहदेवः

...म्बे मैशीन प्रेस मोहनलाल रोड लाहौर।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

